॥ श्रीः ॥

श्रीरघुनाथतीर्थविरचिततत्त्वसाराख्याख्यासहितं

# बृहतीसहस्रम्

सम्पादकः

विद्वान् पि.यस्. शेषगिरि आचार्यः, एम्.ए.

प्रकाशकः

पूर्णप्रज्ञसंशोधनमन्दिरम्

पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पमुख्यमार्गः,

बेङ्गलूरु - ५६० ०२८.

२००९

# पूर्णप्रज्ञसंशोधनमन्दिरम्

नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीनराष्ट्रियसंस्कृतसंस्थानेन
सम्मानितम्

# बृहतीसहस्रम्

श्रीरघुनाथतीर्थविरचिततत्त्वसारव्याख्यासहितम्

सम्पादकः
विद्वान् पि.एस्. शेषगिरि आचार्यः

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पमुख्यमार्गः,
बेङ्गलूरु-५६० ०२८

२००९

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला - ५९

श्रीरघुनाथतीर्थविरचिततत्त्वसारव्याख्यासहितं

# बृहतीसहस्रम्

*This publication is brought out by the generous financial help of*

**Rashtriya Sanskrit Samsthan, (Deemed University), New Delhi**

संशोधकः- विद्वान् पि.एस्. शेषगिरि आचार्यः सरस्वतीपुरम्, मैसूरु.

प्रकाशकः -
पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पा मेन्रोड्,
बेङ्गलूरु - २८

मुद्रणम्- २००९

मुद्रितपुस्तकसङ्ख्या - १०००

मूल्यम् - ३००/-

टङ्कनम्- श्री अञ्जनप्रसादः, चिकल्लसन्द्र, बेङ्गलूरु

मुद्रकः
श्री डि.वि. प्रह्लादः
अनिकेत एण्टर्प्रैसस्, बेङ्गलूरु.

**POORNAPRAJNA SAMSHODHANA MANDIRAM**
Recognised by Rashtriya Sanskrit Samsthan, Deemed University,
Ministry of H.R.D., Govt. of India, New Delhi

# BṚHATĪSAHASRAM

## with TATTVASĀRA of
## Śri Raghunāthatirtha

Editor :
Vidwan P.S. Sheshagiri Acharya

*Publisher :*
Poornaprajna Samshodhana Mandiram
Poornaprajna Vidyapeetha,
Bangalore - 560 028

2009

Pūrṇaprajña Saṁśodhana Mandira Granthamālā -59

# BṚHATISAHASRAM

with **TATTVASĀRA** of Sri RaghunathaTirtha.

Edited by Vidwan P.S. Sheṣhagiri Acharya

2009

Copies : 1,000

Price : 300/-

Type setting:
**Sri Anjanaprasad**
Chikkallasandra, Bangalore

Printed at :
**Sri D.V. Prahlad**
Aniket Enterprises,
Bangalore.

# अनुग्रहवचनम्

महामन्त्रतुल्यस्य विष्णुसहस्रनामस्तोत्रस्य पारायणे इव तदर्थावगमेऽप्यवश्यं प्रयतितव्यं मुमुक्षुणा पुरुषेण । तदादिदेश भगवानाचार्यः- 'ज्ञेयं पाठ्यं च तद्द्वयम्' इति । 'तज्ज्ञानान्मुच्यतेऽञ्जसा' इति च ।

तानीमानि गुणवैभवाविष्कारकाणि विष्णोः सहस्ररूपप्रतिपादकानि नामानि नार्वाचीनानि, परं श्रुतिविख्यातानि पूर्वमेव ऋषिभिः परिगीतानि चेत्याह भीष्माचार्यः- 'ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये' इति । सहस्रनामप्रतिपाद्यं यदेतत् रूपसहस्रकं तत् पृथक् पृथक् वक्ति बृहतीसहस्रशस्त्रम् ।

बृहतीसहस्रगतद्वासप्ततिसहस्रसङ्ख्याकैरक्षरैः अस्मच्छरीरस्थद्वासप्ततिसहस्रनाडीगतानि तावत्सङ्ख्याकानि भगवद्रूपाण्युपवर्णितानीत्यहो बृहतीसहस्रवैभवम् !! तान्येव द्वासप्ततिसहस्र-रूपाणि शतवर्षाहोरात्राधिदैवतान्यपि भवन्ति । नाडीसम्बन्धि खलु भवत्यारोग्यं रोगश्च । अतो बृहतीसहस्राध्ययनपारायणादिना वयमारोग्यप्रदनाडीस्थभगवत्प्रीतिम्, आयुर्नियामकस्य चाप्यनु-ग्रहमुपलभामहे । तेन चारोग्यमायुश्च समेधयति बृहतीसहस्रप्रतिपाद्यो भगवानित्यैहिकं फलम् । आमुष्मिकं तु सुप्रथितमेव विश्वामित्रसमधिगतमारण्यकग्रन्थेषु ।

तदेवं साधकजनस्य बहूपयोगीदं महदुक्थनामकं शस्त्रं श्रीरघुनाथतीर्थ-भगवन्तराय-प्रभृतिभिर्व्याख्यातमपि मूलपाठशोधनादिरहितमपरिष्कृतं सन्नातितरामुपयोगाय कल्पते स्म । सम्प्रति अस्मदन्तेवासी पि.एस्. शेषगिरिआचार्यः महता प्रयत्नेनैतद्ग्रन्थसंशोधनेन साधकवर्गाय महदुपायनमदादिति मोमुद्यते नश्चेतः । तदेतत् संशोधनकार्यं नैकशास्त्रेष्वविहितप्रयत्नानां वेद-वैदिकसम्प्रदायानभिज्ञानां चित्तसमाधानरहितानां च दुःसाध्यमित्यत्र नास्ति संशीतिः ।

प्रयाससाध्येऽस्मिन् शोधकार्ये पारमुत्तीर्णं शेषगिरिआचार्यं स्वाशीर्भिरभिनन्दयामो वयम् । अस्मदुपास्ययोः रामविठ्ठलयोरनुग्रहं च प्रार्थयामः ।

एतद्ग्रन्थपाठाध्ययनादिना सर्वे सज्जना धन्या भवन्त्वित्यप्याशास्महे ।

वेङ्गलूरु

**श्रीश्रीविश्वेशतीर्थश्रीपादाः**

# अनुग्रहवचनम्

महामन्त्रतुल्यस्य विष्णुसहस्रनामस्तोत्रस्य पारायणे इव तदर्थावगमेऽप्यवश्यं प्रयतितव्यं मुमुक्षुणा पुरुषेण । तदादिदेश भगवानाचार्यः- 'ज्ञेयं पाठ्यं च तद्द्वयम्' इति । 'तज्ज्ञानान्मुच्यतेऽञ्जसा' इति च ।

तानीमानि गुणवैभवाविष्कारकाणि विष्णोः सहस्ररूपप्रतिपादकानि नामानि नार्वाचीनानि, परं श्रुतिविख्यातानि पूर्वमेव ऋषिभिः परिगीतानि चेत्याह भीष्माचार्यः- 'ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये' इति । सहस्रनामप्रतिपाद्यं यदेतत् रूपसहस्रकं तत् पृथक् पृथक् वक्ति बृहतीसहस्रशस्त्रम् ।

बृहतीसहस्रगतद्वासप्ततिसहस्रसङ्ख्याकैरक्षरैः अस्मच्छरीरस्थद्वासप्ततिसहस्रनाडीगतानि तावत्सङ्ख्याकानि भगवद्रूपाण्युपवर्णितानीत्यहो बृहतीसहस्रवैभवम् !! तान्येव द्वासप्ततिसहस्र-रूपाणि शतवर्षाहोरात्राधिदैवतान्यपि भवन्ति । नाडीसम्बन्धि खलु भवत्यारोग्यं रोगश्च । अतो बृहतीसहस्राध्ययनपारायणादिना वयमारोग्यप्रदनाडीस्थभगवत्प्रीतिम्, आयुर्नियामकस्य चाप्यनु-ग्रहमुपलभामहे । तेन चारोग्यमायुश्च समेधयति बृहतीसहस्रप्रतिपाद्यो भगवानित्यैहिकं फलम् । आमुष्मिकं तु सुप्रथितमेव विश्वामित्रसमधिगतमारण्यकग्रन्थेषु ।

तदेवं साधकजनस्य बहूपयोगीदं महदुक्थनामकं शस्त्रं श्रीरघुनाथतीर्थ-भगवन्तराय-प्रभृतिभिर्व्याख्यातमपि मूलपाठशोधनादिरहितमपरिष्कृतं सन्नातितरामुपयोगाय कल्पते स्म । सम्प्रति अस्मदन्तेवासी पि.एस्. शेषगिरिआचार्यः महता प्रयत्नेनैतद्ग्रन्थसंशोधनेन साधकवर्गाय महदुपायनमदादिति मोमुद्यते नश्चेतः । तदेतत् संशोधनकार्यं नैकशास्त्रेष्वविहितप्रयत्नानां वेद-वैदिकसम्प्रदायानभिज्ञानां चित्तसमाधानरहितानां च दुःसाध्यमित्यत्र नास्ति संशीतिः ।

प्रयाससाध्येऽस्मिन् शोधकार्ये पारमुत्तीर्णं शेषगिरिआचार्यं स्वाशीर्भिरभिनन्दयामो वयम् । अस्मदुपास्ययोः रामविट्ठलयोरनुग्रहं च प्रार्थयामः ।

एतद्ग्रन्थपाठाध्ययनादिना सर्वे सज्जना धन्या भवन्त्वित्यप्याशास्महे ।

वेङ्गलूरु

**श्रीश्रीविश्वेशतीर्थश्रीपादाः**

Pūrṇaprajña Saṃśodhana Mandira Granthamālā -59

# BṚHATISAHASRAM

with **TATTVASĀRA** of Sri RaghunathaTirtha.

Edited by Vidwan P.S. Sheṣhagiri Acharya

2009

Copies : 1,000

Price : 300/-

Type setting:
**Sri Anjanaprasad**
Chikkallasandra, Bangalore

Printed at :
**Sri D.V. Prahlad**
Aniket Enterprises,
Bangalore.

# अनुग्रहवचनम्

महामन्त्रतुल्यस्य विष्णुसहस्रनामस्तोत्रस्य पारायणं इव तदर्थावगमेऽप्यवश्यं प्रयतितव्यं मुमुक्षुणा पुरुषेण । तदादिदेश भगवानाचार्यः- 'ज्ञेयं पाठ्यं च तद्द्वयम्' इति । 'तज्ज्ञानान्मुच्यतेऽञ्जसा' इति च ।

तानीमानि गुणवैभवाविष्कारकाणि विष्णोः सहस्ररूपप्रतिपादकानि नामानि नार्वाचीनानि, परं श्रुतिविख्यातानि पूर्वमेव ऋषिभिः परिगीतानि चेत्याह भीष्माचार्यः- 'ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये' इति । सहस्रनामप्रतिपाद्यं यदेतत् रूपसहस्रकं तत् पृथक् पृथक् वक्ति वृहतीसहस्रशस्त्रम् ।

वृहतीसहस्रगतद्वासप्ततिसहस्रसङ्ख्याकैरक्षरैः अस्मच्छरीरस्थद्वासप्ततिसहस्रनाडीगतानि तावत्सङ्ख्याकानि भगवद्रूपाण्युपवर्णितानीत्यहो वृहतीसहस्रवैभवम् !! तान्येव द्वासप्ततिसहस्र-रूपाणि शतवर्षाहोरात्राधिदैवतान्यपि भवन्ति । नाडीसम्बन्धि खलु भवत्यारोग्यं रोगश्च । अतो वृहतीसहस्राध्ययनपारायणादिना वयमारोग्यप्रदनाडीस्थभगवत्प्रीतिम्, आयुर्नियामकस्य चाप्यनु-ग्रहमुपलभामहे । तेन चारोग्यमायुश्च समेधयति वृहतीसहस्रप्रतिपाद्यो भगवानित्यैहिकं फलम् । आमुष्मिकं तु सुप्रथितमेव विश्वामित्रसमधिगतमारण्यकग्रन्थेषु ।

तदेवं साधकजनस्य बहूपयोगीदं महदुक्थनामकं शस्त्रं श्रीरघुनाथतीर्थ-भगवन्तराय-प्रभृतिभिर्व्याख्यातमपि मूलपाठशोधनादिरहितमपरिष्कृतं सन्नातितरामुपयोगाय कल्पते स्म। सम्प्रति अस्मदन्तेवासी पि.एस्. शेषगिरिआचार्यः महता प्रयत्नेनैतद्ग्रन्थसंशोधनेन साधकवर्गाय महदुपायनमदादिति मोमुद्यते नश्चेतः । तदेतत् संशोधनकार्यं नैकशास्त्रेष्वविहितप्रयत्नानां वेद-वैदिकसम्प्रदायानभिज्ञानां चित्तसमाधानरहितानां च दुःसाध्यमित्यत्र नास्ति संशीतिः ।

प्रयाससाध्येऽस्मिन् शोधकार्ये पारमुत्तीर्णं शेषगिरिआचार्यं स्वाशीर्भिरभिनन्दयामो वयम् । अस्मदुपास्ययोः रामविठ्ठलयोरनुग्रहं च प्रार्थयामः ।

एतद्ग्रन्थपाठाध्ययनादिना सर्वे सज्जना धन्या भवन्त्वित्यप्याशास्महे ।

बेङ्गलूरु

**श्रीश्रीविश्वेशतीर्थश्रीपादाः**

## Director's Note

Indra performed a sacrifice for gaining the grace of Sri Hari and to attain prosperity after killing demon Vrtraasura. The sacrifice is known as Maha-vrata in which an altar is prepared in the design of an eagle, known as Garuda. Sri Hari, who is the presiding deity in Garuda is worshipped in this Maha-vrata. The Mantras which eulogise the glory of Sri Hari are known as Brhati-Shastra Mantras.

The meter which has 24 syllables is known as Gayatri. That which has 28 syllables is Ushnik, that with 32 syllables is Anushtup, that with 36 is Brhati, that with 40 is Pankti, that with 44 is Trishtup and that with 48 syllables is Jagati. The meters which may have more syllables are known as Ati-chhandas. Thousand Mantras in the Brhati meter are not available now in the Rgveda. However, one thousand Mantras will be edited according to the guidance given in the Aaranyakas. The deity of the Brhati meter is Mukhyaprana. Worship done with these Mantras is believed to shower all prosperity on the devotees. The glory explicated in the thousand Brhati Mantras is contained in each of the thousand sacred names of Sri Vishnu (Vishnu-Sahasra-Naama).

The problems regarding the current readings of the Brhati Sahasra Mantras have been discussed by Vidwan P.S. Sheshagiri Acharya in the present work. This book is now printed with the special commentary of Sri Raghunathatirtha, who adorned the Vyasaraja Matha. The same had been printed in 1999 by Madhwa Siddantonnahini Sabha of Tirupati. Poornaprajna Samshodhana Mandiram is printing it again because the copies of the earlier edition are no more available. Sri R. Anantan, Secretary of the Madhwa Siddhantonnahini Sabha has extended his invaluable cooperation for the publication of this work. We record our gratitude to him respectfully.

Sri P.S. Sheshagiri Acharya who is a shining jewel in the firmament of scholarship has rendered yeoman service to the world of Sanskrit by editing this wonderful work.

The source of inspiration for this useful venture is our founder H.H. Sri Sri Vishveshatirtha Swamiji. We express our heartfelt gratitude with Pranamas.

We also express our thanks to Prof. Radhavallabha Tripathi, Vice-chancellor of Rashtriya Sanskrit Sansthan, New Delhi and Sri C.S. Kaniyal, Finance Officer, Rashtriya Sanskrit Sansthan, New Delhi, for extending all support to our academic activities.

Prof. D. Prahlada Char, Chairman of Poornaprajna Samshodhana Mandiram, is the guiding force behind our academic activities and I express my gratitude to him for his valuable guidance in the progress of institution.

*Sujanavidheya*
**Dr. A.V. Nagasampige**
**Director**
**Poornaprajna Samshodhana Mandiram**

# भूमिका

*''इन्द्रो वै वृत्रं हत्वा महानभवद् यन्महानभवत् तन्महाव्रतमभवत् तन्महाव्रतस्य महाव्रतत्वम्''* इत्यैतरेयारण्यकस्यादौ श्रूयते। वृत्रवधानन्तरमिन्द्रो महाव्रनाख्यं यागमकरोत्। आत्मनो महत्त्वमभिसन्धायेन्द्रेण कृतमिति वा, महान्तं विष्णुमुद्दिश्य कृतमिति वाऽस्य महाव्रतत्वं न तु महान्तमिन्द्रमुद्दिश्यान्यैर्मुनिभिः कृतमिति। यथोदाहृतं ब्रह्माण्डवचनं भगवत्पादैरैतरेयभाष्ये -

> **''वृत्रं हत्वा पुरेन्द्रस्तु महेन्द्रत्वाभिपत्तये।**
> **महाव्रतं कर्म चक्रे हौत्रं चक्रेऽथ कौशिकः।**
> **भृगुरध्वर्युरभवद् ब्रह्मा ब्रह्माऽभवत् स्वयम्॥**
>
> **उद्गाता वायुरभवत् स्वयं नारायणः प्रभुः।**
> **सादस्यमकरोत् तत्र तदन्येऽन्येऽपि चर्त्विजः॥''** इत्यादि।

तदेतन्महाव्रतमेकाहरूपं, महानाम्न्यवयवरूपं, सत्रावयवरूपं चेति त्रिविधम्। एतन्महाव्रताख्यं कर्म ऐतरेयारणे निरूप्यते। महाव्रताख्यो यागो विकृतिः। विश्वजिच्चतुर्विंशादीनि कर्माण्यस्य प्रकृतयः। तत्र महाव्रते प्रातःसवने आज्यप्रउगनामके द्वे शस्त्रे प्रकृतेर्विश्वजितोऽतिदिश्येते। माध्यन्दिनसवने मरुत्वतीयनिष्केवल्याख्ये द्वे शस्त्रे। तत्र मरुत्वतीयशस्त्रं चतुर्विंशाख्यप्रकृतेरतिदेशेन प्राप्तम्। निष्केवल्यशस्त्रं त्वत्रैव ''तदिदास भुवनेषु ज्येष्ठं प्रतिपद्यते'' इत्यादिना विधीयते। तृतीयसवने वैश्वदेवशस्त्रमेकाहविश्वजितोऽतिदिश्यते। तत्र माध्यन्दिनसवने शंसनीयस्य निष्केवल्यशस्त्रस्यैव बृहतीसहस्रसञ्ज्ञा।

तदेतत्सर्वमैतरेयारण्यके निरूप्यते। आरणे ऽस्मिन् पञ्च भागाः सन्ति। तेऽप्यारण्यकशब्देन पञ्चिकाशब्देन वा व्यवह्रियन्ते। एकैकस्मिन् तादृशे भागेऽनेकेऽध्यायाः, प्रत्यध्यायं चानेके खण्डाः सन्ति। तत्र द्वितीया तृतीया च पञ्चिका महैतरेयोपनिषदिति व्यवह्रियते। आद्यचतुर्थपञ्चमीषु पञ्चिकासु महाव्रतकर्मसम्बन्धिनोऽन्यान्यविषया निरूप्यन्ते।

तत्र प्रथमपञ्चिकायां पञ्चाध्यायाः सन्ति। प्रथमाध्याये महाव्रताख्यं कर्म प्रस्तूय तत्र प्रातःसवनगतमाज्यप्रउगाख्यं शस्त्रद्वयं निरूपितम्। द्वितीयेऽध्याये माध्यन्दिनसवनगतं मरुत्वतीयशस्त्रं खण्डद्वयेन निरूप्योत्तरखण्डद्वयेन प्रेङ्खमारुह्य निष्केवल्यशस्त्रस्य शंसनीयतया प्रेङ्खविधानतदारोहणादि निरूपितम्। तृतीयाध्यायस्य प्रथमे खण्डे निष्केवल्यशस्त्रात् पूर्वं हिंकारस्य शंसनीयतया हिंकारादिप्रशंसा क्रियते।

तदनन्तरं शंसनीया व्याहृतयो द्वितीये खण्डे निरूप्यन्ते। तृतीयखण्डमारभ्यावशिष्टेन प्रथमारण्यकेन निष्केवल्यशस्त्रमेव विस्तरेणोच्यते। अन्तिमे तु खण्डे तृतीयसवनगतं वैश्वदेवशस्त्रं निरूप्यते।

महाव्रताख्ये कर्मणि चितिः सुपर्णाकारा। तस्याश्च पञ्च भागा आत्मा शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छं चेति। तत्र निष्केवल्यशस्त्रमेव बृहतीसहस्रसञ्ज्ञां लभत इत्युक्तम्। एते बृहतीसहस्रमन्त्राः चित्यारूढसुपर्णस्थस्य विष्णोर्महिमानं प्रतिपादयन्ति। चितिस्थसुपर्णे च विष्णुरनिरुद्धादिरूपेण पञ्चधा स्थितः। तदेतत्सर्वमैतरेयोपनिषद्भाष्यमवलम्ब्य श्रीरघुनाथतीर्थैराद्यमन्त्रात् प्राङ् निबद्धायामवतरणिकायां स्पष्टं निरूपितम्। पञ्चावयवस्थितभगवत्प्रतिपादकत्वाच्छस्त्रमप्यात्मादिसञ्ज्ञां लभत इति शस्त्रमपि आत्मादिभेदेन पञ्चभागभिन्नम्।

द्वितीया तृतीया च पञ्चिका महैतरेयोपनिषदिति ऐतरेयोपनिषदिति च व्यवह्रियत इत्युक्तम्। चतुर्थ्यां पञ्चिकायां महानाम्नीसञ्ज्ञा विदा मघवन् विदेत्यादि ऋचः पुरीषसञ्ज्ञानि एवाहीत्यादीनि नव पदानि च निरूपितानि।

पञ्चम्यां च पञ्चिकायां प्रथमोक्तमेव सवनत्रयगतं शस्त्रत्रयं विविच्योपदिश्यते। प्रथमोक्तस्यैव पुनः प्रतिपादने पौनरुक्त्यं भवतीति मत्वा प्रथमपञ्चिकैवापौरुषेयो वेदः पञ्चमी तु शौनकसूत्रवद् ऋषिप्रणीतं सूत्रमित्याह सायणः। प्रथमपञ्चिकायामर्थवादप्रपञ्चसहिता विधयो दृश्यन्ते पञ्चम्यां त्वर्थवादा न सन्ति शाखान्तरगताश्च मन्त्रा बहुलमुदाह्रियन्त इति तत्र हेतुद्वयमाह। परं रघुनाथयतीनां पञ्चम्यपि पञ्चिका वेदत्वेनैव सम्मता। अर्थवादप्रपञ्चाभावः शाखान्तरस्थमन्त्रोदाहरणं चाप्यत्राप्रयोजकम्। अपि चात्रापि विधयो वर्तन्त इत्यविवादम्। अत एवार्थवादप्रपञ्चसहिता विधयो न दृश्यन्त इत्याह सायणः। किञ्च ''तस्य प्रथमायाः पूर्वमर्धर्चं शस्त्वोत्तरेणार्धर्चेनोत्तरस्याः पूर्वमर्धर्चं व्यतिषजति पादैः पादावानुष्टुप्कारम्'' इत्यादिवाक्यानि पञ्चमारण्यकगतानि ऋषिप्रणीतसूत्राणीति साहसम्। प्रथमारण्यके शस्त्रसम्पादने तादृशव्यतिषङ्ग-विशेषस्यानुक्तत्वेन ऋषेर्निर्निबन्धनं व्यतिषङ्गप्रदर्शनस्यासङ्गतत्वापत्तेः। तस्मात् संक्षेपविस्तराभ्यामिति न्यायेन प्रवृत्तत्वात् प्रथमारण्यकानुक्तविशेषविधानाच्च पञ्चमारण्यकमपि वेद एवेति स्थितम्। अस्य यथामति व्याख्यानं परिशिष्टे दत्तं कृपयाऽवलोकनीयम्।

बृहतीछन्दस्का मन्त्रा यद्यपि सहस्रमिता ऋग्वेदे न सन्ति। तथाप्यारण्यकोक्तविधानेन सम्पादितानां तेषां सहस्रत्वमक्षतम्। तद्यथा तदिदासेत्यारभ्य एष स्तोम इति परिधानीयान्तान् मन्त्रान् संगृह्य तेषु षट्त्रिंशदक्षरमितं खण्डमेकबृहतीत्वेनानुसन्धाय तादृश्यः सहस्रबृहत्यः सम्पादनीयाः। यद्यपि बृहतीसहस्र-

शस्त्रमपि प्राग्भागो गायत्रतृचाशीतिर्बार्हततृचाशीतिरौष्णिहतृचाशीतिरुत्तरभागश्चेति पञ्चभागभिन्नम्, तत्र बार्हततृचाशीत्यां स्वाभाविकबृहत्यो वर्तेरन्निति प्रतीयेत । तथापि पञ्चस्वपि भागेषु विहृता एव बृहत्यो वर्तन्ते । विहरणं नामैकस्य मन्त्रस्य मन्त्रावयवस्य वा मन्त्रान्तरावयवसंयोजनम् । इदं च कर्मनिर्णयटीकादौ स्पष्टम् । तथा च त्रैष्टुभगायत्रौष्णिहादिमन्त्रान् विभज्यारण्यकोक्तक्रमेण मन्त्रान्तरभागेन संयोज्य च बृहत्यः सम्पाद्यन्ते । तथा हि श्रीरघुनाथतीर्थानां वचनम् -

''नहि वयं बृहतीछन्दसां प्रविष्टत्वाद् बृहतीसहस्रसञ्ज्ञां ब्रूमः । अपि तर्हि तदिदासेत्यादिना विहितानां परिधानीयान्तानां षट्त्रिंशदक्षराण्येकामृचं विधाय बृहतीमनुसन्धाय एवं सहस्रबृहतीः सम्पाद्य शंसितासु पञ्चचत्वारिंशदधिकशतोत्तरसहस्रसंख्यासु ऋक्षु बृहतीसहस्रसञ्ज्ञां कुर्मः'' इति । तथा ''तत्राष्टादशाक्षराण्येकमर्धं सम्पाद्यार्धद्वयस्य षट्त्रिंशदक्षरत्वसम्पादनेनैकां बृहतीं सम्पाद्यैवमवशिष्ट-षट्त्रिंशदक्षराण्यप्यर्धद्वयं विधाय परां बृहतीं सम्पादयेत्'' इति च ।

एवं रघुनाथतीर्थैः सर्वा अपि बृहत्यो विहृता एवेत्युक्तत्वेप्येतदपवादतया रघुनाथतीर्थकोशेष्वेव अष्टाविंशतिमन्त्रा विहरणेन विनैव पठिताः । एकस्यार्धस्याष्टादशाक्षरत्वनियमोपि तत्र तत्र भग्नो दृश्यते । अत्र कारणं न ज्ञायते । लेखकप्रमादो वाऽन्यद् वा कारणं स्यात् । **अपरश्च बृहतीसहस्रपाठो वेदेशतीर्थ-सम्पादितत्वेनाभिमतः पाङ्क्ती आचार्यैरादृतो वर्तते ।** तत्र सर्वेपि मन्त्रा विहृता अपवादस्तु नास्त्येव । सोऽपि क्रमोऽत्र परिशिष्टे दिङ्मात्रप्रदर्शनाय निवेशितो द्रष्टव्यः ।

अक्षरपरिगणनया चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरा उष्णिक्, द्वात्रिंशदक्षरा अनुष्टुप् , षट्त्रिंशदक्षरा बृहती, चत्वारिंशदक्षरा पङ्क्तिः, चतुश्चत्वारिंशदक्षरा त्रिष्टुप् , अष्टचत्वारिंशदक्षरा जगती, इति छन्दसां स्थितिः । ततोऽधिकाक्षराण्यतिच्छन्दांसि वर्तन्ते । तत्र बृहत्या मुख्यप्राणाभिमतत्वेन तत्प्रतिमात्वाद् बृहतीसम्पादनमेवारण्यकोक्तैर्मन्त्रैः कार्यं नान्यदित्यैतरेयोपनिषद्भाष्यादौ स्पष्टम् । बृहत्याः षट्त्रिंशदक्षरत्वात् सम्पादितासु बृहतीषु सर्वासु तावदक्षरताऽपेक्षिता । तथापि ग्रन्थशोधनार्थं परिशीलितासु मातृकासु षट्त्रिंशदक्षरनियमो नोपलभ्यते । सम्पदितासु बृहतीषु न्यूनाधिकाक्षराणि सन्ति । बृहतीव्याख्या-नावसरे पूर्वस्मान्मन्त्रादनुवर्त्य उत्तरस्मादाकृष्य चार्थनिरूपणं कृतमुपलभ्यते । एतादृशेऽवकाशे सति प्रतिबृहति षट्त्रिंशदक्षरता सुसम्पादा आसीत् । ततश्च पदमध्ये एव यदाऽक्षराणां षट्त्रिंशत्संख्या सम्पद्यते तदा तत्रैव तां बृहतीमवसाय्योत्तरा बृहती तदुत्तराक्षरमारभ्य पठितव्या आसीत् । परं रघुनाथतीर्थैस्तथा न कृतं दृश्यते । षट्त्रिंशाक्षरतानियममपहायार्थग्रहणसौकर्याय पदान्त एव बृहती अवसाय्य व्याख्याता । वेदेशतीर्थक्रमे तु पदमध्य एवावसाय्य बृहती पठितेत्यनयोः क्रमयोर्वैलक्षण्यं विद्यते ।

यद्यपि वेदेशीयक्रमः षट्त्रिंशदक्षरनियमाग्रहेण प्रवृत्तस्तथाप्युपलभ्यमानासु मातृकासु स नियमो भग्न एव दृश्यते। उदाहरणतया द्वितीया बृहती प्रदर्शयिष्यते। ऐतरेयारण्यके पञ्चमे ''अपि निदर्शनायोदाहरिष्यामः'' इति प्रतिज्ञाय पठितम् -

सद्यो जज्ञानो निरिणाति शत्रून् पतिं वो अघ्न्यानाम्।
अनु यं विश्वे मदन्त्यूमाः षो धेनूनामिषुध्यसोम्॥ इति।

वेदेशीयक्रमे तु -

सद्यो जज्ञानो निरिणाति शत्रून् पतिं वो अघ्न्यानामनु।
यं विश्वे मदन्त्यूमाः षो धेनूनामिषुध्यसि तदिदोम्॥ इति॥

इयं सम्पादितासु द्वितीया बृहती। एतदन्ते स्फुटं त्र्यक्षरवैलक्षण्यम्। अयं च व्यत्यास आसहस्रमनुवर्तत इति क्रममिमं वेदेशतीर्थक्रम इति वक्तुं बिभेति नश्चेतः।केवलं रघुनाथतीर्थक्रमापेक्षया भिन्न इति सूचयितुं पारिभाषिकतयोपयुक्तमिदं पदमित्यावेद्यते। वस्तुतस्तु छन्दोविचारो महताऽध्ययनेन साध्यः। लिपिकारास्तु प्रायःस्वाज्ञानविपरीतज्ञानादिना मूलकोशस्थवाक्यानि व्यत्यस्य लिखन्ति स्मेति सर्वविदितम्। तत्रोदाहृतायां बृहत्यां पूर्वार्धे आद्यपादस्त्रैष्टुभः। तत्रैकादशाक्षराणि वर्तन्त एव।अत एवारण्यके तत्र कस्याप्यक्षरस्य व्यतिषङ्गो नोक्तः। द्वितीयो नदपादस्त्वौष्णिहः। यद्यप्यौष्णिहः पादः सप्ताक्षरस्तथाप्यत्र षडेवाक्षराणि विद्यन्ते। अत इमामेकाक्षरन्यूनतां परिहर्तुं अघ्न्यानामित्यत्र यकारविश्लेषेण अघियानामित्युच्चारणे कृते,गायत्रीमन्त्रे वरेण्यमित्यत्र यथा तथा सप्ताक्षरता सम्पद्यते, पूर्वार्धे आहत्याष्टादशाक्षरता च। उत्तरार्धस्यारम्भस्तु आरण्यकोक्तरीत्या अनु यमित्यनेनैव भवेत्, न तु यं विश्वे इत्यादिना। तत्र त्रैष्टुभे प्रथमे पादे नवाक्षराण्येव दृश्यन्ते। तथापि मदन्त्यूमा इत्यत्र पूर्ववद् यकारविश्लेषेण मदन्तियूमा इत्युच्चार्य दशाक्षरता सम्पादनीया। तदाप्येकाक्षरन्यूनता भवतीति तत्परिहाराय षकारव्यतिषङ्ग आरण्यक एवोक्तः। एवं चैकादशाक्षरता सम्पद्यते। नदपादस्त्वत्र सप्ताक्षर एव। ततश्चोत्तरार्धेप्याहत्याष्टादशाक्षरता सम्पन्नेति धेनूनामिषुध्यसोमित्येव द्वितीयबृहतीसमाप्तिः स्यात्। वेदेशीयक्रमे तु पूर्वार्धे एकोनविंशाक्षराणि, उत्तरार्धे अष्टादशाक्षरणीति नायं सम्पादनक्रमो मनोमोदमावहति। अतो वेदेशीयक्रम इति शब्दोऽस्माभिः पारिभाषिकतयैव प्रयुज्यत इति पुनरपि निवेद्यते।

बृहतीच्छन्दसि बहवःप्रकाराः सन्ति। पादचतुष्टयोपेता बृहती प्रायः। तत्राद्यपादो द्वादशाक्षरो जागतोऽवशिष्टास्त्रयः पादा अष्टाक्षरगायत्राश्चेदियं बृहती पुरोबृहतीति विशेषसंज्ञां लभते। तद्यथा-

महो यस्पतिःशवसो असाम्या (१) महो नृम्णस्य तूतुजिः। (२)
भर्ता वज्रस्य धृष्णोः (३) पिता पुत्रमिव प्रियम्॥ (४) - ऋग्वेद १०मं २२सू ३मं

यदि द्वितीयःपादो जागतः शिष्टाश्च गायत्रास्तदेयं बृहती न्यङ्कुसारिणीति संज्ञां लभते। केषाञ्चित् पक्षे स्कन्धोग्रीवीति उरोबृहतीति च। तद्यथा -

मत्स्यपायि ते महः (१) पात्रस्येव हरिवो मत्सरो मदः (२)।
वृषा ते वृष्ण इन्दु (३) र्वाजी सहस्र सातमः। (४)॥ -ऋग्वेद (१-१७५-१)

यदि तृतीयःपादो जागतो भवति शिष्टाश्च गायत्रास्तदेयं बृहती पथ्येति संज्ञां लभते। तद्यथा -

मोचिदन्यद् विशंसत (१) सखायो मा रिषण्यत (२)।
इन्द्रमित् स्तोता वृषणं सचा सुते (३) मुहुरुक्था च शंसत (४)। -ऋग्वेद (८-१-१)

यदि जागतः पादोऽन्ते भवति अवशिष्टाश्च गायत्रास्तदा उपरिष्टाद्बृहतीसंज्ञां लभते। तद्यथा -

अग्ने जरितर्विष्पति (१) स्तपानो देव रक्षसः (२)।
अप्रोपिवान् गृहपते (३)महाँ असि दिवस्पायुर्दुरोणयुः (४)।।-सामवेदपूर्वार्चिक
(१-१-४-५)

कश्चित्रवाक्षराश्चत्वारःपादा बृहती सम्पद्यन्ते।विशेषसंज्ञा तु नोक्ता। तद्यथा-

तं त्वा वयं पितो वचोभि (१) गावो न हव्या सुषूदिम (२)।
देवेभ्यस्त्वा सधमाद (३) मस्मभ्यं त्वा सधमादम् (४)॥ -ऋग्वेद (१-१८७-११)

कश्चित् वैराजौ दशाक्षरौ द्वौ पादौ गायत्रौ च द्वौ पादौ मिलित्वा बृहती सम्पद्यते। विशेषसंज्ञा तु नोक्ता। तद्यथा -

अग्ने विवस्वदुषस (१)श्चित्रं राधो अमर्त्य (२)॥
आ दाशुषे जातवेदो वहा (३) त्वमद्या देवाँ उषर्बुधः (४)॥ -ऋग्वेद (१-४४-१)

कश्चित्त्रिभिर्जागतैः पादैर्बृहती भवति। इयं महाबृहतीत्युच्यते। इयमेव केषाञ्चिन्मते ऊर्ध्वबृहतीति संज्ञां च लभते। तद्यथा -

अजीजनो अमृत मर्त्येष्वाँ (१) ऋतस्य धर्मन्नमृतस्य चारुणः (२)।
सदासरो वाजमच्छा सनिष्यदत् (३)॥ -ऋग्वेद (९-११०-४)

अस्यैव बृहतीविशेषस्य ताण्डिनो मते सतोबृहतीति संज्ञेत्याह पिङ्गलनागः। परमर्वाचीनः सतोबृहती-व्यवहारस्तु आद्यतृतीयपादयोर्द्वादशाक्षरे द्वितीयचतुर्थयोरष्टाक्षरे पङ्क्तिच्छन्दोविशेषे वर्तते। तद्यथा -

**इन्द्रं तं शुम्भ पुरुहन्मन्नवसे (१) यस्य द्विता विधर्तरि (२)।**
**हस्ताय वज्रः प्रति धायि दर्शतो (३) महो दिवे न सूर्यः (४)॥ - ऋग्वेद (८-७०-२)**

अयं सर्वोऽपि विचारः प्रकृत्या बृहतीषु। बृहतीसहस्रे तु न बृहत्यः प्रकृत्या वर्तन्ते किन्तु विहरणेन सम्पादिता इति अत्रैतादृशसंज्ञाप्रभेदा वा तत्प्रयोजकपादविशेषा वा न गण्यन्ते। तदिदासेत्यादित आरभ्याक्षरपरिगणनया यत्र यत्र षट्त्रिंशदक्षरता सम्पद्यते तत्रावसाय्य तत्र बृहतीत्वमनुसन्धाय पुनरष्टादशाक्षरमितमर्धद्वयं कृत्वा शस्तव्यमिति स्थितिः।

एवं सम्पादितानां बृहतीनां क्रमेण विष्णुसहस्रनामपठितविश्वादिसहस्रमूर्तिप्रतिपादकत्वं प्रमाणप्रमितमित्यासां प्रतिबृहति ब्रह्मविद्यात्वमक्षुण्णम्। तत्र ''स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यते'' इति मानेन प्रतिबृहति आद्यन्तयोरोंकारस्योच्चारणे कर्तव्ये विशेषमाह पाणिनिः ''प्रणवष्टेः'' (८-२-८९) इति। यज्ञकर्मणि टेरोमित्यादेशः स्यादिति तदर्थः। अलोन्त्यपरिभाषयैव सिद्धे पुनष्टिग्रहणं यत्र टिर्हलन्तो भवति तत्रान्त्यस्य हल एवादेशो न स्यात् किन्तु समग्रस्यैव टेः स्यादित्येतदर्थम्।अत एवारण्यके विहृतमन्त्रोदाहरणसमये योयुवतीनोम् (योयुवतीनाम् + ओम्) इपुध्यसोम् (इपुध्यसि + ओम्) इति कृतैकादेशनिर्देश एव कृतः, आदौ पृथगोंक्रियते अन्ते तु टेरादेशं कृत्वोच्चार्यत इति। मातृकासु यावन्नदमन्त्रविहरणमनुवर्तते तावत्पर्यन्तमेवैकादेशकरणेन लिखितम्। ततः पश्चात्प्रणवादेशमकृत्वैव बृहत्यो लिखिताः। अस्माभिस्तु एवं द्वैरूप्यं न स्यादिति अर्थग्रहणसौकर्यं स्यादिति च धिया नदमन्त्रविहरणस्थलेपि प्रणवादेशमकृत्वैव पाठो दत्तः। अपि च यज्ञकर्मणि शंसनवेलायां नित्यः स प्रणवादेशविधिः। यज्ञभिन्नकर्मस्थले स नियमो नास्तीति च कृत्वैवं निर्देशः कृतः।

बृहतीसहस्रस्वरविषये किञ्चिद् वक्तव्यं भवति। परिशीलितासु मातृकासु कस्यामपि मातृकायां बृहतीसहस्रमन्त्राणां स्वरो न निर्दिष्टः। अतः श्रीरघुनाथतीर्थैरन्यैर्वा स्वरो न निर्दिष्ट एवेति ज्ञायते। यद्यपि मन्त्राणां पदपाठस्वरमाज्ञाय संहिताकरणे सम्भवत्स्वरव्यत्यासमपि ज्ञात्वा विहरणेन मन्त्रसम्पादनकाले स्वरः क्वचिन्निर्देष्टुं शक्यः। तथापि तथाऽकरणे कारणद्वयं वर्तते। तत्र प्रथमं तु बृहतीसहस्रसम्पादकमन्त्राः सर्वेपि न प्रचलितैतरेयशाखागताः, किन्तु शाखान्तरस्थिता अपि केचिन्मन्त्रा आरण्यक उदाहृताः। आरण्यकपाठे तु स्वरनिर्देशो नास्तीति आरण्यकोक्तशाखान्तरस्थमन्त्रैर्विहरणे स्वरो निर्देष्टुं न शक्यत इति। द्वितीयं कारणं तु तदिदासेत्यादिप्रथमत्रैष्टुभमन्त्रस्यैव त्र्यक्षरोनतया तत्र पुरुषेतित्र्यक्षराणां व्यतिषङ्गः

आरण्यके विहितः। पुरुषशब्दस्याद्युदात्तत्वेपि पु रु ष इत्यक्षरणां प्रत्येकं संयोजने तेषां स्वरः क इति निश्चेतुं न शक्यते। यतोऽनुदात्तं पदमेकवर्जमिति सूत्रेण त्रयाणामप्युदात्तत्वं वा स्वरितत्वं वा, यद्वा पुरुषशब्दस्य प्रकृतिस्वरमनुसन्धायैक उदात्तोऽपरः स्वरितोऽन्योऽनुदात्तो वेति संशयनिरासकं किमपि नोपलभ्यते। अतो मुनितुल्यैर्यद्वा मुनिभिरेव वेदेशतीर्थरघुनाथतीर्थादिभिर्यदा न स्वरविषये प्रक्रान्तं तदाऽस्माभिरपि स एव मार्ग आश्रयणीयः। अर्वाचीनैः कैश्चिद् वेदपुस्तकं दृष्ट्वा वृहतीसहस्रमन्त्रेषु स्वरो लिखितः। वेदप्रकृतिस्वरो विहतमन्त्रस्वरो न भवतीति हेतोः स सर्वोऽपि निर्देशो दुष्ट इति त्याज्य एव भवति।

वृहतीसहस्रसम्पदनोपयुक्ता मन्त्रा ऐतरेयशाखागताः शाखान्तरस्थाश्चाहत्य कतिसंख्या भवन्तीति विचारणीयं भवति। रघुनाथतीर्थास्तु स्वव्याख्याने पञ्चचत्वारिंशदधिकशतोत्तरसहस्रमन्त्रा इति वदन्ति। भगवन्तरायव्याख्याने तु एकोनचत्वारिंशदधिकशतोत्तरसहस्रसंख्याका इत्युक्तम्। तत्र भगवन्तरायवचनमेव समीचीनं भाति। रघुनाथतीर्थैस्तु आसन्नाभिप्रायेणैवोक्तमिति भाति। तत्रारण्यकोक्तक्रमेण विविधस्थानतो मन्त्राणां सङ्ग्रहः संख्यात एवंविधो वर्तते। तथा हि-

| | | |
|---|---|---|
| आत्मा | ९, ६, ५, ३, सूददोहाः | ५१ |
| ग्रीवादि | ३, सूद., १०, सूद., ३, सूद. | १९ |
| दक्षिणपक्षः | ६, १५, १५, ११, १०, ६, ६, ५, ५, ५, ५, ११, १, सूद | १०२ |
| उत्तरपक्षः | ६, १५,१०, १०, ९,५,७,७,७,७,७,११,१,सूद | १०३, |
| पुच्छम् | ५,४,९,३,१,सूद.२,सूद. | २५, |
| गायत्रतृचाशीतिः | ४५,३,३६,१,३२,३३,३०,४२,९,९,सूद | २४१, |
| वार्हततृचाशीतिः | २९,१८,१४,१५,२४,५६,१२,५,५,१६, १४,११,६,६,९,सूद | २४१, |
| औष्णिहतृचाशीतिः | ३३,३३,१२,१२,२७,९,१५,१२,१३, १०,३०,२०,३०,३, सूद | २६० |
| उदरम् | २१, सूद. | २२ |
| ऊरु | १२,७,८,१५,८,१,३,१,८,६,६, | ७५ |
| | | ११३९ |

आत्मभागे ९+६+५+३=२३ मन्त्रान् तावत्संख्याकैर्नदमन्त्रैः संयोज्यैकैकमन्त्रेण

बृहतीद्वयसम्पादनात्, आद्यबृहतीद्वयस्य''एवमेतां त्रिः'' इत्यारण्यकवाक्येन पुनः प्रत्येकं द्विवारं शंसनाच्च सूददोहोमन्त्रेण सहैकपञ्चाशन्मन्त्राः सम्पद्यन्ते। तत्र सूददोहोमन्त्रः सन्धानमन्त्रतया अवयवानां परस्परसन्धौ शंस्यते। आहत्य द्वादशवारमेव सूददोहोमन्त्रो विनियोक्तव्य इत्यारण्यके स्थितम्। तदेवं भगवन्तरायवचनमेव साधु भाति। तथाहि तेषां वचनम्-''अत्र ऋचः पञ्चत्रिंशदधिकैकादशशतान्येव। किन्तु राथन्तरबार्हतपक्षस्थानां चतुर्णां प्रगाथानां ''चतस्रः सतीः षड् बृहतीकरोति'' इत्युभयत्रापि पठितत्वात् बृहतीकरणे द्वादशर्चा जातत्वेनैकोनचत्वारिंशदधिकैकादशशतर्चो भवन्ति ''इति।

ऐतरेयोपनिषदि ''तद्वा इदं बृहतीसहस्रं सम्पन्नम्। तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति'' इत्युक्तम्। अक्षरगणनापि भगवन्तरायैः कृता। यथोक्तं तैः - ''एतासामक्षरपरिगणने षट्त्रिंशत्सहस्राक्षराणां पञ्चषष्टिरक्षराणि न्यूनानि भवन्ति। तथाप्यत्र कम्पाः द्विपञ्चाशत् सन्ति।तत्र षट्चत्वारिंशत् कम्पास्तावदक्षरस्थानीयाः, षट् कम्पास्तु द्वादशाक्षरस्थानीयाः।तथा च कम्पैरष्ट पञ्चाशदक्षरलाभः। अथ सन्धिगतस्वराक्षराणां सप्तानां शंसनसमये पृथक् श्रवणात् सप्ताक्षरलाभः। ततश्च पञ्चषष्टिन्यूनाक्षरपूरणात् षट्त्रिंशत्सहस्राक्षरसम्पत्त्या बृहतीसहस्रं सम्पद्यते '' इति।

**तत्र भगवन्तरायैः** स्वव्याख्येयतया वेदेशतीर्थपाठक्रम एवानुसृतः। तस्मिंश्च क्रमे द्वितीयायामेव बृहत्यामक्षरपरिगणने स्खालित्यं वर्तत इत्यावेदितं प्राक्; अतस्तदवलम्ब्याक्षरन्यूनतायामुक्तायां संशयो जायते वस्तुगत्या न्यूनतास्ति वा नवेति। न्यूनतायां सत्यामपि सन्ध्यक्षरविश्लेषेण यथा सप्तसु स्थलेषु तैर्निर्वाहः क्रियते तथा यत्राक्षरोनता तत्र क्षैप्रव्यूहेन (गायत्र्यां वरेण्यमित्यत्र वरेणियमिति यथा तथा यणक्षरविश्लेषेण) वैदिकसम्प्रदायसिद्धेन अक्षराधिक्यं सम्पादयितुं शक्यते। अतः कम्पपरिगणनां विनापि षट्त्रिंशत्सहस्राक्षरता सुसम्पादेति भाति। तावदक्षरता तु सम्पादनीयैव यतस्तावद्भगवन्मूर्तीनामक्षराधिष्ठात्रीणां महिमोपनिषदि प्रतिपाद्यते। अक्षरपरिगणने न स्वयमस्माभिः प्रक्रान्तमित्यावेद्यते।

बृहतीसहस्रव्याख्यानान्यनेकानि तावत् सन्तीति श्रूयते। तत्र श्रीरघुनाथतीर्थैः श्रीलक्ष्मीनारायणतीर्थशिष्यैः श्रीव्यासराजमठाधीशैस्त्रिमकुटक्षेत्रे वृन्दावने विराजमानै रचितं **तत्त्वसाराख्यमेकम्**। विद्वत्तल्लजानामृषितुल्यानां यदुपत्याचार्याणां प्रशिष्यैर्भगवन्तरायैः कृतं **मुक्तामञ्जर्याख्यमपरम्**। ग्रन्थान्ते भगवता कृतमित्येव तैः स्वनाम निर्दिश्यते। इदं व्याख्यानद्वयमिदानीमुपलब्धम्। **पाङ्गी आचार्यैः कृतमपरं**

**व्याख्यानं विद्यत इति निश्चयेन ज्ञायते।** तस्य ग्रन्थस्य विष्णुसहस्रनामव्याख्यानात्मको भागस्तद्वंशीयैरेव मुद्रापितश्च। तथापि बृहतीसहस्रव्याख्यानात्मको भागस्तद्वंशीयानां गृहेऽपि नैतावत्पर्यन्तमुपलब्धः। **एवं ताम्रपर्णी श्रीनिवासाचार्यैरेतरेयभाष्यव्याख्यातृभिरपि बृहतीसहस्रव्याख्या रचितेति श्रूयते।** तथापि तद्वंशीयानां विदुषां गृहेऽपि सा दुर्मिलैवाद्यापि वर्तत इति विषादो भवति।

उपलभ्यमानयोर्व्याख्यानयोर्मध्ये भगवन्तरायकृता मुक्तामञ्जर्यैव प्राचीनतरा। भगवन्तरायाः श्रीयदुपत्याचार्याणां यादवार्यनाम्नाऽपि विख्यातानां प्रशिष्याः। यादवार्याणां पृथिवीलोकत्यागः शालिवाहने १५७६ तमे संवत्सरे (1654 A.D.) रघुनाथतीर्थानां वृन्दावनप्रवेशस्तु शालिवाहने १६७७ तमे संवत्सरे (1755 A.D.) अनयोर्व्याख्यानशैल्योर्भेदो वर्तते। भगवन्तरायैः सम्पादिता बृहत्यो न व्यख्याता अपि तु बृहतीसहस्रमूलभूता ऋच एव स्वतन्त्रतया व्याख्याताः। तादृशव्याख्यानानन्तरमस्मिन् मन्त्रेऽमुकाक्षर-मारभ्योत्तरमन्त्रे अमुकाक्षरपर्यन्तमेका बृहती अनुसन्धेया, तत्प्रतिपाद्यविष्णुसहस्रनामगतमूर्तिविशे-षस्त्वमुकः, तत्रामनिर्वचनलभ्योऽर्थ एतन्मन्त्रगतैरेतैः पदैः सूच्यत इत्येवंरीत्या व्याख्यातम्। निदर्शनाय तेषां व्याख्यानस्यादिमोऽन्तिमश्च भागः परिशिष्टे निवेशितः कृपया द्रष्टव्यः।

रघुनाथतीर्थैस्तु सम्पादिता बृहत्य एव विशिष्टैकार्थप्रतिपादकतया व्याख्यायन्त इति विशेषः। अन्ते च विष्णुसहस्रनामनिर्वचनलभ्योऽर्थः प्रकृतबृहत्या एतैः पदैः सूच्यत इत्युपसंह्रियते। भगवन्तरायाणां व्याख्यानं प्रायो ब्राह्मणारण्यकप्रदर्शितनिर्वचनमवलम्बते। रघुनाथतीर्थानां धाटी ऋग्भाष्यशैलीमनुसरति। रघुनाथतीर्थैस्तु निर्वचनकाले व्याकरणप्रक्रिया सम्यक् प्रदर्श्यते। औणादिकप्रकरणे तेषां गतिरसदृशी। क्वचिदुणादिसूत्राणां विद्यमानां वृत्तिं निराकृत्यान्य एवार्थो व्यवस्थाप्यते। अनुव्याख्यानात् सूत्रभाष्यान्महा-भारततात्पर्यनिर्णयाद् भागवताच्च वचनानि यथेच्छमुदाहृत्य स्वव्याख्यानं दृढीक्रियते। मन्त्रव्याख्याने स्वरविचारः द्विवारमेव कृतः। तेषां व्याकरणवैदुष्यपरिशीलने स्वरप्रक्रियायामपि निष्णाता एव ते इति ज्ञायते। तथापि तैर्बृहतीनां स्वरसंयोजनं न कृतम्। तैरकृतं को वाऽस्मादृशः कर्तुं पारयेत्। इरुगपदण्डनाथेन विरचितो नानार्थरत्नमालाख्यः कोशः तैर्भूयोभूय उदाहृतः। अमरकोशस्तु द्विवारमेवोदाहृतो दृश्यते।

प्रकृतग्रन्थशोधने षण्मातृका उपयुक्ताः। तासां परिशीलनेन सर्वा अपि ता एकस्या एव मूलमातृकायाः प्रतिकृतय इति स्पष्टमभात्। यतो ग्रन्थपातः षट्स्वपि मातृकासु समानदेशे वर्तते। एकस्यां मातृकायां ''अत्र ग्रन्थपातः'' इति त्रिचतुरवारं निर्दिष्टं च। तत्र मूलमातृकायां ये दोषास्ते षट्स्वप्यनुवर्तन्ते। लेखकानामनवधानेनावैदुष्येन वा निमित्तेन नूत्ना अपि दोषाः प्रतिमातृकं दृश्यन्ते। अतः षण्णां मातृकाणां

परिशीलनेन तासां मूलमातृकायाः पाठनिर्धारण एव यथाशक्ति प्रयतितम्। स एव निर्धारितः पाठो दत्त इति एकमातृकावलम्ब्येवेदं पुस्तकमिति सुवचम्।

एतस्मिन् कार्ये मम विद्यागुरवः श्रीपेजावराधोक्षजमठाध्यक्षाः श्रीविश्वेशतीर्थपूज्यपादाः तथा तेषां गुरवः, यैरहमीषत् पाठितस्ते श्रीविद्यामान्यतीर्थश्रीमच्चरणाभिधाना मुनयोऽपि मां निरन्तरमन्वगृह्णन्। तयोः पदपङ्कजानि हृदि निधाय दुःसाध्येऽस्मिन् कृतिविशेषे मया प्रक्रम्य साहसमेव कृतम्। तेषां भक्तिपूर्वकप्रणामवचनं विना किमन्यद् व्याहरामि।

अत्यपूर्वस्यास्य ग्रन्थतल्लजस्य प्रकाशनकर्मनिर्वहणेन श्रीमन्मध्वसिद्धान्तोन्नाहकसभया तिरुपति-क्षेत्रस्थया नूनं श्रीमन्मध्वसिद्धान्तोन्नाहः कृत इत्यन्वर्थनाम्नी सेयं सभा शोभते। आध्यात्मिकतत्त्वबुभुत्सूनां विशिष्टमुपकुर्वन्त्या अस्याः सभायाः कार्यनिर्वाहकाणां असाधारणसेवामिमां स्मारं स्मारं तानहं विशेषतः अभिनन्दामि।

अल्पज्ञोऽहमस्मिन् गुरुतरे कर्मण्यनधिकार्येवेति मे मनीषा। अतो ग्रन्थेऽस्मिन् ममानवधानेनाज्ञानेन च निमित्तेन तत्र तत्र सम्भवतो दोषान् सन्तः कृपालवो भवन्तः संशोध्य पठन्त्विति सविनयं प्रार्थये।

अनया सेवया श्रीरघुनाथतीर्थहृन्मन्दिरस्थो जानकीजानिः श्रीरामचन्द्रो भैष्मीसत्यासहितगोपाल-कृष्णाभिन्नः प्रीयतामित्यभिसन्धाय विरम्यते।

इति श्रीरघुनाथतीर्थसेवकः

**शेषगिरि आचार्यः**

---

## द्वितीयमुद्रणमधिकृत्य

माध्वसिद्धान्तोन्नाहिनीसभया पूर्वं मुद्रितोऽयं ग्रन्थः विदुषामध्येतॄणामध्ययनायेदानीं नोपलभ्यत इति धिया पूर्णप्रज्ञसंशोधनमन्दिरस्य संस्थापकाः अस्मद्गुरुचरणाः श्रीमन्तः पेजावरमठाधिपाः श्रीमद्विश्वेशतीर्थ-श्रीमच्चरणाः पूर्णप्रज्ञसंशोधनमन्दिरद्वारा ग्रन्थस्यास्य पुनर्मुद्रणं विधाप्य विद्वज्जनान् मां चान्वगृह्णन्। गुरुचरणेभ्यः सभक्तिश्रद्धं प्रणतिततीः समर्पयामि। समभिनन्दामि च संशोधनमन्दिराधिकारिप्रवरान्। विद्वांसः कर्मतन्त्रब्रह्मतन्त्रप्रवीणाः तथाऽध्येतारश्च ग्रन्थस्यास्य अध्ययनेन मयि कृपां कुर्वन्त्विति प्रार्थये।

**शेषगिरि आचार्यः**

# विषयानुक्रमणिका

| विषयाः | | पृष्ठसङ्ख्या |
|---|---|---|

॥ हरिः ॐ ॥

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## अथ श्रीरघुनाथतीर्थविरचिता बृहतीसहस्रव्याख्या

# तत्त्वसारः

जानकीवदनाम्भोजभानवे गतये सताम् ।
नमः श्रीरामचन्द्राय हेतवे सर्वसम्पदाम् ॥

बृहतीसहस्रपारावारशायी रमापतिः ।
अनिरुद्धादिपञ्चात्मा पञ्चद्वीपेषु काशते ॥

पञ्चाङ्गयुक्सुपर्णं य इष्टिकाचितिसंस्थितम् ।
आरूढस्तमहं वन्दे पञ्चशस्त्रोक्तमादरात् ॥

महदुक्थं ऋक्सहस्रं सहस्रहरिवाचकम् ।
व्याकरिष्ये यथायोगं दशप्रमतिवर्त्मना ॥

तदेतन्महदुक्थं पञ्चविधं स्तोमसामच्छन्दश्चितिशस्त्रभेदात्[1] । तेष्वनिरुद्धादिपञ्चमूर्तयः सन्ति । तथाहि - स्तोमेऽनिरुद्धः, साम्नि प्रद्युम्नः, छन्दसि सङ्कर्षणः, चितौ वासुदेवः, शस्त्रे नारायणः ।

तत्र स्तोमोऽपि पञ्चविधः । त्रिवृत्पञ्चदशसप्तदशैकविंशपञ्चविंशभेदात् । अत एव स्तोमस्थानिरुद्धोप्यनिरुद्धादिभेदेन पञ्चविधः सन् त्रिवृत्स्तोमेऽध्यात्माधिदैवताधिभूतगतत्वेन त्रिविधत्वात् त्रिवृन्नामकोऽनिरुद्धानिरुद्धो वर्तते । पञ्चदशाख्यस्तोमेऽध्यात्मादिभेदेन त्रिविधपञ्चभूतेषु

---

१. यो हवै यज्ञे यज्ञं वेदाहन्यहर्देवेषु देवमध्यूळ्हं स सम्प्रतिविदेष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूळ्हो यदेतन्महदुक्थं तदेतत् पञ्चविधं त्रिवृत् पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतो गायत्रं रथन्तरं बृहद् भद्रं राजनमिति सामतो गायत्र्युष्णिग् बृहती त्रिष्टुब् द्विपदेति छन्दस्तः शिरो दक्षिणः पक्ष उत्तरः पक्षःपुच्छमात्मेत्याख्यानम् । (महैतरेयोपनिषत्-२.२.४.)

पञ्चदशस्वधिकरणेषु स्थितत्वेन पञ्चदशनामकोऽनिरुद्धप्रद्युम्नः[1]। लिङ्गशरीरगताकाशादिपञ्चभूत-श्रोत्रादिदशेन्द्रियमनोबुद्धिषु सप्तदशस्वधिकरणेषु स्थितत्वात् सप्तदशनामकोऽनिरुद्धसङ्कर्षणः सप्तदशाख्यस्तोमे। अध्यात्मादिभेदेन त्रिविधास्थित्वक्चर्ममांसादिसप्तधात्वभिमानिषु सप्तदेवेषु एकविंशतिरूपेण। स्थितत्वादेकविंशनामकोऽनिरुद्धवासुदेव एकविंशे स्तोमे। अध्यात्मादिभेदेन त्रिधास्थितमनोबुद्ध्यहङ्कारचित्तसत्वरजस्तमःप्रकृतिषु स्थितैश्चतुर्विंशतिरूपैर्मूलरूपेण च सह पञ्चविंशतिरूपेण स्थितत्वात् पञ्चविंशनामकोऽनिरुद्धनारायणः पञ्चविंशे स्तोमे।

एवं सामापि पञ्चविधम्। गायत्ररथन्तरबृहद्भद्रराजनभेदात्। सामस्थप्रद्युम्नोऽप्यनिरुद्धादिभेदेन पञ्चविधः सन् गायकत्रातृत्वाद् गायत्रनामकः प्रद्युम्नानिरुद्धो गायत्रसाम्नि। देहाख्यरथारूढत्वाद् रथन्तरनामा प्रद्युम्नप्रद्युम्नो रथन्तरसाम्नि। बृहद्रूपत्वाद् बृहन्नामा प्रद्युम्नसङ्कर्षणो बृहत्साम्नि। मोक्षख्यभद्रप्रदत्वात् भद्रनामा प्रद्युम्नवासुदेवो भद्रसाम्नि। मुक्तरञ्जकत्वाद राजननामा प्रद्युम्ननारायणो राजनसाम्नि।

एवं छन्दोऽपि गात्र्युष्णिग्बृहतीत्रिष्टुब्द्विपदेति पञ्चविधम्। तत्रस्थसङ्कर्षणोऽपि अनिरुद्धादि-भेदेन पञ्चविधः सन् त्रिसन्ध्याकाले स्तूयमानत्वात् गायत्रीनामा सङ्कर्षणानिरुद्धो गायत्रीछन्दसि। दैत्यानामुष्णरूपत्वादुष्णिङ्नामा सङ्कर्षणप्रद्युम्न उष्णिक्छन्दसि। महत्त्वात् बृहतीनामा सङ्कर्षणसङ्कर्षणो बृहतीछन्दसि। त्रिभिर्वेदैः स्तूयत इति त्रिष्टुभ्नामा सङ्कर्षणवासुदेवस्त्रिष्टुप्छन्दसि। स्त्रीत्वपुंस्त्वभेदेन द्विरूपत्वाद् द्विपदानामा सङ्कर्षणनारायणो द्विपदाच्छन्दसि।

एवं श्येनाकारेष्टकानिर्मितस्थण्डिलविशेषरूपा चितिरपि शिरोदक्षिणपक्षोत्तरपक्षपुच्छमध्यदेहभेदेन पञ्चविधा। तत्र स्थितो वासुदेवोऽपि अनिरुद्धादिभेदेन पञ्चविधः सन् वासुदेवानिरुद्धनामा शिरसि वासुदेवप्रद्युम्ननामा दक्षिणपक्षे वासुदेवसङ्कर्षणनामोत्तरपक्षे वासुदेववासुदेवनामा पुच्छे वासुदेवनारायणनामा मध्यदेहे वर्तते।

एवं शस्त्रमपि प्राग्भागगायत्रतृचाशीतिबार्हततृचाशीत्यौष्णिहतृचाशीत्युत्तरभागभेदेन पञ्च-विधम्। तत्रस्थो नारायणोऽपि मत्स्यादिभेदेन पञ्चविधः सन् नारायणमत्स्यनामा प्राग्भागे नारायण-

---

१. अत्र प्रकरणे सर्वत्र यथायोग्यं 'वर्तते' इत्यनुषज्यते।

कूर्मनामा गायत्रतृचाशीत्यां नारायणवराहनामा बार्हततृचाशीत्यां नारायणनृसिंहनामा औष्णिह्यां तृचाशीत्यां नारायणवामननामोत्तरभागे वर्तते ।

पुनः स एव नारायणोऽनिरुद्धादिभेदेन पञ्चविधः सन् नारायणमत्स्यानिरुद्धनामा प्राग्भागे नारायणकूर्मप्रद्युम्ननामा गायत्रतृचाशीत्यां नारायणवराहसङ्कर्षणनामा बार्हततृचाशीत्यां नारायणनृसिंहवासुदेवनामा औष्णिहतृचाशीत्यां नारायणवामननारायणनामा उत्तरभागे वर्तते ।

एवं पूर्वभागोऽपि पञ्चविधः शिरोदक्षिणपक्षोत्तरपक्षपुच्छात्मभेदात् । तत्र पूर्वभागस्थितो नारायणमत्स्यानिरुद्धोऽपि अनिरुद्धादिभेदेन पञ्चविधः सन् नारायणमत्स्यानिरुद्धानिरुद्धनामा शिरसिनारायणमत्स्यानिरुद्धप्रद्युम्ननामा दक्षिणपक्षे नारायणमत्स्यानिरुद्धसङ्कर्षणनामोत्तरपक्षे नारायणमत्स्यानिरुद्धवासुदेवनामा पुच्छे नारायणमत्स्यानिरुद्धनारायणनामा मध्यदेहे वर्तते ।

तानीमानि रूपाणि त्रिवृत्स्तोमाद्यात्मान्तेषु स्वतः प्रवृत्त्यशक्यत्वात् तत्तदुचितकार्यनिर्वाहकाणि प्रमितानि च । तथा च पञ्चभागभिन्नशस्त्रगतानि रूपाणि श्येनाकारचितिस्थरूपाणां वाचकानि । तत्र नारायणमत्स्यानिरुद्धानिरुद्धाधिष्ठितः शिरोनामको भागश्चितेः शिरः स्थस्य वासुदेवानिरुद्धस्य प्रतिपादकः । नारायणमत्स्यानिरुद्धप्रद्युम्नाधिष्ठितो दक्षिणपक्षाख्यो भागः चितेर्दक्षिणपक्षस्थस्य वासुदेवप्रद्युम्नस्य वाचकः । नारायणमत्स्यानिरुद्धसङ्कर्षणाधिष्ठितोत्तरपक्षाख्यो भागः चितेरुत्तर-पक्षाधिष्ठितस्य वासुदेवसङ्कर्षणस्य प्रतिपादकः । नारायणमत्स्यानिरुद्धवासुदेवाधिष्ठितः पुच्छाख्यो भागः चितेः पुच्छस्थितस्य वासुदेववासुदेवस्य प्रतिपादकः । नारायणमत्स्यानिरुद्धनारायणाधिष्ठित आत्माख्यो भागश्चितेरात्मस्थितस्य वासुदेवनारायणस्य प्रतिपादकः ।

एवं तृचाशीतेः प्राचीनभागः पञ्चापि चितेः शिरआदिभागस्थभगवत्प्रतिपादकत्वात् शिर आदिसञ्ज्ञां लभन्ते । अवशिष्टगायत्रीतृचाशीत्यादय उत्तरभागान्ताश्चत्वारोऽपि भागाः चितिस्थविशिष्टमूर्तेः प्रतिपादकाः ।

किञ्चेदं बृहतीसहस्रं प्रत्यृचं सहस्रनामप्रतिपाद्यविश्वादिसहस्रमूर्तीनां यथाक्रमं प्रतिपादकम् । षट्त्रिंशत्सहस्राक्षिभिः षट्त्रिंशत्सहस्रहल्भिश्च युक्तत्वाद् द्वासप्ततिसहस्राणां भगवद्रूपाणां वाचकम् । एतेन बृहतीसहस्रस्योत्थापकत्वनिमित्तेन याज्ञिकप्रसिद्ध्या चोक्थत्वं सिद्धं महत्त्वं तु कथमिति चोद्यं निरस्तम् ।

किञ्च पुरुषदेहे तावदस्थिमज्जापर्वाणि सन्ति । तेषु च प्रत्येकं त्रिषु षष्ट्युत्तरत्रिशतसङ्ख्याकानि भगवद्रूपाणि सन्ति । तानि चाहत्याशीत्युत्तरसहस्राणि सम्पन्नानि । तानि च दक्षभागे चत्वारिंशदधिकपञ्चशतानि स्थितानि । एवं वामभागेऽपि चत्वारिंशदधिकपञ्चशतानि । एवमेव अर्कमण्डलेऽप्येतत्सङ्ख्याकानि स्थितानि संवत्सरस्याह्नां षष्ट्युत्तरत्रिशतानां एवमेतत्सङ्ख्याकानां रात्रीणां तत्सन्धीनां च प्रत्येकमेतावत्सङ्ख्याकानां निर्मातॄणि । पुरुषदेहस्थानि भगवद्रूपाणि उक्तरीत्या अशीत्युत्तरसहस्राणि वाक्प्रवर्तकत्वेनोच्चारणद्वारा बृहतीसहस्रनिर्मातॄणि । 'अस्थ्नां मज्ज्ञांपर्वणामिति त्रीणीतः' इत्यादितृतीयारण्यकगतवाक्यमत्र मानम् । तथा चाशीत्युत्तरसहस्र-भगवद्रूपनिर्मितत्वात् कथं न महत्त्वम् । किञ्च

'य एष उक्थनामाऽसौ सर्वोत्थापनको हरिः ।
महांश्च परिपूर्णत्वात् सहस्रबृहतीस्थितः ॥

स्तोमसामचितिच्छन्दःशस्त्रेष्वपि पृथक्पृथक् ।
एकैकमेव तद्रूपमनिरुद्धादिपञ्चकम् ॥'

'विष्णोः सहस्रनाम्नस्तु यत् तद्रूपसहस्रकम् ।
बृहतीसहस्रमेतच्च तद् वक्ति हि पृथक्पृथक् ॥

सहस्रशब्दोऽप्यमितं यतो वक्त्यमितान्यतः ।
नामानि विष्णोरुच्यन्ते सहस्रमिति चाख्यया ॥

अनन्तनामवचने त्वशक्तत्वात् सहस्रकम् ।
नाम्नां पृथगिदं प्रोक्तमनन्ततनुवाचकम् ॥

विष्णोरनन्तरूपाणामुक्त्या पञ्चशतद्वये ।
आसीत् सहस्रमित्यख्या सहस्रं मुख्यतोऽमितम् ॥'

'बृहतीसहस्रं चैतस्माद् रूपानन्ताभिधायकम् ।
पृथक्पृथग् हि नामार्था ऋच एताः प्रकीर्तिताः ॥

सर्वनामात्मकं तस्माद् ऋक्सहस्रमिदं हरेः ।
सर्वरूपाण्यतो विष्णोः संस्तुतान्यमुनैव हि ॥

मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः ।
कृष्णबुद्धौ च कल्की च रूपाणां दशकं हरेः ॥

पञ्चभेदविभिन्नेन ह्यृक्सहस्रेण शस्यते ।
रूपाणां पञ्चकं पूर्वमपरं पञ्चकं हरेः ॥'

'ऋक्सहस्रमिदं तस्मादनन्तगुणमच्युतम् ।
अनन्तशक्तिममितरूपनामानमेव च ॥

वक्ति छन्दस्त्रयं चात्र तृचाशीतित्रयात्मकम् ।
अशनादि त्रिकं तच्च भूत्वा विष्णुमुपैति च ॥'

'................ मध्यं नारायणः प्रभुः ।
वासुदेवोऽस्य पुच्छं च वामदक्षौ च पक्षकौ ॥

सङ्कर्षणश्च प्रद्युम्नः क्रमादेव प्रकीर्तितौ ।
अनिरुद्धः शिरश्चैव तथैकोऽपि हि पञ्चधा ॥'

'एकापि प्रतिमा विष्णोर्बृहती च्छन्दसां वरा ।
अन्यच्छन्दोभिधा यत् स्यात् प्रतिमा मध्यमेव तत् ॥' इति च

'षट्त्रिंशद्रूपवान् विष्णुर्व्यञ्जनेषु च संस्थितः ।
तान्येव विष्णुरूपाणि रात्रीणामपि देवताः ॥

एकैकं च सहस्रं तद् व्यञ्जनेषु च रात्रिषु ।
रूपं विष्णोः स्थितं व्यूह्य षट्त्रिंशतिसहस्रधा ॥

षट्त्रिंशतिसहस्राणि स्वरगाणि हरेरपि ।
तान्येवाह्नां दैवतानि रूपाणि परमात्मनः ॥

द्वासप्ततिसहस्राणि रूपाण्येवं रमापतेः ।
शताब्दानामहोरात्रदैवतान्युत्तमानि च ॥

बृहतीसहस्रवर्णानामपि ध्यात्वाऽखिलान्यपि ।
शतवर्षहरिध्यानफलमाप्नोति पूरुषः ॥

एवं ज्ञात्वैव सम्पाद्य बृहतीनां सहस्रकम् ॥'

'षट्त्रिंशतिसहस्राणि बृहत्युक्थार्णगानि तु ।
स्त्रीरूपाणि हरेस्तावदह्नामप्यभिमानिषु ॥

सूर्यरूपेषु रूपाणि पुमाकाराणि सर्वशः ।
एतैः पुरुषगैरूपैर्बृहत्युक्थव्यवस्थितैः ॥

कदाचिद् भगवान् विष्णुः पुमाकाराणि तानि च ।
कृत्वा सूर्यगतान्येव स्त्रीरूपाणि विधाय च ।
तान्याप्नोति च पुंरूपैस्तैरेवाक्षरगानि च ॥

स्त्रीरूपाणि जगन्नाथः प्राप्नोत्यात्मेच्छया प्रभुः ।
पुंरूपप्रमदारूपस्वरूपै रमते स्वयम् ।
एकीकृत्य च तान्येव द्विरूपो रमते तथा ॥'

इत्यादिवचनैर्महत्त्वं कण्ठरवेणोक्तम् । न हि सहस्रनामप्रतिपाद्यरूपाभिधायकत्व सूर्य-मण्डलस्थितसहस्ररूपाभिन्नशरीरसंस्थसहस्ररूपनिर्मितत्वादिमाहात्म्यवतो बृहतीसहस्रस्य महत्त्वं नास्तीति वक्तुं शक्यम् ।

ननु तथापि 'तदिदास भुवनेषु ज्येष्ठं प्रतिपद्यते' इत्यादि पूर्वोक्तारण्यकादिवचनैर्विहितानां वह्वीनामृचां पर्यालोचनया याज्ञिकप्रसिद्ध्या च तदिदासेत्यारभ्य एषस्तोम इति परिधानीयान्तानां पञ्चचत्वारिंशदधिकशतोत्तरसहस्रसङ्ख्या[१] सम्पद्यते । तासु बृहतीसहस्राख्योक्ता । ताश्च विहिता

१. पञ्चत्रिंशदधिकशतोत्तरसहस्रसङ्ख्येति स्यात् । पृथग्गणने तावतीनामेव ऋचामुपलब्धेः ।

ऋचो नानाछन्दस्का एकपदा द्विपदाश्च । न बृहतीमात्रछन्दस्काः । लक्षणया सञ्ज्ञाङ्गीकारे च गायत्र्यादीनामपि छन्दसां सत्त्वेन गायत्रीसहस्रादिसञ्ज्ञाप्यापद्येतेति चेत् । अत्रोच्यते । न हि वयं बृहतीछन्दसां प्रविष्टत्वाद् बृहतीसहस्रसञ्ज्ञां ब्रूमः । अपि तर्हि तदिदासेत्यादिना विहितानां परिधानीयान्तानां षट्त्रिंशान्यक्षराण्येकामृचं विधाय तत्र बृहतीत्वमनुसन्धाय एवं सहस्रबृहतीः सम्पाद्य शंसितासु पञ्चचत्वारिंशदधिकशतोत्तरसहस्रच्चासु ऋक्षु बृहतीसहस्रसञ्ज्ञां ब्रूमः । न चैवं त्रिष्टुप्सहस्रत्वजगतीसहस्रत्वादीनामपि कृत्रिमसञ्ज्ञानां सम्पादयितुं शक्यत्वेनाव्यवस्थितिरिति वाच्यम् । न हि वयं स्वेच्छयैव कृत्रिमसञ्ज्ञामालम्ब्य बृहतीसहस्रत्वं सम्पादनीयमिति ब्रूमो येनातिप्रसङ्ग उच्यते । किन्तु वचनैकशरणा वयम् । वचनानि च सर्वच्छन्दसां बृहत्याः श्रैष्ठ्यं बृहतीसम्पादनमेव हरेः प्रियं नान्यदिति स्पष्टमाचक्षते । तथाहि -

'अभिमानी बृहत्याश्च वायुरेव यतः प्रभुः ।
तस्मादेषां छन्दसां हि वरिष्ठा बृहती स्मृता ॥'

'माहात्म्याधिक्यतश्चैव बृहतीत्येव नाम तत् ।
अङ्गेभ्य एव सम्भूतान्यन्यच्छन्दांसि चाब्जजात् ॥

मध्यात् तु बृहती जाता तस्मात् सा मध्यमुच्यते ।
पठ्यते तेन मध्ये सा छन्दसां प्रवरा सती ॥'

प्रधानत्वाद् बृहत्यास्तु जगत्याद्यं न युज्यते ।
सम्पादनाद् बृहत्यास्तु मुक्तो भवितुमीश्वरः ॥
स्यात् प्रसिद्धः सुकीर्तिश्च छन्दोमृत्युर्गुणाधिकः ।'

'एकापि प्रतिमा विष्णोर्बृहती छन्दसां वरा ।
अन्यच्छन्दोभिधा यस्मात् प्रतिमा मध्यमेव तत् ॥'

इत्यादिवचनानि तद्व्याख्येयानि 'तद्वा इदं बृहतीसहस्रं सम्पन्नं तद्यशः स इन्द्रः' इत्याद्यारण्यक वाक्यानि तथा तद्व्याख्यानारूपाणि 'एवं ब्रह्मादिभिः श्रूयमाणाऽनुष्टुवपि बृहत्या अङ्गमिति बृहत्या एवाधिक्यमुक्तं भवति । बृहतीसम्पादने अनुष्टुप्छंसनमात्रात् पञ्चविंशतानुष्टुभाधिक्यं च

भवति। अत आधिक्याद् बृहतीसम्पादनमेव वरम्' । इत्यादिभाष्यवचनानि चात्रानुसन्धेयानि । तस्मात् तददासेत्यारभ्य विहितानामेष स्तोम इति परिधानीयान्तानामृचां पञ्चचत्वारिंशदधिकशतोत्तरसहस्रसङ्ख्यानामक्षराणि स्वराक्षरैः सह षट्त्रिंशत्सहस्राणि गणयित्व तेष्वपि षट्त्रिंशदक्षराणि विभज्य प्रत्येकमेकैकामृचं बृहतीबुद्ध्याऽनुसन्धाय[1] तत्र प्रत्यृचं वक्ष्यमाणप्रकारेण मत्स्यादिपञ्चरूपाणि अनिरुद्धादीनि च विश्वादिसर्वप्रहरणायुधान्तानि रूपाणिच प्रतिपाद्यतया अनुसन्धाय प्रत्येकं षट्त्रिंशत्सहस्राक्षरसङ्ख्यया तावन्ति सूर्याहःपुरुषगतानि भगवद्रूपाणि प्रतिपाद्यतयाऽनुसन्धाय च तदिदासेत्याद्या ऋचस्तत्तदर्थज्ञानपूर्वकं शंसनीया इति सिद्धम्। अत एव तथाऽक्षरपरिगणनया ऋचं बृहतीं कल्पयित्वा तत्तद्रूपप्रतिपादनप्रकारो विविच्य व्याख्यायते ।

तत्र तावत् पञ्चचत्वारिंशदधिकशतोत्तरसहस्रसङ्ख्यं तदिदासेत्यादि परिधानीयान्तं शस्त्रं यत् तदेतदनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवनारायणाख्येषु पञ्चसु रूपेषु यथाक्रमं स्तोमसामछन्दश्रितिषु चत्वारि रूपाणि स्थितानि, अवशिष्टं नारायणाख्यरूपस्य वाचकं प्रतिपत्तव्यम्[2]। 'तत् पञ्चविधं यत् प्राक् तृचाशीतिभ्यः सैका विधा तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी' तत्र पूर्वभागस्य मत्स्यः । गायत्रीतृचाशीत्याः कूर्मः । बृहतीतृचाशीत्या वराहः । औष्णिहीतृचाशीत्या नृसिंहः । उत्तरभागस्य वामनः ।

तत्र पूर्वभागः पुनः पञ्चविधः । शिरो दक्षिणः पक्ष, उत्तरः, पक्षः, पुच्छमात्मेति । तत्र श्येनाकारेष्टकाचितिसंस्थितस्य सुपर्णस्य मध्यदेहप्रतिपादकोंऽशः तदिदासेत्यारभ्य विहरणेन सहपञ्चाशद् ऋग्जातमात्मेत्युच्यते । तदनन्तरं शंसनीयमेकोत्तरशतमृग्जातं सुपर्णस्य दक्षिणबाहुप्रतिपादकत्वाद् दक्षिणपक्षशब्देनोच्यते। तदन्तरं शंसनीयं द्व्यधिकशतमृग्जातं सुपर्णस्य वामबाहुप्रतिपादकत्वादुत्तरपक्षशब्देनोच्यते । तदनन्तरं शंसनीयमृग्जातं तत्पादप्रतिपादकत्वात् पुच्छशब्देनोच्यते ।

तत्राद्य आत्माख्यो भागो नारायणमत्स्यानिरुद्धनारायणरूपस्य प्रतिपादकः । पुच्छाख्यभागो मत्स्यात्मकस्य नारायणनारायणवासुदेवस्य प्रतिपादकः । उत्तरपक्षाख्यो भागो मत्स्यात्मकस्य

१. यद्यप्यत्रायं क्रमो निरूपितः। तथाप्युत्तरत्र ग्रन्थे क्रमस्यास्य नियमो न दृश्यते। बृहतीषु कचिदेव षट्त्रिंशाक्षराणि दृश्यन्ते। न्यूनाधिकाक्षरत्वं बहुमुपलभ्यते। अस्य कारणं तु मृग्यम्।

२. अस्पष्टार्थमिदं वाक्यं सर्वकोशेषु दृश्यते। लेखकानां प्रमादेन वाक्यं गलितं स्यत्।

नारायणनारायणसङ्कर्षणस्य प्रतिपादकः । दक्षिणपक्षाख्यो भागो मत्स्यात्मकस्य नारायण-नारायणप्रद्युम्नस्य प्रतिपादकः । शिरआख्यो भागो मत्स्यात्मकस्य नारायणनारायणानिरुद्धस्य प्रतिपादकः[१] ।

तत्रेयमाशङ्का । तदिदासेत्याद्या ऋचस्त्रिष्टुभः । त्रिष्टुभां च शंसनमप्रशस्तम् । 'अकृत्स्नो ह्येष आत्मा यद् वाग् । अभि हि प्राणेन मनसेस्यमानो वाचा नानुभवति' इति श्रुतेः । यस्यादयं पुरुषो मुख्यप्राणेन शिवेन च विषयान्तरे अभीस्यमानः अभ्यस्यमानः क्षिप्यमाणः प्रेर्यमाणो वाचा वागिन्द्रियेण विषयान् नानुभवति यत्किञ्चिदपि वक्तुं समर्थो न भवति । दुःखिते मनसि सर्वमसह्यमिति न्यायात् । ततो वाक् प्राणमनोभ्यां दुर्बला । तत एव वागभिमानित्युमा वायुशिवाभ्यां दुर्बला । तत एव च वागभिमन्यमाना त्रिष्टुप् मुख्यप्राणाभिमन्यमानबृहतीछन्दसो दुर्बला । ततस्त्रिष्टुप्छंसनमकृत्स्न आत्मा विष्णोः सम्पूर्णप्रतिमा न भवतीति तन्निन्दनात् 'कृत्स्नो ह्येष आत्मा यद् बृहती तस्माद् बृहतीमेवाभिसम्पादयेत्' इत्यादिना बृहतीशंसनस्य कृत्स्नप्रतिमात्वोक्त्या तत्प्रशंसाविधानाच्च । 'अभिमानी बृहत्यास्तु वायुरेव यतः प्रभुः । तस्मादेषां छन्दसां हि वरिष्ठा बृहती स्मृता । एकापि प्रतिमा विष्णोर्बृहतीच्छन्दसां वरा' इत्यादेश्च । ततो निष्केवल्यशस्त्रत्वेन[२] कथमिमा विधीयन्त इति ।

(अत्रोच्यते) ।आसां प्रकृत्या त्रिष्टुप्त्वेऽपि विहृतानां बृहतीत्वसम्पादनसम्भवेन न दोष इत्याशयेन पुरुष इति त्र्यक्षरं 'ता नदेन विहरति' इति प्रथमे विधाय पञ्चमे विवृतम्[३] । निदर्शितश्च । ततश्च

१. पुच्छाख्यो भाग इत्यारभ्य एतत्पर्यन्तमेवमेव पाठः सर्वत्र कोशेषु दृश्यते । तथापि प्रागुक्तरीत्या अत्रैवं पाठः सम्भाव्यते - पुच्छाख्यो भागो मत्स्यात्मकस्य नारायणानिरुद्धवासुदेवस्य प्रतिपादकः । उत्तरपक्षाख्यो भागो मत्स्यात्मकस्य नारायणानिरुद्धसङ्कर्षणस्य प्रतिपादकः । दक्षिणपक्षाख्यो भागो मत्स्यात्मकस्य नारायणानिरुद्ध-प्रद्युम्नस्य प्रतिपादकः । शिरआख्यो भागो मत्स्यात्मकस्य नारायणानिरुद्धानिरुद्धस्य प्रतिपादक इति । प्राग्भागे पञ्चावान्तरभागेष्वपि अनिरुद्धरूपप्रवेशस्यावश्यकत्वात् । अन्यथा 'मध्यं नारायणः प्रभुः' इत्यादि-प्रागुदाहृतभाष्यवचनविरोधात् ।

२. एकमात्रदेवताकं शस्त्रं निष्केवल्यशस्त्रमिति मीमांसापरिभाषा । 'पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः' इति ऋग्भाष्ये आचार्यपाददर्शितो मार्ग अन्य एव ।

३. ऐतरेयारण्यके प्रथमारण्यके विधाय पञ्चमारण्यके विवृतं निदर्शितं चेत्यर्थः ।

तदिदासेत्येका ऋक् एकचत्वारिंशदक्षरा । नदश्च[१] सप्ताक्षरपादचतुष्टयवत्त्वादष्टाविंशत्यक्षरा । पुरुष इति त्र्यक्षरमाहत्यैकत्रिंदक्षराणि संयोजनीयानि । आहत्य प्रकृत्या सह द्वासप्तत्यक्षराणि तत्राष्टादशाक्षराण्येकमर्धं सम्पाद्यर्धद्वयस्य षट्त्रिंदक्षरत्वसम्पादनेनैकां बृहतीं सम्पाद्य, एवमवशिष्टानि षट्त्रिंशदक्षराण्यप्यर्धद्वयं विधाय अपरां बृहतीं सम्पादयेत्[२] । एवं प्रथमामृचं पुरुषाक्षरनदाभ्यां संयोज्य बृहतीद्वयं सम्पाद्य वावृधानः वसा भूर्योजा इति द्वितीयादिद्वात्रिंशदृचःपुरुषाक्षरेण विना नदमात्रसंयोजनेनोक्तरीत्या एकैकामृचं द्वेधा विभज्य बृहतीद्वयं सम्पादयेत् । एवं सति मध्यदेहगतभगवद्रूपप्रतिपादकतया आत्मशब्दोदिताः सूक्तचतुष्टयात्मिकास्त्रिष्टुभः त्रयोविंशत्यृचः षट्चत्वारिंशद्बृहत्यः सम्पद्यन्ते । एवमेतां त्रिरिति वचनाद् विहृतायास्तदिदासेत्याद्यायास्त्रिवारं शंसने षड्बृहत्यः सम्पद्यन्ते । एवमाहत्य पञ्चाशद्बृहत्यः सम्पद्यन्ते ।

तत्राद्याया विहृताया ऋचोऽयं पाठक्रमः ।

॥ ॐ विश्वाय नमः ॥

ॐ तदिदास भुवनेषु ज्येष्ठं पु नदं व ओदतीनाम् ।
यतो जज्ञ उग्रस्त्वेषनृम्णो रु नदंयोयुवतीनाम् ॥ १ ॥[३]

[४]'तदिदासं जपेत् सूक्तेमेकवारं दिनेदिने । नवभिः कोटिभिर्मन्त्रैर्यत् फलं लभते तु तत्' इत्यादि ऋग्विधानवचनेन तत्तत्सूक्तमाहात्म्यं प्रतिपत्तव्यम् ।

---

१. नदस्याक्षरगणनयोष्णिक्त्वेपि पादगणनयाऽनुष्टुप्त्वम् । अत एव च त्रिष्टुभं चानुष्टुभं च विहरतीत्याद्यारण्यक-वाक्यम् ।

२. एवमष्टादशाक्षरार्धद्वयसम्पादननियमोप्युत्तरत्र न दृश्यत इत्यत्र कारणं मृग्यम् ।

३. ॐ शोमिति शस्त्राणि शँसन्तीति वचनात् 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते' इति वचनाच्च प्रतिबृहति ब्रह्मविद्यात्वादाद्यन्तयोरोङ्कारोच्चारणं कार्यम् । अत एव पञ्चमारण्यक ऐतरेये योयुवतीनोम्, इषुध्यसोमिति च निदर्शितम् । तत्र प्रणवष्टेरिति सूत्रेण समग्रस्य टेः प्रणवमादेशं कृत्वैवं निर्देशः कृतः । यज्ञकर्मणि चायमादेश इति तत्रैवोक्तम् । तथा च यदा यज्ञे शस्त्रतया शस्यते तदा आदावोङ्कारमुच्चार्यान्ते च टेरादेशं कृत्वा च शंसनीयम् । कोशेषु च यावन्नदमन्त्रविहरणमात्मभागे तावदेवानेन क्रमेण लिखितम् । ततः पश्चात्तु प्रणवो न लिखितः । तथाप्यत्रार्थग्रहणसौकर्याय नदविहरणभागेपि प्रणवान्तादेशो न कृतः । प्रथमं हिङ्कारं व्याहृतीश्चोच्चार्य ततः शस्त्रं शंसनीयमित्यारण्यक एव विहितम् ।

४. ऋग्वेद दशममण्डले विंशत्युत्तरशततममिदं सूक्तम् । (ऋ. १०.१२०)

तत्र तदिदासेति नवर्चस्य सूक्तस्याथर्वणः पुत्रो बृहद्दिवो नाम ऋषिः । त्रिष्टुब् बृहती वा च्छन्दः । मत्स्यात्मकवासुदेवनारायणानिरुद्धनारायणनारायणात्मा इन्द्रनामा विश्वो देवता ।

ज्येष्ठं परिपूर्णम् । वृद्धशब्दादिष्ठन् । वृद्धस्य चेति प्रातिपदिकस्य ज्यादेशो गुणश्च । भुवनेषु, पञ्चम्यर्थे सप्तमी, पातालादिभ्यो भवनशीलत्वाद् भुवनशब्दवाच्येभ्यः प्रदेशविशेषेभ्यः ज्येष्ठं व्याप्य वर्तमानम् ।

तत् परोक्षत्वात् तच्छब्दाभिधेयं ब्रह्माण्डाद् बहिष्ठं परममहत्परिमाणं शून्याख्यं परं ब्रह्मैव आस अस्य जगतोऽग्रे बभूव । तस्यैव लक्षणान्तरमुच्यते पृ पालनपूरणयोरिति व्याख्यानात् पालनकर्मणः पूरणकर्मणो वा कर्तरि डुप्रत्यये निष्पन्नेन पुशब्देन । पालनीयं पूरणीयं च निर्दिशति नदं व इत्यादिना । प्राणो वै नद इति श्रुतेः नदं मुख्यप्राणं ब्रह्मपददानेन अभीष्टपूरणेन च पालयति पूरयति चेत्यर्थः । अस्य सूक्तस्यैन्द्रत्वादिन्द्रेति सम्बुद्ध्यन्तं पदमध्याहार्यम् । हे इन्द्रः । वः बहुवचनं गौरवायैव, तव । ओदतीनां आकाशे पोप्लूयमानानाम् । उन्दी क्लेदने । कर्तर्यौणादिके अतिप्रत्यये उपधालोपे गुणे ङीपि च (रूपम्) । उन्दनकर्त्रीणां क्लेदनहेतूनाम् । 'आपो वा ओदत्यो या दिव्यास्ता हीदं सर्वमुन्दनत्यापो वा ओदत्यो या मुख्यास्ता हीदं सर्वमन्नाद्यमुन्दन्ति' इति श्रुतेः[१] । अपामिति शेषः । त्वत्सृष्टानामपां नदम् । स्वामित्वं षष्ठ्यर्थः । यद्वा वाचामिति शेषः । ओदतीनां भगवति भक्तिमुत्पाद्य क्लिन्नहृदयं जनमभीष्टैः सिञ्चन्तीति भक्त्या सेचकानाम् । अथवा गवामिति शेषः । ओदतीनां पयसा सेचकानाम् । तथा च भवदीयानामपां वाचां गवां च स्वामिनं नदं मुख्यप्राणं पालयति पूरयति चेति मुख्यप्राण-पालकत्वादि ब्रह्मणो लक्षणमुक्तम् । नदं त्वदीयं भृत्यं मुख्यप्राणम् । पुरुषो वै नद इति श्रुतेः । तं पूरयति पालयति वेति योज्यम् ।

अत्र विश्वो वायुरिति श्रुतेर्विश्वं वायुमभीष्टदानादिना वाति गन्धयतीति विश्वशब्दोपपदाद् वातेः कर्तरि कप्रत्यये उपपदान्त्यलोपे निष्पन्नस्य विश्वशब्दस्यार्थो नदपुशब्दाभ्यां सूचित इति सहस्रनामस्वाद्यपठिता **विश्वमूर्तिः** ।

मुख्यप्राणस्वामित्वाज्जगतोऽग्रे परब्रह्मणोऽवस्थानं युक्तमिति सूचितम् । तथात्वेऽपि कथमित्यतो भगवत्सृष्टावादिस्वामित्वादित्येको हेतुः सूचितः । हेत्वन्तरमुच्यते यतो जज्ञ इति । त्वेषो दीप्तिः, तेन नृम्णः शोभितः । उग्रः कपर्दीत्यादेरुग्रत्वाद् रुद्रः, यतो मुख्यप्राणात् जज्ञे, तं प्राणमिति सम्बन्धः ।

१. ऐतरेयारण्यके प्रथमारण्यके तृतीयाध्याये पञ्चमः खण्डः ।

तथा च जगत्संहर्तृत्वेन प्रसिद्धरुद्रजनकत्वाद् वायोस्तत्स्वामित्वं माहात्म्यातिशय एव भवति। इदं हेत्वन्तरम्। सर्वकार्यविनाशावस्थायां प्रलये भगवदवस्थानं कतमित्याशङ्क्याबादिस्रष्टृत्वं मुख्यप्राणपतित्वं वासुदेवाद्यनन्तरूपाभिव्यञ्जकत्वं चतुर्मुखजनकत्वं रुद्रजनकत्वं च प्रत्येकं हेतवोऽत्रोच्यन्ते। अस्मिन् पक्षे इन्द्र ओदतीनामबादीनां त्वत्त उत्पत्तिः (अस्ति)। प्राणस्य पालकादिश्चासि। त्वत्त उच्चै रक्षतीत्युग्रो वासुदेवादिः, उत्पूर्वाद् रक्षतेः कर्तरि डः उपपदान्त्यस्य गः, स यतो यस्माद् जज्ञे। उग्रः चतुर्मुखो वा रुद्रो वा यस्माज्जज्ञे तस्माद् ब्रह्म प्रलयकाले आसेति युक्तमिति योजना द्रष्टव्या। अस्तेर्लिटि छान्दसत्वादस्तेर्भूरित्येतत्र प्रवर्तते। किञ्च तद् ब्रह्म रमतेः केवलादन्तर्णीतण्यर्थाद्वा डुप्रत्यंये रु सर्वदा सुखरूपं मुख्यप्राणं च सुखयतीत्यर्थः। नह्येवंविधस्य प्रलयेऽवस्थानमसम्भावितं भवतीति भावः। मुख्यप्राणसुखदातृत्वं कथं हेतुरित्याशङ्क्य प्राणस्य माहात्म्यान्तरमुच्यते नदं योयुवतीनामिति। यु मिश्रणामिश्रणयोरित्यस्मात् पौनःपुन्ये भृशार्थे वा यङ्लुकि च धातुसञ्ज्ञायामोणादिके अतिप्रत्यये इकारस्य लोपे धातोर्द्वित्वे अभ्यासस्य गुणे उवङादेशे योयुवत् योयुवच्छब्दात् कृदिकारादक्तिन इति ङीप्। 'आपो वा योयुवत्यो याः स्वेदते ता हि सरीसृप्यन्त इव' इति श्रुतेः[1]। गमनशीलानामपां भगवत्तत्वावगमकानां वाचां देशाद् देशान्तरगमनशीलानां गवां च नदं स्वामिनं मुख्यप्राणं रु रमयतीत्यर्थः।

अत्र शंसनकाले प्रणवस्यान्ते विधानात् योयुवतीनामिति षष्ठ्यन्तात् प्रणवसंयोजने पररूपे च योयुवतीनोमिति निर्देशो भवति। तस्योंकारस्य पूर्णत्वमर्थः। यथायोगं हेतुत्वादिना पूर्णत्वं सर्वत्र योजनीयम्। तथा चेन्द्रस्य (यद्) मूलरूपं महागुणत्वात् तदेव शंसनीयमिति भावः॥ १॥

तस्यैव शंसनीयत्वे युक्त्यन्तरमुच्यते द्वितीयया।

**॥ ॐ विष्णवे नमः॥ ॐ वषट्काराय नमः॥ ॐ भूतभव्यभवत्प्रभवे नमः॥ ॥**

**ॐ भूतकृते नमः॥ ॐ भूतभृते नमः॥**

**सद्यो जज्ञानो निरिणाति शत्रून् पतिं वो अघ्न्यानाम्।[2]**

**अनु यं विश्वे मदन्त्यूमाः षो देनूनामिषुध्यसि॥ २॥**

---

१. ऐतरेयारण्यकम् (१.३.५.)

२. यद्यपि पतिं वो अघ्न्यानामिति नदपादस्य षडक्षरत्वमेव। तथाप्यघ्नियानामिति विश्लिष्य सप्ताक्षरत्वं सम्पादनीयं वरेणियमिति विश्लिष्य गायत्र्याः चतुर्विंशत्यक्षरत्वं यथा। एवमुत्तरत्रापि तत्र तत्र ज्ञातव्यम्।

हे इन्द्र ! वः, पूर्ववद् बहुवचनम्, त्वत्सृष्टानाम्। अघ्न्यानां, नञ्पूर्वाद् हन हिंसागत्योरित्यस्मात् कर्मणि यकि कृते उपधाकालोपे हो हन्तेरिति हकारस्य घत्वे स्त्रीत्वात् टाप् च, अहन्तव्यानाम् अदाह्यानामिति यावत् । यद्यप्यार्द्रेन्धनगतानामपामिन्ग्नैः सह दाहः प्रतीयते तथाप्यदग्धा एव धूमादिरूपेण बहिर्निर्गच्छन्ति । 'आपो वा अघ्न्या या अग्नेर्धूमा जायन्ते' इति श्रुतेः[१] । अघ्न्यानामजराणामिति वार्थः । यद्यप्यन्नादिभिः सहोदरं प्रविष्टा आप जीर्यन्ते तथापि पीतानामपां रेतोरूपेण परिणामेन बहिर्वनितादौ निर्गमनदर्शनादजरत्वं युक्तम् । 'आपो वा अघ्न्या याः शिश्नात् प्रसृज्यन्ते' इति श्रुतेः । एवमघ्न्यानामहन्तव्यानां नित्यानां वेदवाचां हन्तुमयोग्यानां गवां च पतिं स्वामिनं नदं मुख्यप्राणं प्रति उद्दिश्य वा सद्यः अविलम्बेन मधुकैटभादिशत्रून् निरिणाति जघान। जघ्नानः, जनी प्रादुर्भावे, प्रादुर्भूतस्सन् भवान् मधुकैभादिशत्रून् भक्तशरीरगताज्ञानादिशत्रूंश्च निरिणाति नितरां संहरति । अतो भवानेव शंस्यः । किञ्च हे इन्द्र धेनूनां धिनु पुष्टावित्यतः कर्तर्युप्रत्ययो गुणः, जगत्पोषकानामपाम् । 'आपो वाव धेनवस्ता हीदं सर्वं धिन्वन्ति' इति श्रुतेः । धेनूनां धर्मार्थकाममोक्षपोषकाणां वेदवाचां प्रसिद्धगवां वा । इषुध्यसि, इषवो धीयन्ते अस्मिन्निति इषुधिस्तूणीरम् । तमात्मानो दृष्टान्तत्वेनेच्छतीत्यर्थे क्यचि मध्यमपुरुषस्येदं रूपम् । पतिर्भवसीत्यर्थः । 'इषुध्यसीति यदाह पर्तायसीत्येव तदाह' इति श्रुतेः । एवम्भूतं त्वां पतिमनु विश्वे समस्ता ऊमाः प्रजाः,'भूतानि वै विश्व ऊमाः' इति श्रुतेः, मदन्ति सुखमनुभवन्ति ।

अस्मिन् शास्त्रे हरिमुख्यप्राणयोरुभयोरपि क्रमात् प्रतिपाद्यतया अत्र प्रयुक्तेन्द्रशब्दो वायोरपि वाचकः । उपपत्तिस्तु भाष्ये चोक्ता । वायुपक्षे तु हे वायो धेनूनामपां वेदवाचां गवामपि इषुध्यसि पतिर्भवसीति योज्यम् । 'वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति', 'तस्याः प्राण ऋषभः', 'अन्नं रसादिरूपेण प्राणः परिणयत्सौ' इत्यादेः ।

यद्वा धेनूनामपां वेदवाचां गवां चोक्तरूपेण पतिं नदं मुख्यप्राणं प्रति इषुध्यसीति भगवत्पक्षेऽपि योज्यम् । एवमधस्तादुपरिष्टाच्च यथायोगं हरिमुख्यप्राणपरतया योज्यम् । किञ्च 'षकारः प्राण आत्मा' इति श्रुतेः षः सर्वप्राणिचेष्टाः । षशब्दात् समूहार्थे अकारप्रत्यये असुनप्रत्यये वा । षः सर्वप्राणिचेष्टाः षड्गुणजातं वा (यो भवान्) प्रविशति स त्वं धेनूनामिषुध्यसीति सम्बन्धः ।

---

१. ऐतरेयारण्यकम् (१.३.५)

अनेन विशेषेण प्राणिचेष्टकत्वाद् वा ऐश्वर्यबलादिषड्गुणयोगाद् वा विष्णुरिति निर्वचनसूचनाद् **विष्णुमूर्तिरत्र** ॥ २ ॥

तदिदासेति प्रकृतिभूता ऋग् विहरणेन बृहतीद्वित्वमापन्नापि प्रकृतिविवक्षया एकैवेति त्रिः प्रथमामन्वाहेति वचनात्[१] त्रिवारं शंसनीया। विहृता चोक्तरीत्या शंसनीया। तथाचाद्या त्रिष्टुब् विहरणेन बृहतीत्वमापन्ना ऋग्द्वयं भवति। तस्य त्रिवारं शंसने षड्बृहत्यः सम्पन्नाः। पुनरावृत्तानां षण्णामृचां व्याख्यानं समानम्। नदं मुख्यप्राणं अभीष्टानि पूरयतीति नदपुशब्दाभ्यामुक्तेः, वः बलं तत्प्रभृति षड्गुणान् करोतीति वषट्कार इति निर्वचनसूचनाद् **वषट्कारमूर्तिर्द्वितीयवारं** शंसने आद्यऋक्प्रतिपाद्या द्रष्टव्या ॥ ३ ॥

भूतभव्यभवदाख्याः समस्ताः प्रजा यं त्वामनुसृत्य मदन्ति सुखयन्तीति अनु यं विश्वे मदन्त्यूमा इति द्वितीयऋग्गतेनोक्तेः भूतभव्यभवतां प्रकर्षेण भूतिर्यस्मात् स भूतभव्यभवत्प्रभुः। प्रोपपदात् भवतेर्डुरिति निर्वचनसूचनाद् द्वितीयवारं शंसने सद्यो जज्ञान इति द्वितीयया ऋचा **भूतभव्यभवत्प्रभुरिति** मूर्तिः प्रतिपाद्यते ॥ ४ ॥

उग्रो रुद्रो यतो जज्ञ इत्यनेन भूतो भूतनाथस्तं करोतीति भूतकृत्। भूतशब्दे उपपदे करोतेः क्विपि गुणाभावे ह्रस्वत्वं पिति कृति तुगिति निर्वचनसूचनात् तृतीयवारं शंसितायामाद्यायामृचि **भूतकृन्मूर्तिः** ॥ ५ ॥

शत्रुभूतानि निरिणाति नाशयतीत्यर्थप्रतीतेः भूतानि हरतीति भूतभृत्। भूतशब्दे कर्मण्युपपदे हरतेः क्विपि हृग्रहोर्भश्छन्दसीति भूतभृत् इति वा। अनु यं विश्वे मदन्त्यूमा इति सर्वप्राणिनो भगवन्तं प्राप्य पोषणधारणादिना सुखिनो भवन्तीति प्रतिपादनाद् भूतानि बिभर्तीति भूतभृदिति वा निर्वचनसूचनात् तृतीयवारशंसितायां द्वितीयस्यामृचि **भूतभृन्मूर्तिः** प्रतिपाद्या द्रष्टव्या।

अनेन पदसमन्वयपक्षे वसन्ते वसन्ते ज्योतिषेत्यादिकर्मवाक्यानां वसन्तिश्च वसंस्तत इत्यादिनिर्वचनानुसारात् हे वसन्ते हे ज्योतिषेत्यादिसम्बोधनरूपेण भगवत्परत्ववर्णने पूर्वमुत्तरं चान्वितस्य ततो व्याधुट्य प्रत्येकमन्वयस्य क्वाप्यदर्शनाद् अदृष्टकल्पने दोष इति केषाञ्चित्

१. 'एवमेतां त्रिः' इति वचनमैतरेयारण्यके पञ्चमे वर्तते।

कण्ठकोलाहला निरस्ताः। तदिदासेति पूर्वपादेनान्वितस्य यतो जज्ञ इति द्वितीयपादस्य ततो व्याधुट्य नदं योयुवतीनामित्यनेन, पूर्वपादस्य च नदं व ओदतीनामित्यनेन, नेदप्यन्योन्यमन्वितस्य पादचतुष्टयस्य तत्तदन्वयव्याघुट्टनेन तत्तद्दकूपूर्वपादेन[1] चान्वयस्य दर्शनात्। एवमुत्तरत्राप्यवधेयम् ॥ ६ ॥

॥ ॐ भावाय नमः ॥

**वावृधानः शवसा भूर्योजा नदं व ओदतीनाम्।**
**शत्रुर्दासाय भियसं दधाति नदं योयुवतीनाम्॥ ३ ॥ ७ ॥**

हे इन्द्र परमेश्वर वायो वा भवान् व ओदतीनां योयुवतीनां त्वत्सृष्टानामपां वाचां गवां च स्वामिनं नदं मुख्यप्रारमिन्द्रादिं वा शवसा बलेन वावृधानोऽत्यन्तं वर्धयमानः। 'संहितायां यत्र दैर्घ्यं पदे तत्र न विद्यते। उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विविक्षितम्' इत्युक्तेः। वर्धतेर्यङ्लुगन्तस्य ण्यर्स्येदं रूपम्। भूरीणि अप्रतिहतानि ओजांसि यस्य सः भूर्योजाः। अभक्तानन्धेतमसि पातयितुं बलं भक्तान् सुखयितुमुपष्टम्भकशक्तिं चाविष्करोतीति यावत्। अत एवाभक्तानां शत्रुः अन्धेतमसि शातयिता। हरिगुरुद्वेषादावभयमुत्पाद्यैव तैस्तत् कारयित्वा तानन्धेतमसि पातयतीति यावत्। दासाय भक्ताय। भियसं हरिगुरुद्वेषादौ भयम्। असुगागमश्छान्दसः। दधाति करोति। धाञः श्लौ रूपमेतत्। तदुधाञौ विपूर्वौ केवलौ वा करोत्यर्थावित्युक्तेः। भक्तान् हरिगुरुद्वेषादौ भयमुत्पाद्य ततो निवर्त्य तद्भक्त्यादीनेव दत्वा परमानन्दभागिनः करोतीत्यर्थः। यद्यप्यत्र पूर्वार्धे नदमिति श्रवणादुत्तरार्धेऽपि नदमिति व्यर्थम्। तथापि न केवलमस्मिन् सर्गे मुख्यप्राणस्योपकारकः किन्तु सृष्टौ सृष्टो यो यः प्राणस्तस्य तस्योपकारक इति वा, न केवलमेकशरीरस्थमुख्यप्राणस्योपकारकः किन्तु प्रतिशरीरस्थस्येति वा द्योतनान्नदमिति पुनर्वचनं सार्थकम्।

एवं पुरस्तादधस्ताच्च शत्रूनन्धेतमसि भावयति करोति दासान् परमानन्दभागिनो भावयति करोतीति निर्वचनसूचनाद् भावमूर्तिरत्र। भवतेर्ण्यर्थाद् हलि[2] रूपमेतत्॥ ३ ॥ ७ ॥

---

१. तदिदासेत्यादिपूर्वपादादिनेति यावत्। २.घञीति स्यात्।

॥ ॐ भूतात्मने नमः॥

**अव्यनच्च व्यनच्च सस्नि पतिं वो अघ्न्यानाम्।**
**सं ते नवन्त प्रभृता मदेषु धेनूनामिषुध्यसि॥ ८॥**

तावता भक्तजातं नान्यश्रित किन्तु भवानेव विशेषेण अनति चेष्टत इति व्यनत्। विपूर्वादनतेः कर्तरि शतृप्रत्ययः। अतथाभूतमव्यनत् अभक्तजातम्। व्यनच्च भक्तजातं च अव्यनच्च अभक्तजातं च दधाति[1] सम्यग् धत्ते। तर्हि कुत इदं वैषम्यम्? अव्यनच्च व्यनच्चेत्युभयं ते त्वया सं सस्नि सम्यक् स्नातम्, कर्मणि लकारः, संशोधितम्। अभक्तजातमयोग्यमिति निष्कृष्टं भक्तजातं योग्यमिति निष्कृष्टं यतोऽत इदं वैषम्यमिति योज्यम्। अत एव सात्विका भक्तजनास्त्वया प्रभृताः सम्यक् सन्मार्ग एव धृताः। ते मदेषु, मदो हर्षः, त्वतप्रसादसिद्धचर्थम् सं नवन्त, नु स्तुतौ, नुवन्ति स्तुवन्ति। किञ्च धेनूनामपां वाचां गवां च त्वमिषुध्यसि पतीयसि। यद्वा अघ्न्यानां पतिं प्राणं प्रति अव्यनच्च व्यनच्च अप्राणि यच्च प्राणि चेतनाचेतनात्मकं चगत् त्वया सस्नि साधितम्। त्वं च धेनूनामवादीनामिषुध्यसि पतीयसि। अत एव प्रभृतानि प्राणिजातानि सं नवन्त त्वां स्तोतुं सङ्गच्छन्त इति योज्यम्।

अनेन अव्यनच्च व्यनच्च सस्नीति चेतनाचेतनात्मकजगत्स्वामित्वोक्तेः भूतानामात्मा स्वामी भूतात्मेति निर्वचनसूचनाद् भूतात्ममूर्तिरत्र॥ ८॥

॥ ॐ भूतभावनाय नमः॥

**त्वे क्रतुमपि वृञ्जन्ति विश्वे नदं व ओदतीनाम्।**
**द्विर्यदेते त्रिर्भवन्त्यूमा नदं योयुवतीनाम्॥ ९॥**

हे इन्द्र विश्वे ऊमाः विश्वा ऊमा इति श्रुतेः समस्ताः प्रजाः ऋतुं समुदायैकवचनं अपिशब्दात् सर्वाणि भूतानि सर्वाणि मनांसि वाचिकमानसिकदैहिकान्यपि कर्माणि। त्वे त्वयि। सुपां सुलुगिति सप्तम्येकवचनस्य शे इत्यादेशः। वृञ्जन्ति समर्पयन्ति। 'त्रैविद्य मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते', मारुत्येव यतश्रेष्टा सर्वा तां हरयेऽर्पयेत्' इत्यादेः। यद् यस्माद् भगवत्समर्पणात्।

---

१. दधातीति पूर्वेणानुकर्षः। एवमुत्तरत्रापि तत्र तत्र द्रष्टव्यम्।

एते प्राणिनः द्विः द्विवारं, त्रिः त्रिवारं च 'पुरुषे हवा अयमादितो गर्भो भवति' इति खण्डोक्तरीत्या द्वितीयं जन्म तृतीयं जन्म च भवन्ति प्राप्नुवन्ति। किञ्च ओदतीनां योयुवतीनामपां वाचां गवां पतिं नदं मुख्यप्राणं प्रति इषुध्यसि पतीयसि। यद्वा हे इन्द्र विश्वे जना भवदीयानां कर्मणां प्रवर्तकं त्वां प्रति क्रियमाणान् क्रतून् वषट्कारादिसहितक्रियाविशेषान् मुख्यप्राणे त्वयि च समर्पयन्ति यद् यस्मादेतदर्थमेव योयुवतीनां कर्मणां प्रवर्तकं प्राणं त्वां च पूजयितुमेव द्विवारं त्रिवारमनेकवारं तत्र तत्र जायन्ते जनाः। अथवा मुख्यप्राणं प्रति स्वामिनि त्वयि क्रतुं 'त्वयीमानि सर्वाणि भूतानि सर्वाणि मनांसि सर्वे क्रतवोऽपि वृञ्जन्तीत्येव तदाह' इत्यारण्यकात् क्रतूपलक्षितसर्वाणि भूतानि वर्तन्ते। अतस्त्वे एव क्रत्वादीन् सर्वे जनाः समर्पयन्ति। शिष्टं पूर्ववत्। अत्र सर्वत्र ओदच्छब्द-योयुवच्छब्दयोरब्वाचकत्वात् तद्वाचिनां च कर्मवाचकत्वाद् युक्तं तत्परतया व्याख्यानम्।

भूतानि द्विवारं त्रिवारं भावयतीति भूतभावनः। भूतशब्दोपपदात् अन्तर्णीतण्यर्थाद् भवतेर्ल्युडिति निर्वचनसूचनाद् **भूतभावनमूर्तिरत्र** ॥ ९ ॥

**॥ ॐ पूतात्मने नमः ॥**

**[1]स्वादोः स्वादीयः स्वादुना सृजा सं पतिं वो अघ्न्यानाम्।**
**अदः सुमधु मधुनाभि योधीर्धेनूनामिषुध्यसि ॥ १० ॥**

किञ्च हे इन्द्र त्वं स्वादोः पदार्थस्य, कामितोपलक्षणमेतत् स्वादीयः, अपेक्षितः। स्वादुना अपेक्षितेन

---

१. 'अत्र ह्येके स्वादोः स्वादीयः स्वादुना सृजासम्, अदः सु मधु मधुनाऽभियोधीरत्यात्मन एते पदे उद्धृत्य पक्षपदे प्रत्यवदधात्यश्वावन्तो मघवन्निन्द्र वाजिनो गामश्वं रथ्यमिन्द्र संकिरेत्येतयोश्च स्थान इतरे' इति पञ्चमारणे प्रथमाध्याये षष्ठखण्डे श्रूयते। उत्तरत्र दक्षिणपक्षे ६७-६८ बृहत्योः, तथोत्तरपक्षे १८४-१८५ बृहत्योश्च इत उद्धृतौ स्वादोः स्वादीय इत्यादि अदः सु मध्वित्यादि च पादौ प्रक्षिप्तौ दृश्यते। यद्यप्ययमेकदेशिनां पक्षतया वैकल्पिकस्तथाप्यनयोः पादयोरुत्तरत्र प्रक्षेपादत्र तत्रत्यौ पादावानेतव्यावेव। तथा चैवं पाठः सम्पद्यत अस्या बृहत्याः

'अश्वावन्तो मघवन्निन्द्र वाजिनः पतिं वो अघ्न्यानाम्।
गामश्वं रथ्यमिन्द्र संकिर धेनूनामिषुध्यसि ॥' इति।

श्रीवेदेशतीर्थक्रमे तु विनिमयमिमं वैकल्पिकत्वेनानादृत्य प्रकृत्यैव पठितमिति विशेषः।

सं सृजा अत्यन्तमविच्छिन्नं च योजयेति दैर्घ्यार्थः। किमुक्तं भवति। अदः इदं प्रियं वस्तु सुमधु अपेक्षणीयं मधुना अपेक्षणीयेन अभियोधीः संयोजय। एतदप्यपर्यवसितमिति 'मिथुनं वै स्वादु प्रजा स्वादु मिथुनं वै मधु प्रजा मधु मिथुनेनैव प्रजामभियुध्यति' इत्यारणेनैतद् व्याख्यातम्। त्वत्पूजापरम्पराऽविच्छेदसिद्ध्यर्थं प्रजासन्ततिमभिवर्धयेति तात्पर्यम्। युक्तिभिरनुचिन्तात्मकेन श्रुतिसङ्घर्षणरूपमिथुनेन प्रकृष्टो जायतेऽनयेति प्रजा ज्ञानं तदभिवर्धयेत्यध्यात्मं योजनीयम्। धातूनामनेकार्थत्वाद् युधिर्योगे वर्तते। एवमन्यत्राप्यध्यात्मं यथायोगं योजनीयम्। यत्र त्वस्पष्टं तत्र वक्ष्यते।

किञ्चाघ्न्यानां पतिं नदं प्रति इषुध्यसि धेनूनामिषुध्यसीत्यादि पूर्ववत्। साक्षात्परम्पराभेदेनास्य भेदो ज्ञातव्यः। यद्वा अघ्न्यानामहन्तव्यानामनुपरतानां कर्मप्रवाहाणां सन्ततं सर्वान्तर्यामितया कर्मप्रवर्तकं वा नदं त्वदीयं प्राणमाविश्य स्वादोः प्रियतमादपि स्वादीयः प्रजालक्षणं प्रियतमं वस्तु स्वादुना प्रियेण स्त्रीपुंसयोगलक्षणमिथुनकर्मणा प्रसिद्धस्त्रीपुरुषयोरपि मिथुनकर्मोत्पादयित्वा प्रजामुत्पादयेति तात्पर्यम्। 'सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः। तासां ब्रह्म महद् योनिरहं बीजप्रदः पिता' इत्यादेः।

अनेन सर्वपुरुषशरीरस्थत्वेऽपि दुर्भगशरीरावस्थानकृतापावित्र्यादिदोषस्पृष्टिरहितः, 'असङ्गो ह्ययं पुरुषः' इति श्रुतेरिति पूतं पवित्रमात्मा स्वरूपं यस्य सः पूतात्मेति निर्वचनसूचनात् **पूतात्ममूर्तिरत्र** ॥ १० ॥

॥ ॐ परमात्मने नमः ॥

**इति चिद्धि त्वा धना जयन्तं नदं व ओदतीनाम्।**
**मदेमदे अनुमदन्ति विप्रा नदं योयुवतीनाम् ॥ ११ ॥**

हे इन्द्र। वीराणां हर्षहेतुत्वान्मदो रणः। मदेमदे प्रतियुद्धमस्मच्छत्रून् जयन्तं धना तदीयधनानि अस्मदर्थे जयन्तमाहरन्तं त्वा त्वां विप्राः प्रकृष्टज्ञानिनः अनुमदन्ति सन्तुष्यन्ति अनुवदन्ति च। चित् क्वापि। इति हेतौ। तस्योत्तरात्रान्वयः। किञ्च व ओदतीनां योयुवतीनां पतिं नदमिषुध्यसीति पूर्ववत्।

अनेन भक्तप्रियत्वसूचनात् परमेषु भक्तेषु आत्मा मनःप्रीतिर्यस्य सः परमात्मेति निर्वचन-सूचनाद् **परमात्ममूर्तिरत्र** ॥ ११ ॥

॥ ॐ मुक्तानां परमागतये नमः ॥

**ओजीयो धृष्णो स्थिरमा तनुष्व पतिं वो अघ्न्यानाम् ।**
**मा त्वा दभन् यातुधाना दुरेवा देनूनामिषुध्यसि ॥ १२ ॥**

हे ओजीयः ओजस्विन् । असन्तादोजःशब्दात् विनिप्रत्यये तदन्तात् पुनरीयसन्प्रत्यये विन्मतोर्लुगिति विनो लुकि टिलोपे च ओजीयस्शब्दस्य सम्बुद्धौ रूपमेतत् । धृषि प्रागल्भ्य इत्यतो नुप्रत्ययः । हे धृष्णो धैर्यशालिन् परमेश्वर यस्माद् भक्तानां प्रिय इति तस्मात् स्थिरं भावप्रधानः स्थैर्यं ज्ञानं चातनुष्व विस्तारय । त्वामनुसृत्य वर्तमानानपरोक्षीकृतभगवद्रूपानस्मान् दुरेवाः दुःपूर्वादिण् गतावित्यस्मात् केवलादाङ्पूर्वाद्वा कसु प्रत्यये गुणे च 'एवस्' शब्दाज्जसि कसः सकारस्य लोप इदं रूपम् । दुष्टगमनशीला दुर्मार्गा दुर्गतियन्तारो वा दुर्गतिप्रापका वा । यातुधाना दैत्यरक्षः पिशाचाद्याः अनाद्यविद्याकर्मादयो वा मा दभन् न हिंसन्तु अस्मान् न पीडयन्तु । दभेर्माङ्योगादडभावः । यस्मात् त्वां भक्तप्रियमाहुस्तस्मादपरोज्ञानादि दत्त्वा प्रारब्धकर्म त्याजयित्वा अस्माकं प्राप्यो भवेति तात्पर्यम् । किञ्चाघ्न्यानां पतिं नदमिषुध्यसि धेनूनामिषुध्यसीति पूर्ववत् । यद्वा अघ्न्यानां धेनूनां पतिं प्राणमस्मासु स्थिरमातनुष्व आदानादिकर्मप्रवर्तकं कुरुष्व । सकलभूतेषु स्थितमुख्यप्राणद्वारा आदानादिकर्म कारयेति तात्पर्यम् ।

अनेन प्रारब्धकर्मादिभ्यो मुक्तानां परमप्राप्यत्वान्मुक्तानां परमा गतिरिति निर्वचनसूचनान्मुक्तानां **परमागतिमूर्तिरत्र** ॥ १२ ॥

॥ ॐ अव्ययाय नमः ॥

**त्वया वयं शाशद्महे रणेषु नदं व ओदतीनाम् ।**
**प्रपश्यन्तो युदेन्यानि भूरि नदं योयुवतीनाम् ॥ १३ ॥**

हे इन्द्र त्वया अनुगृहीता वयं भूरि भूरीणि बहुकालावस्थायित्वाद् बहूनि अविनश्वराणि युधेन्यानि, क्विबन्ताद् युधशब्दादहर्थे कन्प्रत्ययः (?) युद्धार्हाणि । आयुधेति वक्ष्यमाणमत्रापि सम्बध्यते ।

आयुधा आयुधानि , द्वितीयाबहुवचनान्तस्याकारादेशः, खड्गादीनि ज्ञानादीनि भगवद्गुणजातानि वा प्रपश्यन्तः सम्यगवेक्षमाणाः शास्त्राणि गृह्णन्तो भगवद्गुणजातान्यपरोक्षीकुर्वन्तः रणेषु प्रसिद्धेषु ज्ञानयुद्धेषु वा शत्रून् कामक्रोधादिषड्वर्गान् शाशद्महे शिक्षयामः । शद्लृ शासन इत्यस्मात् भृशार्थे यङ्प्रत्यये सन्यङोरिति द्वित्वे शाशदेत्यस्य धातुसञ्ज्ञायां लटो महिङादेशे अच्परत्वाभावाद् यङोचि चेत्यस्याप्रवृत्तौ छन्दस्युभयथेति महिङः आर्धधातुकसञ्ज्ञायां यलोपः । किञ्च व ओदतीनां योयुवतीनां पतिं नदं मुख्यप्राणं प्रति इषुध्यसि । यद्वा ओदतीनां योयुवतीनां नदं मुख्यप्राणं त्वयाऽस्मासु सन्निधापितं प्रपश्यन्तः सम्यग् जानन्तो वयं शाशद्मह इत्यादि पूर्ववत् ।

अविनश्वरगुणजातात्मकत्वादव्ययानि गुणजातान्यस्येति मत्वर्थीयाच्प्रत्ययेनाव्यय इति निर्वचनसूचनाद् अव्ययमूर्तिरत्र ॥ १३ ॥

॥ ॐ पुरुषाय नमः ॥

**चोदयामि त आयुधा वचोभिः पतिं वो अघ्न्यानाम् ।**
**सं ते शिशामि ब्रह्मणा वयांसि धेनूनामिध्यसि ॥ १४ ॥**

हे इन्द्र वचोभिस्त्वद्विषयैर्मन्त्रैः शत्रुहननादिसिद्धयर्थं ते तानि सकलाभीष्टदानसमर्थानि गुणजातानि आयुधानि च । सुपां सुलुगिता द्वितीयायाः शे । चोदयामि, 'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिद्धयति वाहुलकेन' इत्युक्तेस्तिङो व्यत्ययेन मसोमीत्यादेशः, प्रेरयामः अभिमन्त्रयामः, चिन्तयामश्चेति यावत् । किञ्च ब्रह्मणा वेदरूपेण मन्त्रेण वयांसि आयुधानि त्वद्गुणजातानि वा सं शिशामि सुतीक्ष्णानि कुर्मः । शाणेन निशाततमान्यायुधानि यथा लौकिकाः कुर्वन्ति तथा वयमपीमान्यायुधानि खड्गादीनि त्वद्गुणजातानि वा वेदमन्त्राभिमन्त्रणेन निशाततमानि कृत्वा वेदोक्तप्रकारेण ध्यानसहितानि पुरुषार्थदानसमर्थानि कृत्वा वाह्यान्तःशत्रून् जयेमेति तात्पर्यम् । शो तनूकरण इत्यस्य छान्दसः श्लुः बहुलं छन्दसीत्यभ्यासस्येत्वम् । अघ्यानां धेनूनामिति पूर्ववत् ।

अनेन पुरूण्यभीष्टानि सनोति, षणु दाने, ददातीति पुरुष इति निर्वचनसूचनात् पुरुषमूर्तिरत्र ॥ २४ ॥

॥ ॐ साक्षिणे नमः ॥

**स्तुषेय्यं पुरुवर्पसमृभ्वं नदं व ओदतीनाम् ।**
**इनतममास्यमास्यानां नदं योयुवतीनाम् ॥ १५ ॥**

पूरूणि बहूनि वर्पांसि गृहाणि रूपाणि ज्ञानानि वा । 'यस्यैकविंशति दिव्यानि स्थानानि दिवि चक्रिणः । वज्रिणो वापि तद्भक्तैर्भुज्यन्ते तानि याज्ञिकैः', 'अनन्तरूपोऽनन्तश्रीः' , 'यः सर्वज्ञः सर्ववित्, 'तान्यहं वेद सर्वाणि', इत्युक्तेः । देवयानपितृयानब्रह्मयानभेदेन बहवो मार्गा दातव्यतया नियम्यतया वा यस्येति तं पुरुवर्पसम् । ऋभ्वं स्वप्रकाशं सर्ववस्तुसाक्षात्करणशीलं वा । इनतममतिशयेन स्वामिनम् । सर्वेषामास्यानामाप्तुं योग्यानां प्रियाणां वस्तूनां मध्ये आस्यम् अतिशयेन प्राप्यं प्रियतमम् । आपेरहर्थे तव्यप्रत्यये प्रत्ययसम्बन्धिनोरकारवकारयोःछान्दसे लोपे सति आस्येति रूपम् । एवं रूपमिन्द्रमहं स्तुषेय्यं स्तौमि । अलाक्षणिकं कार्यमत्र छान्दसम् । किञ्च नदं व ओदतीनामित्यादि पूर्ववत् ।

साक्षाददृ द्रष्टरि सञ्ज्ञायामित्युक्तेः । (ऋभ्वशब्देन) साक्षादीक्षत इति साक्षीति निर्वचनसूचनात् **साक्षिमूर्तिरत्र** ॥ १५ ॥

॥ ॐ क्षेत्रज्ञाय नमः ॥

**आ दर्षते शवसा सप्त दानून् पर्ति वो अघ्यानाम् ।**
**प्र साक्षते प्रतिमानानि भूरि धेनूनामिषुध्यसि ॥ १६ ॥**

योसाविन्द्रः शवसा सुखेन स्वबलेन ज्ञानेन वा सप्त दानून्, दात्रः कर्मणि नुः, दातव्यान् भूर्भुवादिसप्तविधान् लोकान् आ सम्यग् दर्षते दर्शयति । सर्वदेहान्तर्गतः सप्तविधानि ऋग्यजुःसामाथर्वेतिहासपुराणपञ्चरात्राख्यानि प्रमाणानि दर्शयति तत्तदर्थान् ज्ञात्वा जीवं बोधयतीति वा । दृशेरन्तर्णीतण्यर्थादात्मनेपदं षत्वं च छान्दसम् । किञ्च भूरीणि प्रतिमानानि प्रतिबिम्बभूतानि जीवजातानि प्रकर्षेण साक्षते सक्षते प्राप्नोति जानाति वा । सक्षतिर्गतिकर्मेत्युक्तेः । रूपं रूपं प्रति रूपो बभूवेति हि श्रुतिः । तमिन्द्रं स्तौमीति पूर्वेणान्वयः । किञ्च पतिं वः ।

अनेन जीवाख्यसर्वक्षेत्रेषु स्थित्वा जीवादिस्वरूपं जानातीति क्षेत्रज्ञ इति निर्वचनसूचनात् **क्षेत्रज्ञमूर्तिरत्र** ॥ १६ ॥

॥ ॐ अक्षराय नमः ॥

**नि तद् दधिषेऽवरं परं च नदं व ओदतीनाम् ।**
**यस्मिन्नाविथावसा दुरोणे नदं योयुवतीनाम् ॥ १७ ॥**

हे इन्द्र ! गृहनामसु पाठाद् दुरोणं गृहम् । यस्मिन् दुरोणे अवरं निकृष्टं नश्वरं वा परमुत्कृष्टमनश्वरं वा पुमर्थमाविथ । अवतिरत्र दानार्थः, अन्तर्णीतसनर्थश्च आदातुमिच्छति । तद् गृहम् अवसा रक्षणेन । इत्थंभूतलक्षणे तृतीया । रक्षणं कुर्वन्नेव निदधिषे अत्यन्तं धत्से । नित्यं तद्गृहे सन्निहितो भवसीति यावत् । किञ्च नदं व ओदतीनाम् । स्वयं विनश्वरस्य नित्यफलदानाद्यनुपपत्तेरनाशित्व-मुक्तम् ।

अत एव न क्षरतीत्यक्षर इति निर्वचनसूचनाद् **अक्षरमूर्तिरत्र** ॥ १७ ॥

॥ ॐ योगाय नमः ॥

**आ मातरा स्थापयसे जिगत्नू पतिं वो अघ्न्यानाम् ।**
**अत इनोषि कर्वरा पुरूणि धेनूनामिषुध्यसि ॥ १८ ॥**

हे इन्द्र । जिगत्नू गमनशीले । गमेः क्नुः अनुनासिकलोपो द्वित्वं च । मातरा जगतां मातरौ लक्ष्मीसरस्वत्यौ, दुरोणे इत्यनुवर्तनीयम्, भक्तगृहे आ स्थापयसे तयोर्योगं करोषि । अतस्तव लक्ष्मी-सरस्वत्योश्च सन्निधानात् तस्मिन् गृहे पुरूणि कर्वराणि, कर्मनामैतत्, कर्माणि इनोषि प्रेरयसि । इण् गतौ, विकरणव्यत्ययादि छान्दसम् । तद्गृहे भगवत्पूजात्मकानि यज्ञकर्माणि संयोजयसे । किञ्च पतिं वो अघ्न्यानाम् ।

अनेन योजयतीति योगः । अन्तर्णीतण्यर्थादकारः । योगः संयोगः, तद्वान् अर्शआद्यजन्तो वा इति निर्वचनसूचनाद् **योगमूर्तिरत्र** ॥ १८ ॥

॥ ॐ योगविदांनेत्रे नमः ॥

**इमा ब्रह्म बृहद्दिवो विवक्ति नदं व ओदतीनाम् ।**
**इन्द्राय शूषमग्रियः स्वर्षा नदं योयुवतीनाम् ॥ १९ ॥**

किञ्चेन्द्राय परमेश्वाय बृहद्दिवः अथर्वणः पुत्रो बृहद्दिवो नामैतत्सूक्तद्रष्टा ऋषिः इमा इमानि ब्रह्म तदिदासेत्यारभ्योक्तानि वेदवेक्यानि शूषम्, क्रियाविशेषणम्, सुखरूपं यथा भवति तथा

विवक्ति अतिशयेन वक्ति । वृहद्दिवकृतस्तोत्रगोचरस्त्वम् । किञ्च अग्रियः अग्रे प्रलयकाले भवश्च । स्वर्षाः सुखस्य दातासि । अभ्यर्हितत्वात् त्वयि वेदवाचां योगविदः सम्बन्धविदाऽथर्वणः पुत्रस्य सुखदातेति तात्पर्यम् । स्वशब्दोपपदाद्रमतेरः टिलोपश्च । ततः सनोते रूपमेतत् । अग्रे भव अग्रियः श्रेष्ठजातिर्ब्राह्मणः स्वर्षाः स्वकीयानां सुखदाता वृहद्दिवो ऋषिर्विवक्तीति वा योज्यम् । वृहद्दिव इमानि ब्रह्माणि इन्द्राय इन्द्रे त्वयि विवक्ति निर्वक्ति, त्वयि वेदवाचां योगं जानाति च तमृषिं स्वर्षाः स्वर्गं नेतासीति वा । किञ्च नदं व ओदतीनाम् ।

भगवति सर्वेषां वेदानां योगवृत्तिं जानतां सुखस्य नेतासीति निर्वचनसूचनाद् **योगविदांनेतृमूर्तिरत्र** ॥ १९ ॥

॥ ॐ प्रधानपुरुषेश्वराय नमः ॥

**महो गोत्रस्य क्षयति स्वराजः पर्तिं वो अघ्यानाम् ।**
**दुरश्च विश्वा अवृणोदप स्वा धेनूनामिषुध्यसि ॥ २० ॥**

किञ्चयमिन्द्रो महः महतो गोत्रस्य वलासुरेण गोपिधानार्थमुपरिस्थापितस्य पर्वतस्य । कर्मणि षष्ठी । क्षयति ऐश्वर्यकर्मायम् ईष्टे ईश्वरः, अपगमयितुमिति शेषः । वलासुरेण स्थापितं पर्वतमपगमयितुं समर्थः । क्षि क्षये, क्षपयतीति वा । नात्राध्याहारः । स्वाः स्वे च यज्ञार्थमुत्सृष्टा विश्वाः समस्ता दुरः दुःखिता गा अप आवृणोत् अपगतावरणा अकरोत् । ताश्च स्वराजः, जान्तो द्वितीयान्तश्च, स्वयमेव राजन्ते प्रकाशन्त इति स्वराज अकरोत् । निर्वन्धं परिहृत्य बहिर्निर्गमयित्वा[1] गाः रममाणा अकरोदिति तात्पर्यम् । मिथ्याज्ञानेनावृतजीवान् प्रकृतिपुरुषसम्बन्धपरिहारेण विरजां तारयित्वा स्वरूपानन्दाविर्भावयुक्तान् सुखेन रममाणांश्चाकरोद्रित्यध्यात्मं योजनीयम् । किञ्चपतिं वो अघ्यानाम् ।

अनेन दैत्यानां प्रधानपुरुषस्य वलस्य तदीयपर्वतपिधानाद्वियापारनिरसनेनेष्ट इति प्रकृतिपुरुषयोस्तत्कार्याविद्यानिरसनेनेष्ट इति वा प्रधानपुरुषेश्वर इति निर्वचनसूछनात् **प्रधानपुरुषेश्वरमूर्तिरत्र** ॥ २० ॥

॥ ॐ नारसिंहवपुषे नमः ॥

**एवा महान् वृहद्दिवो अथर्वा नदं व ओदतीनाम् ।**
**अवोचत् स्वां तन्वमिन्द्रमेव नदं योयुवतीनाम् ॥ २१ ॥**

१. ग्रन्थकृद्भिः कजिल्लचन्भावोऽनाश्रितः प्रतोलयित्वा वलदेवसूनुरित्याद्यचार्यसरणिमनुसरद्भिः ।

महानुत्कृष्टोऽथर्वा यद्वा पितुःतद्वा पुत्रस्येति[१] न्यायेनाथर्वणः पुत्रो बृहद्दिवो नाम ऋषिः एवा एवमुक्तप्रकारेण स्वां स्वेन क्रियमाणां तन्वं शरीरवदत्यन्तप्रियां स्तुतिरूपामिमां वाचं, स्वां स्वरूपभूतां नरसिंहाकृतिं तन्वं तनुं प्राप्तवन्तमिन्द्रमेव इन्द्रं प्रत्येव परममुख्यया वृत्त्या अवोचदित्यावृत्त्या योजनीयम्। किञ्च नदं व ओदतीनाम्।

अनेन नरसिंहवद् वपुराकृतिर्यस्य स नरसिंहवपुः, आदेर्दीर्घः, इति निर्वचनसूचनात् **नारसिंहवपुर्मूर्तिरत्र** ॥ २१ ॥

॥ ॐ श्रीमते नमः ॥

**स्वसारो मातरिभ्वरीररिप्रा पतिं वो अघ्न्यानाम्।**
**हिन्वन्ति च शवसा वर्धयन्ति च धेनूनामिषुध्यसि ॥ २२ ॥**

न केवलं बृहद्दिव इन्द्रमेवावोचत् किन्तु स्वगारः सह जाताः, 'जगतो जामयो यस्मात् सह ताभिर्विवर्धते' इत्युक्तेः स्वसृवत् स्निग्धा इति वा। मातरिभ्वरीः, सप्तम्या अलुक्, जगन्मातरि भरणवत्यः। प्रथमार्थे द्वितीया। रिप्रं पापं तद्रहिता अरिप्राः आपश्च हिन्वन्ति प्रीणयन्ति। शवसा बलेन श्रिया च वर्धयन्ति। श्रीमन्तं तमिन्द्रं प्रकाशयन्ति च। किञ्च पतिं वो अघ्न्यानाम्।

अनेन श्रीरस्यास्तीति श्रीमानिति निर्वचनसूचनात् **श्रीमन्मूर्तिरत्र** (श्रीमती मूर्तिरत्र) ॥ २२ ॥

नवर्चं प्रथमं सूक्तमेवं व्याख्यातमञ्जसा।
विश्वादिश्रीमदान्ताश्च प्रीयन्तामथ वर्णगाः ॥

**॥ इति श्रीलक्ष्मीनारायणतीर्थपूज्यपादशिष्येण रघुनाथयतिना कृतायां तत्वसाराख्यायां टीकायां भावविवृतौ वृहतीसहस्रपारावारे प्रथमद्वीपे प्रथमं नवर्चं सूक्तं समाप्तम् ॥**

---

१. 'यत्र ह क्वचन पुत्रस्य तत् पितुर्यत्र पितुस्तत् पुत्रस्य' - ऐतरेयोपनिषत् (१-६) तत्र यथा नारायणस्य तत्पुत्राणां देवानां चाप इति नाम तद्वदत्राथर्वणः तत्पुत्रस्य बृहद्दिवस्याप्यथर्वनामेत्यभिप्रायः।

तां सु ते कीर्तिं मघवन् महित्वेति महद्धद्रूपसमृद्धमेतस्याह्नो रूपमित्यारणे तां सु ते कीर्तिमिति षळर्चं सूक्तं प्रशस्य विहितम्। अस्य सूक्तस्य[१] वामदेवपुत्रो बृहदुक्थऋषिः, त्रिष्टुप् बृहती वा छन्दः, मत्स्यात्मा इन्द्रनामकनारायणानिरुद्धनारायणो देवता। तां सु षड् बृहदुक्थो वामदेव्य इत्यनुक्रमणात्।

॥ ॐ केशवाय नमः॥

तां सु ते कीर्तिं मघवन् महित्वा नदं वा ओदतीनाम्।
यत् त्वा भीते रोदसी अह्वयेतां नदं योयुवतीनाम्॥ २३॥

हे मघवन्। मघो यशः, तद् दातव्यत्वेन यस्यास्ति स मघवा। असाधारण्येन व्यपदेशा भवन्तीति रमाब्रह्मणोर्यशो ददातीति लभ्यते। तस्य सम्बुद्धिः। यद् यस्माद् रुद्राद् भीते रोदसी द्यावापृथिव्यौ त्वामह्वयेतां रक्षणार्थमाह्वयेतां तस्मात् ते कीर्तिर्विस्तृताऽस्ति तां कीर्तिं सु व्याकरिष्ये। ससाधनां क्रियामाहुरित्यनेन केवलोपसर्गप्रयोगेण क्रियासम्बन्धो ज्ञायते। कुतः। महित्वा महतीं कर्तुम्, इतोपि विस्तृतां कर्तुम्। तुमर्थे त्वनुपत्ययः। किञ्च नदं वा ओदतीनाम्।

अनेन कश्च ईश्च के, तयोः शवः यस्मात् स केशवः। केशब्दोपपदात्[२] शवशब्दान्मत्वर्थे अचूप्रत्ययटिलोपश्चेति[३] निर्वचनसूचनात् केशवमूर्तिरत्र॥ २३॥

॥ ॐ पुरुषोत्तमाय नमः॥

प्रा वो देवाँ आतिरो दासमोजः पतिं वो अघ्न्यानाम्।
प्रजायै त्वस्यै यदशिक्ष इन्द्र धेनूनामिषुध्यसि॥ ४॥

किञ्च न केवलं रोदसी त्वमाह्वयेतां किन्तु सर्वे देवाश्च भीतास्त्वामाह्वयन्तीति ग्राह्यम्। अत एव तानसुरभीतान् देवान् आ समन्ताद् दुःखजाताद् अतिरः अतारयः। किञ्च दासान् भक्तजनान्

१. ऋग्वेदः १०-५४
२. कशब्दोपपदादित्येव बहुषु कोशेषु पाठः।
३. इदमस्पष्टम्। को ब्रह्मा ईर्लक्ष्मीः तयोः शवो यशो यस्मादिति केशव इति बहुव्रीहिः सरलः। पुनर्मत्वर्थप्रत्ययादि-कथनस्य कारणं न ज्ञायते। कोऽपि लेखकप्रमादः स्यात्। अथवा कयोः शवः केशवः, स दातव्यतयाऽस्तयास्तीति रीत्यन्तरकथनमेतत्।

देवादीन् प्रति ओजः, उपलक्षणमेतत्, अवष्टम्भशक्तिप्रभृतीनि सर्वाभीष्टजातानि आतिरः आ समन्ताद् अतिरः दत्तवानसि । त्वस्यै त्वामेव शरणमिच्छन्त्यः प्रजायै प्रजाः अशिक्षः । शिक्ष उपादाने । स्वीकृतवानसि भक्तत्वेन । अनेन सर्वोत्तमत्वं तवैवेति भावः । किञ्च पतिं वो अघ्न्यानाम् ।

अनेन पुरूणि अवष्टम्भशक्त्यादीनि पुरुषार्थजातानि पुरुभ्य उत्कृष्टेभ्यो देवादिभ्यः सनोतीति पुरुषः स चासावुत्तमश्चेति निर्वचनसूचनात् **पुरुषोत्तममूर्तिरत्र** ॥ २४ ॥

**॥ ॐ सर्वाय नमः ॥**

**यदचरस्तन्वा वावृधानो नदं व ओदतीनाम् ।**
**वलानीन्द्र प्रब्रुवाणो जनेषु नदं योयुवतीनाम् ॥ २५ ॥**

हे इन्द्र यद् यस्मात् तन्वा शरीरेणैव न तु कीर्तिमात्रेण । वावृधानः, वृधेर्लिटः कानचि रूपमेतत्, व्याप्तशरीरः सन् सर्वजनान्तर्गतः अचरः जगन्निर्मारमकरोः । सर्वं त्वदधीनमिति यावत् । जनेषु सर्वेषु विद्यमानानि बलानि गुणजातानि त्वमेवेति प्रब्रुवाणोऽस्मि । 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते', 'सर्वं समाप्नोषि ततोसि सर्वः' इत्युक्तेः किञ्च नदं व ओदतीनाम् ।

अनेन सर्वस्वामित्वात् सर्व इति निर्वचनसूचनात् **सर्वमूर्तिरत्र** ॥ २५ ॥

**॥ ॐ शर्वाय नमः ॥**

**मायेत् सा ते यानि युद्धान्याहुः पतिं वो अघ्न्यानाम् ।**
**नाद्य शत्रुं ननु पुरा विवित्से धेनूनामिषुध्यसि ॥ २६ ॥**

हे इन्द्र एवंभूतस्य ते तव हिरण्याक्षादिभिः सह यानि युद्धान्याहुः तानि युद्धानि सा प्रसिद्धा अघटनघटनापटीयसी मायेत् मायैव स्वेच्छानिबन्धनान्येव । स्वेच्छयैव हिरण्यादीन् तेषु वलज्ञानादिप्रवर्तको भूत्वा प्रतियोद्धॄन् विधाय तव युद्धानि प्रवर्तन्त इति यावत् । अत्र युद्धान्यनूद्य मायात्वं विधीयत इति विधेयानुसारेण स्त्रीलिङ्गता । कुत एतत् । स्वतः त्वच्छत्रोरत्यन्तासत्त्वात् । तदपि कुतः । अद्य इदानीं पुरा पूर्वम् । उपलक्षणमेतत् । आगामिनि काले च यतस्त्वं शत्रुं शातयितारं न विवित्से, विद्लृ लाभे लिटि छान्दसं रूपमेतत्, न लब्धवानसि । सर्वज्ञ एव कालत्रयेपि न पश्यसि अत एव न लब्धवांश्च शत्रुम् । अत एव शत्रुरसन्नेवेति तात्पर्यम् । किञ्च पतिं वो अघ्न्यानाम् ।

अनेन हिरण्याक्षादेर्जगतः शं सुखशब्दितं क्रीडादिचेष्टादिजातं वर्तयतीति शर्वः। शशब्द उपपदे रमु क्रीडायामित्यस्मात् ड्विः वृतु वर्तन इत्यस्मात् डः इति निर्वचनसूचनात् **शर्वमूर्तिरत्र** ॥ २६ ॥

॥ ॐ शिवाय नमः ॥

**क उ नु ते महिमनः समस्य नदं व ओदतीनाम्।**
**अस्मत् पूर्व ऋषयोऽन्तमापुर्नदं योयुवतीनाम् ॥ २७ ॥**

हे इन्द्र समस्य नीचोच्चाधिष्ठानेष्वपि पूर्णानन्दानुभविनः। माङ् माने। मानमनुभवः, आनन्दस्य। मा लक्ष्मीर्वेदाभिमानी[१] च, ताभ्यां सहितस्येति वा। ते तव महिमनः महिम्नः। अल्लोपाभावः छान्दसः। अस्मात् अस्मदपेक्षया पूर्वे पूर्वतना ऋषयो ब्रह्माद्या ज्ञानिनः नु इदानीन्तना अपि अन्तं निर्णयं सीमानं वा के आपुरित्याक्षेपे। न केऽपि। उ इत्यस्याक्षिप्तेन नञा सम्बन्धः। सुतरां न वयमिह (इति) स्पष्टम्। किञ्च नदं व ओदतीनाम्।

अनेनातिशयितं शं सुखं, तृतीयोऽतिशये, शिं पूर्णानन्दं वाति गच्छति अनुभवतीति निर्वचनसूनात् **शिवमूर्तिरत्र** ॥ २७ ॥

॥ ॐ स्थाणवे नमः ॥

**यन्मातरं च पितरं च साकं पतिं वो अघ्न्यानाम्।**
**अजनयथास्तन्वः स्वाया धेनूनामिषुध्यसि ॥ २८ ॥**

यद् यस्मात् स्वायाः स्वकीयाया विकाररहितत्वात् स्वरूपभूतायास्तन्वः। बहुलं छन्दसीत्युक्तेः सर्वनामकार्याभावः। अनित्यमागमशासनमित्युक्तेः आण्णद्या इत्येतन्न प्रवर्तते। साक्षात् स्वशरीरादेव जगतो मातरं पितरं च सरस्वतीं ब्रह्माणं च साकम् इतरदेवैः (सह) अजनयथाः उत्पादितवानसि। परम्परया च मातरं सरस्वतीं पितरं ब्रह्माणं चाणुरूपेणाविश्य देवैः सहितं जगदजनयथाः। द्यौः पिता पृथिवी मातेत्यादेः पृथिवीं द्यां चाविश्य सर्वमजनयथा इति वा। किञ्च पतिं वः।

---

१. सर्वत्र कोशेष्वेवमेव पाठो दृश्यते। परं वेदाभिमानिनीति पाठः स्याद् वेदाभिमानिनी श्रीरित्यभिप्रायेण। श्रीश्च ते लक्ष्मीश्च पत्न्याविति हि श्रुतिः। अथवा प्राणो वेदाभिमानीति साधुरिदम्।

अनेन सर्वदाप्येकप्रकारेणैवाविकारेणावतिष्ठतीति स्थः, अणुरूपेणान्तर्यामितया सर्वजगत्प्रविष्टत्वादणुः स्थश्चासावणुश्चेति स्थाणुरिति निर्वचनसूचनात् **स्थाणुमूर्तिरत्र** ॥ २८ ॥

**॥ ॐ भूतादये नमः ॥**

**चत्वारि ते असुर्याणि नाम नदं व ओदतीनाम् ।**
**अदाभ्यानि महिषस्य सन्ति नदं योयुवतीनाम् ॥ २९ ॥**

हे इन्द्र महिषस्य महितस्य सर्वपूज्यस्य । अविमह्योष्टिषच् । ते तव असुर्याणि । असुर्मुख्यप्राणः, स एषोऽसुरित्यादेः । उपलीणं चैतत् । वायुप्रभृतीन्यशेषभूतानि रमयन्ति शरीराणि प्रापयन्ति चेत्यसुर्याणि । अदाभ्यानि । दभे रूपमेतत् । नाम नाम्नैव, सुपो लुक् । नाम्नैव चत्वारि । नामभेदमात्रं न तु स्वरूपभेदः । चतुःसङ्ख्यानि रूपाणि सन्ति । नाम नामानि अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवाख्यानि वासुदेवादीनि वा सन्ति । किञ्च नदं व ओदतीनाम् ।

अनेन वाय्वादिभतानां प्राणिनामादिः कारणं भूतादिरिति निर्वचनसूचनाद् **भूतादिमूर्तिरत्र** ॥ २९ ॥

**॥ ॐ निधये नमः ॥**

**त्वमङ्ग तानि विश्वानि वित्से पर्तिं वो अघ्न्यानाम् ।**
**येभिः कर्माणि मघवन् चकर्थ धेनूनामिषुध्यसि ॥ ३० ॥**

हे मघवन् न तावता ते चत्वार्येव रूपाणि नामानि च किन्तु तानि विश्वानि [1]अन्यत्रैवोभयत्र प्रसिद्धान्यनन्तानि नामानि विश्वप्रविष्टान्यनन्तान्यपि च रूपाणि सन्ति । हे अङ्ग । येभिः विश्वप्रविष्टैरनन्तरूपैः । भिस ऐस्त्वाभावश्छान्दसः । विश्वानि कर्माणि सर्वाण्यपि चकर्थं कुरुषे कृतवांश्च । इतरेषामर्थात् । तस्मादनन्तरूपाणि ते सन्तीत्यङ्गीकार्यम् । अन्यथा कर्माणि न सिद्ध्येरन्निति हृदयम् । किञ्च हे अङ्ग त्वं तानि विश्वानि समस्तान्यपि ब्रह्मण्डदीनि वस्तूनि वित्से विन्दसे । विकरणव्यत्ययश्छान्दसः । स्वाधारतया जगद् विन्दसे । सर्वस्याधार इति यावत् । वसुधानीं विराजमिव त्वां जानीम इति यावत् । अनन्तरूपाभावेऽनन्तविधजगद्धारकत्वं न स्यादिति भावः । नन्विदमनन्तरूपवत्त्वं गुणोऽस्तु अनन्तनामवत्त्वं कथं गुणः । न ह्यनेकनामवत्त्वं गुणः एकस्यैव देवदत्तस्यानेकनामदर्शनात्', येनायं स्तूयेत । अत्रोच्यते- यैर्नामभिः कर्माणि चकर्थेति । न हि

१. सर्वत्र कोशेष्वेवमेव पठ्यते तथापि अन्यत्रान्यत्रैवोभयत्र प्रसिद्धानीत्यादि पाठः स्यात् ।

देवदत्तोऽनेकनामप्रवृत्तिनिमित्तगुणमाचिनोतीति अनन्तनामवत्त्वेऽनन्तगुणवत्त्वसिद्धेः युक्तमेवानन्तनामवत्त्वं गुण एवेति। किञ्च पतिं वो अघ्न्यानाम्।

अनेन वाय्वादिभूतानि प्राणिजातानि धीयन्त अत्रेति निधिः, निपूर्वाद् धाञः किः, इति निर्वचनसूचनात् **निधिमूर्तिरत्र** ॥ ३० ॥

**॥ ॐ अव्ययाय नमः ॥**

**त्वं विश्वा दधिषे केवलानि नदं व ओदतीनाम्।**
**यान्याविर्या च गुहा वसूनि नदं योयुवतीनाम् ॥ ३१ ॥**

हे मघवन् त्वं यान्याविः आविर्भूतानि मुक्तजातानि यानि च गुहा गूहितानि बद्धजीवजातानि। वसूनि वित्तवद् भोग्यानि। केवलानि व्ययादिदोषरहितानि बाह्यान्तराणि ज्ञानादीनि वसूनि द्रविणानि च दधिषे धत्से। व्यत्ययश्छान्दसः। व्ययादिदोषरहितवस्तुधारकत्वे सुतारामस्याव्ययत्वं सिद्ध्यतीति भवति स्तुतिः। किञ्च नदं व ओदतीनाम्।

न विद्यते व्ययो यस्येत्यव्यय इति निर्वचनसूचनाद् **अव्ययमूर्तिरत्र**। अव्ययत्वं गुणविशेषणं कृत्वा अव्ययानि गुणजातानि यस्येति पूर्वत्र[१]। अत्र साक्षात् भगवद्विशेषणं कृत्वा निरुक्तिरिति नामभेदो द्रष्टव्यः। एवमग्रेऽपि यथासम्भवं नामभेद ऊह्यः ॥ ३१ ॥

**॥ ॐ सम्भवाय नमः ॥**

**काममिन्मे मघवन् मा वितारीः पतिं वो अघ्न्यानाम्।**
**त्वमाज्ञाता त्वमिन्द्रासि दाता धेनूनामिषुध्यसि ॥ ३२ ॥**

हे इन्द्र यतस्त्वमाज्ञातासि प्राणि कृतसाधनानि जानासि, अत एव तत्फलानां दाता चासि। अतो मे कामं मदभीप्सितं विद्याधनात्मकं मा वितारीः नोल्लङ्घयेः। एवं मदभीष्टसम्भवस्य विघ्नो न भवेत्। तॄ प्लवनतरणयोरित्यस्य रूपम्। तात्पर्यार्थं त्वं शब्दाभ्यासः।

सम्भवन्ति कामा अस्मादिति **सम्भवमूर्तिरत्र** ॥ ३२ ॥

---

१. अनेकानामादर्शनादिति क्वचित् पाठः। २. अव्ययः पुरुषः साक्षीत्यत्राव्ययनाम्नीत्यर्थः।

॥ ॐ भावनाय नमः ॥

**यो अदधाज्ज्योतिषि ज्योतिरन्तर्नदं व ओदतीनाम् ।**
**यो असृजन्मधुना सं मधूनि नदं योयुवतीनाम् ॥ ३३ ॥**

यः अन्तर्ज्योतिषि शरीरान्तवर्तिनि ज्योतिरूपे जीवजाते जाठरजातवेदसि वा ज्योतिः प्रकाशनशक्तिं वा ज्ञानं वा अदधात् ददाति । यश्च मधुना मधुवत् काङ्क्षितेन शरीरेण महदादितत्वजातेन वा मधूनि ज्ञानानि शरीराणि वा समसृजत् । ज्योतिःप्रकाशनं सर्जनं च नैकेन रूपेणेति ज्ञापयितुं द्विर्य य इति । तं वयं स्तुम इति शेषः । उत्तरत्र वाऽन्वयः । किञ्च नदं व ओदतीनाम् ।

अनेन भावना ज्ञानमस्यास्तीति मत्वर्थीयोऽच्प्रत्ययः । भवत्युत्कृष्टोऽनेनेति भावो ज्ञानं तन्नयतीति वा भावनः । नयतेर्डः । इति निर्वचनसूचनाद् **भावनमूर्तिरत्र** ॥ ३३ ॥

॥ ॐ भर्त्रे नमः ॥

**अध प्रियं शूषमिन्द्राय मन्म पतिं वो अघ्न्यानाम् ।**
**ब्रह्मकृतो वृहदुक्थादवाचि धेनूनामिषुध्यसि ॥ ३४ ॥**

अध निरुक्तत्वात् ज्ञानादिसृष्टादिप्रवर्तकत्वादेव ब्रह्मकृतो वेदद्रष्टुः बृहदुक्थाद् बृहदुक्थनामकाद् ऋषेः यदवाचि यदवादि । ब्रुवोर्वदेर्वा कर्मणि रूपमेतत् । बृहदुक्थदृष्टं यद् वेदवाक्यं तदिन्द्राय प्रियं भूयात् । शूषं सुखकरं चास्माकं (भूयात्) अस्मत्कृतस्तोत्राणां हृदये भर्ता अस्माकं सुखदाता चेति वयं मन्म इति मन्त्रद्रष्टुर्वचनम् । बृहदुक्थेन मया दृष्टमिदं सूक्तं हृदये बिभृयादिति तात्पर्यम् । किञ्च पतिं वः ।

भक्तकृतस्तोत्राणां भर्तेति निर्वचनसूचनात् **भर्तृमूर्तिरत्र** ॥ ३४ ॥

व्याख्यातं व्यतिषङ्गेण सहितं षड्चं ततः ।
केशवाद्यास्तु भर्त्रन्ताः प्रीयन्तां मयि वत्सलाः ॥

**॥ इति श्रीलक्ष्मीनारायणतीर्थपूज्यपादानां शिष्येण रघुनाथयतिना कृतायां तत्वसाराख्यायां टीकाभावविवृतौ वृहतीसहस्रपारावारे प्रथमद्वीपे द्वितीयं सूक्तं समाप्तम् ॥**

अथ शस्त्रं द्वितीयं तद् व्यतिषक्तं हरेः प्रियम् ।
व्याख्यास्येहं यथाबोधं क्षम्यतां मम चापलम् ॥

भूय इद्वावृधे वीर्यायेति वीर्यवद्रूपसमृद्धमेतस्याह्नो रूपं पञ्चर्चं भवति पञ्चपदा पंक्तिरित्यादिना प्रशस्य विहितम् । पञ्चर्चस्य सूक्तस्य[1] बृहस्पतिपुत्रो भरद्वाज ऋषिः । इन्द्रनामकमत्स्यात्मक-नारायणानिरुद्धनारायणो देवता । त्रिष्टुप् बृहती वा छन्दः ।

॥ ॐ प्रभवाय नमः ॥

**भूय इद् वावृधे वीर्याय नदं व ओदतीनाम् ।**
**एको अजुर्यो दयते वसूनि नदं योयुवतीनाम् ॥३५॥**

इन्द्रो भगवान् वीरस्येदं वीर्याय, वीरशब्दाद् यः, वीरकार्याणि शत्रुवधादीनि (तदर्थं) भूयोपि ववृधे बलादिव्यक्तिमकरोत् । भूय इति बलादीनां प्रागपि सत्तामभिप्रैति । इत् एव । एवमेव । अत एव प्रकृष्टवृध्यादिमत्त्वात् प्रभव एक एवेति च सम्बध्यते । एक एवेन्द्रो बहुभ्यो वसूनि, उपलक्षणम्, सकलाभीष्टानि दयते च । दयतिः शिवकर्मा[2] । एको बहूनां विदधाति कामानिति श्रुतेः । एक एव चेद् ददाति तर्हि तस्य जरया क्लृप्तायुषः क्षये को दास्यतीति चोद्यमजुर्य इतीन्द्रविशेषणेन परिहरति । जॄ वयोहानावित्यस्माद् यकारप्रत्यये धातोरन्त्यस्योकारे रपरे सतीदं रूपम् । कदाप्ययं न जीर्यत इत्यर्थः । तेन जरादिराहित्येनैवावस्थितेः प्रकृष्टसत्तावत्त्वं सूचितम् । इदमलौकिकं कथमङ्गीकार्यम् (इत्यतः) भगवतोऽप्यलौकिकत्वादिति रङ्गेनाह । किञ्च नदं व ओदतीनाम् ।

प्रकर्षेण भवः सत्ता वृद्धिर्वा यस्य स प्रभव इति निर्वचनसूचनात् **प्रभवमूर्तिरत्र** ॥ ३५ ॥

॥ ॐ प्रभवे नमः ॥

**प्र रिरिचे दिव इन्द्रः पृथिव्याः पतिं वो अघ्न्यानाम् ।**
**अर्धमिदस्य प्रति रोदसी उभे धेनूनामिषुध्यसि ॥ ३६ ॥**

---

१. ऋग्वेद ६-३०

२. शिवकर्म इत्यपि क्वचित् पाठः । अर्थस्तु न स्फुटः । दानकर्मेति स्वरसम् ।

न केवलमिदमस्योक्तं माहात्म्यद्वयमेव किन्तु दिवः पृथिव्याश्च प्ररिरिचे, रिचिरतिरेके वर्तते, द्यावापृथिवीभ्यामप्यधिकपरिमाणो भवति। तदेव विशदयति। अस्येन्द्रस्यार्धं प्रत्येव उभे रोदसी वर्तेते। द्यावापृथिव्यावपीन्द्रस्य कटिमात्रप्रमाणे ततोऽप्यधिकप्रमाण इन्द्र इति भावः। इदमपि बुध्द्यारोहार्थमुक्तम्। वस्तुतस्तु अर्धस्यापि नालम्। बुध्द्यर्थः पादवदित्युक्तेः। पृथिव्यां द्यौर्महा-मेरुरित्यादेः वैवक्षिकद्यावापृथिव्योरेव न महान् किन्तु समस्तयोरपीति दर्शयति- उभे इति। बहुविधे इत्यर्थः। अन्यथा रोदसीति द्विवचनेनैव सिद्धेरुभशब्दो व्यर्थः स्यात्। किञ्च पतिं वः।

प्रकृष्टो भुवः, उपलक्षणम्, दिवश्चातिरिच्यत इति प्रभुः, उकारस्य ह्रस्वता, इति निरुक्तेः **प्रभुमूर्तिरत्र**॥ ३६॥

**॥ ॐ ईश्वराय नमः॥**

**अधा मन्ये वृहदसुर्यमस्य नदं व ओदतीनाम्।**
**यानि दाधार नकिरा मिनाति नदं योयुवतीनाम्॥ ३७॥**

अध अधुना अस्येन्द्रस्य असुर्यम् असुरेषु साधु। असुरशब्दात् तत्र साधुरित्यर्थे यकारप्रत्ययः, यस्येति च। असुरहननसमर्थं बृहद् बलमहं मन्ये। मनु अवबोधने। मन्यतिः स्तुतिकर्मा, स्तौमीति केचित्। इन्द्रो यानि कर्माणि दाधार धारयति, अभ्यासादिश्छान्दसः, अकरोत् तानि कर्माणि नकिः तृतीयोऽतिशये, न कश्चिदपि आ सम्यक् मिनाति, मीञ् हिंसायां, न हिनस्ति। प्रतिक्रिया यस्य न चेह क्लृप्तेत्यादेः। भगवदीयानि कर्माण्यमोघानीति यावत्।

सर्वेश्वरो भगवानेक एवेति सूचनाद् **ईश्वरमूर्तिरत्र**॥ ३७॥

**॥ ॐ स्वयम्भुवे नमः॥**

**दिवेदिवे सूर्यो दर्शतो भूत् पतिं वो अघ्न्यानाम्।**
**वि सद्मान्युर्विया सुक्रतुर्धाद् धेनूनामिषुध्यसि॥ ३८॥**

तानि कर्माणि कानि। यान्यकरोदिन्द्रस्तान्यनन्तत्वात् लेशतो दर्शयति। दिवेदिवे प्रतिदिनम्। सूर्यः असुरेणावृत इन्द्रेण दर्शतः दर्शनीयोऽभूत्। दृशेः कर्मण्यतच् प्रत्ययः। सूर्योपरोधकान् वृत्रमन्देहा-दीन् संहृत्य प्रतिदिनं सूर्यप्रदर्शनमिदमेकं कर्म ऐन्द्रमिति तात्पर्यम्। किञ्च सुक्रतुः सु स्वातन्त्र्येण

क्रतुः अभिव्यक्त्यादिकर्म यस्य स सुक्रतुरमोघकर्मा अमोघप्रज्ञो वा इन्द्रः सद्मानि भुवनानि उर्विया, उरु-शब्दाच्छसः इयादेशः, उरूणि विस्तीर्णानि सद्मानि पृथिव्यादौ स्थित्वा वि धात् व्यधात्, अकरोदित्यर्थः । इदमन्यत् कर्म । सूर्योपरोधनिर्हरणलोककल्पनसकलप्राण्यवनादीनि इन्द्रस्य कर्माणि च न कोऽपि प्रतिकरोति । अतः स एव स्वतन्त्र इति सूचितम् ।

स्वयमेव स्वतन्त्र एव भवति अभिव्यक्तो भवतीति स्वयम्भूरिति निरुक्तेः स्वयम्भूमूर्तिरत्र ॥ ३८ ॥

**॥ ॐ शम्भवे नमः ॥**

**अद्या चिन्नू चित् तदपो नदीनां नदं व ओदतीनाम् ।**
**यदाभ्यो अरदो गातुमिन्द्र नदं योयुवतीनाम् ॥ ३९ ॥**

हे इन्द्र आभ्यः आसाम् अस्मदादिप्रत्यक्षसिद्धानां नदीनां गातुं, गातुशब्दो मार्गार्थः, मार्गं प्रति । यद्वा गमेस्तुमुन् मकारस्याकारादेशः । अरदः, रद विलेखने लङ्, व्यालिखः । नदीनां प्रवाहसिद्ध्यर्थं सञ्चरिष्णून् पर्वतान् पक्षच्छेदेन भुवि पातयित्वा मार्गमकरोदिति यत् अपःकर्म तत् अद्यचित् अद्यापि नूचित् अनुपहतमेव प्राणिनां सुखकरं वर्तते । किञ्च नदं वः ।

शं भवत्यस्मादिति शम्भुः, भवतेर्डुः, इति निरुक्तेः शम्भुमूर्तिरत्र ॥ ३९ ॥

**॥ ॐ आदित्याय नमः ॥**

**नि पर्वता अद्मसदो न सेदुः पतिं वो अघ्न्यानाम् ।**
**त्वया दृळ्हानि सुक्रतो रजांसि धेनूनामिषुध्यसि ॥ ४० ॥**

यत आदौ त्वत्कृतमर्यादा अनुपहता वर्तन्ते तत एवेमे पर्वता अद्मसदो न । अदेः कर्मणि मन्, अदनीयमन्नं प्रति भोक्तुमुपविष्टा जना अद्मसदः । अन्नार्थं सीदन्तीत्यर्थे सदेः क्विप् । नशब्द उपमार्थे । अन्नार्थमागता जना यथा निश्चलमुपविष्टाः शत्रुभीत्या आसते एवं त्वद्भीत्या निषेदुः उत्पतनं विहाय निश्चला एवासते । अतस्त्वत्कृता मर्यादा अद्याप्यविलुप्तेति सम्बन्धः । अत एव रजांसि रजोगुणसृष्टशरीरभाञ्जि प्राणिजातानि त्वया दृळ्हानि दृढीकृतानि । ढकारस्य ळ्हादेशश्छान्दसः । अन्यथा पर्वतैश्चूर्णीकृतानि स्युरिति तात्पर्यम् । किञ्च पतिं वः ।

आदौ तता मर्यादा यस्येत्यादित्यः । आदिशब्दोपपदात् तनोतेर्ड्यप्रत्यय इति आदित्यमूर्तिरत्र ॥ ४० ॥

॥ ॐ पुष्कराक्षाय नमः ॥

**सत्यमित् तन्न त्वावाँ अन्यो अस्ति नदं व ओदतीनाम् ।**
**इन्द्र देवो न मर्त्यो ज्यायान् नदं योयुवतीनाम् ॥ ४१ ॥**

हे इन्द्र तत् पर्वतभेदनेन प्राणिसुखकरणादि पूर्वोक्तं माहात्म्यं सत्यमित् सत्यमेव । न बाधितम् । यतस्त्वावान् त्वमेव दृष्टान्तो यस्य । दकारस्याकारादेशः छान्दसः । त्वत्सदृशोऽन्यो देवो मर्त्यो वा नास्ति । त्वज्ज्यायान् मर्त्यो वा देवो वा नास्तीति किमु वक्तव्यम् । ''अल्पाक्षरेण शक्येऽपि वक्तुं बह्वक्षरं यदि'' इति न्यायेन कालत्रयेऽपि सदृशोत्तमाभावः सेत्स्यति । नह्येवंभूतेन क्रियमाणमन्यो बाधितुमर्हति । किञ्च नदं वः ।

पुष पुष्टावित्यतो भावे क्विप् । पुषं पुष्टिं करोतीति पुष्करः अधिकः सदृशो वा । तमासमन्तात् क्षिपति निरस्यतीत्याक्षः। आङ्पूर्वात् क्षिपतेर्डः । समाभ्यधिकवर्जित इति । पुष्करश्चासावाक्षश्च पुष्कराक्ष इति निरुक्तः पुष्कराक्षमूर्तिरत्र ॥ ४१ ॥

॥ ॐ महास्वनाय नमः ॥

**अहन्नहिं परिशयानमर्णः पर्तिं वो अघ्न्यानाम् ।**
**अवासृजो अपो अच्छा समुद्रं धेनूनामिषुध्यसि ॥ ४२ ॥**

हे इन्द्र अर्णः उदकं परिशयानं परितः नदीमूलान्यावृत्योदकं प्रतिबध्य शयानं अहिं तन्नामानमसुरं भवान् अहन् अहनत् । प्रत्ययलोपश्छान्दसः । ततश्च समुद्रमपां खातं प्रति अच्छा सम्यक् महावेगेन महास्वनेन च युक्ता अपः उदकानि अवासृजः, सृज विसर्गे, अवाङ्मुखेनागमयः । अहिना प्रतिरुद्धाभ्यो नदीभ्य उदकस्रवणाभावात् समुद्रः शुष्कः पुनस्तद्धननेन नदीप्रस्रवणद्वारा समुद्रं पूरितवानसि । किञ्च पर्तिं वः ।

महान् स्वनो ध्वनिर्नदीनां यस्मात् स महास्वन इति । महच्च तत् स्वं च महास्वं समुद्रसम्बन्ध्युदकं ज्ञानिनां स्वं ज्ञानं च नयति प्रापयतीति वा महास्वन इति निरुक्तः महास्वनमूर्तिरत्र ॥ ४२ ॥

॥ ॐ अनादिनिधनाय नमः ॥

**त्वमपो वि दुरो विषूचीर्नदं व ओदतीनाम् ।**
**इन्द्र दृळ्हमरुजः पर्वतस्य नदं योयुवतीनाम् ॥ ४३ ॥**

हे इन्द्र दुरः वृत्रेण प्रतिबद्धाः । दृ विशरण इत्यतः कर्मणि विच्, अन्त्यस्य ऋकारस्य रपर उकारः, ततो द्वितीयाबहुवचनम् । विषूचीः विष्वक् सर्वतो गमनशीला अपः । वि 'केवला उपसर्गा ससाधनां क्रियामाहुः' इति न्यायेन पूर्वानुवृत्त्या वा व्यसृजः । पर्वतस्य पक्षान् दृढं यथा भवति तथा अरुजः रुजो भङ्गे, अभाङ्क्षीः । यद्वा दृढं दृढः स्वयमाद्यन्तशून्यः, लिङ्गव्यत्ययश्छान्दसः । किञ्च नदं व ओदतीनाम् ।

न विद्येते आदिनिधने यस्य सोऽनादिनिधन इति निरुक्तः **अनादिनिधनमूर्तिरत्र** ॥ ४३ ॥

॥ ॐ धात्रे नमः ॥

**राजाभवो जगतश्चर्षणीनां पतिं वो अघ्न्यानाम् ।**
**साकं सूर्यं जनयन् द्यामुषासं धेनूनामिषुध्यसि ॥ ४४ ॥**

यस्मादेवमपामुत्पत्तिनिरोद्धारमसुरं निहत्य प्रवाहप्रतिबन्धकान् पर्वतान् पक्षच्छेदेन निराकृत्य पर्वतमेघमण्डलस्य दृढबन्धनप्रवेशं भङ्क्त्वा वृष्टिद्वारा अपः सर्वतो गमयित्वा प्रजानामुपकरोषि सर्वजनान् रञ्जयसि अतो रञ्जनाद् राजा अभवः । किञ्च चर्षणीनां प्रजानां ज्ञानां वा अर्थे साकं युगपत् सूर्यं वृत्रेण प्रतिबद्धोदयं ध्वान्तेन प्रतिबद्धं उषसम् उषःकालं च जनयन् प्रतिबन्धपरिहारेण सूर्यादीन् स्वस्वस्थानेषु सुखेनावस्थितान् कुर्वन् जनानां शरीरे ज्ञानोत्पत्त्यर्थं चक्षुरादीन्द्रियेषु तान् सन्निधापयंश्चाभवः । तेनापि राजेति सम्बन्धः । किञ्च पतिं वः ।

सूर्यादीन् तत्तत्स्थानेषु स्थापयित्वा धारणपोषणकर्तेति निर्वचनाद् **धातृमूर्तिरत्र** ॥ ४४ ॥

पञ्चर्चं व्यतिषक्तं तद् व्याख्यातं तेन मे हरिः ।
प्रभवादिश्च धात्रन्तः प्रीयतां मत्स्यवर्गगः ॥

॥ इति श्रीलक्ष्मीनारायणपूज्यपादशिष्येण रघुनाथयतिना कृतायां तत्वसाराख्यायां टीकाभावविवृतौ बृहतीसहस्रपारावारे प्रथमद्वीपे तृतीयं पञ्चर्चं सूक्तं समाप्तम् ॥

अथ तृचोऽध्यात्मसंस्थो मत्स्यादिहरिवाचकः ।
व्याख्यायते यथाप्रज्ञं वैदिकाचार्यवर्त्मना ॥

नृणामुत्वा नृतमं गीर्भिरुक्थैरित्युक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्याह्नो रूपमित्यारणेन प्रशस्य तृचो विहितः । अस्य तृचस्य[१] विश्वामित्र ऋषिः, इन्द्रनामा मत्स्यात्मा नारायणानिरुद्धनारायणो देवता, त्रिष्टुप् बृहती वा छन्दः ।

॥ ॐ विधात्रे नमः ॥

**नृणामु त्वा नृतमं गीर्भिरुक्थैर्नदं व ओदतीनाम् ।**
**अभि प्र वीरमर्चता सबाधो नदं योयुवतीनाम् ॥ ४५ ॥**

पूर्वेण माहात्म्यमभिधाय शिष्यजनान् प्रति सम्बोध्य विधत्ते । सबाधः सांसारिकतापत्रयेण सहिताः, बाधतेर्भावे क्विप् छान्दसः । हे सबाधः[२] सांसारिकजनाः । नृणां योद्धॄणां प्रवीरं प्रकृष्टवीर्यवन्तं अत एव नृतमं त्वां तमिन्द्रम् । उक्थैः सर्वोत्कृष्टभगवत्प्रतिपादकत्वादुत्कृष्टाभिर्गीर्भिः वेदवाग्भिः अर्चत पूजयतैव । यद्वा अर्चत, तृतीयोऽतिशय इति हे अर्चित सर्वपूजित इन्द्र । नृणां मध्ये नृतमं पुरुषोत्तमं प्रवीरमारब्धान्तगामिनं त्वामुक्थैर्वयं नुमः । नम इति वक्ष्यमाणमत्रापि सम्बध्यते । व्यत्ययेनोकारस्याकारः । किञ्च नदं वः ।

वि विशिष्टान् उक्थादिस्तोत्रगणान् स्वप्रतिपादकतया धत्त इति निरुक्तेर्विधातृमूर्तिरत्र ॥ ४५ ॥

॥ ॐ धातुरुत्तमाय नमः ॥

**सं सहसे पुरुमायो जिहीते पतिं वो अघ्न्यानाम् ।**
**नमो अस्य प्रदिव एक ईशे धेनूनामिषुध्यसि ॥ ४६ ॥**

किञ्चायमिन्द्रः पुरुमायः । माया सामर्थ्यमिच्छा वा । बहुसामर्थ्यवानप्रतिहतेच्छश्च पुरुमायः । सबाध इत्यनुवर्तते । बाधा बाधेन सहितान् स्वबाधकान् शत्रून् संसहसे, षह मर्षणे, पुरुषव्यत्ययेन

१. ऋग्वेदः (३-५१-४,५,६)

२. अत्र सबाध इत्यस्य मध्योदात्तत्वेन सम्बोधनान्तत्वमाश्रितम् । उत्तरत्र चानुवर्त्य द्वितीयाबहुवचनान्तत्वमाश्रितम् ।

सहते । इन्द्रेति सम्बोधनेन मध्यमपुरुष एव वा । शत्रुपीडामगणयित्वा युद्धे स्थिरो वर्तते । तान् सं जिहीते च, ओ हाक् त्यागे अन्तर्णीतण्यर्थस्य वर्णागमादिना रूपमेतत्, शत्रून् युद्धात् त्याजयते । तान् स्वयं त्यजति । तेषां मृत्यर्थमिति । किञ्च प्रदिवः दीव्यतेः क्विप्, सर्वजगद्धातृत्वेन प्रकाशमानस्यास्य चतुर्मुखब्रह्मणः स इन्द्र एक एव ईशो ईष्टे उत्तमो वर्तते । किञ्च पतिं वः ।

धातुश्चतुर्मुखस्योत्तम ईश इति निरुक्तेः **धातुरुत्तममूर्तिरत्र** ॥ ४६ ॥

॥ ॐ अप्रमेयाय नमः ॥

**पूर्वीरस्य निष्षिधो मर्त्येषु नदं व ओदतीनाम् ।**
**पुरू वसूनि पृथिवी बिभर्ति नदं योयुवतीनाम् ॥ ४७ ॥**

किञ्च मर्त्येषु जीवजातेभ्यः । पञ्चम्यर्थे सप्तमी । पूर्वीः पूर्वदिगवस्थितत्वादिमर्यादाः निष्षिधः, निर्निषेधे, सेधतेः कर्तरि क्विप् । निषेधकस्य अमर्यादकस्य । अस्येन्द्रस्य पूजार्थं पृथिवी भूमिः पुरूणि वसूनि रत्नादीनि बिभर्ति धत्ते । रत्नगर्भा वसुन्धरेत्युक्तेः । किञ्च नदं वः ।

प्रमा परिमितिः । (तां गच्छतीति) प्रमेयः । इण् गतावित्यस्मादकारप्रत्ययः । स न भवतीत्यप्रमेय इति निरुक्तेः **अप्रमेयमूर्तिरत्र** ॥ ४७ ॥

॥ ॐ हृषीकेशाय नमः ॥

**इन्द्राय द्याव ओषधीरुतापः पतिं वो अघ्यानाम् ।**
**रयिं रक्षन्ति जीरयो वनानि धेनूनामिषुध्यसि ॥ ४८ ॥**

न केवलं पृथिव्येवेन्द्रं सेवते किन्तु द्याव उत द्यावोऽपि द्युलोकाभिमानिदेवाश्च आपः अबभिमानिदेवाश्च रयिं द्रविणं रक्षन्ति । जीरयः, जॄ वयोहानौ, जीर्णा वृद्धा अपि वनानि वननीयानि फलानि रक्षन्ति । इन्द्रपूजार्थमेव धारयन्ति । यद्वा इन्द्राय इन्द्रपूजार्थमेव द्याव आकाशाभिमानिदेवाः, ओषधीः ओषधिवनस्पत्यभिमानिनः, आपः अबुपलक्षितपञ्चभूताभिमानिनः सूर्यादयः । ओषध्यभिमानिनश्चन्द्रादयो भूताभिमानिनो गणपत्यादयश्च देवाः । ''आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्'', ''ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्'', ''आपो रेतो भूत्वा शिश्नं प्राविशत्'' इत्यादेः । जीरयो जीर्णानि । व्यत्ययः छान्दसः । वनानि चक्षुरादीन्द्रियजातानि

तत्तच्छरीरेषु स्थित्वा रक्षन्ति स्वस्वकर्मसमर्थानि कुर्वन्ति । इन्द्रपूजार्थमेव तत्वाभिमानिनो देवा इन्द्रियादीनि रक्षन्तीत्यनेन इन्द्रियगणनिषेव्यतया स्वामित्वमुक्तं भवति । किञ्च पतिं वः ।

हृषीकाणामिन्द्रियाणामीशः स्वामीति निरुक्तेः **हृषीकेशमूर्तिरत्र** ॥ ४८ ॥

॥ ॐ पद्मनाभाय नमः ॥

**तुभ्यं ब्रह्माणि गिर इन्द्र तुभ्यं नदं व ओदतीनाम् ।**
**सत्रा दधिरे हरिवो जुषस्व नदं योयुवतीनाम् ॥ ४९ ॥**

हे इन्द्र तुभ्यं तव स्तुत्यर्थं ब्रह्माणि वेदवाक्यानि सत्रा सहैव, युगपच्चतुर्भिर्मुखैरिति यावत्, चतुर्मुखेन दधिरे, कर्मणि लकारः, धार्यन्ते । न केवलं वेदवाक्यान्येव (किन्तु) गिरः पौरुषेयाश्च तुभ्यं चतुर्मुखेन दधिरे । हरीन् प्रसिद्धानश्वान् इन्द्रियाणि वर्तयतीति हरिवाः । हे हरिवः इन्द्र तानि त्वं जुषस्व स्वीकुरु । किञ्च नदं वः ।

पद्मं स्वकारणत्वेन नयति प्राप्नोतीति पद्मनश्चतुर्मुखः । तेन आश्रियन्ते वेदगिरो यत्रेति पद्मनाभ इति निरुक्तेः **पद्मनाभमूर्तिरत्र** ॥ ४९ ॥

॥ ॐ अमरप्रभवे नमः ॥

**बोध्या३पिरवसो नूतनस्य पतिं वो अघ्न्यानाम् ।**
**सखे वसो जरितृभ्यो वयो धार्धेनूनामिषुध्यसि ॥ ५० ॥**

हे इन्द्र सा स्तुतिस्त्वया बोधि । कर्मणि लुङ्, अडभावो लकारव्यत्ययश्च छान्दसः । अबोधि ज्ञायताम् । श्रूयतां हृदये ध्रियतामिति यावत् । मनसि धृत्वा च नूतनस्य नवीनस्य अवसो रक्षणस्य । आपिः, आप्लृ व्याप्तावित्यतः कर्तरि किः, आपयिता भव । अपूर्वं रक्षणं कुरु । हे सख, सह खेन इन्द्रियजातेन वर्तत इति, सर्वदा सहचर । वसति सर्वत्रेति वसुः । हे वसो जरितृभ्यः त्वां स्तोतृभ्यो वयः दीर्घायुष्यम्, अजरामरत्वमिति यावत् धाः अधाः । लकारव्यत्ययेन धेहि । त्वां स्तोतॄणां दीर्घायुष्यं भूयात् । किञ्च पतिं वः ।

जरामरणराहित्यादिरूपस्य दीर्घायुष्यात्मकस्यामरत्वस्य प्रभुरिति निरुक्तेः **अमरप्रभुमूर्तिरत्र** ॥ ५० ॥

अमरप्रभुमूर्त्यन्तो मत्स्यवर्गस्तु चोदितः ।
नारायणः प्रीयतां मे पुनर्नारायणः पुनः ॥

॥ इति लक्ष्मीनारायणतीर्थपूज्यपादानां शिष्येण रघुनाथयतिना कृतायां तत्वसाराख्यायां टीकाभावविवृतौ श्रीबृहतीसहस्रपारावारे प्रथमद्वीपे चतुर्थं सूक्तमात्मप्रकरणं च समाप्तम् ॥

मत्स्यात्मकं शिरःसंस्थमनिरुद्धं प्रणम्य तत् ।
शिरःशस्त्रं व्याकरिष्ये क्षम्यतां मम चापलम् ॥

शिरःशस्त्रं विधातुं 'अथ सूददोहाः प्राणो वै सूददोहाः प्राणेन पर्वाणि सन्दधाति' इति ता अस्य सूददोहस इत्येका ऋक्[१] प्रशस्यादौ विहिता। सूदं कर्म तद् दोग्धीति सूददोहाः स तु प्राणो वै। यस्मादयं पुरुषः प्राणेन प्रसन्नेन पर्वाणि सन्धीन् सन्दधाति संयोजयति। तस्मात् प्राणप्रतिपादिका सूददोहःशब्दघटिता आदौ आत्मशंसनानन्तरं शंसनीयेत्यर्थः। अत एव शिरःशंसनात् प्राक् सा व्याख्यायते।

॥ ॐ विश्वकर्मणे नमः ॥

**ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः।**
**जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः यस्येदमारजः[२] ॥ ५१ ॥**

ताः सु उत् इत्युपसर्गद्वयपूर्वादिण् गतावित्यस्मात् करणे अन्येभ्योऽपि दृश्यते इति विहितस्य क्विपः सर्वापहारिणि लोपे सूत् इ इति स्थिते धात्विकारस्य निरुक्तत्वाद् व्यत्ययाद्वा अकारादेशे जश्त्वेन दकारे सम्यगुदेति उद्यो भवति पुरुषोऽनेनेति सूदं ज्ञानं कर्म च। तस्मिन् सूदशब्द उपपदे दुह प्रपूरण इत्यस्मात् कर्तर्यसुन्प्रत्यये गुणे दोहःशब्दः सकारान्तः। सूदं ज्ञानं कर्म वा दोग्धीति सूददोहाः हरिः प्राणश्च। मारुत्येव यतश्चेष्टेति श्रुतेः। स हि सर्वेषां कर्मज्ञानपूरकः। अत्र षष्ठी चतुर्थ्यर्थे सा च तादर्थ्ये। सूददोहसः हरेः प्राणस्य च सोमपानार्थम् पृश्नयः प्रच्छ ज्ञीप्सायामित्यस्मान्निप्रत्यये छ्वोः शूड्नुनासिके चेति छस्य शः संप्रसारणेन रस्य ऋकारादेशे सम्प्रसाराणाच्चेति

१. ऋग्वेदः ८-६९-३.
२. यस्येदमारज इत्यारभ्य जनेष्वेत्यन्तं तिस्रो गायत्र्यः शाखान्तरस्था आरण्यक उदाहृताः।

पूर्वरूपत्वे प्रश्नयोग्यत्वात् प्रष्टव्यत्वेनाभिमतपरब्रह्मादिरूपार्थवत्त्वात्, प्रपूर्वात् छन्द स्तुतौ इत्यस्माद् भावे निप्रत्यये धृणिपृष्णिपार्ष्णिभूर्णीति निपातनात् टिलोपे सम्प्रसारणे च भगवत्प्रशंसनरूपत्वाद्, अस्मादेव कर्मणि निप्रत्ययादौ सति अपौरुषेयत्वेन निर्दोषतया प्रशंसनीयत्वाद्वा पृश्नयो वेदवाचः।

आपः स्वभावतो मेध्या आपः पूज्याश्च सर्वदेति वचनात् प्रशंसनीयत्वेन निमित्तेन आपो गावश्च पृश्नयः। ताः प्रसिद्धा वाच आपो गावश्च । प्रजानामसु पाठाद् विशः प्रजाः तद्विशेषत्वाद् ऋत्विजश्च । त्रिषु त्रिविधेषु आरोचने आ सम्यग् रोचमानेषु, बहुवचनस्यैकवचनादेशः, आदित्यचन्द्रविद्युल्लोकेषु। स्थितानामिति शेषः। दिवः स्वर्गस्याधिपतीनां देवानां जन्मन् जन्मनि। विभक्तिलोपो नञ्सम्बुध्योरिति नलोपाभावश्च। स्थानोपलक्षणम्। देवानां जन्मस्थाने यज्ञे। पूर्वं हि देवाः स्वभागग्रहणाय प्रत्यक्षं व्यक्ता भवन्ति। तत्र सोमं श्रीणन्ति। श्रीञ् पाक इत्यस्य श्लवि रूपम्। धातूनामनेकार्थत्वात् परमेश्वरस्य सोमपानार्थं वेदवाचश्चेत् पृश्नयः तदा सोमं श्रीणन्ति गृह्णन्ति । मन्त्रैर्हि गृह्यते सोमः । आपश्चेत् तदा सोमं श्रीणन्ति संसृजन्ति संयुक्ता भवन्ति । अद्भिर्हि संसृष्टो भवति सोमः। गावश्चेत् तदा सोमं श्रीणन्ति पयो वा पचन्ति । पयसा हि पक्वो भवति । गोभिः श्रीणीत मत्सरमित्यादेः । ऋत्विजश्चेद् गृह्णन्ति संसृजन्ति पचन्ति चेति कर्तृचतुष्टयसम्बन्धः। ''यज्ञो हि देवानां जन्म तत्र हि देवाः प्रादुर्भवन्ति आसूर्याचन्द्रमसा वा विद्युतन्ते वै लोकानधिश्रिताः'' इत्यादिश्रुतिः। अत्र यद्यपि देवानां जन्मनि यज्ञे ताः पृश्नयो वेदवाच आपो गावश्च विशः ऋत्विजश्च सोमं श्रीणन्तीति न युक्तम्। ऋत्विजां वागादीनां च तुल्यवदेक-क्रियान्वयाभावात्। श्रीणन्तीत्युक्तधात्वर्थे वागादीनां करणत्वाद् ऋत्विजां च कर्तृत्वात्। न हि कर्तृकरणयोस्तुल्यवदेकक्रियान्वयः सम्भवति । अतः पृश्नीनामृत्विजश्च समुच्चयेन व्याख्यान-मयुक्तमिवाभाति। तथापि गौणमुख्यार्थविवक्षया समुच्चयोपपत्तिः। पृश्निषु गौणं कर्तृत्वम्। करणेपि कर्तृत्वव्यवहारस्य शब्दो वदतीत्यादौ दर्शनात्। ऋत्विजां मुख्यकर्तृत्वमिति गौणमुख्यसाधारण्येन समुच्चयोपपत्तिः । अत एव ऋचि प्रशब्दाभावः । तदिदमाह[१] मुख्यतस्ता एव विशः श्रीणन्तीति चशब्दवर्जनमिति ।

अध्यात्मं तु देवानां जन्मशब्देन पूर्वयुगे यज्ञकाले देवाः प्रत्यक्षं भवन्तीति देवताभिव्यक्तिहेतुत्वाद्

१. भगवानाचार्यवर्यः कर्मनिर्णये सूददोहोमन्त्रव्याख्यानावसरे।

यथा द्रव्यमयो यज्ञ उच्यते तथा ज्ञानमयोऽपि यज्ञ उच्यते। सोमशब्देन चन्द्राभिमन्यमानत्वाद् यथा सोमरस उच्यते तथा मनोवृत्तिरपि। तथाच सूददोहसे ज्ञानकर्मप्रवर्तकस्य मुख्यप्राणस्य तत्स्थ-परमेश्वरस्य च विषयतासिध्यर्थं ताः पृश्नयो वेदवाचः सोमं मनोवृत्तिं श्रीणन्ति गृह्णन्ति संवादेनाङ्गी-कुर्वन्ति दृढीकुर्वन्ति च। वेदवाकूशाणोल्लीढा हि मनोवृत्तिः सम्यग् भगवन्तं विषयीकरोति निजवैरिणं मिथ्याप्रत्ययादिकं चोच्छिनत्ति। यथोक्तम् विमलैः श्रुतिशाणनिशततमैः सुमनोसिभिराशु निहत्य दृढमित्यादि। आरजः सम्यग्रञ्जकस्य यस्येन्द्रस्य सकाशादिदं जगदुत्पन्नमिति वक्ष्यमाणेनान्वयः।

विश्वेषां प्राणिनां विश्वानि समस्तानि कर्माणि यस्मादिति निरुक्तेः **विश्वकर्ममूर्तिरत्र**॥

ननु ता अस्य सूददोहस इत्येषा ऋक् त्रिंशदक्षरा। षट्त्रिंशदक्षरबृहत्याश्चात्र शंसनीयतया कथमत्र शंस्यते। न चोत्तरऋक्स्थानि षडक्षराण्यत्र संयोज्य बृहतीत्वं सम्पादनीयमित्युक्तमिति वाच्यम्। प्रत्यृचमेका मूर्तिः प्रतिपाद्येत्युक्तिविरोधात्। न हि ऋगन्तरस्थानामक्षराणामत्रान्तर्भावः सुसम्पाद इति चेत्। अत्रोच्यते। अन्नमयादिरूपेण शिरो नारायणः पक्षो दक्षिणः सव्य एव चेत्यादिप्रकारेण शिरआद्यङ्गतया व्यूह्य स्थितानि सन्दोहरूपाणि तत्समुदायात्मकः पञ्चरूपी व्यूह्य स्थितो यथा एवं विश्वादिसहस्ररूपात्मा व्यूह्य स्थितो हरिः विश्वादितत्तन्मूर्त्यवयवकोऽव्यूह्य[१] एक एव स्थितः। तथा चैकस्मिन् रूपेऽर्धनारीनरेश्वरादिष्विव रूपान्तरस्य प्रवेशोऽङ्गीकार्यः। एवं तत्तत्प्रतिपादकानामृचां ऋगन्तराक्षरेण संयोजनेपि न दोषः। यथोक्तम् -

................प्रतिपाद्यो जनार्दनः।
षट्त्रिंशद्रूपवान् विष्णुर्व्यञ्जनेषु च संस्थितः।
तान्येव विष्णुरूपाणि रात्रीणामपि देवताः॥
एकैकं च सहस्रं तद् व्यञ्जनेषु च रात्रिषु।
रूपं विष्णोः स्थितं व्यूह्य षट्त्रिंशतिसहस्रधा॥
षट्त्रिंशतिसहस्राणि स्वरगाणि हरेरपि।
तान्येवाह्नां दैवतानि रूपाणि परमात्मनः॥ इत्यादि।

एवमुपरिष्टादपि यावन्त्यक्षराणि षट्त्रिंशदक्षरत्वसिद्धयेऽपेक्षितानि तावन्त्यक्षराणि पूर्वपूर्वस्यामृचि

१. विश्वादितत्तन्मूर्त्यवयवको व्यूह्य इति पूर्वरूपसन्धिं विनापि पाठः कोशान्तरे।

संयोज्य षट्त्रिंशदक्षरत्वं सम्पाद्य तावदक्षराणामेकैका मूर्तिः प्रतिपाद्येत्यवधेयम् ।

तत्र ग्रीवाविजवयोः शिरस्यन्तर्भावमभिप्रेत्य शिरःस्थभगवद्रूपस्यापि तत्रावस्थानेन तत्प्रदिपादक-शस्त्रस्यापि ग्रीवासञ्ज्ञां चाभिप्रेत्य ग्रीवाशस्त्रं प्रशस्य विहितम् ''अथातो ग्रीवास्ता आचक्षते यथाछन्दसमुष्णिह इति'' इति ताश्च ऋचः शाखान्तरस्थाः पञ्चमारणे पठिताः ॥ ५१ ॥

॥ ॐ मनवे नमः ॥

**तुजो युजो वनं सह इन्द्रस्य रत्यं बृहत् ।**
**नाधृष आदधर्षदाधृषाणं धृषितं शवः । पुरा यदीमतिव्यथिः ॥ ५२ ॥**

ब्रह्मा ऋषिः । मत्स्यात्मा नारायणनारायणानिरुद्धो देवता । उष्णिक् छन्दः । युज्यते सर्वप्राणिभिरन्तर्यामितयेति युक् । युजेः कर्तरि क्विप् । युजः सख्युः । तुजः दातुर्गन्तुर्वा । गतिकर्मणो ज्ञानकर्मणो वा तुञ्जेः क्विप्, अनुनासिकलोपश्च । एवम्भूतस्येन्द्रस्य सकाशादिदं जगदुत्पन्नम् । तस्येन्द्रस्य सहो बलं वनं वननीयं भक्तैर्भजनीयम् । रत्यं रतौ साधु रमणीयम् । रतिशब्दाद् यकारप्रत्ययः । बृहत् च उत्तमं चास्ति । पुरा पूर्वं देवासुरयुद्धेषु इन्द्रस्य धृषितम्, ञि धृषा प्रागल्भ्ये, शत्रुधर्षणेन युक्तम् । धैर्यं सहो बलं तेजश्च ईम् ईदृशम् अतिव्यथिः शत्रूणामत्यन्तव्यथाहेतुरभूदिति यत् तस्मात् इन्द्रः आधृषे धर्षितुमुद्यताय जनाय आधृषाणं परधर्षणसहितं धृषितं धैर्येण सहितं शवः सुखं नादधर्षत् नादात् । अलाक्षणिकत्वं छान्दसम् ।

यत इन्द्रस्य शत्रूणामधृष्यं बलादिकमस्ति तस्मान्मनुः[१] । मनु अवबोधने इत्यस्येदं रूपमिति मनुमूर्तिरत्र ॥ ५२ ॥

॥ ॐ त्वष्ट्रे नमः ॥

**इन्द्रस्य धृषितं सह । स नो दधातु तं रयिं रयिं**
**पिशङ्गसदृशमिन्द्रः पतिस्तवस्तमो जनेष्वा ॥ ५३ ॥**

---

१. आधृषे शवः नादधर्षदित्यनेन लब्धमिदम् ।

जनेषु जनानां आ समन्ताद् सर्वदेशेषु कालेषु पतिः, पातेर्डतिः, रक्षकः। त्विष दीप्तावित्यतोऽसुन् डिच्च टिलोपः, तकारस्याकारागमे तवःशब्देन दीप्तिरुच्यते। तेन च तद्वान् लक्ष्यते। अतिशयेन तवः तवस्तमः तेजस्वितमः। किञ्च इन्द्रस्य धृषितं सहश्चास्ति। स इन्द्रः नः अस्मभ्यं पिशङ्गसदृशं पिशङ्गवर्णोपेतं रयिं द्रविणवदादरणीयं भगवन्तं रयिं प्रसिद्धधनं च दधातु दध्यात्।

अनेन दीप्तिमत्वात् त्वष्ठ, त्विषस्तृच्, इति निरुक्तेः **त्वष्टृमूर्तिरत्र** ॥ ५३ ॥

अत्र ता अस्य सूददोहस इत्येका ऋक् पुनरत्र शंस्यतया अथ सूददोहा इत्यनेन विहिता। तस्याः बृहतीकारं पाठः।

**॥ ॐ स्थविष्ठाय नमः ॥**

**ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः।**
**जन्मन् देवानां विशस्त्रिष्वारोचने दिवः। इन्द्रमिद् गाथिनः[१] ॥ ५४ ॥**

सूददोहसो हरेः प्राणस्य वा अर्थे पृश्नयो वेदवाच आपो गाव ऋत्विजश्च सोमं श्रीणन्ति योजयन्ति। जनेषु आ तवस्तमः पूर्ववत् तेजस्वितम इत्यावृत्त्या योज्यम्। एवम्भूतमिन्द्रं गाथिनोऽनूषतेति वक्ष्यमाणेनान्वयः[२]।

अनेन तवःशब्दस्य सुडागमे तकारस्य थकारादेशे स्थवःशब्दः तवःशब्दपर्यायः। तस्मादतिशयार्थे इष्ठन्। अतिशयेन स्थवः स्थविष्ठ इति निरुक्तेः **स्थविष्ठमूर्तिरत्र** ॥ ५४ ॥

**॥ ॐ स्थविराय नमः ॥**

**बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत।**
**इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ॥ ५५ ॥**

---

१. ऋग्वेदः १-७ मधुच्छन्दा वैश्वामित्रः। इन्द्रमिद् गाथिन इति पादस्योत्तरत्राप्यावृत्तिः सर्वकोशेषु दृश्यते। आरण्यके अस्य मूलं किमपि नोपलभ्यते। श्री वेदेशतीर्थीये पाठक्रमे आवृत्तिर्नास्तीति विचारणीयमेतत्।

२. इन्द्रमिद् गाथिन इति एतद्बृहतीस्थम्। अनूषतेत्युत्तरबृहतीस्थ एतन्मन्त्रान्त्यपादः। अस्मिन् मन्त्रे इन्द्रमिति त्रिः श्रूयते। गाथिन इत्यस्यानूषतेत्यनेनान्वयः इति भावः।

बृहत् बृहन्तमिन्द्रमेव गाथिनः सामगा उद्गातारः साम्ना अनूषत अस्तुवन्। अर्किणः ऋग्वेदिनो होतारः अर्केभिः ऋग्भिः इन्द्रमनूषत। अन्याश्च यजुराद्या वाणीः वाण्य इन्दमनूषत। किञ्चायमिन्द्र इत् परमैश्वर्यसम्पन्न एव। वचोयुजा वचोयुजोः सारथेर्वाङ्मात्रेण योजनीययोः हर्योः, योग्यतया तद्युक्ते रथे, वेदवाक्यानुवर्तिनोर्मनोबुध्द्योः सम्बन्धिनि भक्तशरीराख्ये रथे, सचा सुखेनैव आ समन्तात् सम्मिश्लः स्थाता वर्तते। तदारूढ इति यावत्।

अनेन तिष्ठतेर्विरप्रत्ययः। रथे तिष्ठतीति स्थविर इति निरुक्तेः **स्थविरमूर्तिरत्र** ॥ ५५ ॥

॥ ॐ ध्रुवाय नमः॥

**इन्द्रो वज्री हिरण्ययः। इन्द्रो दीर्घाय चक्षस आ सूर्यं**
**रोहयद् दिवि। वि गोभिरद्रिमैरयत्। इन्द्र वाजेषु ॥ ५६ ॥**

किञ्च स इन्द्रो वज्री वज्रायुधधरः। ज्ञानानन्दयुक्तश्च। हितश्च रमणीयश्चेति हिरण्ययश्च। इन्द्रो दीर्घाय चक्षसे अहर्लक्षणं दीर्घकालं पदार्थदर्शनाय सूर्यं दिवि गगने आ सम्यक् ध्रुवं रोहयत् आरोपितवान्। किञ्च आद्रियत इत्यद्रिः। अद्रिं आदरणयोग्यं प्राणात्मानं गोभिर्ज्ञानैः वि ऐरयत् समैरयत् प्रावर्तयत्। गोभिर्वज्रैरुदकैर्वा निमित्तैः, उदकार्थं वा, अद्रिं पर्वतं मेघं च व्यैरयत् हतवान् निर्मितवांश्च। हे इन्द्र वाजेषु युद्धेषु अन्नादिभोग्येषु वा, नोऽस्मानवेत्युत्तरेणान्वयः।

अनेन सूर्यं गगने ध्रुवमारोहयतीति ध्रुव इति निरुक्तेः **ध्रुवमूर्तिरत्र** ॥ ५६ ॥

॥ ॐ अग्राह्याय नमः॥

**नोऽव सहस्रप्रधनेषु च। उग्र उग्राभिरूतिभिः।**
**इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे। युजम्॥ ५७॥**

हे इन्द्र दुष्टानाम् उग्रः, उत्पूर्वाद् ग्रहेः कर्मणि डः, उदत्र निषेधार्थः, उपपदान्तलोपः, अग्राह्यः त्वं वाजेषु युद्धेषु अस्मासु सहस्रप्रधनेषु सत्सु वहुभिर्युद्ध्यमानेषु नः अस्मान् उग्राभिरूतिभिः दुष्टानामुग्रैः स्वयं तु सद्भिरनुग्रैरेवाभिप्रायैः सदा अव। वयमिन्द्रं महाधने मोक्षे अर्भे च सांसारिकपुरुषार्थे च युजम्, युनक्तीति युक्, युजिर् योगे, दातृतया सम्बन्धः, सकलपुरुषार्थदातेति यावत्, तं (त्वं) हवामहे॥

अनेन दुष्टैर्ग्राह्यो न भवतीत्यग्राह्य इति निरुक्तेः **अग्राह्यमूर्तिरत्र** ॥ ५७ ॥

॥ ॐ शाश्वताय नमः ॥

**वृत्रेषु वज्रिणम् । स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि ।**
**अस्मभ्यमप्रतिष्कुतः । तुञ्जे तुञ्जे य उत्तरे ॥ ५८ ॥**

वृत्रेषु अज्ञानेषु वृत्राद्यसुरेषु च युजं तेजोरूपतया बलवत्तया विरोधितया वा घटमानं वज्रिणं अरिभिः कालादिपरिमाणैश्च वर्जितं शाश्वतम् हे वृषन् वर्षितः श्रेष्ठ वा । सत्रादावन्, सत्राशब्दः सर्वपर्यायः सहार्थो वा, तस्मिन्नुपपदे ददातेर्वनिप्, सर्वेष्टदातः । त्वं नः अस्मदीयं अमुं तं परोक्षं मोक्षगं चरुं, चरतिर्भक्षणार्थः, अनुभवनीयमानन्दम् अस्मभ्यमस्मदर्थम् अपावृधि अविद्यावृतमपावृणु । चरुं हविर्मेधं चापावृधि स्वीकारेण सफलीकुरु । उद्घाटय च । यतस्तमेवमप्रतिष्कुतः, ष्कुञ् आप्रवणे, आप्रवणमागमनम्, वैरिभिर्युद्धेषु अप्रत्यागतः । तुञ्जतिर्दानकर्मा । त्वं तुञ्जे तुञ्जे तत्रतत्र युद्धदातृषु ये उत्तरे उत्कृष्टाः तैरप्यप्रतिष्कुतः अप्रत्यागत इति योज्यम् । तुञ्ज इत्यादेरुत्तरत्र वा सम्बन्धः । एवमग्रेऽपि ।

कालत्रयेपि शश्वदेकप्रकारेण वर्तत इति कालपरिमाणरहितत्वात् शाश्वत इति निरुक्तेः **शाश्वतमूर्तिरत्र** ॥ ५८ ॥

॥ ॐ कृष्णाय नमः ॥

**स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम् ।**
**वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानः ॥ ५९ ॥**

तुञ्जे तुञ्जे इत्यावृत्त्या योज्यम् । तुञ्जतिर्दशनकर्मा प्रेरणे वर्तते । तुञ्जे तुञ्जे तत्र तत्र स्तोतृषु त्वयैव प्रेरणे जाते सति ये प्रवृत्ताः उत्तराः उत्तमाः स्तोमाः स्तुतिविशेषाः तेप्यस्य स्तुतिप्रवर्तकत्वादिगुणयुक्तस्येन्द्रस्य तव सुष्टुतिं सुष्टुतित्वं न विन्धे, वर्णव्यत्यासादिना न विन्दन्ते नाप्नुयुः । गुणानामनन्तत्वेन सर्वविषयत्वाभावादिति भावः। एकस्य वृषस्य यः प्रतिवीरो वृषः स वंसः तं प्रति यो विभीर्युद्धाय गच्छति स वंसगः । स वृषो यूथेव यूथानीव, गवां यूथानि यथा आकर्षति एवमीशानः समर्थः कृष्टीः प्रजाः ओजसा चेष्टकत्वादिना सामर्थ्येन इयर्ति प्रेरयति ।

अनेन कर्तृत्वात् चेष्टकत्वात् सकलजगत्प्रवर्तकत्वाद् बलाद्यनन्तगुणात्मकत्वाच्च कृष्णः, करोतेः कर्तरि विच्, णकारो बलं षकारः प्राण आत्मेति श्रुतेरिति निरुक्तिसूचनात् **कृष्णमूर्तिरत्र**[1] ॥ ५९ ॥

॥ ॐ लोहिताक्षाय नमः ॥

**अप्रतिष्कुतः। य एकश्चर्षणीनां वसूनामिरज्यति। इन्द्रः पञ्चक्षितीनाम्। इन्द्रं वो विश्वतस्परि हवामहे॥ ६०॥**

अप्रतिष्कुतः अप्रतिद्वन्द्वः य इन्द्र एक एव पञ्चक्षितीनां देवर्षिपितृचक्रवर्तिमनुष्यभेदेन पञ्चविधानां प्रजानाम्, वसूनां पञ्चरत्नानां च इरज्यति, ऐश्वर्यकर्मायम्, राजा भवति। तमिन्द्रं हे जनाः विश्वतः सर्वे वयं परिहवामहे। वः अभीष्टसिध्यर्थं हवामहे।

अनेन लोहितानां रजोगुणयुक्तानां पञ्चविधानां चर्षणीनां वसूनां च क्षितिः आश्रयः लोहिताक्षः। क्षि निवासगत्योरित्यतोऽधिकरणे डः। लोहिताः निवसन्त्यत्रेति लोहिताक्ष इति निरुक्तेः **लोहिताक्षमूर्तिरत्र** ॥ ६० ॥

॥ ॐ प्रतर्दनाय नमः ॥

**जनेभ्यः। अस्माकमस्तु केवलः। ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः। जन्मन् देवानां विशः॥ ६१॥**

आहूतश्चायमस्माकं जनेभ्यः जनानां युष्माकं च केवलः सर्वदेशकालेषु एकरूपेणैव स्थितः अस्तु। इष्टद इति शेषः। अस्य सूददोहसः इन्द्रस्यार्थे ताः पृश्नयो विशश्च सोमं श्रीणन्ति। देवानां जन्मनि यज्ञे।

अनेन तर्द गतावित्यस्यान्तर्णीतण्यर्थस्येदं रूपम्। इष्टं भक्तान् प्रतर्दयति प्रापयतीति निरुक्तेः **प्रतर्दनमूर्तिरत्र** ॥ ६१ ॥

॥ ॐ प्रभूताय नमः ॥

**त्रिष्वारोचने दिवः।**[2] **सुतस्ते सोम उपयाहि यज्ञं मत्स्वा मदं पुरुवारं मघाय। मंहिष्ठ इन्द्र विजुरः॥ ६२॥**

---

१. का चासौ पश्चासौ णश्चेति कृष्णः। निरुक्तत्वात् पकारादकारलोप इति भावः।

२. सुतस्ते सोम इत्यारभ्य एवैरित्यन्तास्तिस्र ऋचः शाखान्तरस्था विजभागे पठनीयत्वेनारण्यके विधायोदाहृताः।

ब्रह्मा ऋषिः। इन्द्रो देवता। विराट् छन्दः। हे इन्द्र मघाय मखाय पुरुवारं बहुवारं त्रिषु कालेषु रोचने, पञ्चम्याः सप्तम्यादेशः, रोचनाद् दिवःप्रकाशमानाद् द्युलोकाद् उपयाहि अस्मत्समीपमागच्छ। ते तव त्वदर्थं सोमः सुतः। उपलक्षणमेतत्। सूक्ष्मपटीभिः शोधितो गृहीतश्च। तमिमं यज्ञं यज्ञसाधनं सोमं पीत्वा मत्स्वा मदस्व प्रभूतो भव। अस्माकं मदं कुरु वा। यतो भवान् मंहिष्ठः महत्तमः प्रभूतः विजुरः विगता जरा यस्मात्, अकारस्योकारादेशः, जरादिदोषरहितश्च। अतः सोमं पिबेति सम्बन्धः। यतो विजरोऽतो मंहिष्ठः प्रभूत इति वा।

तेन प्रकर्षेण भूतः प्रभूतः उत्कृष्ट इति निरुक्तेः **प्रभूतमूर्तिरत्र** ॥ ६२ ॥

**॥ ॐत्रिककुब्धाम्ने नमः ॥**

**गृणध्यै। ससाहतुर्वृत्रहत्येषु शत्रून् ऋभुर्विगाह एषः।**
**सनो नेतारं महयाम इन्द्रं। इनो वसु ॥ ६३ ॥**

हे इन्द्र गृणध्यै सद्भिर्गीयसे। एष विगाहो नाम कश्चिद् देवः स ऋभुनामा कश्चिद् देवः। ताविमौ विगाहऋभू वृत्रहत्येषु, लिङ्गव्यत्यासः, त्वया वृत्रादिहत्यासु कृतासु आध्यात्मिकादिभेदेन त्रिविधान् शत्रून् ससाहतुः, षह मर्षणे, ममर्षतुः। तदीयशस्त्रप्रहारमगणयित्वा युद्धं चक्रतुः। त्वद्भक्ता एव शत्रुधर्षणसामर्थ्यवन्तः किमु त्वमिति तात्पर्यम्। एवम्भूतं सनः, सन लाभे भावे क्विप्, लाभस्य नेतारमिन्द्रं महयामः पूजयामः। स चेन्द्रो नः इनः स्वामी अस्तु। वसु च ददातु।

तेन त्रीन् आध्यात्मिकादिशत्रून् ककुत्। कशब्दः कुत्सने। कृञः कर्तरि क्विप्, तस्य लोपः, ह्रस्वस्य पिति कृति तुगिति तुक्, कृदेव कुत्, व्यत्ययेनोकारः। कुत्सितान् कुत् धाम स्वरूपं यस्य सः त्रिककुद्धामेति निरुक्तेः **त्रिककुद्धाममूर्तिरत्र**[1] ॥ ६३ ॥

**॥ ॐ पवित्राय नमः ॥**

**समजः पर्वतेष्ठाः प्रतिवामृजीषी। इन्द्रः शश्वद्भिर्जोहूत्र**
**एवैः। ता अस्य सूददोहसः सोमं श्रीणन्ति ॥ ६४ ॥**

हे इन्द्र पर्वतेष्ठाः पर्ववत्सु जीवेषु स्थिताः पापसंहतीः पापसङ्घान् समजः दूरे प्राक्षिपः। दोषास्पृष्टचेतनोऽत एव पवित्रं यतो भवान् ततः प्रतिवां, वातेः क्विप्, त्वां प्रतिगन्तारं प्रतिभटं प्रति

१. त्रीन् शत्रून् कुत्सितान् करोतीति त्रिककुद्। त्रिककुद् धाम स्वरूपं यस्येत्याशयः।

त्वं ऋजीषी ऋजीषमिव कल्कमिवादाभ्योसि । व्यत्ययेन ईकारः । अतः प्रजानामिनः स्वामी । अत एव सर्वेभ्यो वसु समजः दत्तवानसि । किञ्च शश्वद्भिर्नित्यैः वेदमन्त्रैः जोहूत्रः, ह्वेयो यङ्लुगन्तात् कर्मणि त्रप्रत्ययः, आहूत एव भक्तगृहं प्राप्तोऽभवः। एवम्भूतस्येन्द्रस्यार्थे सोमं श्रीणन्ति ऋत्विजः।

अनेन पापसङ्करहितत्वात् पवित्रम् । पुञ् पवने इत्यत इत्रप्रत्ययः । इति निरुक्तेः **पवित्रमूर्तिरत्र** ॥ ६४ ॥

विश्वकर्मादयो मत्स्यवर्गगाः प्रतिपादिताः ।
पवित्रान्ताः शिरःस्थास्ताः प्रीयन्तामनिरुद्धगाः ॥

॥ इति लक्ष्मीनारायणतीर्थपादानां शिष्येण रघुनाथयतिना कृतायां तत्वसाराख्यायां टीकाभावविवृतौ बृहतीसहस्रपारावारे प्रथमद्वीपे द्वितीयः खण्डः[1] ॥

अथ सुपर्णस्य दक्षिणबाहुस्थितप्रद्युम्नप्रतिपादकशास्त्रं दक्षिणपक्षाख्यं व्याख्यायते ।

॥ ॐ मङ्गलाय नमः ॥

**पृश्नयः । जन्मन् देवानां विशस्त्रिष्वारोचने दिवः ।**
**[2]अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानम् ॥ ६५ ॥**

आरोचने सम्यगारोचमानेषु त्रिषु आदित्यचन्द्रविद्युल्लोकेषु स्थितानां दिवः स्वर्गस्याधिपतीनां देवानां जन्मन् अभिव्यक्तिस्थाने यज्ञे विशः ऋत्विजः पृश्नयश्च त्वामिन्द्रमुद्दिश्य सोमं श्रीणन्ति । हे शूर विक्रान्त । ईर्लक्ष्मीः, तां प्रति शं सुखम्, कल्याणं मङ्गलं शुभमित्युक्तेः मङ्गलं आनयतीतीशानं त्वाम् अदुग्धा धेनवः क्षीरपूर्णा गावो यथा गृहिणं तोषयन्ति तथा त्वां अभिनोनुमः अतिशयेन स्तुमः । स्तुत्वा त्वां तोषयाम इति यावत् ।

लक्ष्म्याः मङ्गलप्रापकत्वोक्त्या तस्य मङ्गलत्वं सिद्धमेव । अत एवात्र **मङ्गलमूर्तिः** ॥ ६५ ॥

---

१. इतः परं सूक्तस्यादावन्ते च विद्यमानाः संग्राहकश्लोकाः समाप्तिवाक्यानि चैतादृशानि कोशेषु न दृश्यन्ते । विद्यमानान्यप्येतादृशानि ग्रन्थगौरवभीत्या लेखकैः परित्यक्तानि स्युः ।

२. अभि त्वा शूर नोनुमः - ऋग्वेद ७-३२-२२,२३ मैत्रावरुणिर्वसिष्ठः प्रगाथः। अभि त्वा पूर्वपीतये - ऋग्वेद ८-३-७,८ मेध्यातिथिः काण्वः प्रगाथः । अनेन प्रगाथद्वयेन पङ्क्तिबृहत्यः सम्पाद्या इत्यारण्यके विहितम् । तत्राश्वयन्त इत्यादि पादस्थाने स्वादोः स्वादीयः (ऋग्वेद १०-१२-३) इति पादप्रक्षेपोऽपि विहितः ।

॥ ॐ पराय नमः ॥

**अस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः । ईशान-**
**मिन्द्र तस्थुष ईशानमिन्द्र तस्थुषः। न त्वावाँ अन्यः ॥ ६६ ॥**

हे इन्द्र जगतो जङ्गमस्य तस्थुषः स्थावरस्य चेशानं स्वामिनं स्वर्दृशं स्वर्गस्य द्रष्टारं, व्यवहितोपलक्षणमेतत्, देशकालव्यवहितस्य सर्वस्य द्रष्टारं त्वां नोनुमः । ईशानमित्याद्यभ्यासः तात्पर्यार्थः । यतः त्वावान् त्वम् उपमात्वेन यस्य स त्वत्सदृशोऽन्यः पुमान् नास्ति । अतस्त्वद्रूपमेव परं सर्वोत्तमम् । अतस्त्वामेव वयं नोनुम इति सम्बन्धः । अत एव **परमूर्तिरत्र** ॥ ६६ ॥

॥ ॐ ईशानाय नमः ॥

**दिव्यो न पार्थिवो न जातो न जनिष्यते । न जातो**
**न जनिष्यते न जातो न जनिष्यते । स्वादोः स्वादीयः**[1] **॥ ६७ ॥**

दिव्यः दिवि भवः पार्थिवः पृथिवीभवो वा त्वावान् त्वत्सदृशः स ईशानः समर्थो नास्ति । न जातो नासीत् । न जनिष्यते न भविष्यति च । पूर्ववदभ्यासस्तात्पर्यार्थः । अतस्त्वमेक एव स्वादोः उपादेयादपि स्वादीयः उपादेयतमः, स्वामीति यावत् । तेन **ईशानमूर्तिरत्र** ॥ ६७ ॥

॥ ॐ प्राणदाय नमः ॥

**स्वादुना सृजासं गव्यन्तस्त्वा हवामहे । अभि त्वा**
**पूर्वपीतय इन्द्र स्तोमेभिरायवः । समीचीनास ऋभवः ॥ ६८ ॥**

हे इन्द्र स्वादुना सोमेन सृजासं सृजेयम् संयोजयामि । तुभ्यमहं दास्यामीति यावत् । अत एव गव्यन्तो वयं गामात्मन इच्छन्तः । गोशब्दवाच्यत्वेनोपलक्षितान् प्राणान् इन्द्रियविशेषानात्मन इच्छन्तः त्वां हवामहे आह्वयामः । अतस्त्वं चक्षुरादिप्राणानस्मभ्यं देहीति तात्पर्यम् । हे इन्द्र त्वां पूर्वपीतये पूर्वं पानसिध्यर्थं स्तोमेभिः स्तोत्रैः आयवः त्वां प्राप्तुमिच्छवः समीचीनासः सम्यञ्चः ऋभवो नाम गणास्त्वां समस्वरन्, स्वृ शब्दोपतापनयोः, अस्तुवन् ।

---

१. अत्र वक्तव्यो विषयो दशमबृहतीस्थाने अधस्तनटिप्पणेऽभिहितः ।

अनेन प्राणान् ददातीति निरुक्तेः **प्राणदमूर्तिरत्र** ॥ ६८ ॥

**॥ ॐ प्राणाय नमः ॥**

**समस्वरन् रुद्रा गृणन्त पूर्व्यम्**[१] **। रुद्रा गृणन्त**
**पूर्व्यं रुद्रा गृणन्त पूर्व्यम् । अस्येदिन्द्रो वावृधे वृष्ण्यम् ॥ ६९ ॥**

ऋभव इत्यनुवर्तते । समस्वरन् अस्तुवन् । पूर्व्यं पुरातनमिन्द्रं रुद्राः रुजां द्रावकत्वान्मुख्यप्राणाः प्रसिद्धरुद्रा वा अगृणन्त अस्तुवन् । समस्वरन्नित्येतदत्रैव वा सम्बध्यते । उच्चैः शब्दमकुर्वन् । उत्साहादिति तस्यार्थः। स इन्द्रः अस्य स्तोतृगणस्य वृष्ण्यं अभीष्टदानसमर्थं स्तोत्रं स्वीकर्तुं वावृधे अत्यन्तं व्यक्तोऽभूत् । उत्साहातिशयेन चेष्टायुक्तोभूत् ।

तेन प्रकृष्टचेष्टकत्वात् प्राण इति निरुक्तेः **प्राणमूर्तिरत्र** ॥ ६९ ॥

**॥ ॐ ज्येष्ठाय नमः ॥**

**शवो मदे सुतस्य विष्णवि । मदे सुतस्य विष्णवि**
**मदे सुतस्य विष्णवि । अद्या तमस्य महिमानम् ॥ ७० ॥**

यज्ञो वै विष्णुरिति श्रुतेः विष्णवि यज्ञे सुतस्य सोमस्य पानादिरूपं तं प्रसिद्धं ज्येष्ठत्वादिरूपं शवः सुखसाधनं विष्णवि, विभक्तिव्यत्ययः, विष्णोर्महिमानं मदे सुखप्राप्त्यर्थम् अद्य इदानीमेव, स्तुम इति शेषः ।

अनेन ज्येष्ठत्वरूपमाहात्म्यवत्त्वात् ज्येष्ठ इति निरुक्तेः **ज्येष्ठमूर्तिरत्र** ॥ ७० ॥

**॥ ॐ श्रेष्ठाय नमः ॥**

**आयवोऽनुष्टुवन्ति पूर्वथा ।**[२] **इन्द्रस्य नु वीर्याणि प्रवोचं**
**यानि चकार प्रथमानि वज्री । अहन्नहिमन्वपः ॥ ७१ ॥**

पूर्वथा पूर्वस्थाः पुरातनजनाः । सकारलोपो जसो लोपश्च । आयवः तं प्राप्तुमिच्छवः अनु सम्यक्

१. प्रगाथद्वयेन पङ्क्तिबृहतीसम्पादनप्रकारो ग्रन्थकृद्भिरनुसृतः परिशिष्टभागे दर्शितः ।

२. ऋग्वेद १-३२, हिरण्यस्तूप आङ्गिरसः ।

स्तुवन्ति। इण्कोरिति षत्वं च। अहमपि इन्द्रो यानि प्रथमानि प्रशस्तानि अग्र्याणि प्रसिद्धानि न कर्मणि चकार कृतवान्। तान्येव लेशतो दर्शयति। अपः अनु प्रतिबध्य शयानमहिं अहन् हतवान्। एवंविधानीन्द्रस्य वीर्याणि वरणीयानि कर्माणि प्रवोचम् प्रावोचम्। नु इदानीमपि प्रवच्मि।

अनेन प्रशस्तगुणशालित्वात् श्रेष्ठ इति निर्वचनात् **श्रेष्ठमूर्तिरत्र** ॥ ७१ ॥

॥ ॐ प्रजापतये नमः ॥

**ततर्द प्रवक्षणा अभिनत् पर्वतानाम्। अहन्नहिं पर्वते**
**शिश्रियाणं त्वष्टाऽस्मै वज्रं स्वर्यं ततक्ष ॥ ७२ ॥**

अस्मै इन्द्राय त्वष्टा दीप्तिमान् प्रजापतिर्ब्रह्मा देववर्धकिश्च स्वर्यं वेदजमुपतप्तं वा वज्रं ज्ञानं प्रसिद्धायुधं वा ततक्ष निर्मितवान्। स इन्द्रस्तेन वज्रेण पर्वतानां जीवानां प्रसिद्धानां वा प्रवक्षणाः दुर्वचनानि पक्षान् वा अभिनत्। किञ्चाहिं पर्वते शिश्रियाणं हृद्गुहायां निहितं संशयं मिथ्याप्रत्ययं वा अहन् हतवान्। तेन तद्धननेन ततर्द चखान। नदीनां प्रवाहसिध्यर्थं अहिं हत्वा भुवं चखानेत्यर्थः।

प्रजापतिर्ब्रह्मा तत्वोपदेशादिना सेवको यस्य सः प्रजापतिः। गुणवचनेभ्यो मतुबो लुगिष्ट इति निरुक्तेः **प्रजापतिमूर्तिरत्र** ॥ ७२ ॥

॥ ॐ हिरण्यगर्भाय नमः ॥

**वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमवजग्मुरापः।**
**वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेषु ॥ ७३ ॥**

हे इन्द्र वाश्रा वत्सला धेनव इव स्यन्दमाना आपः मनोवृत्तयो वा समुद्रं प्रसिद्धं समुद्रिक्तगुणं परमेश्वरं वा त्वत्खातमार्गानुसारेण अञ्जः अवजग्मुः। संशये नष्टे भक्ता भगवन्तमेव यजन्ते। इन्द्रः वृषायमाणो वृषवदाचरन् तृषितो वृषो यद्वदुदकं तथैव त्रिकद्रुकेषु, द्रुतं कमस्मिन्निति कद्रुकं त्रीणि च तानि कद्रुकानि च, त्रीणि सवनानि सत्वादीनि वा तेषु सुतं सोमं प्रसिद्धं मनश्च अवृणीत स्वीकृतवान्।

अनेन हितं च रमणीयं चेति हिरण्यं सोमो ज्ञानं च। तद्गर्भे उदरे यस्य स हिरण्यगर्भ इति निरुक्तेः **हिरण्यगर्भमूर्तिरत्र** ॥ ७३ ॥

॥ ॐ भूगर्भाय नमः ॥

**अपिबत् सुतस्य । आ सायकं मघवा दत्त वज्रमहन्नेनं**
**प्रथमजामहीनाम् । यदिन्द्राहन् प्रथमजामहीनाम् ॥ ७४ ॥**

किञ्चेन्द्रः सुतस्य सुतं सोममपिबत् । ततश्च सायं करोतीति सायकं शत्रूणां नाशकं वज्रं प्रसिद्धं ज्ञानं वा मघवा सर्वतो यशस्वी इन्द्रः आ दत्त गृहीतवान् । तेन वज्रेण अहीनां तन्नामकदैत्यानां प्रथमत्वेनोत्पन्नमहिं दैत्यं संशयं वा अहन् हतवान् । यद् यस्मादहीनां प्रथमजमहिमहन् तस्मात् स एव सोममपिबत् ।

तेनोत्कृष्टो भवत्यनेनेति भूर्वज्रं ज्ञानं वा । तां गृह्णातीति भूगर्भः। ग्रह उपादाने, कर्तर्यकारप्रत्ययः, ह्रस्य भः, गुणः, इति निरुक्तेः **भूगर्भमूर्तिरत्र** ॥ ७४ ॥

॥ ॐ माधवाय नमः ॥

**आन्मायिनाममिनाः प्रोत मायाः । आत्सूर्यं जनयन्**
**द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥ ७५ ॥**

यदिन्द्राहन्नित्येतदत्रानुवर्तते । आत् अहेर्वधकर्तृत्वात् उत अन्येषां मायाः छद्मरूपाः कुटिलोक्तीर्वा प्र अमिनाः व्यनाशयः। डु मिञ् प्रक्षेपणे । आत् सकलासुरसंहर्तृत्वान्मायानिवर्तकत्वादेव सूर्यमाचार्यं वा द्यां द्युलोकं प्रसिद्धं मुक्तस्थानं वा उषसं प्रकाशं ज्ञानं वा जनयन् सूर्यादिः पतिर्जातोऽसि । पुरा सूर्याचार्यादिव्यापारा दैत्यसंशयादिना निरुद्धाः, तद्वधादिना पुनस्तद्व्यापाराणां कारयिताऽभूः। अहिश्च न साधारण इत्यतः तादीत्ना तावता बलेन सममन्यं न विवित्से, विद्लृ लाभे, न लब्धवान् किल ।

माङ् माने । भावे करणे वा विच् । मा ज्ञानं तत्करणं, आचार्यादि वा । तत्प्रतिष्ठापकत्वेन धवः पतिरिति निर्वचनसूचनात् **माधवमूर्तिरत्र** ॥ ७५ ॥

॥ ॐ मधुसूदनाय नमः ॥

**अहन् वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।**
**स्कन्धांसीव कुलिशेनाविवृक्णाऽहिः शयत उपपृक् ॥ ७६ ॥**

महता वधेन वधसाधनेन कुलिशेन, कुलमस्यास्तीति कुली कुलिनः शं यस्मात् तत् कुलिशम्,

तेन वज्रेण प्रसिद्धेन ज्ञानेन च वृत्रं वृत्रतरं ततोऽप्यधिकं व्यंसं विगतांसं कृत्वा, शिरः छित्वेति यावत्, अहिं वृत्रं वृत्रतरं च त्रीनपि संशयाज्ञानमिथ्याज्ञानान्यपि अहन् हतवान्। ततश्चाहिर्वृत्रो वृत्रतरश्चैते त्रयो वृक्णा वृक्णानि छिन्नानि स्कन्धांसीव तरोः शाखा इव, उप समीपे पृश्चतीत्युपपृक्, उपपृश्चः अधः शयते अशेरत। इडागमाभावः छान्दसः।

तेन आपाततो मधुवद् रमणीयत्वाद्वा मं ज्ञानं सुखं वा धुनोतीति, मधूनि अज्ञानादीनि वृत्रादीनि वा सूदयतीति निरुक्तेः **मधुसूदनमूर्तिरत्र** ॥ ७६ ॥

॥ ॐ ईश्वराय नमः ॥

**पृथिव्याः। अयोद्धेव दुर्मद आ हि जुह्वे महावीरं**
**तुविबाधमृजीषम्। नातारीदस्य समृतिं वधानाम्॥ ७७ ॥**

पृथिव्याः पृथिव्यां दुर्मदः दर्पोद्रिक्तः अयोद्धेव प्रतिभटरहित इव महावीरं वीरतमं तुविबाधं महोच्चानामीशानामपि बाधकं अत एव वरं ऋजीषं कल्कवदतिदृढं आ जुह्वे हि आहूतवान् हि। अद्भुतमेतत्। कृताह्वानश्च वृत्रादिरस्य विष्णोर्वधानां तत्कृतप्रहाराणां समृतिं प्राप्तिं नातारीत्। तत्प्रहारगोचर एवाभूत्।

अनेनेशेभ्यो वर इति निरुक्तेः ईश्वरमूर्तिरत्र॥ ७७॥

॥ ॐ विक्रमिणे नमः ॥

**संरुजानाः पिपिष इन्द्रशत्रुः। अपादहस्तो**
**अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान। वृष्णः ॥ ७८ ॥**

इन्द्र एव शत्रुर्यस्य स वृत्रादिरिन्द्रान्निरस्तः सन् रुजाना रुजायुक्ता मानुषीः प्रजाः संसारस्था वा सं पिपिषे सम्पिपेष बबाध। किञ्च अपात् पादरहितः अहस्तः हस्तरहितः सञ्छिन्नपादबाहुरपि वृत्रः तमिन्द्रमपृतन्यत् युयोधैव। युध्यतिकर्मसु पाठात्। एवं हि पराक्रमशाली वृत्रः। तदा अस्य एवं पराक्रमशालिनोऽपि वृत्रस्य सानौ सानुप्रतिमशिरसि वज्रं ज्ञानं वा अधि अद्धा जघान व्यसृजत्। ततोऽप्ययं पराक्रमशाली। अत एव वृष्णः अभीष्टवर्षितुर्विक्रमित्वं किं वर्णनीयमिति शेषः।

तेन विशिष्टः क्रमो व्यापारो विक्रमः। सोऽस्यास्तीति निरुक्तेः **विक्रमिमूर्तिरत्र** ॥ ७८ ॥

॥ ॐ धन्विने नमः ॥

**वध्रिः प्रतिमानं बुभूषन् पुरुत्रा वृत्रो अशयद् व्यस्तः ।**
**नदं न भिन्नममुया शयानं मनो रुहाणाः ॥ ७९ ॥**

वृष्ण इति वर्तते। अभीष्टप्रदातुर्विष्णोः प्रतिमानं प्रतिरूपं बुभूषन् भवितुमिच्छन् वध्रिः वधयोग्यो वृत्रदैत्यादिः पुरुत्रा बहुषु स्थलेषु व्यस्तः विशेषतो निरस्तः सन् अशयत् अपतत्। ततश्चापः मनोरुहाणाः सत्यः मनसोऽपि वेगेन स्थलान्यारुहाणाः तमतिक्रम्य यन्ति गच्छन्तीत्यनुकर्षेण योज्यम्।

इन्द्रेण हते वृत्रे आपो यन्तीत्यनेन धन्व आपः, ताः प्रवर्त्यत्वेनास्य सन्तीति धन्वी। धनुशब्दाद् विन् अन्त्यलोपश्चेति निरुक्तेः धन्विमूर्तिरत्र ॥७९॥

॥ ॐ मेधाविने नमः ॥

**अतियन्त्यापः। याश्चिद् वृत्रो महिना पर्यतिष्ठत् तासामहिः**
**पत्सुतः शीर्वभूव। नीचावया अभवद् वृत्रपुत्रा॥ ८० ॥**

या आपो महिना महिम्ना वृत्रः पर्यतिष्ठत् रुन्धान आस्ते ता एवापः इन्द्रेण वृत्रे हते तमतिक्रम्य यन्ति गच्छन्ति। एवंभूत इन्द्रो मेधावी बुद्धिमान् अपां प्रतिरोद्धारं ज्ञात्वा तं हतवान्। यतो न केवलमेतावतैव मेधावित्वं किं तर्हि तासामपां प्रतिरोधार्थमहिर्नाम दैत्यः पत्सुतःशीः वृत्रपादात् पश्चात् शयिता बभूव। वृत्रः पुत्रो यस्याः सा वृत्रपुत्रा दनुरपि नीचावया अहेरप्यधोभागे बन्धिका बभूव। तावुभौ ज्ञात्वा हतवान्। नह्येवंविधस्यामेधावित्वमिति भावः।

तेन मेधाविमूर्तिरत्र॥ ८० ॥

॥ ॐ विक्रमाय नमः ॥

**इन्द्रो अस्या अव बधर्जभार। उत्तरा सूरधरः पुत्र**
**आसीद् दानुः शये सहवत्सा न धेनुः॥ ८१ ॥**

इन्द्रः अस्या वधः वधम्, असुन् प्रत्ययः, अव पूर्वं जभार जहार कृतवान्। तस्याः पूर्वं वधे निमित्तमाह॥ **सूरिति**॥ सूत इति सूर्माता। वृत्रस्य दानुः उत्तरा वृत्रस्योपरि तदवनार्थमासीत्। पुत्रो

वृत्रस्तु अधरः तदध आसीत् । ततश्च तां च तं च विक्रम्य आक्रम्य हतवान् । सा च दनुः वत्ससहिता धेनुरिव शये अशयत् ।

अनेन शत्रून् हन्तुं विक्रमत इति विक्रम इति निरुक्तेः विक्रममूर्तिरत्र ॥ ८१ ॥

**॥ ॐ क्रमाय नमः ॥**

**अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।**
**वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम अशयत् ॥ ८२ ॥**

अतिष्ठन्तीनाम् अपर्यवसितानाम् । निवेशनमन्तर्भावकं किंचिन्नास्त्यासामिति अनिवेशनाः व्यापिकाः । अनन्तत्वादेव क्वचिदन्तर्भावयितुमशक्यानां काष्ठानां दिशां मध्ये वृत्रस्य शरीरं निहितं इन्द्रेण संक्रान्तम् । इन्द्रस्तदीयं शरीरं काष्ठासु संक्रामितवान् । ततश्चापः निण्यं नीत्यातिशयार्थे ण्यं सुखं क्रियाविशेषणमेतत्, अतिसुखेनैव चरन्ति भूमौ प्रवाहरूपेण व्यचरन् । ततश्च जनानां दीर्घं तम इव तमो दुःखं अशयत् नष्टमभूत् ।

अनेन वृत्रशरीरं काष्ठादौ क्रमयति सङ्क्रामयति, आपश्च भूमौ सङ्क्रामयतीति क्रमः क्रमेरन्तर्णीतण्यर्थात् कर्तरि कः, इति निरुक्तेः **क्रममूर्तिरत्र** ॥ ८२ ॥

**॥ ॐ अनुत्तमाय नमः ॥**

**इन्द्रशत्रुः । दासपत्नीरहिगोपा अतिष्ठन् निरुद्धा आपः**
**पणिनेव गावः। अपां बिलमपि हितम् ॥ ८३ ॥**

इन्द्रशत्रुर्वृत्रः अपां बिलं मार्गमपिहितं कुर्वन्नासीत् । दासपत्नीः वरुणस्य भार्या नद्यश्च अहिगोपा अहिना दैत्येन गोपा गुप्ता अतिष्ठन् । किमुक्तं भवति । पणिना पणिनामकेन वलेन गोसवार्थं विसृष्टाः निरुद्धा यथा तथा अहिना आपो निरुद्धाः। एवंविध इन्द्रशत्रुः वृत्रोऽहिश्च इन्द्रेण हतो दीर्घं तमो नरकं आशयत् प्राप्तवान् । अत इन्द्रादप्युत्तमो नास्तीति शेषः ।

न विद्यते उत्तमो यस्मात् सोऽनुत्तम इति निरुक्तेः **अनुत्तममूर्तिरत्र** ॥ ८३ ॥

॥ ॐ दुराधर्षाय नमः ॥

**यदासीद् वृत्रं जघन्वाँ अप तद् ववार । अश्व्यो वारो**
**अभवस्तदिन्द्र सृके यत् त्वा प्रत्यहन् देव एकः ॥ ८४ ॥**

अपां बिलं वृत्रेणापिहितमासीदित्युक्तम् । यद् बिलमासीत् तद् बिलमपि ववार निवारितवान् । वृत्रे जीवति कथमिदम् । वृत्रं जघन्वान् वृत्रं हत्वेति यावत् । किञ्च इह सृके युद्धे यत् यदा एकः प्रधानोऽपि देवः दीनत्वादसुरो वा प्रत्यहन् प्रतिहन्तुमैच्छत् । तत् तदानीं त्वं अश्व्यः अश्वसम्बन्धी वारः निवारकः अभवः । यथा वाली स्वदृष्टिपातमात्रेण परबलापहारं करोति तथा त्वमपि रिपुरथे संयोजितानामश्वानां दृष्टिमात्रेणैव बलमपहृत्य तान् अपवाहयसि । स्वयमधृष्य एव सन् परान् बाधस इति तात्पर्यम् ।

अनेन दुर्निषेधार्थः । आङ् पूर्वाद् धर्षतेः कर्मण्यकारः । केनाप्याधृष्यः पराभाव्यो न भवतीति दुराधर्ष इति निरुक्तेः **दुराधर्षमूर्तिरत्र** ॥ ८४ ॥

॥ ॐ कृतज्ञाय नमः ॥

**अजयो गा अजयः शूर सोममवा सृजः सर्तवे सप्तसिन्धून् ।**
**नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहम् ॥ ८५ ॥**

हे शूर वृत्रहननानन्तरं गाः वलादिना प्रतिरुद्धाः, अपरं च तदीयधनादिकं च अजयः । ततश्च सोमं सर्तवे गन्तुं सप्त सिन्धून् सप्तनदीः अवासृजः नदीजलानि प्रवर्तितवान् । सोममाप्लावयतीत्यादि-कर्मप्रकारं ज्ञात्वा तदवैगुण्याय भक्तानां कर्मसिध्यर्थं नदीप्रवाहं प्रवर्तयसीति फलितम् । ननु विद्युत्-तन्यतुमिहेत्यायुधत्रयं तस्य वृत्रादेरस्त्यमोघम्, तत् कथमस्य तज्जयः । यां मिहं मिहसञ्ज्ञां वदन्ति या च विद्युत् यश्च तन्यतुः आयुधविशेषः तदेतत्त्रयमपि अस्मै वृत्रादेः कार्यं न सिषेध न साधया-मास । तद्व्यर्थीकरणचतुर इति भावः ।

अनेन कृतं कर्मजातं व्यर्थीकरणप्रकारं च जानातीति कृतज्ञ इति निरुक्तेः **कृतज्ञमूर्तिरत्र** ॥ ८५ ॥

॥ ॐ कृतये नमः ॥

**अकिरद् ह्रादुनिं च । इन्द्रश्च यद् युयुधाते अहिश्चोता**
**परीभ्यो मघवा विजिग्ये । अहेर्यातारं कमपश्यः ॥ ८६ ॥**

अहिर्दैत्यः ह्रादुनिं चशब्दात् विद्युतं तन्यतुं मिहं च इन्द्राय अकिरत् । इन्द्रश्चायुधं तस्मा अकिरत् । एवंताविन्द्रश्चाहिश्च युयुधाते । उत तथापि मघवैव परीभ्यः अपरस्यां वेलायामन्ते विजिग्ये जितवान् । अत एवानन्यसाध्यकर्मकर्ता । करोतीति कृत् । किमहेर्वधं विशेषेण ब्रूषे इति न वाच्यम् । यतः हे इन्द्र अहेः असुरस्याभिमुखेन यातारं गन्तारमपि कं जनमपश्यः । न कमपि ।

असाधारण्येन व्यपदेशात् अनन्यसाध्यं कर्म करोतीति कृत् । ताच्छील्ये इप्रत्ययः। भत्वाज्जश्त्वाभाव इति निर्वचनसूचनात् **कृतिमूर्तिरत्र** ॥ ८६ ॥

**॥ ॐ आत्मवते नमः ॥**

**इन्द्र हृदि यत् ते जघ्नुषो भीरगच्छत् । नव च यन्नवतिं**
**च स्रवन्तीः श्येनो न भीतो अतरो रजांसि ॥ ८७ ॥**

हे इन्द्र अहेर्यातारमिति वर्तते । अहेरसुरस्य यातारं प्रतिगन्तारं तस्य प्रतिरोद्धारं त्वां विना कमपश्यः। न कमपि । सकललोकवृत्तान्तविदा त्वया प्रतिभटो न दृष्टः । कुतः । यद् यस्मात् तं जघ्नुषः ते हृदि भीरगच्छत् भयमुत्पन्नम् । एवम्भूतमप्यहिं जघ्नुषः सतः । त्वद्भक्तानां हृदि विद्यमाना भीः अगच्छत् अगमदिति वा । किञ्च यद् यस्माद् रजांसि आकाशप्रदेशान् भीतःश्येनो न श्येनपक्षीव वेगवत्तरः नव च नवतिं स्रवन्तीः नदीनामेकोनशतं अतरः तीर्णवानसि । एवं नवनवतिं देवानामेकोनशतम्, वसवोऽष्टौ विष्णुव्यतिरिक्ता आदित्या एकादश मरुतः पञ्चाशत् प्रजापतयो नव ऋभवस्त्रयः अश्विबृहस्पति-शेषगरुडानिरुद्धचतुर्मुखाः सप्त, एवमेतान् देवान् स्रवन्तीः संसार-नदीः । यथा भीतः श्येनो रजांसि तरति तथा एतान् देवान् भयग्रस्तान् संसारनदीस्तारयसि ।

तेनात्मानः नवनवतिदेवाः तार्यत्वेन भक्तत्वेन चास्य सन्तीति आत्मवानिति निरुक्तेः **आत्मवन्मूर्तिरत्र** ॥ ८७ ॥

**॥ ॐ सुरेशाय नमः ॥**

**इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः ।**
**सेदु राजा क्षयति चर्षणीनामरान्न नेमिः ॥ ८८ ॥**

इन्द्रो याता जङ्गमस्य अवसितस्य स्थावरस्य शमस्य मुक्तेश्च राजा । शृङ्गिणा नक्षत्रादेश्च

राजा। वज्रबाहुः वज्रहस्तः। स एव चर्षणीनामितरसर्वप्रजानां क्षयति, ऐश्वर्यकर्मायम्, ईश्वरो भवति। अरान् नेमिः नेमिरराणीव आश्रयश्च भवति।

सुराणां सुष्ठु रमन्त इति सुरा मोक्षयोग्याः, उपलक्षणमेतत्, सर्वे चेतनाः स्थावराश्च, तेषामीशः स्वामीति निर्वचनात् **सुरेशमूर्तिरत्र** ॥ ८८ ॥

॥ ॐ शरणाय नमः ॥

**परि ता बभूव[१]। त्वे ह यत् पितरश्चिन्न इन्द्र विश्वा वामा**
**जरितारो असन्वन्। त्वे गावः सुदुघास्त्वे ह्यश्वाः ॥ ८९ ॥**

हे इन्द्र यद् यस्मात् त्वे त्वयि, सुपां सुलुगिति शे इत्यादेशः, गावः सुदुघाः अभीष्टं दोग्धुं शीलाः पशवः ज्ञानानि च सन्ति। अश्वाश्च त्वे त्वयि सन्ति हि। तस्मात् नः पितरो ब्रह्माद्यास्त्वामेव जरितारः स्तोतारः। त्वामाराध्यैव विश्वा समस्तानि वामा वामानि ज्ञानसाधनानि मङ्गलानि असन्वन्, षण लाभे, अलभन्त। यद् यस्मादेवं तस्मात् ता तानि ब्रह्माद्यशेषचेतनजातानि परि परितः शरणं गृहं रक्षिता बभूव।

तेन ब्रह्माद्यशेषजगत्सुखहेतुत्वाद् रक्षकत्वाच्च **शरणमूर्तिरत्र** ॥ ८९ ॥

॥ ॐ शर्मणे नमः ॥

**त्वं वसु देवयते वनिष्ठः। राजेव हि जनिभिः क्षेष्ये**
**वाऽव द्युभिरभि विदुष्कविः सन्। पिशा गिरो मघवन् ॥ ९० ॥**

हे मघवन् सर्वयज्ञभोक्तः त्वां देवयते देवमात्मानः पूज्यत्वेनेच्छतीति देवयन् तस्मै भक्ताय वसु वसुनः धान्याद्यभीष्टस्य वनिष्ठः वनंतरिष्ठन्, दातृतमः। किञ्च जनिभिः, ह्रस्वत्वं छान्दसम्, जानिभिः जायाभिः राजेव द्युभिः कान्त्यादिगुणजातैः क्षेषि हि निवसस्येव। सर्वदा स्त्रीसहितो राजा यथा भोगसम्पन्नः सुखमास्ते तथा भवानपि। वेत्तीति विदुः सर्वज्ञः। कविः अपरोक्षतया सर्वज्ञः। कं सुखं भक्तेभ्यो विसृजतीति वा। त्वं पिशा रूपेण दिव्यमङ्गलविग्रहेण युक्तः सन् गिरः गृणतः स्तोतॄन् अभि अव अभितो रक्ष।

१. ऋग्वेद ७-१८, मैत्रावरुणिर्वसिष्ठः।

भक्तेभ्यः शरम् अतिशयितसुखं माति निर्मिमीते स्वयमनुभवति चेति शर्मा । मातेर्डन् । इति निरुक्तः **शर्ममूर्तिरत्र** ॥ ९० ॥

॥ ॐ विश्वरेतसे नमः ॥

**गोभिरश्वैस्त्वायतः शिशीहि राये अस्मान् । इमा उत्वा**
**पस्पृधानासो अत्र मन्द्रा गिरो देवयन्तीरुप स्थुः ॥ ९१ ॥**

हे इन्द्र त्वायतः त्वां पूजयितुमिच्छतः अस्मान् गोभिरश्वैश्च सह राये ज्ञानादिधनविषये शिशीहि शायय । शीङ् स्वप्ने । सुखोपलक्षणमेतत् । सुखय । अत्रास्माभिरनुष्ठीयमाने यज्ञे प्रवृत्ता मन्द्राः मन्त्राः, तस्य दकारः, मन्द्रस्वरेणोक्ता वा, देवयन्त्यः देवं स्वरवर्णादिभिः प्रतिपादयितुमिच्छन्त्य; अत एव पस्पृधानासः अहं पूर्वमहं पूर्वमित्यतिशयेन स्पर्धां कुर्वन्त्यः इमा गिरः सर्वा अपि वेदवाचः भारत्याद्याश्च सर्वा देवताः त्वां उप स्थुः उपतस्थुः, तलोपः, सेवन्ते । उपतस्थुरेव न पारं गताः । गुणानामनन्तत्वात् । अतस्त्वं सर्वसारः ।

तेन विश्वासु समस्तासु वेदवाक्षु रेताः सर्वसारतया प्रतिपाद्यत इति निरुक्तः **विश्वरेतोमूर्तिरत्र** ॥ ९१ ॥

॥ ॐ प्रजाभवाय नमः ॥

**अर्वाची ते पथ्या राय एतु स्याम ते सुमताविन्द्र शर्मन् ।**
**धेनुं न त्वा सूयवसे दुदुक्षन्नुप ब्रह्माणि ॥ ९२ ॥**

यस्माद् वयं ते सुमतौ त्वद्विषयिण्यां समीचीनस्तुतौ स्याम नित्यं समीचीनस्तुतीः प्रवर्तयामः तस्माद् रायः विद्याधनात्मकस्य वित्तस्य पथ्याः पन्थाः, स्वार्थे यत्प्रत्ययः, मार्गः ते तव प्रसादात् अर्वाची अस्मदभिमुखा एतु प्राप्नोतु । बहुप्रकारेणापि वित्तागमोऽस्तु । ततश्च शर्मन् शर्मणि सुखे स्याम । हे इन्द्र ब्रह्माणि अस्मदुक्तमन्त्ररूपाणि वेदवाक्यानि सूयवसे तृणपूर्णगृहे स्थितां धेनुमिव त्वा त्वां दुदुक्षन् अदुहन् । संहितायां व्यत्ययेन धकारस्य दकारः, अडभावश्च । अस्मद्वेदवाक्यैः संस्तुतो अस्मदभीष्टदोग्धा भवेति तात्पर्यम् ।

अनेन प्रजाः प्रहृष्टाः (प्रकृष्टाः) एभिर्जायन्त इति ज्ञानसाधनाद्यभीष्टानि, ता भावयति दोग्धीति प्रजाभव इति निर्वचनात् **प्रजाभवमूर्तिरत्र** ॥ ९२ ॥

॥ ॐ अह्ने नमः ॥

**ससृजे वसिष्ठः। त्वामिन्मे गोपतिं विश्व आहाऽऽन इन्द्रः**
**सुमतिं गन्त्वच्छ। अर्णांसि चित् पप्रथाना सुदासे ॥ ९३ ॥**

वसिष्ठः ऋषिः। मे कामान्, दुदुक्षन्निति वर्तते। दुहेः सन्नन्तस्य प्रथमैकवचनमेतत्। दोग्धुमिच्छन् ब्रह्माणि वेदवाक्यानि धेनुं प्रति वत्समिवासृजत्। किञ्च विश्वः सर्वोपि जनः त्वामित् त्वामेव गोपतिं गवां स्तोत्ररूपाणां वेदवाचां स्वामिनं प्रतिपाद्यमाह ब्रवीतीति यस्मात् तस्माद् इन्द्रः परमेश्वरः नः अस्माकं सुमतिं सुष्टुतिं ज्ञानप्रकाशं च अच्छ अभि प्रति आ गन्तु आगच्छतु। गमेश्छादेशाद्य-भावः। किञ्च इन्द्र पप्रथाना प्रप्रधानानि अतिशयेनेतरभूतेभ्यः प्रधानानि, आद्योपसर्गरफस्य लोपः, शस आकारादेशः, अर्णांसि उदकानि सुदासे, सकारान्तोऽप्यस्ति, सुदासनामकभक्ताय तद्रक्षणार्थं सुपारा सुपार्याणि सुखेन तर्तुं योग्यानि अकृणोत् अकरोत्। सुदासाख्यराज्ञो निर्वन्धाय शत्रुभिस्तदीयदुर्गस्य परित उत्सृष्टान्युदकानि राजानमतारयदिति वक्ष्यमाणेनान्वयः।

तेनाहर्दिनं प्रकाशश्चेत्यभिधानात् अहःशब्दितप्रकाशाख्यसुमतिविषयत्वेन अहः। गुणवचनेभ्यो मतुपो लुगिष्ट इति निर्वचनात् **अहर्मूर्तिरत्र** ॥ ९३ ॥

॥ ॐ संवत्सराय नमः ॥

**इन्द्रो गाधान्यकृणोत् सुपारा। शर्धन्तं शिम्युमुचथस्य नव्यः**
**शापं सिन्धूनामकृणोदशस्तीः ॥ ९४ ॥**

किञ्च नव्यः स्तुत्यः इन्द्रः उचथस्य स्तावकस्य भक्तस्य, स्तोतृनामसु पाठात्, शर्धन्तं पीडयितुमुत्सहमानम्, शृ हिंसायाम्,शिम्युं शिं सुखं मिनोति प्रक्षिपतीति वाधमानं शापम्। केनचित् तपस्विना शापरूपेण प्रयुक्तं वाक्यम् अशस्तीः अपशस्तीः अपयशांसि च सिन्धूनां नदीनां प्रवाहे अकृणोत्। स्वभक्तविषये तपस्विनापि दत्तं प्रवलं शापं नदीषु प्रवाहयति। किञ्च अर्णांसि गाधानि गमनयोग्यानि, गमेर्भावे धाप्रत्यय आकारश्च, अत एव सुपारा सुपाराणि सुपार्याणि अकरोत्। महाजलपूर्णनद्यादितरणसमर्थं स्वभक्तं करोतीति यावत्। एवं हि भगवान् भक्तवत्सलः।

अनेन भक्तेषु सम् अत्यन्तं वत्सरो वत्सल इति निरुक्तेः **संवत्सरमूर्तिरत्र** ॥ ९४ ॥

॥ ॐ व्यालाय नमः ॥

**पुरोळा इत् तुर्वशो यक्षुरासीद् राये मत्स्यासो निशिता अपीव ।**
**श्रुष्टिं चक्रुर्भृगवो द्रुह्यवश्च सखा सखायमतरत् ॥ ९५ ॥**

पुरूणि बहूनि ददातीति पुरोळाः । पुरुशब्दोपपदात् ला दान इत्यतो विच्, उपपदान्त्यस्योकारः । यक्षुः यष्टुमिच्छुः । यजेः सन् द्विवचनाभावश्च । तुर्वशो देवयानीपुत्रः । एतन्नामा राजा इन्द्रस्य सखा आसीत् । स राजा इयक्षुत्वाद् राये धनकाम आसीत् । मत्स्यदेशान्महाधनमाहरिष्यामीत्याशयेन मत्स्यदेशान् बबाध इति यावत् । तदा अस्य याजका भृगवो द्रुह्यवश्च सामन्तराजाः साहाय्यं कर्तुं निशिताः सन्नद्धाः जले मत्स्यासः अपीव जले सङ्गता मत्स्या इव श्रुष्टिं सुखं साहाय्यं चक्रुः । ततस्तद्राष्ट्रविमर्दे क्रियमाणे तदधिपतिरपि योद्धुमागतः । तदा अनयोः विषूचोः विष्वगञ्चतोः तुर्वसुतद्राष्ट्राधिपयोर्मध्ये स्वस्य स्वसखायं तुर्वशमेव व्यसनादतरत् अतारयत् । तुर्वशशत्रोर्बलं निहत्य तं प्रति क्रूर एव भूत्वा तदीयधनादिकमस्मै ददाविति यावत् ।

अनेन व्यालः क्रूरः प्राणी तद्वत् शत्रूणां मारक इति व्याल इव व्याल इति निरुक्तेः **व्यालमूर्तिरत्र** ॥ ९५ ॥

॥ ॐ प्रत्ययाय नमः ॥

**विषूचोः । आ पक्थासो भलानसो भनन्ताऽलिनासो विषाणिनः**
**शिवासः । आ योऽनयत् सधमा आर्यस्य ॥ ९६ ॥**

यस्माद् विषूचोः विरुद्धगतिमतोर्भक्ताभक्तयोर्मध्ये यः सधमा, सधशब्दः सहार्थे मा ज्ञानं धनं वा तेन सहिताः सहमाः सधमाः, क्विप् प्रत्ययः आकारान्तः । सधमाः तत्वज्ञानी तस्य आर्यस्य पूज्यस्य आ सम्यक् समस्तानि गव्यानि गवां ज्ञानानां यूथानि अनयत् ददातीति यावत् । तस्मात् तमिन्द्रं पक्थासः, पचेः कर्तरि थक्प्रत्ययः, सम्यग् हविरादीन् पचन्तः । भलानसः भलेति भद्रवाची नसशब्दो नासिकाशब्दपर्यायःसन् मुखपरः। भला नासिका येषां ते भलानसः । भद्रमुखाः । आ सम्यक् अलिनासः तपोवृद्धाः । विषाणिनः कण्डूयनार्थे कृष्णविषाणहस्ताः । शिवासः शिवाः जगन्मङ्गलदीक्षिताः । आ सम्यक् भणन्त, भणतिः शब्दकर्मा, अभिष्टुवन्ति ।

अनेन ज्ञानिनं प्रति अयः अभीष्टस्य नयनं येन स इति वा, प्रत्ययो ज्ञानं तद्दातृत्वेन प्रत्ययवान् प्रत्ययः, मतुपो लुक्, इति वा निरुक्तेः **प्रत्ययमूर्तिरत्र** ॥ ९६ ॥

**॥ ॐ सर्वदर्शनाय नमः ॥**

**गव्या तृत्सुभ्यो अजगन् युधा नॄन्। दुराध्यो३ अदितिं**
**स्रेवयन्तोऽचेतसो वि जगृभ्रे परुष्णीं। मह्ना विव्यक्॥ ९७ ॥**

अयमिन्द्रो गव्या गव्यानि गोसवयागनिर्वृत्त्यर्थं तत्र तत्र संचारायोत्सृष्टान् गोसङ्घान् तृत्सुभ्यो हिंसकेभ्योऽपहर्तृभ्यः आ समस्तानपि अनयत्। नॄन् योद्धॄन् युधा युद्धेन जघान। स्वयं च गोसङ्घान् अजगत् अगमत् लेभे। किञ्च दुराध्यः दुः दुष्टा आ सम्यग् व्याप्ता धीः येषां ते दुराध्यः। अत एव न विद्यते चेतः सम्यग् ज्ञानं येषां ते अचेतसः। वक्ष्यमाणकविप्रभृतयोऽसुराः सुदासप्रभृतिभक्त-जनस्योपद्रवाय अदितिम्, दो अवखण्डने, खण्डितुमशक्यामपि परुष्णीं नदीं स्रेवयन्तः तदीयोदकस्रवणमिच्छन्तः वि विशेषेण जगृभ्रे जगृहिरे। खण्डितकूलामकुर्वन्, नदीकूलं बिभिदुः। तदा यः सुदासादिसज्जनानुजिघृक्षया मन्हा महिम्ना अविव्यक् व्याप्नोत्, स्वमहिमप्रकाशनेन सर्वदृष्टि-गोचरोऽभवत्। नदीकूलभेदकान् हत्वा सज्जनानामभयप्रदोऽभूदिति तात्पर्यम्।

अनेन सर्वेषां दर्शनं यस्मिन् सः, सर्वदर्शनगोचरः सर्वदर्शन इति निरुक्तेः **सर्वदर्शनमूर्तिरत्र** ॥ ९७ ॥

**॥ ॐ अजाय नमः ॥**

**पृथिवीं पत्यमानः पशुष्कविरशयच्चायमानः।**
**ईयुरर्थं न न्यर्थं परुष्णीमाशुश्चनेदभिपित्वं जगाम॥ ९८ ॥**

नदीकूलभेदकहननप्रकारमेव विवृणोति। चायमानः चयमानस्य पुत्रः कविनामाऽसुरः पत्यमानः पृथिवीं प्रति पात्यमानः यागे संज्ञप्तः पशुरिव अशयत् अशेत। निश्चेष्टः भुवि प्रक्षिप्तोऽभवत्। एवं प्रतिबन्धकस्य निवृत्तत्वादेव आपः अर्थम्, ऋ गतावित्यतोऽर्हार्थे थप्रत्ययः, गन्तव्यमेव प्रवणदेशं परुष्णीं नदीमीयुः प्रापयामासुः। द्विकर्मकमिदम्। किञ्च न्यर्थं, निर्निषेधार्थः, अगन्तव्यप्रदेशं प्रति परुष्णीं नेयुः न प्रापयामासुः। सेतुबन्धानन्तरं नदीपार्श्वयोः स्थितं निम्नदेशमगमयित्वा यथापूर्वं

प्रवहणीयदेशमगमयन् । किञ्च आशुश्चन आशुगमनादश्वोऽपि, सुदासस्येति शेषः, सुदासे इति वक्ष्यमाणचतुर्थ्यन्तस्याकर्षणं वा, अभिपित्वमित्, अभिपूर्वाद् पदेरर्हार्थे वप्रत्ययः दकारस्य तकारः उपधाकारस्येकारः, अभिप्राप्तव्यदेशं जगाम। त्वद्भक्ताश्वानां जलप्रतिबन्धनं विना सुखेन सञ्चारो जात इति यावत् ।

अनेन सदा सद्द्वेषिणां कविप्रभृतीनां पृथिव्यां निरसनाद् अजः । अज गतिक्षेपणयोरिति धातोरिति निरुक्तेः **अजमूर्तिरत्र** ॥ ९८ ॥

**॥ ॐ सर्वेश्वराय नमः ॥**

**सुदास इन्द्रः सुतुकाँ अमित्रानरन्धयन्मानुषे वध्रिवाचः ।**
**ईयुर्गावो न यवसादगोपा यथाकृतम् ॥ ९९ ॥**

न केवलं कव्यादीनां कतिपयानामेव निरासकः। किं तर्हि सुदासशत्रूणामशेषाणामपीत्याह । इन्द्रः सुदासे, षष्ठ्यर्थे चतुर्थी, वध्रिवाचः वध्रिः हिंसिका वाक् येषां ते निष्ठुरभाषिणः सुतुकान् सुतोकान् ज्ञानादिभिरल्पान् वा,मानुषे मनुष्यलोके, उपलक्षणमेतत्, सर्वलोकस्थितान् सर्वानपि शत्रून् अरन्धयत् हिंसितवान्। तदीयशत्रूणामशेषाणां निगृहीतत्वात् सुदाससम्बन्धिनो जनाः अगोपाः न विद्यते गोपो निग्राहको यासां ता गाव इव यवसाद्, ल्यब्लोपनिमित्ता पञ्चमी, यवसमपेक्ष्य यथाकृतं नियमानुसारेण स्वगन्तव्यदेशमीयुः। निर्बन्धनरहिता गावो यवसादिभक्षणार्थं नानादेशं सञ्चरन्ति तथा सुदासजना अपीति यावत् ।

तेन सर्वानीशान् समर्थान् सुदासशत्रून् वारयतीति सर्वेश्वर इति निरुक्तेः **सर्वेश्वरमूर्तिरत्र** ॥ ९९ ॥

**॥ ॐ सिद्धाय नमः ॥**

**अभि मित्रं चितासः। पृश्निगावः पृश्निनिप्रेषितासः**
**श्रुष्टिं चक्रुर्नियुतो रन्तयश्च ॥ १०० ॥**

यथाकृतमिति वर्तते । इन्द्रस्य नियमानुसारेण पृश्निगावः, पृश्निशब्दो वर्णविशेषवचनः

गोशब्दोऽश्वपर्यायः, पृश्नयो गावो येषां ते मरुतः। पृश्निनिप्रेषितासः पृश्निर्भारती तया प्रेषिताः सन्तः चितासः संहताः जानन्तो वा सर्वज्ञाः सन्तः मित्रं मित्वा त्रायत इति सुदासस्य सखायमिन्द्रं प्रति अभीयुः सेवन्ते। नियुतः निपूर्वाद् युधेः कर्तरि क्विप् तकारश्छान्दसः, नितरां युद्धशीला रन्तयः रममाणाः, कर्तरि क्तिः, मरुतामश्वाश्च श्रुष्टिं शीघ्रगतिं चक्रुः। एवं खलु मरुतामश्वानां च स्वकृतनियमानुसारेण प्रेरक इति तात्पर्यम्।

तेन षिध गत्यां, कर्तरि क्विप्, सदा गमनशीला मरुतः सिधः, तस्मिन् द्वितीयान्ते उपपदे धात्रः कप्रत्ययः। सिधां मरुतां नियमनचेष्टा धत्त इति वा सिद्ध इति निरुक्तेः **सिद्धमूर्तिरत्र**॥१००॥

**॥ ॐ सिद्धये नमः ॥**

**एकं च यो विंशतिं च श्रवस्या वैकर्णयोर्जनान् राजा न्यस्तः।**
**दस्मो न सद्मन् नि शिशाति बर्हिः शूरः सर्गमकृणोदिन्द्र एषाम्[1] ॥ १०१ ॥**

भक्तरक्षणप्रकार एव विस्तरेणोच्यते। इन्द्रेण रक्षितो यो राजा सुदासाख्यः नद्याः वैकर्णयोः पार्श्वयोर्जनपदयोरुपद्रवायागतान् एकं च विंशतिं च एकविंशतिं जनान् प्रधानशत्रून् श्रवस्या स्वस्य यशोऽभीप्सया न्यस्तः न्यस्यति। असु क्षेपणे, विकरणाभावः, इकारस्याकारादेशः, सुडागमश्छान्दसः। कर्तरि क्तप्रत्ययः[2] न्यस्तवान् निराकृतवान्। किश्चान्यानपि क्षुद्रान् शत्रून् सद्मन् यज्ञगृहे बर्हिः दर्भमुष्टिविशेषं दस्मो अध्वर्युरिव नि शिशाति, शो तनूकरणे, नितरां लुनाति। तेन राज्ञा एषां पूर्वोक्तानां मरुतां सर्गं सम्बन्धं सख्यं शूरः इन्द्रः अकृणोत्। सुदासकृतं शौर्यमिन्द्रप्रेरितमरुत्सहायकृतमिति यावत्।

तेन सिधो मरुतः, तान् भक्तेषु सखित्वेनादधातीति सिद्धिः। पूर्ववत् सितृशब्दे कर्मण्युपपदे धात्रः किरिति निर्वचनात् **सिद्धिमूर्तिरत्र**॥ १०१ ॥

---

१. चतुश्चत्वारिंशाक्षरा त्रिष्टुबियम्। ऋग्वेद ७-१८-११।

२. न्यस्त इत्येतत् क्रियापदमिति व्याख्यातम्। तत्रापरितोषे कर्तरि क्तप्रत्यय इति व्याख्यानान्तरमिदम्।

॥ ॐ सर्वादये नमः ॥

**अध श्रुतं कवषं वृद्धमप्स्वनु द्रुह्युं नि वृणग् वज्रबाहुः ।**
**वृणाना अत्र सख्याय सख्यं त्वायन्तः ॥ १०२ ॥**

अध यद्यपि श्रुतं कवषं वृद्धम् एतत्सञ्ज्ञान् त्रीन् अन्यांश्च अनु अनुं, विभक्तिलोपः, द्रुह्युं द्रुह्युं पूरुं च एतत्सञ्ज्ञान् वज्रबाहुरिन्द्रः अप्सु नदीप्रवाहेषु नि वृणक् नितराममज्जयत् । सर्वेषामपि शिक्षक एव भवति । तथाप्यत्र भक्ताभक्तसमुदाये येऽनुप्रभृतयो भक्तजना त्वायन्तः त्वामेव सखायमिच्छन्तः सख्यं वृणाना वृण्वानाः तेषामिन्द्रः सख्याय भवति ।

अनेन सर्वानत्तीति सर्वादिः । सर्वशब्दोपपदाददेः किरिति निर्वचनात् **सर्वादिमूर्तिरत्र** ॥ १०२ ॥

॥ ॐ अच्युताय नमः ॥

**ये अमदन्ननु त्वा । वि सद्यो विश्वा दृंहितान्येषामिन्द्रः**
**पुरः सहसा सप्त दर्दः । व्यानवस्य तृत्सवे ॥ १०३ ॥**

ये त्वामनुसृत्य अन्ये स्थितास्तेप्यमदन् सुखिनोऽभवन्, अप्रच्युतसुखा एव भवन्ति । इन्द्रसखित्व-प्राप्त्यनन्तरं द्रुह्व्यादीनपि सुदासमिव भाग्यवतश्चकार तच्छत्रुहननं च चकारेत्याह । एषां द्रुह्व्यादि-शत्रूणां श्रुतकवषवृद्धादीनां दृंहितानि दृढानि दुर्गाणि विश्वा विश्वानि पुरः पट्टणानि तद्रक्षासाधन-भूतान् सप्तप्राकारांश्च सहसा बलेन सद्यः युगपदेव विदर्दः दारयामास । किञ्च आनवस्य अनुपुत्रस्य तृत्सवे तृत्सुसञ्ज्ञकाय तदीयं धनमदादिति शेषः ।

तेन अप्रच्युतसुखवत्त्वादच्युत इति निरुक्तेः **अच्युतमूर्तिरत्र** ॥ १०३ ॥

॥ ॐ वृषाकपये नमः ॥

**गयं भाग्जेम्य पूरुं विदथे मृध्रवाचम् । नि गव्यवोऽनवो**
**द्रुह्यवश्च षष्टिः शता सुषुपुः षट् सहस्रा ॥ १०४ ॥**

किञ्च गयं गृहनामैतत्, जातावेकवचनम्, तदीयानि गृहाणि पुराणि धनानि च तृत्सवे तृत्सुसञ्ज्ञकाय राज्ञे वि भाक् व्यभाक्, विभज्य दत्तवान् । किञ्च गव्यवः पशुकामा ज्ञानकामा वा अनवः अनुप्रभृतयः

द्रुह्यवः द्रुह्युप्रभृतयः, चशब्दादन्ये पूर्वं सुदासविरोधिनः[1] मोक्षयोग्यजनाश्च षष्टिः शता षष्ठिशतानि षट् सहस्राः षट्सहस्रसंख्याकाश्च नि सुषुपुः नितरां सुखमापुः । अतो वयं तमेवाश्रित्य शत्रून् जेष्म जयेम ।

तेन भक्ताभिलषितवर्षिता वृषः, आ समन्ताद् भक्तान् कं सुखं पाययतीत्याकपिः, पातेः किः, वृषश्चासावाकपिश्च वृषाकपिरिति निरुक्तेः **वृषाकपिमूर्तिरत्र** ॥ १०४ ॥

**॥ ॐ अमेयात्मने नमः ॥**

**षष्टिर्वीरासो अधि षड् दुवोयु विश्वेदिन्द्रस्य वीर्या**
**कृतानि । इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टाः ॥ १०५ ॥**

किञ्च षष्टिसहस्रसंख्याका अधि षट् ततोप्यधिककोटिसंख्याश्च वीरासः वीर्यवन्तोऽपि सुदाससि भगवत्प्रीतिं ज्ञात्वा दुवोयु दुवोयवः जसो लोपः, दुवस्यतीति परिचर्याकर्मसु पाठात् परिचर्यामकुर्वन् । नन्वैन्द्रप्रकरणे सुदाससो माहात्म्यवर्णनं कथं सङ्गतमित्यतः स्वयमेवाभिप्रायमाह । यान्यत्र सुदाससा कृतानि वीर्या वीर्याणि तानि विश्वानि समस्तान्यपि इन्द्रस्यैव, तत्प्रसादायत्तत्वादिति भावः । किञ्चेदानीं मित्रभूता अपि तृत्सवः तृत्सुप्रभृतयो राजानः पूर्वं सृष्ट सङ्गताः सन्तः, वेविषाणाः, विष्लृ व्याप्तौ, युद्धार्थे व्याप्नुवन्तः तत्पक्षपातिना इन्द्रेण पराजिताः नीचीः नीचप्रदेशान् आपो न आप इव अधवन्त अधावन्त । एवमपरिमितानुभावो भगवान् ।

तेनामेय आत्मा स्वरूपं यस्य स इति निरुक्तेः **अमेयात्ममूर्तिरत्र** ॥ १०५ ॥

**॥ ॐ सर्वयोगविनिःसृताय नमः ॥**

**अधवन्त नीचीः । दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि**
**भोजना सुदासे ।[2] यस्तिग्मशृङ्गो वृषभः ॥ १०६ ॥**

किं बहुना सूदाससो दुर्मित्रासः शत्रवः सर्वेपि मिमानाः इन्द्रेणैव हिंस्यमानाः प्रकलवित् प्रकलविदः,

१. पूर्वं सुदासविरोधिनः पश्चान्मित्रभूता इति यावत् ।

२. ऋग्वेद ७-१९, मैत्रावरुणिर्वसिष्ठः ।

प्रकलः कल कामधेनौ, पलायनमात्मन उचितं मन्यमानाः नीचीः नीचैः अधवन्त अधावन्त, गृहासु प्रविष्टा अभवन्। केचन सुदासे तन्नाम्ने राज्ञे विश्वानि भोजना भोजनानि भोग्यानि जहुः तत्यजुः। तस्मै करं ददुरिति यावत्। यः सुदासाः तिग्मशृङ्गो वृषभः तीक्ष्णशृङ्गो वृषभ इव अदभ्यस्तस्मै सुदासे भोजनानि जहुरिति सम्बन्धः।

अनेन युज्यन्त इति योगा भोग्या धनादयः, सर्वेषां योगानां विनिःसृतः विनिःसृतिर्यस्मात्, सर्वे योगाः विनिःसृता यस्मादिति वा निरुक्तेः **सर्वयोगविनिःसृतमूर्तिरत्र** ॥ १०६ ॥

**॥ ॐ वसवे नमः ॥**

**न भीम एकः कृष्टीश्च्यावयति प्र विश्वाः। यः शश्वतो**
**अदाशुषो गयस्य प्रयन्तासि सुष्वितराय वेदः॥ १०७॥**

यस्तिग्मशृङ्गो वृषभ इति वर्तते। य इन्द्रः एकः असहाय एव विश्वाः समस्ताः कृष्टीः असुरप्रजाः तिग्मशृङ्गः तीक्ष्णशृङ्गो वृषभो न वृषभ इव भीमः शत्रूणां भयङ्करः प्रच्यावयति स्थानाद् भ्रंशयति। यश्चेन्द्रः अदाशुषः अयजमानस्य शश्वतः सन्ततस्य बहोर्गयस्य धनस्य गृहस्येति वा अपहर्ता। हे इन्द्र स त्वं सुष्वितराय सोमाभिषवं कुर्वते यजमानाय धनं प्रयन्तासि दातासि।

अनेन वसु धनं दातव्यतया अस्यास्तीति वसुः। मतुपो लुगिति निरुक्तेः **वसुमूर्तिरत्र** ॥ १०७॥

**॥ ॐ वसुमनसे नमः ॥**

**त्वं ह त्यदिन्द्र कुत्समावः शुश्रूषमाणस्तन्वा समर्ये।**
**दासं यच्छुष्णं कुयवं न्यस्मा अरन्धय आर्जुनेयाय॥ १०८॥**

हे इन्द्र दासं दासाय आर्जुनेयाय अर्जुन्याः पुत्राय अस्मै कुत्साय धनं शिक्षन् दास्यन् समर्ये मर्त्यैः सहिते युद्धे शुश्रूषमाणः दासेन कुत्सेन सेव्यमानः तन्वा शरीरेण पृथक् मूर्तिमान् भूत्वा यत् यदा शुष्णं कुवयं तन्नामकासुरद्वयं च नि सम्यग् अरन्धयः वशमानयः। त्यत् तं कुत्सं त्वं आवः रक्षितवानसि। ह प्रसिद्धमेतत्। दासं दासनामकं शुष्णं कुवयं च त्रीनसुरानरन्धय इति वा योज्यम्।

अनेन शुश्रूषितुं वाति गच्छति जानातीति वा वः। वातेर्डः। वे शुश्रूषमाणे कुत्से सु समीचीनं मनः दयार्द्रं यस्येति निरुक्तेः **वसुमनोमूर्तिरत्र** ॥ १०८ ॥

॥ ॐ सत्याय नमः॥

**शिक्षन्। त्वं धृष्णो धृषता वीतहव्यं प्रावो विश्वाभिरूतिभिः**
**सुदासम्। प्र पौरुकुत्सिं त्रसदस्युमावः॥ १०९॥**

धृष्णो शत्रुधर्षणशील धृषता शत्रुधर्षणशीलेन वज्रेण शत्रून् शिक्षन् त्वं वीतहव्यं देवान् प्रति प्रापितहविष्कं देवपूजकं सुदासं राजानं विश्वाभिः समस्ताभिरणिमादिभिः ऊतिभिः भूतिभिः प्रावः अणिमादिसर्वसिद्धिं दत्वा अरक्षः। एवमेव पौरुकुत्सिं पुरुकुत्सस्य राज्ञः पुत्रं त्रसदस्युं तन्नामानं राजानं च प्रावः।

अनेन अणिमाद्यैश्वर्यजातं सत्, तत् सुदासादिभक्तजनान् यापयति प्रापयति। सन्तं सुदासादिं याति सद्गुणदानेनेति वा निर्वचनात् **सत्यमूर्तिरत्र**॥ १०९॥

॥ ॐ समात्मने नमः॥

**क्षेत्रसाता वृत्रहत्येषु पूरुम्। त्वं नृभिर्नृमणो देववीतौ**
**भूरीणि वृत्रा हर्यश्व हंसि। त्वं नि दस्युम्॥ ११०॥**

हे हर्यश्व हरिद्वर्णोपिताश्वयुक्त हे इन्द्र क्षेत्रसाता क्षेत्रसातौ क्षेत्रस्य भूमेः सातौ लाभे भुवः पालनार्थं वृत्रहत्येषु युद्धनामसु पाठाद् युद्धेषु पूरुं पूरुनामकं राजानं जयिनं कृत्वा प्रावः। किञ्च देववीतौ देवा विजयाय यन्त्यत्रेति देववीतिर्युद्धम्, तस्मिन् भूरीणि बहूनि वृत्रा वृत्राणि स्वभक्तोपरोधकानि शत्रुजालानि त्वं हंसि मारितवानसि। किञ्च नृमणः नृभिः सर्वचेतनैः मननीयः समीचीनस्वरूपैर्मरुद्भिः सह दस्युं लोकोद्रवकारिणं जनं निहंसि।

तेन सं सर्वोत्तमः आत्मा स्वरूपं यस्येति निरुक्तेः **समात्ममूर्तिरत्र**॥ ११०॥

॥ ॐ सम्मिताय नमः॥

**चुमुरिं धुनिं चास्वापयो दभीतये सुहन्तु। तव च्यौत्नानि**
**वज्रहस्त तानि नव यत् पुरो नवतिं च सद्यः॥ १११॥**

हे वज्रहस्त दभीतये तन्नामकभटाय तत्कार्यसिद्ध्यर्थं चुमुरिं धुनिं च तन्नामकमसुरद्वयं सुहन्तु सुहन्तुना सम्यग्घननसाधनेन वज्रेण, तृतीयाया लुक्, अस्वापयः, ष्वप् शये, शायितवान्

मारितवानसि। अत एव तव च्यौत्नानि, वलनामैतत्, बलानि तानि तादृशानि अनुपमानि। यत् यत एवमनुपमानि बलानि सन्ति अतो नवनवतिं एकोनशतसंख्यानि पुरः वृत्रस्य नमुचेश्च नगराणि सद्यः युगपदेव अस्वापयः व्यनाशयः।

तेन सम्यक् पुराणि मिनोति,मीङ् हिंसायामिति निरुक्तेः **सम्मितमूर्तिरत्र** ॥ १११ ॥

**॥ ॐ समाय नमः ॥**

**निवेशने शततमाविवेषीरहञ्च वृत्रं नमुचिमुताहन्।**
**सना ता त इन्द्र भोजनानि रातहव्याय ॥ ११२ ॥**

हे इन्द्र निवेशने स्वस्य निवासार्थं शततमा शततमां पुरीमेकामवशेष्य आविवेषीः त्वं प्राविशः। तत्र स्थित्वा स इन्द्रो वृत्रमहन् अहनत्। नमुचिमुत नमुचिं चाहनत्। हे इन्द्र रातहव्याय दत्तहविष्काय त्वत्पूजकाय ते त्वया दत्तानि तानि भोजनानि भोग्यानि सना सनातनानि, वर्णलोपः, नित्यानि। यद्वा सना समा समानि सप्रमाणानि तत्तद्योग्यतानुसाराणि च।

तेन समानि तत्तद्योग्यतानुसाराणि सप्रमाणानि च वा दानानि अस्येति समः। मतुपो लुक्। इति निरुक्तेः **सममूर्तिरत्र** ॥ ११२ ॥

**॥ ॐ अमोघाय नमः ॥**

**दाशुषे सुदासे। वृष्णे ते हरी वृषणा युनज्मि व्यन्तु ब्रह्माणि**
**पुरुशाक वाजम्। मा ते अस्याम् ॥ ११३ ॥**

दाशुषे ते हविर्दात्रे सुदासे राज्ञे वृष्णे अभीष्टसेचकाय ते तुभ्यं त्वदागमनसिद्ध्यर्थं वृषणा वृषाणौ युवानौ हरी अश्वौ युनज्मि योजयामि। योजयितुं त्वां प्रार्थयामीति यावत्। मद्गृहं प्रति आगतस्य तव मया कृतानि ब्रह्माणि स्तोत्राणि वाजं वाजत्वं, भावप्रधानः, अन्नत्वं व्यन्तु प्राप्नुवन्तु। हे पुरुशाक, शाकशब्दः कर्मपर्यायः, पुरूणि अमोघानि शाकानि कर्माणि यस्य सः पुरुशाकः पुरु-कर्मा। शक्लृ शक्तौ इत्यतो भावे घञ्, शाकः शक्तिः, पुरुरमोघा शक्तिर्यस्येति वा। हे पुरुशक्ते ते तव त्वया क्रियमाणायामस्यां भक्तरक्षणादिक्रियायां विघ्नो मा भूत्।

तेन न विद्यते मोघः विघ्नः कर्मणो यस्येति निरुक्तेः **अमोघमूर्तिरत्र** ॥ ११३ ॥

॥ ॐ पुण्डरीकाक्षाय नमः ॥

**सहसावन् परिष्टावघाय भूम हरिवः परादै । त्रायस्व**
**[१]नो वृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम ॥ ११४ ॥**

हे सहसावन्, सहसाशब्दः सहःशब्दपर्यायः आकारान्तोप्यस्ति, बलवन् हरीन् वर्तयतीति हरिवाः, डप्रत्ययः, हे हरिवः इन्द्र, ते परिष्टौ त्वद्विषयपर्येषणायाम् अस्माभिः क्रियमाणायां परादै पराभवाय अघाय विघ्नाय मा भूम । तदर्थमेव नः अस्मान् वरूथैः वारणीयैर्वृकेभिः क्रूरैर्वराहादिरूपैः त्रायस्व पालय । किञ्च वयं सूरिषु ज्ञानिषु तव प्रियासः प्रियाः स्याम । त्वदाश्रिताः स्याम ।

तेन पुण्डरीकवत् प्रिया भक्ताः पुण्डरीकाणि, तेषामाक्षः, क्षि निवासगत्योः ततो डः, आ समन्तादाश्रय इति निरुक्तेः **पूण्डरीकाक्षमूर्तिरत्र** ॥ ११४ ॥

॥ ॐ वृपकर्मणे नमः ॥

**प्रियास इत्ते मघवन्नभिष्टौ नरो मदेम शरणे सखायः ।**
**नि तुर्वशं नि याद्वं शिशीह्यतिथिग्वाय ॥ ११५ ॥**

हे मघवन् ते अभिष्टौ त्वत्प्रेषणक्रियायां प्रियासः प्रीतियुक्ताः नरः स्तोतॄणां नेतारः वयं ते सखायः यथायोग्यं त्वत्समानख्यातयः शरणे गृहे मदेम मोदेमैव । त्वं च अतिथिग्वाय अतिथीन् गच्छति पूज्यत्वेनेति अतिथिग्वः, गमेड्वः, विहितानुष्ठातृसज्जनोपलक्षणमेतत्, सज्जनाय सज्जनहितार्थं तुर्वशं तुर्वशनामकं दुर्जनं नि शिशीहि, शीङ् स्वप्ने, नितरां स्वापय । अस्मद्विषये निर्व्यापारं कुरु । एवं याद्वं याद्वनामकं दुर्जनं नि शिशीहि । एवमस्मच्छत्रून् हत्वा अस्मान् सुखिश्रेष्ठान् कुर्विति तात्पर्यम् ।

अनेन स्वभक्तं वृषं श्रेष्ठं करोतीति वृषकर्मा, करोतेर्मनिन्, इति निरुक्तेः **वृपकर्ममूर्तिरत्र** ॥ ११५ ॥

॥ ॐ वृपाकृतये नमः ॥

**शंस्यं करिष्यन् । सद्यश्चिन्नु ते मघवन्नभिष्टौ नरः शंसन्त्यु-**
**क्थशास उक्था । ये ते हवेभिर्वि पणीँरदाशन् ॥ ११६ ॥**

१. नोऽवृकेभिरिति प्रचलितवेदपाठः ।

हे मघवन् ते अभिष्टौ पर्येषणक्रियायां क्रियमाणायां सत्याम्, उक्थशासः उक्थानां शास्त्राणां शंसितारः नरः ऋत्विजः उक्था उक्थानि स्तोत्राणि नु इदानीं सद्यश्चित् सद्य एव शंसन्ति स्तुवन्ति। ये च ते हवेभिः त्वदीयाह्वानैः पर्णान् पणिनामकासुरान् वि अदाशन् धातूनामनेकार्थत्वात् निजघ्नुः। तान् भक्तजनान् शंस्यं शंसनीयान् करिष्यन् वर्तसे करोषि।

अनेन वृषा वै हिङ्कारो योषर्क् तन्मिथुनं मिथुनमेव स उक्थमुखे करोतीत्युक्तेः हिंकारशिरस्को वध्यस्तोत्रं वृषः तेन आकृतिः आकारणमाह्वानं यस्येति निरुक्तेः **वृषाकृतिमूर्तिरत्र**॥ ११६॥

॥ ॐ रुद्राय नमः॥

**अस्मान् वृणीष्व युज्याय तस्मै। एते स्तोमा नरां नृतम**
**तुभ्यमस्मद्र्यञ्चो ददतो मघानि। तेषामिन्द्र॥ ११७॥**

हे नृतम नेतृतम इन्द्र ये उक्थशासः तस्मै तेभ्यः युज्याय सख्याय अस्मान् वृणीष्व। किञ्च नरां नृणाम्, यणादेशश्छान्दसः, तुभ्यं मघानि, धनं वाव मघम्, धनानि हविरादीनि ददतः प्रयच्छतः अस्मद्र्यञ्चः अस्मदभिमुखा अस्मत्कार्यसाधका एते स्तोमा समूहा अस्मदीयजनसमूहाः, तेषामस्मदीयानां जनानां युज्याय, युजेर्भावे क्यप्, योग उपायः योग्यतया संसाररोगपरिहारोपायः युज्यम्, तस्मै भवेति शेषः।

अनेन रुजं द्रावयते यस्माद् रुद्रस्तस्माज्जनार्दन इति निरुक्तेः **रुद्रमूर्तिरत्र**॥ ११७॥

॥ ॐ बहुशिरसे नमः॥

**वृत्रहत्ये शिवो भूः सखा च शूरोऽविता च नृणाम्।**
**नू इन्द्र शूर स्तवमान ऊती ब्रह्मजूतस्तन्वा वावृधस्व॥ ११८॥**

हे इन्द्र शूर भक्तैः स्तवमानः वृत्रहत्ये, युद्धनामैतत्, शत्रुभिर्युद्धे प्राप्ते नृणां त्वं शिवः कल्याणकृत् सखा अविता च भूः अभूः, व्यत्ययेन भवेत्यर्थः। किञ्च नु इदानीं हे शूर स्तवमानः स्तूयमानः ब्रह्मजूतः ब्रह्मणा स्तोत्रेणास्मदीयेन जूतः प्रेरितः ऊती ऊतीः अस्मदभिप्रेतांश्च दातुं तन्वा शिरसा वावृधस्व। भक्तानामभीष्टदानाय बहुशिरोभिरभीष्टानि व्यूह्य दातव्यानीति भावः।

तेन भक्तानां धनानि व्यूढ्वा दातुं बहूनि शिरांसि यस्येति निरुक्तेः **बहुशिरोमूर्तिरत्र**॥ ११८॥

॥ ॐ बभ्रवे नमः ॥

उप नो वाजान् मिमीह्युप स्तीन् यूयं पात स्वस्तिभिः
सदा नः। [1]उग्रो जज्ञे वीर्याय स्वधावांश्चक्रिः ॥ ११९ ॥

हे रुद्र उप किञ्च वाजान् अन्नादिभोगान् नः अस्मभ्यं मिमीहि प्रयच्छ। स्तीन्, स्तिशब्दो गृहनामसु पठितः, गृहानपि मिमीहि। यूयं, गौरवाद् बहुवचनम्, स्वस्तिभिः क्षेमहेतुभिरन्नाद्यैः सदा नः अस्माकं पात। लोट्। बहुवचनं पूर्ववत्। त्वं सदा पाहीत्यर्थः। किञ्चायमिन्द्रः स्वधावान् सुखवान्। चक्रिः जगतः कर्ता। करोतेः किः लिड्वद्भावो द्विर्वचनादि यणादेशश्च। किञ्च स इन्द्र वीर्याय स्वसामर्थ्यप्रकटनाय अहेर्भक्षणाय बभ्रुरिव जगतो भक्षकत्वेन उग्रो जज्ञे क्रूरो जायते।

तेन बभ्रुरिव स्थितत्वाद् बभ्रुः। अन्तरेणापि वतिमतिदेशो ज्ञायते गाङ्कुटादिभ्योऽञ्णिन्ङित् इति यथेति निरुक्तेः बभ्रुमूर्तिरत्र ॥ ११९ ॥

॥ ॐ विश्वयोनये नमः ॥

अपो नर्यो यत्करिष्यन्। जग्मिर्युवा नृषदनमवोभिस्त्राता
न इन्द्र एनसो महश्चित्। हन्ता वृत्रमिन्द्रः ॥ १२० ॥

हे इन्द्र नर्यः नरेषु साधुः नरहितो वा नृषदनं यज्ञसदनं युद्धं वा अवोभिः अवनैः सह यत् करिष्यन् यत्कर्म करिष्यन् जग्मिः, गमेः किः लिड्वद्भावः, गन्ता भवति। तत् अपः कर्माणि युवा सन् नित्यतरुण एव सन् चक्रिः कर्ता भवति। कृद्योगे षष्ठी न भवति। महश्चित् महतोपि एनसः पापात् अस्मान् त्राता। वाह्ये वृत्रहन्ता च।

तेन नृसदनं यज्ञवाटं प्रविशतीति विश्वः। विशतेः कर्तरि वः। भक्तानां रक्षणादीन् युनक्तीति योनिः। विश्वश्चासौ योनिश्चेति निरुक्तेः विश्वयोनिमूर्तिरत्र ॥ १२० ॥

॥ ॐ शुचिश्रवसे नमः ॥

शूशुवानः पावीन्नु वीरो जरितारमूती। कर्ता सुदासे
अह वा उ लोकं दाता वसु मुहुरा दाशुषे भूत् ॥ १२१ ॥

---

१. ऋग्वेद ७-२०, मैत्रावरुणिर्वसिष्ठ ऋषिः, त्रिष्टुप्।

किञ्चायमिन्द्रः शूशुवानः वर्धमानो वृत्रवधादिनोत्साहयुक्तः नु इदानीं वीरः औदार्ययुक्तः जरितारं स्तोतारम् ऊती ऊत्या रक्षयामीत्याभिप्रायेण प्रावीत्। एतदेव निर्दिशति। सुदासे राज्ञे लोकं जनपदादिसहितं राज्यं कर्ता, तृन्नन्तः। सुदासस्य राज्ञः लोकं साम्राज्याधिपत्यं दत्तवानिति श्रुतिः अह आह। वा लोकवेदयोः तत्कीर्तिः प्रसिद्धास्ति। किञ्च सुदाससोऽन्यस्मै दाशुषे दानशीलाय मुहुः पुनःपुनः वसु धनधान्यादिकमभीष्टं आ सम्यक् दाता अभूदिति च श्रुतिराह। एवं त्वदीया कीर्तिः श्रुतिप्रसिद्धा।

तेन शुचिः श्रुतिः तया प्रसिद्धं श्रवो यस्य सः शुचिश्रवा इति निरुक्तेः **शुचिश्रवोमूर्तिरत्र**॥१२१॥

॥ ॐ अमृताय नमः॥

**युध्मो अनर्वा खजकृत् समद्वा शूरः सत्राषाड् जनुषे-**
**मषाळ्हः। व्यास इन्द्रः पृतनाः स्वोजा अधा विश्वम्॥ १२२॥**

युध्मः योद्धा, युधेः कर्तरि मक्। ऋ गतावित्यतः कर्तरि वन् गुणः अर्वा गन्ता, लोकान्तरं प्रतीति शेषः, मृत इति यावत्। स न भवतीत्यनर्वा अमृत इति यावत्। खजं युद्धं तत् करोतीति खजकृत्। समच्छब्दः कलहे तद्वान् समद्वा, ततो मत्वर्थे वन् नकारलोपः, शूरः शौर्यपतः। जनुषा जन्मना, स्वभावत एव, सत्राषाड् वैरिवेगसहः, स्वयं न केनापि सोढुं शक्यः। स्वोजाः वैरिवेगदहनशक्तिमान्। ईम् इत्थमेव सम्यक् प्रमितः। इन्द्रः शत्रूणां पृतनाः व्यासे, असु क्षेपणे, व्यक्षिपत्। अधेति समुच्चये। किञ्च विश्वं समस्तं जगत् व्यासे, आस उपवेशने, रक्षकत्वेन उपविवेश।

अनेन न मृतः अमृत इति निरुक्तेः **अमृतमूर्तिरत्र**॥ १२२॥

॥ ॐ शाश्वताय नमः॥

**शत्रूयन्तं जघान। उभे चिदिन्द्र रोदसी महित्वाऽऽपप्राथ**
**तविषीभिस्तुविष्मः। नि वज्रमिन्द्रो हरिवान्॥ १२३॥**

तुविशब्दो बहुवाची स्मशब्दो धनवाची। बहूनि धनानि यस्य सः तुविष्माः तस्य सम्बुद्धिः तुविष्मः इन्द्र महित्वा महिम्नैव तविषीभिः दीप्तिभिश्च उभेचित् रोदसी द्यावापृथिव्यौ आ सम्यक् पप्राथ पूरितवानसि। पॄ पालनपूरणयोः, ततो लिट् अडागमो वचनव्यत्ययश्च। द्यावापृथिव्यौ केवलं

देशतः कालतश्च व्याप्ते प्रसिद्धे ते यदा व्याप्नोषि तदा तव देशतः कालतश्च परिमितिरेव नास्ति। ततो भवान् विभुः शाश्वतश्चेति तात्पर्यम्। किञ्च स हरिवान् इन्द्रः वज्रं नि गृहीत्वा शत्रूयन्तं शत्रुवदाचरन्तं समस्तमपि जनं जघान।

अनेन शश्वदेकप्रकारेण नित्यो वर्तत इति **शाश्वतमूर्तिरत्र** ॥ १२३ ॥

**॥ ॐ स्थाणवे नमः ॥**

**मिमिक्षन् त्समन्धसा मदेषु वा उवोच। वृषा जजान**
**वृषणं रणाय तमु चिन्नारी नर्यं ससूव॥ १२४॥**

य इन्द्रः अन्धसा अन्नादिभोगेन सं मिमिक्षन् सर्वाभिलषितं प्रवर्षन् उ सर्वेष्वपि जनेषु उवोच, उच समवाये, संसक्तोऽभूत् संस्थितोऽभूत्। मदेषु अनन्तेष्वानन्देषु उवोच संयुक्तोऽभूत्। सततमेवम्भूतमिन्द्रं वृषा सेक्ता कश्यपः जजान उत्पादयामास। नारीचित् तत्पत्नी अदितिश्च तं वृषणं भक्ताभिलषितसेचकं रणाय युद्धाय नर्यं नरेषु सन्निहितं ससूव सुषाव। वै प्रसिद्धमेतत्।

तेन सर्वजनेषु सन्तिष्ठतीति स्थः, तिष्ठतेः कः। आ अनन्तः णः आनन्दः अस्यास्तीति आणुः, मत्वर्थे उः। स्थश्चासौ आणुश्चेति निर्वचनात् **स्थाणुमूर्तिरत्र** ॥ १२४ ॥

**॥ ॐ वरारोहाय नमः ॥**

**प्र यः सेनानीरध नृभ्यो अस्तीनः सत्वा गवेषणः स धृष्णुः।**
**नू चित् स भ्रेषते जनो न रेषन् मनो यो अस्य॥ १२५॥**

य इन्द्रो नृभ्यः नृणां हितार्थं सेनानी देवतासेनानां शत्रून् प्रति नेता सन् इनः सर्वेषां स्वामित्वेनास्ति वर्तते। सर्वजनस्वामितया सर्वान् जनानारूढः। अथ किञ्च सत्वा शत्रूणां सादकः निरासकः, सदेस्त्वन् प्रत्ययः। धृष्णुः धैर्यशीलश्च। स इन्द्रो गवेषणः गवेषणविषयः, मत्वर्थे अप्रत्ययः, गवेषणीयः मननादिना अन्वेषणीयः। किञ्च अस्य अस्मिन्निन्द्रे यो जनो मनो निदधाति, ध्यायतीति यावत्, स जनो नूचित् इदानीमपि न भ्रेषते स्थानात् सुखाद् वा न भ्रश्यति। न रेषन् च, रूष हिंसायाम्, नैव हिंस्यते। लङ् लडर्थे।

तेन वरत्वेन स्वामित्वेन सर्वानारोहति। आङ्पूर्वाद् रुहेर्घञ्। ततश्च वरत्वेन सर्वारूढो वरारोह इति निरुक्तेः **वरारोहमूर्तिरत्र** ॥ १२५ ॥

॥ ॐ महातपसे नमः ॥

**घोरमाविवासात्। यज्ञैर्य इन्द्रे दधते दुवांसि क्षयत् स**
**राय ऋतपा ऋतेजाः। यदिन्द्र पूर्वो अपराय ॥ १२६ ॥**

योऽधिकारी घोरं मनः चञ्चलत्वाद् दुःस्थं मनः इन्द्रे अविवासात् आविवासयति सम्यक् स्थापयति तस्मै जनाय दुवांसि दोहनानि दधते ददाति। वचनव्यत्ययः। हे इन्द्र यत् यस्माद् यज्ञैः यज्ञेषु अपराय अपरेभ्यः पूर्वः पूर्वमेव भवान् ऋतेजाः ऋते यज्ञे जायत इति, सर्वेभ्यो देवेभ्यः पूर्वं यज्ञे अभिव्यक्तः सन् ऋतपाः ऋतं सोमं पातासि। तस्मात् स भवान् राये द्रव्यदानार्थं क्षयत्, क्षि निवासगत्योः, यजमानगृहे निवसति। एवमतिसमर्थो भवान्।

तेन महत् तपः सामर्थ्यादिरूपं यस्य स महातपा इति निरुक्तेः **महातपोमूर्तिरत्र** ॥ १२६ ॥

॥ ॐ सर्वगाय नमः ॥

**शिक्षन् नयन् ज्यायान्[१] कनीयसो देष्णम्। अमृत इत्**
**पर्यासीत दूरमा चित्र चित्र्यं भरा रयिं नः। यस्त इन्द्र ॥ १२७ ॥**

हे इन्द्र भवान् ज्यायान् श्रेष्ठः। यस्ते कनीयान् तस्य कनीयसः देष्णं देयं धनं शिक्षन्, शिक्षतिर्दानकर्मा, ददत् नयन्, उत्कर्षं प्रापयन्। यत एवं तस्मादमृतः नित्यमुक्तः दूरमित् दूर एव पर्यासीत सम्यग् वर्तते। त्वं सकलजीवजाताद् विलक्षणोऽतः सर्वेपि त्वदुपजीविनः। हे चित्र आश्चर्यरूप अतो नः चित्र्यं विचित्रं रयिम् आ भर।

तेन सर्वं जीवजातं धनादिदातृत्वेन गच्छतीति सर्वग इति निरुक्तेः **सर्वगमूर्तिरत्र** ॥ १२७ ॥

॥ ॐसर्वविदे नमः ॥

**प्रियो जनो ददाशदसन्निरेके अद्रिवः सखा ते। वयं**
**ते अस्यां सुमतौ चनिष्ठाः स्याम वरूथे अघ्नतः ॥ १२८ ॥**

---

१. नयज्ज्यायानित्याधुनिकपाठः।

हे इन्द्र यस्ते प्रियो जनः ते तुभ्यं निरेके दाने असत्, अस भुवि, वर्तते स जनस्ते सखा त्वत्समानख्यातिमान् भवति। तदेव लेशतो विवृणोति। ददाशत्, दाशृ दाने, दाता भवति। हे अद्रिवः अघ्नतः अहिंसतः भक्तान् परिपालयतस्ते तव वरूथे, वरूथं गुप्तिः, तस्मिन् रक्षणे वयं स्याम। त्वद्रक्षणविषयिणो भवेम। अस्यां वेदरूपिण्यां सुमतौ सुमतिसाधनभूतायां स्तुतौ स्याम। चनिष्ठाश्च चनं सुखं तद्वन्तश्च भवेम।

तेन सर्वं दातृत्वादिसादृश्यं वेदयति प्रापयतीति सर्ववित्, विद्लृ लाभे इत्यतोऽन्तर्णीतण्यर्थात् क्विप्, इति निरुक्तेः **सर्वविन्मूर्तिरत्र**॥ १२८॥

॥ ॐ भानवे नमः॥

**नृपीतौ। एष स्तोमो अचिक्रदद् वृषात उत स्तामुर्मघ-**
**वन्नक्रपिष्ट । रायस्कामो जरितारं त आगन्॥ १२९॥**

स्तोमः स्तुतिः, कर्तृपलक्षकः, स्तोता एषः एतत्सूक्तद्रष्टृत्वेन प्रकृतो वसिष्ठः। नृपीतौ नृणां नेतॄणां देवानां पीतिः पानं यस्मिन् तस्मिन् यज्ञे अचिक्रदत् क्रन्दति स्तौति। उत अपिच स्तामुः, तमु ग्लाने, ततोऽण्प्रत्ययः कर्तरि आदिवृद्धिः सुडागमश्च , संसारश्रान्तः सन्। अक्रपिष्ट, क्रपू सामर्थ्ये, समर्थो बभूव। हे मघवन् ते जरितारं स्तोतारं वसिष्ठं रायस्कामः रायो धनस्य कामः काङ्क्षा आगन् आ सम्यक् विसृज्य अगच्छत्। त्वत्प्रसादाद् वसिष्ठो निष्कामो जातः।

तेन भा प्रतिभा विषयाकाङ्क्षा, तां स्वभक्तेभ्योऽपनयति इति भानुः। नयतेरन्तर्णीतण्यर्थादुः। इति निरुक्तेः **भानुमूर्तिरत्र**॥ १२९॥

॥ ॐ विष्वक्सेनाय नमः॥

**त्वमङ्ग शक्र वस्व आ शको नः। स न इन्द्र त्वयताया**
**इषे धास्त्मना च ये मघवानो जुनन्ति॥ १३०॥**

हे अङ्ग प्रिय शक्र त्वं नः अस्मभ्यं वस्वः, वस निवासे भावे उप्रत्ययः स्त्रीत्वं छान्दसम्, वसतीः आ सम्यक् शकः, शकिर्दानकर्मा, आशकः लकारव्यत्ययेन देहि। मुक्तान् कुरु। हे इन्द्र भक्तानुकम्पी स त्वं त्वयताया त्वद्दत्तायै इषे अन्नाय त्वत्प्रसादलब्धसङ्कल्पमात्रासादितमौक्तिकभोगाय नः अस्मान्

धाः अधाः, पूर्ववद् व्यत्ययेन धारय । ये चान्ये मघवानः परिपक्वज्ञानादिमन्तः त्मना आत्मना स्वयमेव जुनन्ति, जूतिर्दानार्थः, हवींषि ददति तांश्चास्माभिः सह मौक्तिकानुभवे धारय, ज्ञातिभिर्वा आयुष्मन्तः (अक्षण्वन्तः?) इत्यादि श्रुत्यर्थविहारसिद्ध्यर्थम् ।

अनेन विष्वक् तत्र तत्र भूम्यन्तरिक्षस्वर्गवैकुण्ठादौ सरणं गमनं विष्वक्सम् । सरतेभवि डः । तस्येनः स्वामी । मुक्तानां भोगाय तत्तल्लोकगमनस्य दातेति यावत् । इति निरुक्तेः **विष्वक्सेनमूर्तिरत्र** ॥ १३० ॥

॥ ॐ जनार्दनाय नमः ॥

**वस्वीषु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नः ।**

**[1]उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया ॥ १३१ ॥**

हे इन्द्र वस्वीषु त्वल्लोके वसतिषु मुक्तस्थानेषु ते जरित्रे स्तोत्रे मह्यं शक्तिरस्तु । त्वां स्तोतुं मम शक्तिरस्त्विति यावत् । जननादिक्लेशमर्दयेति तात्पर्यम् । किञ्चेन्द्र यूयं त्वं स्वस्तिभिः जननादिदोषवर्जनमङ्गलैः सदा सर्वदा नः अस्मान् पात पाहि । हे वसिष्ठ मन्त्रद्रष्ट, वसिष्ठस्यैव स्वात्मानं प्रति सम्बोधनम् । पुरातना जनाः श्रवस्या श्रवसः कीर्तेरिच्छया ब्रह्माणि वेदरूपाणि स्तोत्राणि ऐरत अकुर्वन् उ एव, निश्चितमेतत् । उत त्वमपि इन्द्रं समर्ये यज्ञे महया पूजय । सज्जनं प्रति वाऽयमुपदेशः ।

तेन जनं जननमर्दयतीति निरुक्तेः **जनार्दनमूर्तिरत्र** ॥ १३१ ॥

॥ ॐ वेदाय नमः ॥

**वसिष्ठ । आ यो विश्वानि शवसा ततानोपश्रोता**

**म ईवतो वचांसि । अयामि घोष इन्द्र देवजामिः ॥ १३२ ॥**

हे वसिष्ठ य इन्द्रः विश्वानि समस्तानि जगन्ति शवसा सुखेनैव आ ततान व्याप्तोऽभूत् । किञ्च ईवतः, इण् गतौ भावे इकारप्रत्ययः, ई शरणागतिरस्यास्तीति ईवान्, तस्य शरणागतस्य मे मम वचांसि स्तोत्राणि उपश्रोता शृणोति । तमिन्द्रं महयेति पूर्वेणान्वयः । हे इन्द्र देवजामिः देवानां

१. ऋग्वेद ७-२३, मैत्रावरुणिर्वसिष्ठः ।

जामिरिव जामिः । एतस्मिन् देहे देवानां घोषस्य चावस्थितेः देवानां स्वसेव स्थितो घोषो वेदध्वनिः त्वया अस्मासु स्थित्वा अयामि अकारि । स्तुतौ नास्माकं स्वातन्त्र्यम्, न ऋते त्वत् क्रियत इत्यादेः ।

तेन विश्वानि स्वाधिष्ठानतया विन्दत इति वा स्तोत्ररूपां भक्तवाचं विन्दते शृणोतीति वा वेद इति निरुक्तेः **वेदमूर्तिरत्र** ॥ १३२ ॥

॥ ॐ वेदविदे नमः ॥

**इरज्यन्त यच्छुरुधो विवाचि । न हि स्वमायुश्चिकिते जनेषु**
**तानीदंहांस्यति पर्ष्यस्मान् । युजे रथं गवेषणम् ॥ १३३ ॥**

हे इन्द्र यत् यदा शुरुधः, शोकं रुन्धतीति शुरुधः,ओषधिवनस्पत्याख्याः, उपपदान्त्यस्य लोपः, इरज्यन्त अभ्यवर्धन्त । तदा यागकालस्य प्राप्तत्वाद् विशिष्टा वाक् यस्य यस्मिन्निति वा विवाक् स्तोता, तस्मिन् विवाचि त्वया घोष आयामीति पूर्वेणान्वयः । किञ्च हे इन्द्र जनेषु स्थितैः यैः अंहोभिः स्वमायुः स्वकीयं त्वद्दत्तमपि न हि चिकिते न प्राप्नोति । अपमृत्य्वादिग्रस्तो भवति । तानि तान्येवांहांसि अपमृत्युप्रदान्यपि पापानि अस्मान् अतिपर्षि अतितारयसि इत् एव । भक्तजनेष्वपमृत्युप्रापकानि पापानि परिहृत्य तान् दीर्घायुषः करोषि । यस्मादेवं भक्तवत्सलः तस्मात् त्वद्गवेषणमुद्दिश्य देहाख्यं रथं युजे युनज्मि । इन्द्रियाणि समाधाय त्वय्येव मनः स्थापयामीति यावत् ।

तेन वेदो लंभनीयमायुः, विन्दतेः कर्मणि रूपमेतत्, वेदयति प्रापयतीति वित्, विदः कर्तरि क्विप् । वेदस्य लम्भनीयस्यायुषः प्रापको वेदविदिति निरुक्तेः **वेदविन्मूर्तिरत्र** ॥ १३३ ॥

॥ ॐ अव्यङ्गाय नमः ॥

**हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः । वि बाधिष्ट स्य**
**रोदसी महित्वेन्द्रो वृत्राण्यप्रती जघन्वान् ॥ १३४ ॥**

युजे रथं गवेषणमिति वर्तते । गवेषणं शत्रुगवेषणसाधनं रथं हरिभ्याम् अश्वाभ्यां युजे युनज्मि । इन्द्रस्य रथे अस्मच्छत्रुहननाय इन्द्रवाहावश्वौ बध्नामि । ननु कथमेतत् । जुजुषाणं परिवारदेवताभिः समन्तात् सेव्यमानं साङ्गं सपरिवारमिन्द्रं मदीयानि ब्रह्माणि स्तोत्राणि उप अस्थुः उपतस्थुः इन्द्रमापुः । मदीये रथे

अश्वौ बद्धौ त्वं सज्जीभवेति च स्वपरिवारदेवतागणमाज्ञापयितुं मदीयानि स्तोत्राणि प्रवर्तन्ते। स्तुतश्चासौ प्रसन्नश्च स्वपरिवारदेवतागणमाज्ञाप्य तैः सह रथमास्थाय अस्मच्छत्रून् जघान चेत्याह। स्यः त्यः प्रसिद्धः, सकारादेशः, इन्द्रः महित्वा महित्वना महिम्ना रोदसी द्यावापृथिव्यौ विबाधिष्ट। द्यावापृथिव्योर्व्याप्तिं बाधितवान्। धात्रापृथिव्यौ अन्तश्चकार, ततोऽधिकं व्याप्तोऽभूदित्यर्थः। एवम्भूत इन्द्रः अप्रति अप्रतिद्वन्द्वानि वृत्राणि अस्मत्कार्यप्रतिरोधकानि बाह्याभ्यन्तरशत्रुजातानि जघन्वान् हतवान्।

तेन अङ्गं देवतापरिवारः, न विद्यते अङ्गं यस्य सः व्यङ्गः, स न भवतीत्यव्यङ्गः। अल्पाक्षरेण शक्येपीति न्यायेन सर्वदा वहुपरिवारयुक्त इति निरुक्तेः अव्यङ्गमूर्तिरत्र ॥ १३४ ॥

॥ ॐ वेदाङ्गाय नमः ॥

**आपश्चित् पिप्युःस्तर्यो न गावो नक्षन् ऋतं जरितारस्त इन्द्र।**
**याहि वायुर्न नियुतो नो अच्छा त्वं हि धीभिः ॥ १३५ ॥**

हे इन्द्र आपश्चित् सर्वेपि देवाः, आपो वै सर्वा देवताः इति श्रुतेः, ते तव प्रसादतः तर्यः वन्ध्या गावो न गाव इव, अप्रसूता हि गावो मांसला भवन्ति, पिप्युः पुष्टा अभवन्। अमृता बभूवुः। तवामृतत्वं किं वक्तव्यमित्यर्थः। ते जरितारः स्तोतारश्च ऋतं यथार्थज्ञानं नक्षन् प्राप्नुवन्। यस्मादेवं हि तस्मान्नः अस्मान् प्रति नियुतः परिवारैर्नितरां युक्तः वायुर्न वायुरिव अच्छा शीघ्रं धीभिः प्रज्ञाभिः प्रज्ञां दातुं याहि आयाहि।

तेन विदन्तीति वेदा ज्ञानिनो देवाः त एव अङ्गानि सहचराणि यस्येति वा, विदेर्भावे घञ्, वेदो ज्ञानं तत् प्रापयतीति वेदाङ्गः, अगेर्गत्यर्थादप्रत्ययो नुमागमश्चेति वा निरुक्तेः वेदाङ्गमूर्तिरत्र ॥ १३५ ॥

॥ ॐ वेदविदे नमः ॥

**दयसे वि वाजान्। ते त्वा मदा इन्द्र मादयन्तु शुष्मिणं**
**तुविराधसं जरित्रे। एको देवत्रा दयसे हि ॥ १३६ ॥**

हे इन्द्र शुष्मिणं बलवन्तं तुवीनि बहूनि राधांसि यस्य सः तुविराधाः तं तुविराधसं बहुसिद्धिप्रदातारं त्वा त्वां मदाः सन्तोषहेतवः ते प्रसिद्धाः स्तोत्रविशेषाः मादयन्तु प्रसादाभिमुखं कुर्वन्तु, प्रीतिहेतवो

भवन्तु। हि यस्मात् देवत्रा सर्वेष्वपि देवेषु त्वम् एक एव वाजान् जरित्रे स्तोत्रे भक्ताय वि विशेषेण दयसे, दयतिर्दानार्थः, ददासि तस्माद् दयसे, दयतिरनुकम्पार्थः। एवमभीष्टदानादिना भक्ताननुकम्पयसे।

अनेन वेदान् वेदरूपान् स्तोत्रविशेषान् विन्दते इति निरुक्तेः **वेदविन्मूर्तिरत्र** ॥ १३६ ॥

**॥ ॐ कवये नमः ॥**

**मर्तानस्मिञ्छूर सवने मादयस्व। एवेदिन्द्रं वृषणं**
**वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः। स नः स्तुतः ॥ १३७ ॥**

हे शूर अस्मिन् सवने त्वदुद्देश्ये यज्ञे मर्तान् मरणादिदोषग्रस्तान् मादयस्व सुखिनः कुरु। मुक्तान् कुरु। वसिष्ठासः वसिष्ठाः, बहुवचनं कल्पभेदेन व्यक्तिभेदात्। वसिष्ठप्रभृतय इति प्रभृत्यर्थे वा। वृषणं वज्रबाहुमिन्द्रमेव अर्कैः ऋग्भिः अभि अधिकत्वेन इत् एव अर्चन्ति जानन्ति पूजयन्ति च। स एवमस्माभिः स्तुतः अभीष्टं धातु ददातु।

तेन स्वभक्तं कं सुखात्मकं विदधातीति निरुक्तेः **कविमूर्तिरत्र** ॥ १३७ ॥

**॥ ॐ लोकाध्यक्षाय नमः ॥**

**वीरवद् धातु गोमद् यूयं पात स्वस्तिभिः सदा नः।**
**[1]आ ते मह इन्द्रोत्युग्र समन्यवो यत् समरन्त सेनाः ॥ १३८ ॥**

स नः स्तुतः इति वर्तते। स इन्द्रः नः अस्माभिः स्तुतः वीरवद् गोमद्, उपलक्षणम्, सर्वभोग्यवत् स्थानम्, लोकमिति यावत्, धातु ददातु पुष्णातु। किञ्च यूयं त्वं स्वस्तिभिः तेषु लोकेषु शुभैः नः अस्मान् पात पाहि। समीचीनलोकेष्वस्मान् शुभदानादिना पोषयतु यतो भवानेव लोकाध्यक्ष इति तात्पर्यम्। हे उग्र इन्द्र यत् यदा समन्यवः सक्रोधाः साभिमाना वा सेनाः शत्रूणां पृतनाः अस्माभिः योद्धुं समरन्त सङ्गता अभूवन्। ऊती ऊत्यै अस्मद्रक्षायै ते महः उत्सवः आ समन्तात् अस्तु।

अनेन लोकानामध्यक्षो लोकाध्यक्ष इति निरुक्तेः **लोकाध्यक्षमूर्तिरत्र** ॥ १३८ ॥

१. ऋग्वेद ७-२५, मैत्रावरुणिर्वसिष्ठः।

॥ ॐ सुराध्यक्षाय नमः ॥

**पताति दिद्युन्नर्यस्य बाह्वोर्मा ते मनो विष्वद्र्यग्वि चारीत् ।**
**नि दुर्ग इन्द्र श्नथिह्यमित्रानभि ये नो मर्तासः ॥ १३९ ॥**

हे इन्द्र यदा शत्रूणां सेनाः समरन्त तदा नर्यस्य भक्तजनहितस्य ते बाह्वोः धृतं दिद्युत्, आयुधनामैतत्, चक्राद्यायुधजातं पताति, लिङर्थे लेट्, शत्रुसेनासु पतेत्, शत्रुसेनां संहरेदिति यावत् । किञ्च ते मनो विष्वद्र्यक् विष्वग्गन्तृ सत् मा वि चारीत् न विचरेत् । अस्मच्छत्रुषु मनो मा कृथाः । हे इन्द्र दुर्गे मुक्त्ययोग्यैर्गन्तुमशक्ये वैकुण्ठादिलोके इतरैः नि नितरां मोक्षयोग्यान् नयन् तिष्ठति भवान् । यत एवं ततस्त्वं नः अस्माकं ये अमित्राः शत्रवः मर्तासः नित्यसंसारिणश्च अस्मान् अमन्ति, मीङ् हिंसायाम्, अभिभावयन्ति तिरस्कुर्वन्ति तानमित्रान् श्नथिहि, श्नथिर्हिंसार्थः, नित्यनरकेषु पातय ।

अनेन सुष्ठुरमणयोग्याः सुराः, तेषामधि अधिकं आनन्दादिगुणजातं व्यञ्जयतीत्यध्यक्षः, अक्षेः कर्तरि रूपमेतत्, सुराणामध्यक्षः सुराध्यक्ष इति निरुक्तेः **सुराध्यक्षमूर्तिरत्र** ॥ १३९ ॥

॥ ॐ धर्माध्यक्षाय नमः ॥

**अमन्ति । आरे तं शंसं कृणुहि निनित्सोरा नो भर**
**सम्भरणं वसूनाम् । शतं ते शिप्रिनूतयः ॥ १४० ॥**

हे इन्द्र ये अस्मान् अमन्ति तिरस्कुर्वन्ति तेषां तं शंसम् अभीष्टार्थनम् आरे दूरे (कृणुहि) । निनित्सोः अस्मान् निन्दितुमिच्छोः जनस्य तं शंसमभीष्टं दूरे कृणुहि । अस्मच्छत्रोरस्मन्निन्दकस्य चाभीष्टं नैव दातव्यम् । प्रत्युत तमो दातव्यम् । अस्मान् वसूनामभीष्टानां संभरणं समूहम् आ भर प्रापय । किं बहुना । हे शिप्रिन्, शं सुखं तदेवातिशयितं शि, तृतीयोऽतिशये, तदेव प्रकृष्टं प्रि, व्यत्ययेन, प्रकृष्टातिशयसुखिन् । ते तव सकाशात् शतम् अनन्ता अपि ऊतयः रक्षासाधनानि मह्यं स्युः ।

अनेन धारकत्वाद् धर्मा ऊतयः तानाधिकान् व्यनक्तीति वा, तेषामध्यक्षः स्वामीति वा धर्माध्यक्ष इति निरुक्तेः **धर्माध्यक्षमूर्तिरत्र** ॥ १४० ॥

॥ ॐ कृताकृतये नमः ॥

**सुदासे सहस्रं शंसा उत रातिरस्तु । जहि वधर्वनुषो**
**मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि । त्वावतः ॥ १४१ ॥**

हे इन्द्र सुदासे सुदासप्रभृतिसज्जनाय । दाशृ दाने, व्यत्ययेन शस्य सः, हविरादिदात्रे मह्यं वा । अथवा सुदाः सुदासः, गुरुकुलवासादिना सुशिक्षितः दासः, अकारलोपः छान्दसः । सुदासे सुशिक्षिताय मह्यं, सहस्रं बहवः, शंसाः शंसनीयाः कामाः, रातिः उत रातिश्च रक्षा च अस्तु भवतु । दानशीलाः कामसमृद्धाश्च भवेमेति तात्पर्यम् । वनुषः धातूनामनेकार्थत्वाद् हिंसकस्य मर्त्यस्य शत्रुजनस्य वधं वधसाधनमायुधं जहि विफलीकुरु । अस्मे अस्मासु द्युम्नं अन्नं यशः सुखं वा अधि अधिकम् इन्द्रनीलाद्यनर्घ्यं रत्नं च अधि सम्यग् धेहि स्थापय । उतेति हेत्वर्थे । किञ्चास्मान् त्वावतः त्वं स्वामी येषां ते त्वावन्तः तान् कुरु । त्वद्दासान् कुरु ।

तेन कृताःगुर्वादिना सम्यक् शिक्षिताः, तेषामाशंसनीयानामनन्तानामभीष्टानां आ समन्तात् कृतिरुत्पादनं यस्मात् स कृताकृतिः । यद्वा कृतेषु शिक्षितेषु आकृतिः स्वामित्वेनाकारो यस्येति निरुक्तेः **कृताकृतिमूर्तिरत्र** ॥ १४१ ॥

॥ ॐ चतुरात्मने नमः ॥

**हीन्द्र क्रत्वे अस्मि त्वावतोऽवितुः शूर रातौ । विश्वेदहानि**
**तविषीव उग्रँ ओकः कृणुष्व हरिवो न मर्धीः ॥ १४२ ॥**

हे शूर विक्रान्त । तविषीवः, तविषी बलं कान्तिर्वा अस्यास्तीति तविषीवान्, मतुपोरुः, बलवन् कान्तिमन् वा । उग्र ओजस्विन् दुष्टानां क्रूर । हे हरिवः इन्द्रियप्रवर्तक । अनेन रूपचतुष्टयं सूचितम् । तथा च शूर तविषीव उग्र हरिव इति चतुरात्मन् इन्द्र । त्वावतः, सप्तम्यर्थे षष्ठी, त्वं देवतात्वेनास्यास्तीति त्वावान् तस्मिन् त्वावति । क्रत्वे, कृञो भावे त्वन् यणादेशः, क्रत्वं कर्म तस्मिन् कर्मणि अस्मि । व्यत्ययेन त्वदुद्देशेन कर्मकर्ता भूयासम् । किञ्च अवितुः विश्वरक्षकस्य तव प्रीत्यर्थं रातौ दाने अस्मि भूयासम् । यद्वा अवितुस्तव रातौ मित्रत्वे, भावप्रधानः, अस्मि । किञ्च विश्वा विश्वानि समस्तानि इत् अपि समस्तानि अहानि दिनान्यपि ओकः स्थानं कृणुष्व । बहुषु दिनेष्वाततान् स्थितान् अस्मान् कृणुष्व । दीर्घायुषः कुरु । अत एव मर्धीः, मरिर्मृत्यर्थः, मरं मृतिं

धत्त इति मर्धीः, धात्रः कर्तरि इकारः, मरणशीलो मर्धीः । व्यत्ययेन तान् अस्मान् न कृणुष्व क्लृप्तदिनेषु मृतिं न प्राप्नुमः ।

अनेन शूरतविषीवउग्रहरिवआख्याश्चत्वार आत्मानो रूपाणि यस्येति वा, चतुरान् स्वभक्तान् बहुदिनेषु आतनोति विस्तारयतीति वा निरुक्तेः **चतुरात्ममूर्तिरत्र** ॥ १४२ ॥

**॥ ॐ चतुर्व्यूहाय नमः ॥**

**कुत्सा एते हर्यश्वाय शूषमिन्द्रे सहो देवजूतमियानाः ।**
**सत्रा कृधि सुहना शूर वृत्रा वयम् ॥ १४३ ॥**

एते वसिष्ठाः कुत्साश्च वयं हर्यश्वाय हरिदश्वायेन्द्राय, तलोपः, तत्पूजार्थं शूषं सुखं सहो बलं देवजूतं देवानां प्रेरणं च, देवताप्रसादमिति यावत्, इयानाः, इण् गतौ, प्राप्नुवानाः भूयास्म । किञ्च हे शूर इन्द्रे त्वयि स्थितानामस्माकं वृत्रा वृत्राणि आवरणभूतान्यज्ञानादीनि सुहना सुहनानि सम्यग् हन्तुं शक्यानि सत्रा सर्वदा युगपद्वा कृधि कुरु । शूषसहो देवजूतवृत्रहननाख्यान् चतुरः पुरुषार्थानस्मभ्यं देहीति तात्पर्यम् ।

तेन चतुरः उक्तरूपान् पुरुषार्थान् व्यूहति प्रापयतीति चतुर्व्यूहः । अन्तर्णीतण्यर्थस्य विपूर्वस्य वहतेः सम्प्रसारणे रूपमेतत् । इति निरुक्तेः **चतुर्व्यूहमूर्तिरत्र** ॥ १४३ ॥

**॥ ॐ चतुर्दंष्ट्राय नमः ॥**

**तरुत्राः सनुयाम वाजम् । एवा न इन्द्र वार्यस्य पूर्धि**
**प्र ते महीं सुमतिं वेविदाम । इषं पिन्व मघवद्भ्यः ॥ १४४ ॥**

हे इन्द्र तरुत्राः संसारं तीर्णवन्तो वाजं मौक्तिकं भोगं सनुयाम लभेमहि । किञ्च वार्यस्य, तृतीयार्थे षष्ठी,वरणीयेनाभीष्टजातेन नः अस्मान् पूर्धि अतिशयेन पूरय । एवा एवं महीं महतीं ते तव सुमतिं, एनं मोचयामीति सङ्कल्परूपां सात्त्विकविषये, एनं पातयामीति तामसविषये, एनं भ्रमामीति राजसविषये, एनमानन्दयामीति मुक्तविषये, वेविदामः अतिशयेन विद्मः । यत एवमतो मघवद्भ्यः यज्ञादित्वत्पूजाकृद्भ्यः अस्माकमिषम् आनन्दभुक्तिं पिन्व देहि ।

अनेन चत्वारि दंष्ट्राणीव दंष्ट्राणि सङ्कल्पचतुष्टयानि ज्ञानानि वा यस्य स चतुर्दंष्ट्र इति निरुक्तेः **चतुर्दंष्ट्रमूर्तिरत्र** ॥ १४४ ॥

**॥ ॐ चतुर्भुजाय नमः ॥**

**सुवीरां यूयं पात स्वस्तिभिः सदा नः । [१]न सोम इन्द्रमसुतो**
**ममाद नाब्रह्माणो मघवानं सुतासः ॥ १४५ ॥**

हे इन्द्र सुवीरां सुवीर्यसाधनभूतमिषमत्रं यूयं त्वमित्यादि पूर्ववत् । आप्लावनाभिषवग्रहणाभिमन्त्ररूपसंस्कारचतुष्टयसहित एव (सोमः) देवेभ्यो दातव्यो नान्यथेत्येतद् व्यतिरेकमुखेनोच्यते । असुतः, उपलक्षणमेतत् आप्लावनग्रहणयोः, आप्लावनाभिषवग्रहणरहितश्चेत् सोमः इन्द्रं न ममाद न मादयेत् न तर्पयेत् । सुतासोऽपि अभिषवादिसंस्कारत्रययुता अपि सोमाः अब्रह्माणश्चेत् अभिमन्त्रणाख्यचतुर्थसंस्काररहिताश्चेत् इन्द्रं न मादयेयुः । संस्कारचतुष्टययुक्तं सोमं भुङ्क्त इति तात्पर्यम् ।

तेनाप्लवनादिसंस्कारचतुष्टययुक्तं सोमं भुङ्क्त इति चतुर्भुजः । अभ्यवहारार्थस्य भुजेर्मूलविभुजादित्वात् कः । इति निरुक्तेः **चतुर्भुजमूर्तिरत्र** ॥ १४५ ॥

**॥ ॐ भ्राजिष्णवे नमः ॥**

**तस्मा उक्थं जनये यज्जुजोषन् नृवन्नवीयः शृणवद्**
**यथा नः । उक्थ उक्थे सोम इन्द्रं ममाद नीथे नीथे ॥ १४६ ॥**

यद् यस्मादेवमभिषवाभिमन्त्रणादियुक्तं सोममेव इन्द्रः जुजोषत् सेवते स्वीकरोति तस्मै इन्द्राय उक्थं स्तोत्रविशेषं नवीयः अपूर्वं यथा भवति तथा, नृवत् राजवत् नः अस्मदीयमुक्थं यथा यथावत् यथार्थेन शृणवत् शृणुयात् । तेनाहं तस्मै तस्य सन्तोषं जनये । अत एव उक्थउक्थे प्रत्युक्थस्तोत्रं नीथे नीथे, नीथं स्तोत्रविशेषः, प्रतिनीथं स्तोत्रे दत्तः सोमः इन्द्रं ममाद, मदी हर्षे, हर्षेण भ्राजयति प्रकाशयति ।

---

१. ऋग्वेद ७-२६. मैत्रावरुणिर्वसिष्ठः ।

तेन भ्राजृ दीप्तावित्यत इष्णुच् इति निरुक्तेः **भ्राजिष्णुमूर्तिरत्र** ॥ १४६ ॥

॥ ॐ भोजनाय नमः ॥

**मघवानं सुतासः । यदीं सवाधः पितरं न पुत्राः समान-**
**दक्षा अवसे हवन्ते । चकार ता कृणवत् ॥ १४७ ॥**

समानदक्षाः समानोत्साहाः सुतासः, कर्तरि क्तः, सोमाभिषवकर्तारः ऋत्विजः अवसे अदनाय भोजनाय पुत्राः पितरं न पितरमिव सवाधः, भावे क्विप्, बाधा सम्मर्देन सहिताः सबाधाः सन्तः मघवानम् ईम् एव स्तोत्रे हवन्ते । यद् यस्मादेवं तस्मान्मघवा ता तानि वक्ष्यमाणानि कर्माणि चकार । कृणवत् करिष्यति च ।

अनेन सोमरसादिभोजनं प्रति ऋत्विजो यमाह्वयन्तिति भोजनम् । मतुपो लुक् । इति निरुक्तेः **भोजनमूर्तिरत्र** ॥ १४७ ॥

॥ ॐ भोक्त्रे नमः ॥

**नूनमन्या यानि ब्रुवन्ति वेधसः सुतेषु । जनीरिव**
**पतिरेकः समानो नि मामृजे पुर इन्द्रः ॥ १४८ ॥**

वेधसः स्तोत्राणां विधातारो ऋत्विजः सोमेषु सुतेषु सत्सु यानि कर्माणि वृत्रवधादीनि स्तोत्रप्रतिपाद्यतया ब्रुवन्ति, तत्प्रतिपादकस्तोत्राणि पठन्तीति यावत्, तानि कर्माणि इन्द्रः चकारैव । अन्यान्यपि कर्माणि कृणवत् कुर्यादेव । न त्वौपचारिकी स्तुतिरिति भावः । एकः समानः समवृत्तिः पतिः जनीरिव जाया इव सर्वाः पुरः शत्रुनगरीराक्रम्य तत्रस्थान् शत्रून् पतिः जायागतदुर्बुद्धीरिव नि मामृजे निष्कासयामास, संजहार ।

तेन शत्रुनगरीस्थजनानां भोक्ता भक्षको निष्कासयितेति निरुक्तेः **भोक्तृमूर्तिरत्र** ॥ १४८ ॥

॥ ॐ सहिष्णवे नमः ॥

**सु सर्वाः । एवा तमाहुरुत शृण्व इन्द्र एको विभक्ता**
**तरणिर्मघानाम् । मिथस्तुर ऊतयो यस्य पूर्वीः ॥ १४९ ॥**

यस्येन्द्रस्य मिथस्तुरः परस्परं संहता ऊतयः शत्रुवेगसहनादिगुणगणाः पूर्वीः पूर्व्यः, अनादित एवेति यावत्, सर्वाः समस्ताः सु सन्तमिन्द्रम् एवा एवम् आहुः। तानेव गुणगणानाह। मघानां धनानाम् एक एव बहूनां विभक्ता दाता। तरणिः आपदां तारयिता। इति शृण्वे श्रूयते। एवमादिगुणवन्तमाहुरिति सम्बन्धः।

तेन शत्रुवेगान् सहत इति सहिष्णुरिति निरुक्तेः **सहिष्णुमूर्तिरत्र** ॥ १४९ ॥

॥ ॐ जगदादिजाय नमः ॥

**अस्मे भद्राणि सश्चत प्रियाणि। एवा वसिष्ठ इन्द्रमूतये**
**नृन् कृष्टीनां वृषभं सुते गृणाति सहस्रिणः ॥ १५० ॥**

हे इन्द्र त्वत्प्रसादात् अस्मे अस्मासु प्रियाणि भद्राणि मङ्गलानि सश्चत सेवन्ताम्। वसिष्ठः एतन्मन्त्रद्रष्टा ऋषिः कृष्टीनां प्रजानामादौ स्थितत्वाद् वृषभं श्रेष्ठमिन्द्रं तं सोमे सुते सति ऊतये गृणाति स्तौति। हे इन्द्र एवा एवं वसिष्ठेन स्तुतः सन् नृन् नेतॄन् अस्मान् सहस्रिणः सहस्रलाभवन्तः कुरु।

तेन जगतां कृष्टीनामादौ जातत्वाद् अभिव्यक्तत्वात् जगदादिज इति निर्वचनात् **जगदादिजमूर्तिरत्र** ॥ १५० ॥

॥ ॐ अनघाय नमः ॥

**उप नो माहि वाजान् यूयं पात स्वस्तिभिः सदा नः।**
**[१]इन्द्रं नरो नेमधिता हवन्ते यत् पार्या युनजते ॥ १५१ ॥**

यत् यः इन्द्रः पार्याः पारगमनशीलाः नेमधिताः व्यत्ययेन निमथिताः सम्यक् शोधिता वुद्धीः युनजते युनक्ति। भक्तैः संयोजयति। तमिन्द्रं नरो नेतारो ऋत्विजः हवन्ते। हे इन्द्र ऋत्विग्भिराहूतस्त्वं नः अस्मभ्यं वाजान् अन्नानि उप समीपे माहि, मा निर्माणे, निर्मिमीहि। किञ्च सदा स्वस्तिभिर्गुणैर्युक्तः यूयं त्वं नः पात पाहि।

तेन अघं दोषः, न विद्यते अघं यस्य स अनघ इति निर्वचनसूचनात् **अनघमूर्तिरत्र** ॥ १५१ ॥

१. ऋग्वेद ७-२७, मैत्रावरुणिर्वसिष्ठः।

॥ ॐ विजयाय नमः ॥

**धियस्ताः । शूरो नृषाता शवसश्चकान आ गोमति**
**व्रजे भजा त्वं नः । य इन्द्र शुष्मो मघवन् ते ॥ १५२ ॥**

हे मघवन् ते यः शुष्मः बलमस्ति तेन बलेन ताः असुरजयादिरूपाः धियः कर्माणि नृषाता नृशातौ युद्धे शवसः शवसा सुखेनैव कुर्वाणः शूरः त्वं गोमति व्रजे गवादियुक्ते स्वजनसमूहे नः अस्मान् भज फलदानेन भजस्व ।

अनेन विशेषेण शत्रुजयो यस्मादिति निर्वचनसूचनाद् **विजयमूर्तिरत्र** ॥ १५२ ॥

॥ ॐ जेत्रे नमः ॥

**शिक्षा सखिभ्यः पुरुहूत नृभ्यः । त्वं हि दृळ्हा मघवन्**
**विचेता अपा वृधि परिवृतं न राधः । इन्द्रो राजा ॥ १५३ ॥**

हे मघवन् त्वं सखिभ्यो जनेभ्यः सखा सन् नृभ्यः मनुष्याणां दृळ्हा दृढो जेता अपरिभाव्यः, विचेताः विशिष्टचेतनश्च । राजा प्रजानां रञ्जनात् । इन्द्रः ऐश्वर्यात् । एवंभूतस्त्वं परिवृतं न आच्छादितमिव स्थितं राधः सुखम् अस्मदीयमानन्दादिकम् अपावृधि अपगतावरणं कुरु ।

अनेन रिपूणां जेतेति निर्वचनात् **जेतृमूर्तिरत्र** ॥ १५३ ॥

॥ ॐ विश्वयोनये नमः ॥

**जगतश्चर्षणीनामधिक्षमि विषुरूपं यदस्ति ।**
**ततो ददाति दाशुषे वसूनि चोदद् राध उपस्तुतः ॥ १५४ ॥**

चर्षणीनां गमनशीलानां जगतः स्थावरस्य च अधिक्षमि भूमिरिव आश्रयभूतं चराचरात्मकस्य विश्वस्य निधानस्थानं विषुरूपं विशेषेण सुखरूपं यदस्ति । ततः तेन रूपेण दाशुषे यजमानाय राधः संसिद्ध्यादीनि ददाति । उपस्तुतः सम्यक् स्तुतः वसूनि चोदत् चोदयेत् ।

अनेन विश्वस्य योनिः निधानस्थानमिति निरुक्तत्वाद् **विश्वयोनिमूर्तिरत्र** ॥ १५४ ॥

॥ ॐ पुनर्वसवे नमः ॥

**चिदर्वाक् । नू चिन्न इन्द्रो मघवा सहूती दानो वाजं**
**नि यमते न ऊती । अनूना यस्य दक्षिणा ॥ १५५ ॥**

यस्य यज्ञस्य दक्षिणा अनूना ऊना न भवति, कल्पोक्तदक्षिणा यस्य यज्ञस्य, तस्य यज्ञस्य कर्तॄणाम् अर्वाक् चित् अर्वाक्स्थितानामपि नः सहूतीः आह्वानेन सहिता ऊती ऊतीः अस्मदभिप्रेतार्थान् नू चित् अद्यापि पुनरपि दानः ददानः वाजम् अन्नं मघवा धनवान् इन्द्रो नः अस्मभ्यं नि यमते ददाति । अथवा यस्य भगवतः अनूना देशतः समव्याप्ता रमा दक्षिणा दक्षिणभागे वसति स इन्द्रः इति योज्यम् ।

अनेन पुनःपुनः वसून् ददातीति पुनर्वसुरिति निरुक्तेः **पुनर्वसुमूर्तिरत्र** ॥ १५५ ॥

॥ ॐ उपेन्द्राय नमः ॥

**पीपाय वामं नृभ्यो अभिवीता सखिभ्यः । नू इन्द्र**
**राये वरिवस्कृधी न आ ते मनो ववृत्याम मघाय ॥१५६ ॥**

हे इन्द्र ते त्वद्विषये वरिवः, वृणोतेरसुन्, वरिवसि वरणीये मघाय मघे यज्ञे नः अस्मदीयं मनः कृधि कुरु । ततश्च वयं मघाय यज्ञाय आ ववृत्याम यज्ञं कर्तुं प्रवर्तिष्याम । ततः सखिभ्यः परिवारदेवैः अभिवीता अभिवीतः परिवृतः संवृतस्त्वं नृभ्यः नेतॄणामस्माकं वामं भद्रं सोमरसं राये अस्मभ्यं वित्तदानाय पीपाय पिब ।

अनेन उप परिवारदेवैः सहित इन्द्रः उपेन्द्र इति निर्वचनसूचनात् **उपेन्द्रमूर्तिरत्र** ॥ १५६ ॥

॥ ॐ वामनाय नमः ॥

**गोमदश्वावद् रथवद् व्यन्तो यूयं पात स्वस्तिभिः सदा नः ।**
**[1]ब्रह्मा ण इन्द्रोप याहि विद्वानर्वाञ्चस्ते हरयः सन्तु ॥ १५७ ॥**

हे इन्द्र गोमदश्वावद् रथवद् गवाश्वादियुक्तमस्मदभीष्टजातं व्यन्तः व्यन् ददत् यूयं त्वं सदा नः

१. ऋग्वेद ७-२८, मैत्रावरुणिर्वसिष्ठः ।

अस्मान् स्वस्तिभिः कामैः पात पाहि । किञ्च नः अस्मदीयं ब्रह्मा ब्रह्म स्तोत्रम् उप याहि । स्तोत्रविषयो भव । ते हरयः अर्वाञ्चः अस्मदभिमुखाः, दिवोऽवरुह्य भूलोकाभिमुखाः, सन्तु ।

अनेन वाममभीष्टजातं नयतीति निर्वचनाद् **वामनमूर्तिरत्र** ॥ १५७ ॥

॥ ॐ प्रांशवे नमः ॥

**युक्ताः । विश्वे चिद्धि त्वा विहवन्त मर्ता अस्माकमिच्छृणुहि**
**विश्वमिन्व । हवं त इन्द्र महिमा व्यानट् ॥ १५८ ॥**

विश्वं जगत् एति प्रेरकत्वेन गच्छति अपरिमितत्वेन व्याप्नोतीति वा विश्वमिन्वः । विश्वशब्दे उपपदे इणः कर्तरि वप्रत्ययो नुमागमो द्वितीयाया अलुक् च । तस्य सम्बुद्धिः । हे विश्वव्यापक, इन्द्र युक्ताः सङ्गता मर्ताः अस्मदीया ऋत्विजः विश्वे चित् समस्ता अपि वि हवन्त विह्वन्ते हि । अस्माकं चित् अस्माकमपि हवम् आह्वानं शृणुहि । हि यस्मादेवं ते महिमा व्यानट् व्याप्तो भवति ।

अनेन जगद्व्याप्तत्वाद् व्याप्तमहिमत्वाद्वा प्रांशुरुन्नत इति निर्वचनसूचनात् **प्रांशुमूर्तिरत्र** ॥ १५८ ॥

॥ ॐ अमोघाय नमः ॥

**ब्रह्म यत् पासि शवसिन् ऋषीणाम् । आ यद् वज्रं दधिषे**
**हस्त उग्र घोरः सन् क्रत्वा जनिष्ठा अषाळ्हः । तव ॥ १५९ ॥**

शवः सुखं तदस्यास्तीति शवसी तस्य सम्बुद्धिः हे शवसिन् इन्द्र ऋषीणाम् ऋत्विजां तव ब्रह्म त्वद्विषयं स्तोत्रं पासि रक्षसि । स्वीकरोषि । यत् यस्मादेवं तस्माद् हस्ते वज्रं आ दधिषे । शत्रून् हन्तुमाधत्से । यद् यस्मादेवं तस्मादषाळ्हः शत्रूणामसह्यः, अप्रतिहतकर्मा । अत एव शत्रूणां घोरः सन् क्रत्वा कर्ता, कृञः कर्तरि त्वन् प्रत्ययः । शत्रुसंहारस्य भक्ताभीष्टदानादेश्च कर्ता । अत एवामोघकर्मा जनिष्ठाः अमोघकर्मत्वेन प्रसिद्धोऽभवः ।

अनेन मोघं कर्म यस्य नास्तीति निरुक्तेः **अमोघमूर्तिरत्र** ॥ १५९ ॥

॥ ॐ शुचये नमः ॥

**प्रणीतीन्द्र जोहुवानान् त्सं यन्नॄन् न रोदसी निनेथ ।**
**महे क्षत्राय शवसे हि जज्ञेऽतूतुजिं चित् तूतुजिरशिश्नत् ॥ १६० ॥**

हे इन्द्र जोहुवानान् त्वामाहूतवतः नॄन् जनान् प्रणीती प्रणीतीः तव प्रेरणाः न इव रोदसी द्यावापृथिव्यौ सं निनेथ सम्यक् प्रापयसे । द्यावापृथिव्योस्तव प्रेरणा यथा सङ्गता व्याप्ता च तथा त्वदाह्वानकर्तारो भक्ता अपि द्यावापृथिव्योर्व्याप्ता अभवन्निति यावत् । किञ्च महे महते क्षत्राय क्षात्राय, अणो लोपः शवसे यशसे सुखाय वा जज्ञे अभिव्यक्तोऽभवः । किञ्च तूतुजिः विहितकर्मसु गतिः, सा न विद्यते यस्य सः अतूतुजिः विहितत्यागी पापी जनः । तम् अतूतुजिं पापिजनं तूतुजिः कर्मप्रवर्तकः सन् अशिश्नत् प्राप्नोत् । तैः सत्कर्म कारयित्वा पावनानकरोत् ।

तेन शं सुखम् अश्नति प्राप्नोतीति शुचिः । यद्वा अशुचीन् पापिजनान् शुचीन् करोतीति शुचिरिति निरुक्तेः **शुचिमूर्तिरत्र** ॥ १६० ॥

॥ ॐ ऊर्जिताय नमः ॥

**एभिर्न इन्द्राहभिर्दशस्य दुर्मित्रासो हि क्षितयः पवन्ते ।**
**प्रति यच्चष्टे अनृतमनेना अव । द्विता ॥ १६१ ॥**

हे इन्द्र क्षितयः, क्षि क्षये, नाशहेतवः ये दुर्मित्रासः दुर्मित्राः शत्रवः अहभिः, अहर्दिनं प्रकाशश्चेत्युक्तेः, प्रकाशैः पवन्ते सञ्चरन्ति । एभिः तैः तेभ्यः नः अस्मान् दशस्य दशस्व रक्षस्व । यश्च नः अस्माकं द्विता, द्रीति भावप्रधानः तस्मिन्नुपपदे अन्तर्णीतण्यर्थादिणः कर्तरि तृन् द्वित्वम् इता (प्रापयिता) पररूपं च, अस्माकं विदारकः तस्माच्च अनेनाः अपजयादिदोषरहितस्त्वम् अव । यत् यश्च अनृतं दुःखं प्रतिचष्टे करोति तस्मादप्यव ।

अनेन उरून् परोपद्रवसमर्थान् शत्रून् जितवानिति निरुक्तेः **ऊर्जितमूर्तिरत्र** ॥ १६१ ॥

॥ ॐ अतीन्द्राय नमः ॥

**वरुणो मायी नः सात् । वोचेमेदिन्द्रं मघवानमेनं महो**
**रायो राधसो यद् ददन्नः । यो अर्चतः ॥ १६२ ॥**

अयं मायी, प्रज्ञानामसु पाठात् प्रज्ञावानिन्द्रः नः अस्माकं वरुणः वरणीयः सात् स्याद् भवेत्। य इन्द्रः अर्चतः अर्चतां स्वपूजकानां नः महः महतो रायस्य द्रविणस्य राधसः सिद्धेश्च ददत् अत्यन्तं दाता। यद् यस्मादेवं तस्मादेनं मघवानं धनवन्तमिन्द्रमित् इन्द्रमेव वोचेम स्तुमः।

अनेन अति अतिशयितम् इदं रयिसिद्ध्यादिकं ददातीति निर्वचनसूचनाद् **अतीन्द्रमूर्तिरत्र** ॥ १६२ ॥

**॥ ॐसङ्ग्रहाय नमः ॥**

**ब्रह्मकृतिमाविष्टो यूयं पात स्वस्तिभिः सदा नः।**

**[१]अयं सोम इन्द्र तुभ्यं सुन्व आ तु प्र याहि हरिवस्तदोकाः ॥ १६३ ॥**

हे हरिवः इन्द्र यूयं त्वं नः स्वस्तिभिः सदा पाहि। ब्रह्मकृतिं स्तोत्रकरणमाविष्टः, अवतेर्भुजिकर्मणः कर्तरि अकारप्रत्ययः, तत अतिशायने इष्ठन्, तत्र अतिशयेन भोक्तासि। हे इन्द्र तदोकाः तद् यज्ञगृहम् ओकः स्थानं यस्य सः सोयं सोमः तुभ्यं तव पानार्थं सुन्वे, सुनोतेः कर्मणि रूपमेतत् सूयते। तु तस्मादेव तत्सङ्ग्रहणाय आ प्र याहि।

अनेन सोमरसं स्तोत्रं वा सङ्गृण्हातीति निरुक्तेः **सङ्ग्रहमूर्तिरत्र** ॥ १६३ ॥

**॥ ॐ सर्गाय नमः ॥**

**पिवा त्वस्य सुषुतस्य चारोर्ददो मघानि मघवन्नियानः।**

**ब्रह्मन् वीर ब्रह्मकृतिं जुषाणोऽर्वाचीनः ॥ १६४ ॥**

हे ब्रह्मन् वीर मघवन् इन्द्र सुषुतस्य सुसुतस्य चारोः अस्य, द्वितीयार्थे षष्ठ्यः, सम्यक् सुतं द्रवद्रव्यमिमं सोमं आ पिब। ब्रह्मकृतिं स्तवनं जुषाणः सेवमानः मघवन् इन्द्र मघानि द्रविणानि ददः ददेव अर्वाचीनः अस्मदभिमुखः इयानः गन्ता भव।

अनेन सृ गतावित्यतः कर्तरि अच्। सरति ऊर्ध्वमधश्च गच्छतीति मनुष्योऽर्वाचीनो भूस्थो जनः सर इत्युच्यते। तं गच्छतीति सर्ग इति निरुक्तेः **सर्गमूर्तिरत्र** ॥ १६४ ॥

---

१. ऋग्वेद ७-२९. मैत्रावरुणिर्वसिष्ठः।

॥ ॐ धृतात्मने नमः ॥

**हरिभिर्याहि तूयम् । अस्मिन्नू षु सवने मादयस्वोप**
**ब्रह्माणि शृणव इमा नः । का ते अस्त्यरङ्कृतिः ॥ १६५ ॥**

हे इन्द्र हरिभिरश्वैः तूयं तूर्णम् आ याहि । आगत्य च अस्मिन्नू षु सवने मादय अस्मद्यज्ञे एव सु सम्यङ् मनो धृत्वा धृतमनाः सन् मादयस्व सन्तुष्टो भव । अस्यैवंभूतस्य ते अरङ्कृतिः का कथंभूता । मुमुक्षुणा सर्वदा तदीयालङ्कारादेरवश्यं ज्ञातव्यताज्ञापनार्थोयं प्रश्नः । उप किञ्च इमा इमानि ब्रह्माणि स्तोत्राणि शृणवः शृणु ।

तेन भक्तकृतयज्ञेषु धृतः आत्मा मनो यस्येति निरुक्तेः धृतात्ममूर्तिरत्र । १६५ ॥

॥ ॐ नियमाय नमः ॥

**सूक्तैः कदा नूनं ते मघवन् दाशेम । विश्वा मतीरा ततने**
**त्वायाऽधा म इन्द्र शृणवो हवेमा । उतो घा ते ॥ १६६ ॥**

हे मघवन् वयं सूक्तैः मन्त्रैः ते तुभ्यं हविरादिकं नूनं निश्चितं कदा दाशेम दद्मः । अनेनादरातिशयो ज्ञायते । हे इन्द्र उत किञ्च स भगवान् त्वाय त्वदीयाय भक्ताय विश्वाः समस्ताः ते मतीः त्वद्विषयज्ञानानि आ ततने विस्तारयामास । अधा किञ्च मे मदीयानि इमा इमानि हवा आह्वानानि शृणवः शृणु । घेत्याश्चर्यम् ।

अनेन स्वविषयकज्ञानानि भक्तेभ्यो नियमयति प्रयच्छतीति निरुक्तेः **नियममूर्तिरत्र** ॥ १६६ ॥

॥ ॐ यमाय नमः ॥

**पुरुष्या इदासन् येषां पूर्वेषामशृणोर्ऋषीणाम् । अधाहं**
**त्वा मघवन् जोहवीमि त्वं न इन्द्रासि प्रमतिः ॥ १६७ ॥**

हे मघवन् ये पुरुष्या बहुलाभयोग्या ज्ञानिनः आसन् इत् एव । येषां तेषां पूर्वेषां पूरातनानाम् ऋषीणां ज्ञानिनां हवम् अशृणोः शृणोषि । अध तस्मात् अहमपि त्वा त्वां जोहवीमि आह्वयामि । हे इन्द्र त्वं नः अस्माकं प्रमतिः प्रकृष्टमतिर्दोसि ।

अनेन यान्ति जानन्तीति या ऋषयः तेषां स्तोत्राणि माति जानाति शृणोतीति यम इति निरुक्तेः **यममूर्तिरत्र** ॥ १६७ ॥

॥ ॐ वेद्याय नमः ॥

**पितेव । वोचेमेदिन्द्रं मघवानमेवं महो रायो राधसो यद् ददन्नः ।**
**यो अर्चतो ब्रह्मकृतिमाविष्ठः ॥ १६८ ॥**

य इन्द्रः अस्मभ्यं पितेव जनक इव महः महतः रायः द्रविणस्य राधसः संसिद्धेश्च ददत् वर्तते । यश्च ब्रह्मकृतिमाविष्ठः भोक्ता तमेवं मघवानं वोचेम इत् ।

अनेन स्तुतिरूपं वेदं याति गच्छतीति वेद्यः । उपपदान्त्यलोपः । इति निरुक्तेः **वेद्यमूर्तिरत्र** ॥ १६८ ॥

॥ ॐ वैद्याय नमः ॥

**यूयं पात स्वस्तिभिः सदा नः । [१]आ न इन्द्रो दूरादा**
**न आसादभिष्टिकृदवसे यासदुग्रः । ओजिष्ठेभिः ॥ १६९ ॥**

हे इन्द्र यूयं त्वं स्वस्तिभिः रक्षाहेतुभिः भवरोगनिवर्तकैः ज्ञानाद्यौषधैः सदा नः पाहि । अयमिन्द्रः दूरात् दूरस्थोपि यासत् अन्तिकस्थितोऽपि अभिष्टिकृत् । ओजिष्ठेभिः ओजस्वितमैः औषधैः ज्ञानादिभिः रोगपरिहारद्वारा अभीष्टं सुखं करोति । अत एव नः अवसे रक्षणाय अस्मदीयानां रोगाणाम् उग्रः क्रूरः आसात् भवति ।

तेन वैद्य इव वैद्य इति निरुक्तेः **वैद्यमूर्तिरत्र** ॥ १६९ ॥

॥ ॐ सदायोगिने नमः ॥

**नृपतिर्वज्रबाहुः सङ्गे समत्सु तुर्वणिः पृतन्यून् ।**
**आ न इन्द्रो हरिभिर्यात्वच्छाऽर्वाचीनोऽवसे राधसे च ॥ १७० ॥**

---

१. ऋग्वेद ४-२०. वामदेवो गौतमः ।

नृपतिः नेतॄणां पतिः वज्रबाहुरिन्द्रः समत्सु युद्धेषु शत्रुभिः सङ्गे सङ्गमे सति तुर्वणिः त्वरावान्। नः पृतन्यून् योद्धून् शत्रून् प्रति हरिभिरश्वैः न अवसे राधसे च अर्वाचीनः दिवः अर्वाग् गन्ता सन् अच्छा सम्यक् आ यातु।

तेन सदा पृतन्युभिर्योगवान् संयोगवानिति निरुक्तेः **सदायोगिमूर्तिरत्र** ॥ १७० ॥

॥ ॐ वीरघ्ने नमः ॥

**तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ।**
**इमं यज्ञं त्वमस्माकमिन्द्र पुरो दधत्॥ १७१ ॥**

हे इन्द्र अस्माकम् अस्मदीयम् इमं यज्ञं पुर अग्रे दधत् धारयन्, अस्मदीयं यज्ञमग्रगण्यतां नयन्, वाजसातौ युद्धे प्राप्तान् वीरान् निहन्तुं विरप्शी विशिष्टबलवान् वज्री वज्रवान्, वज्रं गृहीत्वेति यावत्, शत्रून् हत्वा मघवा यशस्वी इममस्मदीयं यज्ञं तिष्ठाति, लेट् अडागमः, तिष्ठेत् सन्निहितो भवेत्।

अनेन वीरान् हन्तीति निर्वचनाद् **वीरहमूर्तिरत्र** ॥ १७१ ॥

॥ ॐ माधवाय नमः ॥

**सनिष्यसि क्रतुं नः। श्वघ्नीव वज्रिन् त्सनये धनानां**
**त्वया वयमर्य आजिं जयेम। उपन्नु षु णः सुमनाः॥ १७२ ॥**

हे इन्द्र नः क्रतुम् अस्मदीयं ज्ञानं यज्ञं वा सनिष्यसि सफलं करोषि सफलतां नयसि। हे वज्रिन् नः अर्यः स्वामी त्वमस्माकं धनानां सनये श्वघ्नीव करम्भेव भव। किञ्च प्रसन्नेन त्वया वयम् आजिं युद्धं जयेम युद्धे शत्रून् निराकुर्मः। किञ्च नः अस्मदीयं यज्ञं उषन् इच्छन् नः अस्मान् प्रति सु सुमनाः अतिप्रसन्नमना भव।

अनेन मधूनि धनादीनि यज्ञसाफल्यानि वा वर्तयतीति मधुवः, ततः स्वार्थे अण् उकारस्याकारः। यद्वा मदः अस्यास्तीति मधु धनादिकाम्यजातम्, मदशब्दान्मत्वर्थे उप्रत्ययः दस्य च धः, मधूनां धनानां समूहो माधवम्, तस्य समूह इत्यण्, ततस्तस्येदमित्यण्, इति निर्वचनसूचनाद् **माधवमूर्तिरत्र** ॥ १७२ ॥

॥ ॐ मधवे नमः ॥

**उपाके सोमस्य नु सुषुतस्य स्वधावः । पा इन्द्र**
**प्रतिभृतस्य मध्वः समन्धसा ममदः पृष्ठ्येन ॥ १७३ ॥**

हे इन्द्र सु सुतस्य भृतस्य पात्रे संभृतस्य सोमस्य उपाके समीपे स्थितस्त्वं मध्वः मधून् सोमस्य रसान् पाः, व्यत्ययेन पिब । हे स्वधावः स्वधां सुखं वर्तयतीति वा वाति गच्छति अनुभवतीति वा स्वधावः, वर्ततेर्वातेर्वा असुन्, तस्य सम्बुद्धिः । हे स्वधावः पृष्ठ्येन स्तोत्रेण संस्कृतेन अन्धसा सोमरसरूपेणान्नेन ममदः अमदः । गुपेश्छन्दसीति योगविभागात् लुङि चङि रूपमेतत् ।

अनेन मधुशब्दः स्वधापरपर्यायसुखवाची । मधु सुखमस्यास्तीति मधुः । गुणवचनेभ्यो मतुपो लुगिष्टः । इति निरुक्तेः **मधुमूर्तिरत्र** ॥ १७३ ॥

॥ ॐ अतीन्द्रियाय नमः ॥

**वि यो ररप्श ऋषिभिर्नवेभिर्वृक्षो न पक्वः सृण्यो न जेता ।**
**मर्यो न योषामभि मन्यमानोऽच्छा विवक्मि ॥ १७४ ॥**

य इन्द्रः ऋषिभिर्ज्ञानिभिः नवेभिः स्तुत्यैर्जनैः तत्कृतस्तुतिविशेषैः वि ररप्शे, रप्शिर्वृद्धिकर्मा, ववृधे । पक्वः पक्वफलो वृक्ष इव सृण्यः, सृ गतौ ततः कर्मणि ण्यक्, प्राप्यश्च । न जेता जेतुं शक्यो न । अथवा यस्य जेता नास्ति । यश्च मर्य मरणादिदोषयुक्तशरीरेन्द्रियवान् न न भवति । अथवा यस्य मर्यः विनाशशिरस्कदेहेन्द्रियादिर्नास्ति, तमिन्द्रं योषां जोषां सेवामभिमन्यमानः कांक्षमाणोऽहम्, यद्वा योषादिभोग्यजातं कांक्षमाणोऽहं विवक्मि स्तौमि । चस्य कः, निरुक्तत्वात् ।

अनेन इन्द्रियं मरणादिदोषयुक्तं प्राकृतं शरीरादिकमतिक्रम्य वर्तत इति निरुक्तिसूचनाद् **अतीन्द्रियमूर्तिरत्र** ॥ १७४ ॥

॥ ॐ महामायाय नमः ॥

**पुरुहूतमिन्द्रम् । गिरिर्न यः स्वतवाँ ऋष्व इन्द्रः सनादेव**
**सहसे जात उग्रः । आदर्ता वज्रं स्थविरं न भीमः ॥ १७५ ॥**

य इन्द्रः सनादेव लाभमपेक्ष्यैव स्थविरं दृढं वज्रं भीमो न भयङ्करो वृषभ इव उग्रः शत्रूणां क्रूरः सन् आदर्ता आदत्त आददे। पर्वत इव ऋष्वः महांश्च स्वतवान् कान्तिमांश्च सहसे बलाय जातः। बलविशिष्ठतया जातश्च। तं पुरुहूतमिन्द्रं विवक्मीति पूर्वेण सम्बन्धः।

तेन ''मयं प्रधानमुद्दिष्टम्'', ''आयुधानामहं वज्रम्'' इत्युक्तेः मयं आयुधप्रधानं वज्रम्, ततस्तस्येदमित्यण्। मयस्येदं मायं वज्राद्यायुधजातम्। यद्वा मयो नाम सुरवर्धकिः त्वष्टा, मयस्येदं मायम्। मयनिर्मितत्वान्मायं वज्रम्। यद्यपि मयशब्दोऽसुरवर्धकिवाची तथापि तक्षजातित्वात् त्वष्टुरपि मयशब्दः। तथा च महत् मायं वज्रं यस्य स महामाय इति निर्वचनसूचनात् **महामायमूर्तिरत्र** ॥ १७५ ॥

॥ ॐ महोत्साहाय नमः॥

**उद्रेव कोशं वसुना न्यृष्टम्। न यस्य वर्ता जनुषा न्वस्ति**
**न राधस आमरीता मघस्य। उद्वावृषाणः॥ १७६ ॥**

यस्येन्द्रस्य वसुना द्रविणेन उद्रेव उदकेनेव न्यृष्टं संयुक्तं कोशं कोशमिव स्थितं वज्रं जनुषा नु जन्मारभ्यैवास्ति। यस्य च युद्धे वर्ता प्रतिभटो नास्ति। मघस्य द्रविणस्य राधसः संसिद्धेश्च आमरीता प्रतिरोद्धा च नास्ति। स इन्द्रः उद्वावृषाणः उच्चैः वृषवन्महोत्साहयुक्तः।

तेन महानुत्साहो यस्येति निरुक्तेः **महोत्साहमूर्तिरत्र** ॥ १७६ ॥

॥ ॐ महाबलाय नमः॥

**तविषीव उग्रास्मभ्यं दद्धि पुरुहूत रायः। ईक्षे रायः**
**क्षयस्य चर्षणीनामुत व्रजमपवर्तासि गोनाम्॥ १७७ ॥**

हे तविषीवः, तविषी बलं तद् वर्तयति वाति प्राप्नोतीति वा तविषीवाः तस्य सम्बुद्धिः, हे महाबल उग्र पुरुहूत रायः अस्मभ्यं दद्धि देहि। त्वं च रायः क्षयस्य स्थानस्य चर्षणीनां प्रजानां च ईक्षे ईशोऽसि। उत किञ्च गोनां गवां व्रजं समूहं अपवर्तासि पणिभ्योऽपहर्तासि निवर्तयितासि।

अनेन महद् बलं यस्येति निरुक्तेः **महाबलमूर्तिरत्र** ॥ १७७ ॥

॥ ॐ महाबुद्धये नमः ॥

**शिक्षानरः समिथेषु प्रहावान् वस्वो राशिमभि-**
**नेतासि भूरिम् । कया तच्छृण्वे शच्या शचिष्ठः ॥ १७८ ॥**

हे इन्द्र शिक्षानरः सर्वेषां शिक्षक उपदेशकः । उपदेशस्य महाबुद्धिं विनाऽनुपपत्तेर्महाबुद्धिमानसीति यावत् । किञ्च समिथेषु युद्धेषु प्रहावान् प्रहतिमान्, शत्रूणां हन्तेति यावत्, वस्वः वसुनः भूरि महतीं राशिं समितिं भक्तानभिनेतासि । शचिष्ठः वेदप्रतिपाद्यश्चासि । तस्य ते तत् स्वरूपं कया शच्या केन वाक्येन शृण्वे साकल्येन स्तूयत इत्याक्षेपः ।

अनेन महती बुद्धिर्यस्येति निरुक्तिसूचनात् **महाबुद्धिमूर्तिरत्र** ॥ १७८ ॥

॥ ॐ महावीर्याय नमः ॥

**यया कृणोति मुहु का चिद् ऋष्वः । पुरु दाशुषे विचयिष्ठो**
**अंहोऽथा दधाति द्रविणं जरित्रे । मा नो मर्धीः ॥ १७९ ॥**

ऋष्वः बलवानयमिन्द्रः यया प्रेरणया मुहु पुनःपुनः प्रेरितः कृणोति कुर्यात् सा प्रेरणा का चित् कैवेत्याक्षेपः इन्द्रस्य कर्मकरणे परप्रेरणा नास्ति किन्तु स्ववीर्येणैव सर्वं करोतीति यावत् । किञ्च दाशुषे यजमानाय जरित्रे स्तोत्रे च पुरु द्रविणम् आ दधाति ददाति । अथ कर्मकरणे स्वतन्त्रत्वात् प्रेरणाभावाच्च अंहः पापोपलक्षितदुःखादि को जनः विचयिष्ठः संयोजयेत् । न कोऽपि । अत एव च महासामर्थ्योपेत इति यावत् । हे इन्द्र नः अस्मान् प्रति मा मर्धीः हिंसको मा भूः ।

अनेन महद् वीर्यं सामर्थ्यं यस्येति निरुक्तेः **महावीर्यमूर्तिरत्र** ॥ १७९ ॥

॥ ॐ महाशक्तये नमः ॥

**आ भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत् ते ।**
**नव्ये देष्णे शस्ते अस्मिन् त उक्थे प्र ब्रवाम वयमिन्द्र ॥ १८० ॥**

हे इन्द्र ते तव सम्बन्धिनि नव्ये अपूर्वे शस्ते प्रशस्ते देष्णे शवस्साधने अस्मिन्नुक्थे शस्यमाने सति दाशुषे यजमानाय दातवे दातुं यद् भूरि मनसा दातव्यत्वेन क्लृप्तमस्ति तत् नः अस्मभ्यं दद्धि देहि । भूरिशवःशक्तिमांस्त्वम् । वयं च ते महिमानं प्र ब्रवाम तत्र ख्यापयामः ।

अनेन शत्रुहननतदीयद्रव्यापहरणभक्ताभीष्टदानादिविषयिणी महती शक्तिरस्यास्तीति निरुक्तेः **महाशक्तिमूर्तिरत्र** ॥ १८० ॥

॥ ॐ महाद्युतये नमः ॥

**स्तुवन्तः । नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।**
**अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम ॥ १८१ ॥**

हे इन्द्र वयं त्वां स्तुवन्तः स्याम । त्वं च जरित्रे इषमन्नं नद्य इव पीपेः ददासि । किञ्च नु इदानीं ष्टुतः स्तुतः गृणान उच्यमानश्चासि । यद्वा द्युतिमांश्चासि । हे हरिवः धिया दीप्त्या युक्तस्य ते तव नव्यं स्तुत्यं ब्रह्म वेदात्मकं स्तोत्रमकारि ।

अनेन महती द्युतिर्यस्येति निरुक्तेः **महाद्युतिमूर्तिरत्र** ॥ १८१ ॥

॥ ॐ अनिर्देश्यवपुषे नमः ॥

**रथ्यः सदासाः । [1]इत्था हि सोम इन्मदे ब्रह्मा चकार वर्धनम् ।**
**शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशाः ॥ १८२ ॥**

हे शविष्ठ वज्रिन् ब्रह्मा चतुर्मुखः मदे मदसाधने सोमे सुते सति इत्था एवमेव स्वबुद्ध्यनुसारेणैव तव वपुषः वर्धनं प्रकाशनं चकार । त्वदीयं वपुः स्वयोग्यतानुसारेणैव ददर्श शिष्येभ्यः प्रदिष्टवांश्च , न तु सामस्त्येन ददर्श नापि प्रदिष्टवानिति यावत् । त्वं हि पृथिव्याः पृथिव्याम्, अहिमित्यपकृष्यते, अहिम् अहिसंज्ञमसुरं हत्वा ओजसा बलेन निः शशाः नितरां शायितवानसि । वयं च त्वदनुग्रहाद् रथ्यः रथिनः सदासाः दाससहिताश्च स्यामेति सम्बन्धः ।

अनेन ब्रह्मणापि साकल्येन निर्देष्टुं ज्ञातुं चाशक्यमनिर्देश्यं वपुर्यस्येति निरुक्तेः **अनिर्देश्यवपुर्मूर्तिरत्र** ॥ १८२ ॥

॥ ॐ श्रीमते नमः ॥

**अहिमर्चन्ननु स्वराज्यम् । ता अस्य सूददोहसः सोमं**
**श्रीणन्ति पृश्नयः । जन्मन् देवानां विशस्त्रिष्वारोचने दिवः ॥ १८३ ॥**

१. ऋग्वेद १-८०-१, गोतमो राहूगणः ।

अयमिन्द्रः स्वराज्यं स्वराट्त्वं श्रीमत्त्वं अर्चन् प्राप्तः अहिम् अहिसंज्ञकमसुरं जघान । अस्य सूददोहसः अधिकारिणः सूदे ज्ञानकर्मणी दोग्धि पूरयतीति सूददोहाः मुख्यप्राणो हरिश्च । तस्य सूददोहसः इन्द्रस्य पानार्थं ता वेदवाच आपो गावश्च पृश्नयः प्रश्नयोग्यत्वात् प्रष्टव्यपरब्रह्मरूपार्थवत्त्वाद्वा भगवत्प्रशंसनरूपत्वाद्वा अपौरुषेयत्वेन निर्दोषत्वेन प्रशंसनीयत्वाद्वा पृश्नयः । एवंविधा वेदाद्या विशश्च ऋत्विजश्च आ रोचने आ सम्यग् रोचने प्रकाशमाने त्रिषु आदित्यचन्द्रविद्युल्लोकेषु स्थितानां दिवः स्वर्गलोकस्याधिपतीनां देवानां जन्मन् जन्मनि अभिव्यक्तिस्थाने, पूर्वे युगे यज्ञे हविर्गृहीतुं देवाः प्रत्यक्षा भवन्तीति निगमः, सोमं श्रीणन्ति । यद्यपि श्रीङ् पाके पठ्यते तथापि धातूनामनेकार्थत्वाद् ग्रहणाद्यर्थः यथायोगं ग्राह्यः । तथा हि- ता विशश्चेति चत्वारः सोमं श्रीणन्तीत्युक्तक्रियायां कर्तारः प्रतीयन्ते वेदवाच आपो गाव ऋत्विजश्चेति । तत्र वेदाः सूददोहस इन्द्रस्य पानार्थं सोमं गृह्णन्ति । करणे कर्तृत्वोपचारः । मन्त्रैर्हि गृह्यते सोमः । आपस्तु सोमं श्रीणन्ति संसृजन्ति । अद्भिर्हि संसृष्टो भवति सोमः । गावस्तु सोमं श्रीणन्ति पचन्ति । पयआदिना हि सोमो पक्को भवति । ऋत्विजस्तु सोमं श्रीणन्ति मन्त्रेण गृण्हन्ति अद्भिः संसृजन्ति पयआदिना पचन्ति च ।

अनेन स्वराज्यशब्दिता श्रीः कान्तिरस्यास्तीति निरुक्तेः **श्रीमन्मूर्तिरत्र** ॥ १८३ ॥

## अथोत्तरः पक्षः

॥ ॐ अमेयात्मने नमः ॥

**[१]त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः । त्वाम् ॥ १८४ ॥**

हे इन्द्र काष्ठासु अर्वतः, ऋ गतौ, व्याप्नुवतः । दिशः अपरिच्छेद्याः प्रसिद्धाः तासु व्याप्रियमाणोप्यपरिच्छेद्यः । एवं दिश इव व्याप्तस्य तव कारवः कर्मकर्तारः परिचारका वयं इत् इदानीं वाजस्य अन्नस्य साता सातौ लाभार्थं हवामहे । एवमन्ये नरः यज्ञनेतारः सत्पतिं सतां पतिं ज्येष्ठं

१. ऋग्वेद ६-४६-१,२ शंयुर्बार्हस्पत्यः । तथा त्वे ह्येहि चेरवे (ऋग्वेदः ८-६१-७,८) इति भर्गो प्रागाथः । अनेन प्रगाथद्वयेन षट्बृहतीसम्पादनप्रकारः तथा गामश्वं रथ्यमिन्द्रेत्यादि पादस्थाने अदः सुमधु मधुनाऽभियोधीरिति पादप्रक्षेपश्च आरणकादेव ज्ञायते । अधिकं तु परिशिष्टे द्रष्टव्यम् ।

प्रशंसनीयं त्वां वाजस्य सातौ आह्वयन्ति । अन्येतु वृत्रेषु अज्ञानाद्यावरणेषु आवृता नराश्च त्वां हवन्ते, अज्ञानादिपरिहारार्थम् । अन्ये तु काष्ठासु अर्वतः अर्वन्तं दिग्विजयं कुर्वाणं त्वां हवन्ते ।

अनेन अमेयः अपरिच्छेद्यः आत्मा स्वरूपं यस्येति निरुक्तेः **अमेयात्ममूर्तिरत्र** ॥ १८४ ॥

**॥ ॐ महाद्रिधृते नमः ॥**

**काष्ठास्वर्वतस्त्वां काष्ठास्वर्वतः । स त्वं नश्चित्र वज्रहस्त**
**धृष्णुया महः स्तवानो अद्रिवः । महः स्तवानः ॥ १८५ ॥**

हे इन्द्र काष्ठासु दिक्षु अर्वतः सञ्चरिष्णून् अश्वान् काष्ठासु दिक्षु अर्वतः सञ्चारयितुः तव महः उत्सवः स्तवानः स्तवनीयः । हे चित्र चायनीय वज्रहस्त अद्रिवः, आदरणीयत्वादद्रिर्वायुः तं वर्तयतीत्यद्रिवाः तस्य सम्बुद्धिः, हे मुख्यप्राणाधार स त्वं महः महान् नः अस्माभिः स्तवानः स्तूयमानश्चासि । धृष्णुया धैर्येण सहितं त्वामामनन्ति ।

अनेन महाद्रिमत्यादरणीयं मुख्यप्राणं धत्त इति निरुक्तेः **महाद्रिधृन्मूर्तिरत्र** ॥ १८५ ॥

**॥ ॐ महेष्वासाय नमः ॥**

**अद्रिवो महः स्तवानो अद्रिवः । अदः सुमधु मधुनाभियोधीः**
**सत्रावाजं न जिग्युषे । त्वं ह्येहि चेरवे ॥ १८६ ॥**

आ सम्यग् विदारयति शत्रूननेनेति अद्रिवर्धनुः । दृ विदारण इत्यत आङ्पूर्वकात् करणे किः आङो ह्रस्वश्च । तद् वर्तयति प्रवर्तयति शत्रुष्वित्यद्रिवाः । तस्य सम्बुद्धिः, हे अद्रिवः धानुष इन्द्र त्वं अद्रिं वाति गच्छतीति अद्रिवाः अद्रेः शृङ्गं तस्याद्रिवः शृङ्गस्य साकाशदपि महान् उन्नतः अत एव स्तूयमानश्चासि । एवंमाहात्म्यस्त्वम् अदः इदं सुमधु अतिकांक्षितं पुत्रादिकं मधुना कांक्षितेन मिथुनक्रियया अभियोधीः संयोजय । अविच्छिन्नसन्तानं मां कुर्विति यावत् । जिग्युषे शत्रून् जितवते सत्रा प्रभूतं वाजं न अन्नमिव मधु अभियोधीरिति सम्बन्धः । त्वं च चेरवे, चरतिर्भक्षणार्थः, अस्मद्दत्तचरुपुरोडाशादिभक्षणाय एहि आ सम्यक् इहि आगच्छ । हि निश्चितम् ।

अनेन महान् इष्वासो धनुर्यस्येति निरुक्तेः **महेष्वासमूर्तिरत्र** ॥ १८६ ॥

॥ ॐ महीभर्त्रे नमः ॥

**विदा भगं वसुत्तये । उद् वावृषस्व मघवन् गविष्टय**
**उदिन्द्राश्वमिष्टये । उदिन्द्राश्वमिष्टय उदिन्द्र ॥ १८७ ॥**

हे इन्द्र मघवन् वसुत्तये वसुप्राप्त्यर्थं भगं भाग्यं विदाः अविदाः लम्भय । उत् किञ्च हे इन्द्र गविष्टये गवां मह्यादीनां प्राप्तये अश्वमिष्टये अश्वादिवाहनप्राप्त्यर्थं च उद् वावृषस्व सम्यग् धनानि वर्षस्व । हे उदिन्द्र अतिदीप्त अश्वमिष्टये अश्वादिप्राप्तौ उत् उत्कृष्टोसि । अश्वमह्यादीनां पतिरसीति यावत् ।

अनेन मह्याः गवाश्वादेः भर्ता स्वामीति निरुक्तेः **महीभर्तृमूर्तिरत्र** ॥ १८७ ॥

॥ ॐ श्रीनिवासाय नमः ॥

**अश्वमिष्टये । त्वं पुरू सहस्राणि शतानि च यूथा**
**दानाय मंहसे । यूथा दानाय मंहसे यूथा दानाय ॥ १८८ ॥**

अत्राश्वशब्द इन्द्रियवचनः । इष्टिशब्दः प्रेरणावाची । हे इन्द्र अश्वमिष्टये इन्द्रियप्रेरणायै मंहसे समर्थोसि । किञ्च त्वं शतानि शतसङ्ख्यानि सहस्राणि सहस्रसङ्ख्याकानि किं बहुना पुरू पुरूणि अनन्तानि च यूथा यूथानि शत्रुजातानि दानाय, दो अवखण्डने, खण्डनाय मंहसे समर्थोसि । किञ्च यूथा यूथानां धनकनकवस्तुवाहनादीनां दानाय आदानाय स्वस्मिन् निवेशितुं मंहसे ।

अनेन श्रयत इति श्रीः धनादीन्यभीष्टजातानि स्वस्मिन् वासयतीति निरुक्तेः **श्रीनिवासमूर्तिरत्र** ॥ १८८ ॥

॥ ॐ सतां गतये नमः ॥

**मंहसे । आ पुरन्दरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे ।**
**[१]तमु ष्टुहि यो अभिभूत्योजा वन्वन् ॥ १८९ ॥**

विप्रवचसः प्रकर्षेण स्तुवन्तो गायन्तश्च वयं पुरन्दरं शत्रुपुराणां विदारकमिन्द्रं मंहसे महसे,

१. ऋग्वेद ६-१८, बार्हस्पत्यो भरद्वाजः ।

प्रशंसनीयं त्वां वाजस्य सातौ आह्वयन्ति। अन्येतु वृत्रेषु अज्ञानाद्यावरणेषु आवृता नराश्च त्वां हवन्ते, अज्ञानादिपरिहारार्थम्। अन्ये तु काष्ठासु अर्वतः अर्वन्तं दिग्विजयं कुर्वाणं त्वां हवन्ते।

अनेन अमेयः अपरिच्छेद्यः आत्मा स्वरूपं यस्येति निरुक्तेः **अमेयात्ममूर्तिरत्र** ॥ १८४ ॥

**॥ ॐ महाद्रिधृते नमः ॥**

**काष्ठास्वर्वतस्त्वां काष्ठास्वर्वतः। स त्वं नश्चित्र वज्रहस्त**
**धृष्णुया महः स्तवानो अद्रिवः। महः स्तवानः ॥ १८५ ॥**

हे इन्द्र काष्ठासु दिक्षु अर्वतः सञ्चरिष्णून् अश्वान् काष्ठासु दिक्षु अर्वतः सञ्चारयितुः तव महः उत्सवः स्तवानः स्तवनीयः। हे चित्र चायनीय वज्रहस्त अद्रिवः, आदरणीयत्वाददिर्वायुः तं वर्तयतीत्यद्रिवाः तस्य सम्बुद्धिः, हे मुख्यप्राणाधार स त्वं महः महान् नः अस्माभिः स्तवानः स्तूयमानश्चासि। धृष्णुया धैर्येण सहितं त्वामामनन्ति।

अनेन महाद्रिमत्यादरणीयं मुख्यप्राणं धत्त इति निरुक्तेः **महाद्रिधृन्मूर्तिरत्र** ॥ १८५ ॥

**॥ ॐ महेष्वासाय नमः ॥**

**अद्रिवो महः स्तवानो अद्रिवः। अदः सुमधु मधुनाभियोधीः**
**सत्रावाजं न जिग्युषे। त्वं ह्येहि चेरवे ॥ १८६ ॥**

आ सम्यग् विदारयति शत्रूननेनेति अद्रिवर्धनुः। दृ विदारण इत्यत आङ्पूर्वकात् करणे किः आङो ह्रस्वश्च। तद् वर्तयति प्रवर्तयति शत्रुष्वित्यद्रिवाः। तस्य सम्बुद्धिः, हे अद्रिवः धानुष इन्द्र त्वं अद्रिं वाति गच्छतीति अद्रिवाः अद्रेः शृङ्गं तस्याद्रिवः शृङ्गस्य साकाशदपि महान् उन्नतः अत एव स्तूयमानश्चासि। एवंमाहात्म्यस्त्वम् अदः इदं सुमधु अतिकांक्षितं पुत्रादिकं मधुना कांक्षितेन मिथुनक्रियया अभियोधीः संयोजय। अविच्छिन्नसन्तानं मां कुर्विति यावत्। जिग्युषे शत्रून् जितवते सत्रा प्रभूतं वाजं न अन्नमिव मधु अभियोधीरिति सम्बन्धः। त्वं च चेरवे, चरतिर्भक्षणार्थः, अस्मद्दत्तचरुपुरोडाशादिभक्षणाय एहि आ सम्यक् इहि आगच्छ। हि निश्चितम्।

अनेन महान् इष्वासो धनुर्यस्येति निरुक्तेः **महेष्वासमूर्तिरत्र** ॥ १८६ ॥

॥ ॐ महीभर्त्रे नमः ॥

**विदा भगं वसुत्तये । उद् वावृषस्व मघवन् गविष्टय**
**उदिन्द्राश्वमिष्टये । उदिन्द्राश्वमिष्टय उदिन्द्र ॥ १८७ ॥**

हे इन्द्र मघवन् वसुत्तये वसुप्राप्त्यर्थं भगं भाग्यं विदाः अविदाः लम्भय । उत् किञ्च हे इन्द्र गविष्टये गवां मह्यादीनां प्राप्तये अश्वमिष्टे अश्वादिवाहनप्राप्त्यर्थं च उद् वावृषस्व सम्यग् धनानि वर्षस्व । हे उदिन्द्र अतिदीप्त अश्वमिष्टे अश्वादिप्राप्तौ उत् उत्कृष्टोसि । अश्वमह्यादीनां पतिरसीति यावत् ।

अनेन मह्याः गवाश्वादेः भर्ता स्वामीति निरुक्तेः **महीभर्तृमूर्तिरत्र** ॥ १८७ ॥

॥ ॐ श्रीनिवासाय नमः ॥

**अश्वमिष्टये । त्वं पुरू सहस्राणि शतानि च यूथा**
**दानाय मंहसे । यूथा दानाय मंहसे यूथा दानाय ॥ १८८ ॥**

अत्राश्वशब्द इन्द्रियवचनः । इष्टिशब्दः प्रेरणावाची । हे इन्द्र अश्वमिष्टये इन्द्रियप्रेरणायै मंहसे समर्थोसि । किञ्च त्वं शतानि शतसङ्ख्यानि सहस्राणि सहस्रसङ्ख्याकानि किं बहुना पुरू पुरूणि अनन्तानि च यूथा यूथानि शत्रुजातानि दानाय, दो अवखण्डने, खण्डनाय मंहसे समर्थोसि । किञ्च यूथा यूथानां धनकनकवस्तुवाहनादीनां दानाय आदानाय स्वस्मिन् निवेशितुं मंहसे ।

अनेन श्रयत इति श्रीः धनादीन्यभीष्टजातानि स्वस्मिन् वासयतीति निरुक्तेः **श्रीनिवासमूर्तिरत्र** ॥ १८८ ॥

॥ ॐ सतां गतये नमः ॥

**मंहसे । आ पुरन्दरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे ।**
**[१]तमु ष्टुहि यो अभिभूत्योजा वन्वन् ॥ १८९ ॥**

विप्रवचसः प्रकर्षेण स्तुवन्तो गायन्तश्च वयं पुरन्दरं शत्रुपुराणां विदारकमिन्द्रं मंहसे महसे,

१. ऋग्वेद ६-१८, बार्हस्पत्यो भरद्वाजः ।

नुमागमः छान्दसः, अवसे च, अत्र चतुर्थी षष्ठ्यर्थे। उपलक्षणमेतत्। तेजोरक्षणशत्रुभेदाद्यनन्तगुणानामाश्रयं चकृम कुर्मः। अनन्तगुणाश्रयत्वेन तमङ्गीकुर्मः। आ तस्माद् अनन्तगुणाकरत्वात् स इन्द्रः अभिभूत्योजाः शत्रूणामभिभवकृत्तेजा हि। अत एव शत्रून् वन्वन् संहरन् वर्तते। तमु तमेव स्तुहीति ऋषेरात्मानं प्रत्येवेदं वचनम्।

अनेन सतामुत्तमानां गुणानां तेजआदिनां गतिः स्थानम्, गच्छन्त्यत्रेत्यधिकरणे क्तिन्, इति निरुक्तेः **सतांगतिमूर्तिरत्र** ॥ १८९ ॥

॥ ॐ अनिरुद्धाय नमः॥

**अवातः पुरुहूत इन्द्रः। अषाळ्हमुग्रं सहमानमाभि-**
**गीर्भिर्वर्ध वृषभं चर्षणीनाम्। स युध्मः सत्वा॥ १९०॥**

य इन्द्रः शत्रुभिः अवातः अहिंसितः,यद्वा शत्रुभिरनभिगनः, अनिरुद्ध इति यावत्। वनोतेर्वातेर्वा निष्ठान्तस्य नञ्पूर्वकस्य रूपम्। पुरुहूतः पुरुभिराहूतश्च। स इन्द्रः युध्मः शत्रुभिर्योद्धा सत्वा दाता च। सनोतेर्भावे क्विप् ततो मतुप् नलोपो नकारस्य वकारश्च। तमेवंभूतम् अषाळ्हं सोढुमशक्यं उग्रं उदीर्णगुणमोजस्विनं वा सहमानं शत्रुवेगान् सहन्तं चर्षणीनां प्रजानां वृषभं श्रेष्ठं आभिः गीर्भिः स्तुतिभिः वर्ध वर्धय तोषय।

अनेन रुधेः कर्तरि क्तः। नितरां रुद्धो निरुद्धः निरोधकः। न विद्यते युद्धे निरोधको यस्य स इति निरुक्तेः **अनिरुद्धमूर्तिरत्र** ॥ १९० ॥

॥ ॐ सदानन्दाय नमः॥

**खजकृत् समद्वा तुविम्रक्षो नदनुमाँ ऋजीषी। बृहद्रेणु-**
**श्च्यवनो मानुषीणामेकः कृष्टीनामभवत्॥ १९१॥**

अयमिन्द्रः खजकृत् युद्धकृत्। तन्नामसु पाठात्। तुविमृक्षः, मृक्षतिः स्नेहकर्मा, तुवीनां बहूनां मृक्षः स्नेहकर्ता, संयोक्तेति यावत्। नदनुमान्, नादशब्दपर्यायो नदनुशब्दः ततो मतुप्, शब्दवान्। कीर्तिमानिति यावत्। ऋजीषी, ऋजीषशब्देन सवनद्वयाभिसुतः पुनस्तृतीयसवनेप्यभिषुतः सोम उच्यते, ततो मत्वर्थे इनिः, सवनत्रयेपि सोमस्य पाता। बृहद्रेणुः बृहत् रेणुः यस्मात् सः सङ्ग्रामेषु बृहतो रेणोरुत्थापकश्च। मानुषीणां मनोः सम्बन्धिनीनां कृष्टीनां प्रजानां च्यवनः प्रेरकः। अत

एव एकः मुख्यः श्रेष्ठोऽभवत् । समद्वा मत् आनन्दः, मदा आनन्देन सहितः समत् आनन्दोद्रेकः ततो मतुप् आनन्दोद्रेकवान् जायते। तेन युद्धकरणबहुजनमेलनसोमपानाशेषप्राणिप्रेरणादि भगवतो न युक्तं पूर्णकामत्वेन क्वापि रागाभावात् । नापि रोदनादिवद् दुःखोद्रेकात् प्रवृत्तिः । नापि दुःखपरिजिहीर्षया । निरनिष्ट इत्यादिश्रुतिविरोधात् । इति चोद्यं परास्तम् । उन्मत्तानामिव सुखोद्रेकादेव प्रवृत्त्युपपत्तेरिति युक्तिं सूचयति ।

तथा च सन् उद्रिक्त आनन्दो यस्य स इति निरुक्तः **सदानन्दमूर्तिरत्र** ॥ १९१ ॥

**॥ ॐ गोविन्दाय नमः ॥**

**सहावा । त्वं ह नु त्यददमायो दस्यूँरेकः कृष्टीरवनोरार्याय ।**
**अस्ति स्विन्नु वीर्यं तत् त इन्द्र न स्विदस्ति ॥ १९२ ॥**

हे इन्द्र त्यत् सः त्वं सहावा सहःशब्दपर्यायः सहशब्दः । ततो मतुप् नलोपश्च । बलवान् सन् दस्यून् कर्महीनान् चोरान्वा नु क्षिप्रम् अदमायः अदमयः अशिक्षयः । अपि च एकः मुख्यस्त्वं कृष्टीः पशुपुत्रदासादीन् आर्याय कर्मकृते जनाय अवनोः दानार्थादवतेर्लुङि रूपमेतत्, अददाः । एवं स्तुवन्नपि ऋषिः इन्द्रं यदा नाद्राक्षीत् तदा तस्य वीर्यसद्भावे विचिकित्समानस्तमेव पृच्छति । ते तव यत् पूर्वमुक्तं दस्युवधपुत्रादिदानरूपं तद् वीर्यं सामर्थ्यं नु इदानीम् अस्ति स्वित् । स्विदिति विचिकित्सा-याम् । तद् वीर्यमस्त्युत नास्तीति ।

अनेन गां पशुपुत्रादीन् विन्दति लम्भयतीति निरुक्तः **गोविन्दमूर्तिरत्र** ॥ १९२ ॥

**॥ ॐ गोविदां पतये नमः ॥**

**सदतुथा वि वोचः । सदिद्धि ते तुविजातस्य मन्ये सहः**
**सहिष्ठ तुरतस्तुरस्य । उग्रमुग्रस्य तवसः ॥ १९३ ॥**

हे इन्द्र तत् मया पृष्टं बलमस्ति नवेति प्रमेयं ऋतुथा काले काले विवोचः विशेषेण निष्कृष्य ब्रूहि। एवमुक्तावपि सिद्धान्तकातरः ऋषिः स्वयमेव वक्ति । हे सहिष्ठ तेजोवतां पते इन्द्र हि यस्मात् तुविजातस्य बहुयज्ञे प्रादुर्भूतस्य तुरतः शत्रूणां हिंसकस्य, तुर्वी हिंसायाम् . तुरस्य बलवतः वेगवतः लीलासम्भ्रमे उग्रस्य शत्रूणां क्रूरस्य तवसः दीप्तिमतः ते तव उग्रं पूर्णं सहः बलं सत् अस्तीति मन्ये । अन्यथा शत्रुहननादिव्यापारो न स्यादिति भावः ।

अनेन गोशब्दः घृणिशब्दपर्यायतेजःपरः, गां तेजो लभन्त इति गोविदः, गोविदां तेजस्विनां पतिरिति निरुक्तेः **गोविदांपतिमूर्तिरत्र** ॥ १९३ ॥

॥ ॐ मरीचये नमः ॥

**तवीयोऽरध्रस्य रध्रतुरो बभूव । तन्नः प्रत्नं सख्यमस्तु**
**युष्मे इत्था वदद्भिर्वलमङ्गिरोभिः ॥ १९४ ॥**

हे इन्द्र अरध्रस्य अरन्धनीयस्य शत्रुभिरहिंस्यस्य रध्रतुरः वशीकरणशीलानां सपत्नानां हिंसकस्य ते तवीयः प्रवृद्धतरं प्रत्नं पुराणं युष्मे युष्मासु त्वयि नः सख्यं स्वामित्वलक्षणं सखित्वम् अस्तु आसीत् । अनादिकालतस्त्वत्सखा वयं यस्मात् तस्माद् इत्था एवं वदद्भिः स्तुवद्भिः अङ्गिरोभिः अङ्गिरःप्रभृतिभिरस्माभिः प्रार्थितस्त्वं वलं असुरं हन् हतवानिति सम्बन्धः ।

तेन मृञो भावे इप्रत्ययः, मरिर्मरणम्, तस्मिन्नुपपदे इण् गतावित्यस्मादन्तर्णीतण्यर्थात् चिप् प्रत्ययः । तथा च वलासुरं मरणं प्रापयतीति मरीचिरिति निरुक्तेः **मरीचिमूर्तिरत्र** ॥ १९४ ॥

॥ ॐ दमनाय नमः ॥

**हन्नच्युतच्युद् दस्मेषयन्तमृणोः पुरो वि दुरो अस्य विश्वाः ।**
**स हि धीभिर्हव्यो अस्त्युग्र ईशानकृन्महति ॥ १९५ ॥**

हे अच्युतच्युत् अच्युतानां स्थिराणामपि च्युतिकृत् विनाशकृत् दस्म शत्रुभेदिन्, हिंसार्थस्य दसेर्मक्, इषयन्तं इषून् विसृजन्तं शत्रुजातं हन् हतवान् । तत्प्रकारमेव किञ्चिद् विवृणोति । अस्य शत्रुजातस्य पुरः पुरां नगरीणां विश्वाः समस्ताः दुरः द्वाराणि वि ऋणोः व्यरुणोः । रुधेर्लुङि व्यत्ययेन रूपमेतत् । द्वाराणि निरुद्धवानसि । स इन्द्रः उग्रः ओजस्वी धीभिः बुद्धिमद्भिः हव्यः आह्वातव्यः अस्ति भवति । किञ्च महति महतां समूहे स्वभक्तमीशानं समर्थं करोति ।

तेन शत्रुपुरीणां दमं निरोधं करोतीति दमन इति निरुक्तेः **दमनमूर्तिरत्र** ॥ १९५ ॥

॥ ॐ हंसाय नमः ॥

**वृत्रतूर्ये । स तोकसाता तनये स वज्री वितन्तसाय्यो**
**अभवत् समत्सु । स मज्मना जनिम मानुषाणाम् ॥ १९६ ॥**

वृत्रतूर्ये युद्धे स वज्री तोकसाता तोकस्य स्वभक्तपुत्रस्य सातौ द्रव्यादिलाभार्थं तनये तत्तनयस्यापि द्रव्यादिलाभार्थं वितन्तसाय्यः, तन्तसिर्जयार्थः कण्ड्वादौ पठ्यते, विपूर्वात् तस्मात् कर्तरि आय्यप्रत्ययः, विशेषेण तदीयशत्रूणां जेता अभवत्। भक्तजनसन्ततेरप्येवं सुखकृदिति यावत्। किञ्च स इन्द्रः समत्सु युद्धेषु मज्मना बलेन मानुषाणां मनुष्याणां जनिम जन्मानि प्रापयति। योद्धॄणां शत्रूणां जन्मान्तरं प्रापयति, नाशयतीति यावत्।

अनेन हन्तेर्भावे डः। सृ गतावित्यतोऽन्तर्णीतण्यर्थात् कर्तरि डः। हं शत्रून् हननं सारयति प्रापयतीति हंस इति निरुक्तेः **हंसमूर्तिरत्र**॥ १९६॥

**॥ ॐ सुपर्णाय नमः॥**

**अमर्त्येन नाम्नाति प्र सर्स्रे। स द्युम्नेन स शवसोत**
**राया स वीर्येण नृतमः समोकाः। स यो न॥ १९७॥**

इन्द्रः स न स इव मूलरूपी नारायण इव। तदेव सादृश्यं व्यनक्ति। अमर्त्येन नित्यमुक्तेन मूलरूपिणा शून्यनामकब्रह्मणा द्युम्नेन सुखेन अति प्र सर्स्रे अत्यन्तं जनेष्ववस्थितवान्। पूर्णानन्देन सर्वप्राणिनियामकतया ब्रह्माण्डान्तर्वर्तते। अत एव समोकाः सदृशः। किञ्च न केवलं सुखेन किन्तु सः शवसा बलेन समोकाः, समं ओकः स्वरूपं यस्य सः, सदृश इति यावत्। किञ्च सोयमिन्द्रः नाम्ना शत्रून् नमयित्रा वीर्येण समोकाः। राया धनेन च समोकाः। उपलक्षणमेतत्। सर्वैर्गुणैरपि समान एव। तस्मात् स एव नृतमः सर्वचेतनोत्तमः।

तेन सु सदृशः परः णः आनन्दो यस्येति निरुक्तेः **सुपर्णमूर्तिरत्र**॥ १९७॥

**॥ ॐ भुजगोत्तमाय नमः॥**

**मुहे न मिथू जनो भूत् सुमन्तुनामा चुमुरिं धुनिं च।**
**वृणक् पिप्रुं शम्बरं शुष्णमिन्द्रः पुरां च्यौत्नाय शयथाय॥ १९८॥**

अयमिन्द्रः न मुहे न मुमोह। मिथ्याप्रत्ययवान् न भवति। मिथू जनः मिथ्याजनः मिथ्याजनको न भूत् नाभूत्। मिथ्यासृष्टिं न करोति। किञ्च सुमन्तुनामा प्रज्ञातनामा, प्रख्यातनामेत्यर्थः, पुरां शत्रुपुरीणां च्यौत्नाय च्यवनाय शयथाय शयनाय, कर्ता कुरुत इति शेषः। तथा चुमुरिं धुनिं च एतन्नामकावसुरौ

वृणक् अवृणक् हिंसितवान् । वृणक्तिर्हिंसाकर्मा । अपि च पिप्रुं शम्बरं शुष्णम् एतन्नामकान् त्रीनसुरांश्च वृणक् ।

तेन अभ्यवहारार्थस्य भुजेर्भावे कप्रत्ययः । भुजमभ्यवहारं गच्छन्तीति भुजगाः सर्वदा अन्नभक्षणादिभोगरताः चुमुरिधुनिशम्बरादयः, तान् उत् उत्कृष्टं तमयति ग्लपयतीति भुजगोत्तम इति निरुक्तः **भुजगोत्तममूर्तिरत्र** ॥ १९८ ॥

॥ ॐ हिरण्यनाभाय नमः ॥

**नू चित् । उदावता त्वक्षसा पन्यसा च वृत्रहत्याय**
**रथमिन्द्र तिष्ठ । धिष्व वज्रं हस्त आ दक्षिणत्रा ॥ १९९ ॥**

हे इन्द्र नूचित् इदानीमपि उदावता, अवतिर्गतिकर्मा, उद्गच्छता अभिव्यक्तेन त्वक्षसा शत्रूणां तनूकर्त्रा पन्यसा स्तुत्यन्तरेण बलेन च सह त्वं वृत्रहत्याय, युद्धनामैतत्, युद्धे रथं तिष्ठ रथमारोह। तथा दक्षिणत्रा दक्षिणभागस्थिते हस्ते वज्रम् आ धिष्व धत्स्व ।

तेन भक्तानां हितं च रमणीयं चेति हिरण्यं वज्रम् । न अभः अभिभवः यस्य स नाभो हस्तः । नगनाकादिशब्दवन्नलोपाभावः । हिरण्यं वज्रं नाभे हस्ते यस्य स इति निरुक्तः **हिरण्यनाभमूर्तिरत्र** ॥ १९९ ॥

॥ ॐ सुतपसे नमः ॥

**अभि प्र मन्द पुरुदत्र मायाः । अग्निर्न शुष्कं वनमिन्द्र**
**हेती रक्षो नि धक्ष्यशनिर्न भीमा । गम्भीरयः ॥ २०० ॥**

हे पुरुदत्र पुरुधन इन्द्र मायाः आसुरीः अभि अभिगम्य प्र मन्द प्रमन्दय विफलीकुरु । हे इन्द्र ते हेतिः आयुधं गम्भीरयः गम्भीरः अग्निर्न अग्निरिव भीमा भयङ्करा अशनिर्न अशनिरिव च शुष्कं विरसं वने वृक्षसमूहं रक्षः रक्षांसि नि धक्षि पुरुषव्यत्ययेन दहति ।

अनेन सु सम्यक् आसुरीर्मायाः तपति सन्तापयति विनाशयति विफलीकरोतीति सुतपाः तपतेः कर्तर्यसुन्, इति निरुक्तः **सुतपोमूर्तिरत्र** ॥ २०० ॥

॥ इति बृहतीसहस्रपारावारे द्वितीयः खण्डः समाप्तः ॥

॥ अथ तृतीयः खण्डः ॥

॥ ॐ पद्मनाभाय नमः ॥

**ऋष्वया यो रुरोजाध्वानयद् दुरिता दम्भयच्च ।**
**आ सहस्रं पथिभिरिन्द्र राया तुविद्युम्न तुविवाजेभिः ॥ २०१ ॥**

ऋष्वया, बृहन्नामैतत्, बृहत्या हेत्या वज्रायुधेन य इन्द्रः रक्षांसि रुरोज, रुजो भङ्गे, बभञ्ज स इन्द्रः अध्वनयत् सिंहनादं कृतवान् । शत्रून् अरोदयदिति वा । दुरिता दुरितानि भक्तानां दुर्हितानि अनिष्टानि अदम्भयच्च । हे तुविद्युम्न पुरुसुख इन्द्र तुविवाजेभिः बह्वश्वयुक्तैः पथिभिर्मार्गैः सहस्रं बहुसंख्यया राया धनेन युक्तश्चासि ।

तेन पदेर्भावे मनिन् । तथा च विदारणादिजन्यो ध्वनिः सिंहनादादिः पद्मन्शब्देन विवक्षितः । पद्मना सिंहनादादिना रणे आभाति, तृतीयाया अलुक्, इति निरुक्तेः **पद्मनाभमूर्तिरत्र** ॥ २०१ ॥

॥ ॐ प्रजापतये नमः ॥

**अर्वाक् । याहि सूनो सहसो यस्य नू धृष्वेः चिददेव ईशे पुरुहूत**
**योतोः । प्र तुविद्युम्नस्य स्थविरस्य धृष्वेः ॥ २०२ ॥**

हे सहसः सूनो वायुपुत्र पुरुहूत इन्द्रस्य ते प्र तुविद्युम्नस्य पूर्णसुखस्य स्थविरस्य निर्विकारस्य धृष्वेः शत्रूणां धर्षकस्य योतोः, यु मिश्रणामिश्रणयोः, ततस्तुमर्थे तोसुन्, प्रजाः वियोजयितुं त्वदीयप्रजापतित्वं चालयितुं कश्चिदसुरश्चित् देवोऽपि नु ईशे नेष्टे । अत्र नुशब्दो निषेधार्थो ग्राह्यः । स त्वमस्मदभिमुखेन याहि आयाहि ।

तेन प्रजाः पालयतीति प्रजापः, पातेर्डः, भावप्रधानः । प्रजापत्वेन सन्ततः तिः, तनोतेर्डिः । प्रजापत्वेन ततो व्याप्तः, अत्यक्तप्राजापत्यवान् । यद्वा प्रकृष्टो जायत अनेनेति प्रजं पूर्णसुखम् । आ समन्तात् सर्वकालेषु सर्वदेशेषु आपम्, आप्लृ व्याप्तावित्यतो भावे डः । तथा च आपशब्देन विवक्षितकालतो व्याप्त्या देशतो व्याप्त्या च स्थविरत्वं शत्रुधर्षकत्वं चोक्तम् । तथा च प्रजं च आपे च प्रजापानि, तैस्ततः, अत्यक्तसुखस्थविरत्वशत्रुधर्षकत्वादिगुणवान् प्रजापतिरिति निरुक्तेः **प्रजापतिमूर्तिरत्र** ॥ २०२ ॥

॥ ॐ अमृत्यवे नमः ॥

**दिवो ररप्शे महिमा पृथिव्याः । नास्य शत्रुर्न**
**प्रतिमानमस्ति न प्रतिष्ठिः पुरुमायस्य सह्योः ॥ २०३ ॥**

हे इन्द्र तव महिमा महत्त्वं दिवः द्युलोकात् पृथिव्याः भूमेश्च प्र ररप्शे प्ररिरिचे पृथिवीं दिवं चातिक्रम्य वर्तते। विरप्शीति महन्नामसु पाठात्, नाम्नां च प्रायेण धातुजत्वात् रप्शतिरत्रातिशयवाची । पुरुमायस्य बहुप्रज्ञस्य सह्योः शत्रूणामभिभवितुः अस्य इन्द्रस्य शत्रुः शातयिता संहर्ता नास्ति। न मृतिरस्तीति यावत्। प्रतिमानमुपमानं च नास्ति। प्रतिष्ठिः प्रतिष्ठा आश्रयोऽपि नास्ति। स एव सर्वस्य प्रतिष्ठेत्यर्थः।

तेन न विद्यते मृत्युः मारको मृतिर्वेति निरुक्तेः **अमृत्युमूर्तिरत्र** ॥ २०३ ॥

॥ ॐ सर्वदृशे नमः ॥

**प्र तत् ते अद्या करणं कृतं भूत् कुत्सं यदायुमतिथिग्वमस्मै ।**
**पुरू सहस्रा नि शिशा अभि क्षामुत् तूर्वमाणम् ॥ २०४ ॥**

हे इन्द्र अद्य इदानीमपि त्वया यत् कृतं तत् करणं कर्म प्र भूत् प्रभवति प्रकाशते। किं तदित्युच्यते। कुत्सम् एतन्नामानमृषिम् आयुम् एतन्नामानं राजानम् अतिथिग्वम् अतिथीनां पूजकं तूर्वमाणं त्वरितगमनं दिवोदासं च तच्छत्रुभ्यः ररक्षिथेत्युचितक्रियाध्याहारः। अपि चासौ अनन्तरोक्तायातिथिग्वाय पुरू पुरूणि बहूनि सहस्रा सहस्राणि, योग्यतया शम्बरस्य धनानि, क्षां उत् पृथिवीं च अभि नि शिशाः प्रादाः।

अनेन सर्वस्मिन्नपि काले दृक् दृश्यमानः प्रकाशमानो महिमा अस्यास्तीति निरुक्तेः **सर्वदृङ्मूर्तिरत्र** ॥ २०४ ॥

॥ ॐ सिंहाय नमः ॥

**धृपता निनेथ । अनु त्वाहिघ्ने अध देव देवा मदन् विश्वे**
**कवितमं कवीनाम् । करो यत्र वरिवो बाधिताय ॥ २०५ ॥**

हे देव यत्र यस्मिन् काले बाधिताय दारिद्र्यपीडिताय यजमानाय वरिवः धनं करः अकरोः

अददाः । धृषता धर्षणसाधनेन वज्रेण निनेथ आपद्ग्रस्तमुदगमयः । अध तस्मिन् काले विश्वे समस्ता अपि देवाः अहिघ्ने, अहिर्मेघः तन्नामसु पाठात् तद्धननाय वृष्टिप्रदानायेति यावत्, कवीनां कवितमं त्वां अनुमदन् अन्वमदन् अस्तुवन्।

तेन कर्तरि सिचेः डिः, उदकसेचकत्वात् सिः मेघः । तं हन्तीति सिंहः । हन्तेर्डः, द्वितीयाया अलुक् च । इति निरुक्तेः **सिंहमूर्तिरत्र** ॥ २०५ ॥

**॥ ॐ सन्धात्रे नमः ॥**

**दिवे जनाय तन्वे गृणानः । अनु द्यावापृथिवी तत् त**
**ओजो मर्त्या जिहत इन्द्र देवाः । कृष्वा कृत्नो ॥ २०६ ॥**

हे कृत्नो जगत्करणशील इन्द्र गृणानः भक्तैः स्तूयमानः दिवे, द्वीव्यतेः कर्तरि क्विप् स्तोत्रे जनाय भक्ताय तन्वे तत्तनयाय तत्सन्ततेरपि तत् प्रसिद्धमोजःप्रभृत्यभीष्टजातं कृष्व कुरुष्व सन्धेहि । ते तव ओजः प्रसिद्धं द्यावापृथिवी अनु जिहते उपजीव्य वर्तन्ते । अनुसन्धीयते वृष्ट्यादिना । ''तदुताप्याहुर्द्यावापृथिव्यौ समधताम्'', ''वृष्टिः सन्धिः पर्जन्यः सन्धाता'' इत्याद्युक्तेः । अमर्त्या मरणरहिता देवाश्च अनुजिहते त्वामनुसृत्य वर्तन्ते । एवमतिसमर्थो भवान् ।

अनेन वृष्टिकाले द्यावापृथिव्यौ सन्धापयतीति सन्धातेति निरुक्तेः **सन्धातृमूर्तिरत्र** ॥ २०६ ॥

**॥ ॐ सन्धिमते नमः ॥**

**अकृतं यत् ते अस्त्युक्थं नवीयो जनयस्व यज्ञैः । [१]सुत इत्**
**त्वं निमिश्ल इन्द्र सोमे स्तोमे ब्रह्मणि शस्यमाने ॥ २०७ ॥**

हे इन्द्र ते त्वद्विषयं स्तोत्रमाश्रावि । अस्माभिर्यत्नः अकृतं कृतः । अत एव नवीयः नवीनमपूर्वम् उक्थं स्तोत्रं जनयस्व उत्पादय । अस्माभिः कारयेति यावत् । ततोऽस्माभिः शस्यमाने ब्रह्मणि वेदरूपे स्तोत्रे सोमे च सुते सति यज्ञैः अस्मदनुष्ठितैर्यज्ञैः त्वं निमिश्लो भव मिश्रितो भव ।

तेन सन्धिः संयोगः, यज्ञैः संयोगवान् सन्धिमानिति निरुक्तेः **सन्धिमन्मूर्तिरत्र** ॥ २०७ ॥

१. ऋग्वेद ६-२३, बार्हस्पत्यो भरद्वाजः ।

॥ ॐ स्थिराय नमः ॥

**उक्थे । यद् वा युक्ताभ्यां मघवन् हरिभ्यां बिभ्रद् वज्रं**
**बाह्वोरिन्द्र यासि । यद् वा दिवि पार्ये सुष्विमिन्द्र ॥ २०८ ॥**

हे मघवन् बाह्वोर्वज्रं बिभ्रत् स्थापयन् युक्ताभ्यां रथे योजिताभ्यां हरिभ्यामश्वाभ्यां यासि इति यत्, सुष्विम् अभिषोतारं यजमानं दिवि द्युलोके पार्ये प्राप्ते सति अवसि इति वा यत् तत् सर्वं वज्रधारणयजमानावनादिकं उक्थे स्तोत्रे शस्यमाने कुर्वन् स्थिरो भव स्थाता भवेत्यध्याहारः ।

तेन वज्रं हस्ते स्थापयतीति स्थिरः, तिष्ठतेरन्तर्णीतण्यर्थात् किरच्, इति निरुक्तेः **स्थिरमूर्तिरत्र** ॥ २०८ ॥

॥ ॐ अजाय नमः ॥

**वृत्रहत्येऽवसि शूरसातौ । यद् वा दक्षस्य बिभ्युषो**
**अबिभ्यदरन्धयः शर्धत इन्द्र दस्यून् । पाता सुतमिन्द्रः ॥ २०९ ॥**

हे इन्द्र शूरसातौ शूराणां लाभरूपे वृत्रहत्ये युद्धे योद्धारं भक्तमवसीति यत्, दक्षस्य कर्म कर्तुं समर्थस्य बिभ्युषः शत्रुभीतियुक्तस्य जनस्यार्थे शर्धतः संग्रामे उद्योगवतः दस्यून् उपक्षयकर्तॄन् अबिभ्यत् स्वयं भीतिरहितः सन् अरन्धसः प्रतिक्षिप्तवान्, हिंसितवानिति वा यत्, अयमिन्द्रः सुतं सोमं पाता पिबतीति वा यत्, तत् सर्वं उक्थे शस्यमाने कुरु । उक्थस्तोत्रेण प्रसन्न इदं सर्वं कुर्वीति तात्पर्यम् ।

अनेन दस्यून् अजति प्रतिक्षिपतीति निरुक्तेः **अजमूर्तिरत्र** ॥ २०९ ॥

॥ ॐ दुर्मर्षणाय नमः ॥

**अस्तु सोमं प्रणेनीरुग्रो जरितारमूती । कर्ता वीराय सुष्वय**
**उ लोकं दाता वसु स्तुवते कीरये चित् ॥ २१० ॥**

अयमिन्द्र ऊती ऊत्यै रक्षणायै जरितारं स्तोतारं जनं प्रणेनीः प्रकर्षेण नीः प्रकर्षेण नेता । उग्रः शत्रुभिर्दुर्मर्षणः वीराय यज्ञादिकर्मसु दक्षाय सुष्वये सोमभिषवं कुर्वते यजमानाय लोकं स्थानं कर्ता अस्तु । उ एव । कीरये चित् कर्मकर्तुर्जनायापि वसु दाता अस्तु ।

तेन शत्रूणामुग्रः क्रूरो दुर्मर्षण इति निरुक्तेः **दुर्मर्षणमूर्तिरत्र** ॥ २१० ॥

॥ ॐ शास्त्रे नमः ॥

**गन्तेयान्ति सवना हरिभ्यां बभ्रिर्वज्रं पपिः सोमं ददिर्गाः ।**
**कर्ता वीरं नर्यं सर्ववीरं श्रोता हवम् ॥ २११ ॥**

अयमिन्द्रः इयान्ति इयन्ति एतावन्ति सवना त्रीण्यपि सवनानि प्रति हरिभ्यामश्वाभ्यां गन्ता अस्तु । किञ्च वज्रमायुधं बभ्रिः बिभ्रत् धर्ता सन् शत्रूणां शास्ताऽस्तु । सोमं पपिः पाता अस्तु । गाः ददिर्दाता अस्तु । नर्यं नरहितं सर्ववीरं बहुपुत्रोपेतं वीरं वीर्यवन्तं कर्ता चास्तु । हवम् अह्वानरूपं स्तोत्रं श्रोता चास्तु ।

अनेन शत्रूणां शास्ता शास्तिकृदिति निरुक्तेः **शास्तृमूर्तिरत्र** ॥ २११ ॥

॥ ॐ विश्रुतात्मने नमः ॥

**गृणतः स्तोमवाहाः । अस्मै वयं यद् वावान तद् विविष्म**
**इन्द्राय यो नः प्र दिवो अपस्कः । सुते सोमे ॥ २१२ ॥**

अयमिन्द्रः सोमे सुते सति गृणतः स्तुवतः स्तोमवाहाः स्तोमं वहति स्वीकरोति य इन्द्रः सः, नः प्रदिवः ज्ञानादिप्रकाशकः । अपः पोषणादिकं कर्म कः अकः, व्यत्ययेन करोति । यत् स्तोत्रादिकं ववान संभजते कामयते अस्मै इन्द्राय तत् स्तोत्रं वयं विविष्मः, विश्लृ व्याप्तौ अन्तर्णीतण्यर्थं चेदम्, व्याप्तं विस्तृतं प्रसिद्धं कुर्मः ।

अनेन विश्रुतः प्रसिद्धः आत्मा स्तोत्रं यस्य स इति निरुक्तेः **विश्रुतात्ममूर्तिरत्र** ॥ २१२ ॥

॥ ॐ सुरारिघ्ने नमः ॥

**स्तुमसि शंसदुक्थेन्द्राय ब्रह्म वर्धनं यथासत् । ब्रह्माणि हि**
**चकृषे वर्धनानि तावत् त इन्द्र मतिभिर्विविष्मः ॥ २१३ ॥**

उक्था उक्थानि ब्रह्माणि शंसत्, बहुवचनस्य लुक्, शंसन्तो वयं वर्धनं यथासत् यथा स्यात्, इन्द्रस्यास्मत्स्तुतिस्वीकरणद्वारा सन्तोषो यथा स्यात् तथा, स्तुमसि स्तुमः । हे इन्द्र ब्रह्माणि अस्माभिः कृतानि स्तोत्राणि वर्धनानि असुरहननद्वारा अस्मत्सन्तोषकराणि यावता कालेन चकृषे कुरुषे तावत् तावता कालेन वयं ते मतिभिः स्तुतिभिः विविष्मः व्याप्नुमः ।

अनेन सुष्टुरमणहेतुत्वात् सुरं स्तोमं तत् आ सम्यग् रिहन्ति लिहन्ति आस्वादयतीति सुरारिहाः। बहुवचनं गौरवाय, सलोपश्च। अथवा सुरारीनसुरान् हन्तीति सुरारिहमूर्तिरत्र ॥ २१३ ॥

॥ ॐ गुरवे नमः ॥

**सुते सोमे सुतपाः शन्तमानि रान्द्या क्रियास्म वक्षणानि यज्ञैः ।**
**स नो बोधि पुरोळाशं रराणः पिबा तु ॥ २१४ ॥**

हे सुतपाः अभिसुतस्य सोमस्य पातः हे इन्द्र ते शन्तमानि सुखकराणि स्तोत्राणि क्रियास्म करवाम। हे इन्द्र स त्वं सोमे सुते सति रराणः स्वीकारानुकूलशब्दं कुर्वन् नः पुरोळाशं सोमं च बोधि बुद्ध्यस्व अनुजानीहि। गृहाणेति यावत्। पिबा तु पिब च।

तेन सोमपुरोडाशादिकं गृण्हातीति गुरुः, ग्रह उपादाने इत्यतः डुप्रत्ययः, टिलोपः, रेफस्य सम्प्रसारणेन ऋकारः, तस्य रपर उकार इति वा, गॄ निगरणे इत्यस्य डुप्रत्ययः ऋकारस्य रपर उकार इति वा निरुक्तः **गुरुमूर्तिरत्र** ॥ २१४ ॥

॥ ॐ गुरुतमाय नमः ॥

**सोमं गोऋजीकमिन्द्र। एदं बर्हिर्यजमानस्य सीदोरुं**
**कृधि त्वायत उ लोकम्। स मन्दस्वा ह्यनु जोषम् ॥ २१५ ॥**

हे इन्द्र गोऋजीकं दध्यादिसंस्कृतं सोमं सोमरसम् अनुजोषं यथेच्छं पीत्वा मन्दस्व मादयस्व। तदर्थं यजमानस्य इदं बर्हिः आ सीद उपविश। यद्वा बर्हिः जलादिमहत्प्रतिबन्धकजातम् आ सीद सम्यक् निवारय। उपविश्य पीत्वा सन्तुष्टो भूत्वा लोकप्राप्तिप्रतिबन्धकपापानि निवारय च। त्वायतः त्वत्प्राप्तिमिच्छतो यजमानस्य उरुम् उत्कृष्टलोकं स्थानं कृधि देहि। उ एव।

अनेन गुरुमुत्कृष्टलोकं तनोतीति गुरुतमः। तनोतेरचूप्रत्ययः, नकारस्य मकारः। अथवा गुरूणि सल्लोकप्राप्तिप्रतिबन्धकानि पापानि ताम्यति ग्लपयतीति निरुक्तेः **गुरुतममूर्तिरत्र** ॥ २१५ ॥

॥ ॐ धाम्ने नमः ॥

**उग्र प्र त्वा यज्ञास इमे अश्नुवन्तु। प्रेमे हवासः**
**पुरुहूतमस्मे आ त्वेयं धीरवस इन्द्र यम्याः ॥ २१६ ॥**

हे उग्र इन्द्र इमे यज्ञासः यज्ञसाधनानि सोमादीनि त्वा त्वां ह्यश्नुवन्तु प्राप्नुवन्तु । त्वत्तोषका भवन्तु । किञ्च पुरुहूत अस्मे अस्मदीया इमे हवासः आह्वानानि त्वां प्रति आ यम्याः सम्यङ् नियम्याः । सम्यक् त्वया हृदये धार्याः सन्तः सम्यक् त्वां प्राप्नुवन्ति । इयं धीः त्वदीयबुद्धिः अवसे अस्मद्रक्षणाय ते हृदि अस्तु ।

तेन अस्मद्दत्तसोमादिहवींषि भक्तरक्षणगोचरबुद्धिं वा धत्त इति धाम । धात्रः कर्तरि मन् प्रत्यय इति निरक्तेः **धाममूर्तिरत्र** ॥ २१६ ॥

॥ ॐ सत्याय नमः ॥

**तं वः सखायः सं यथा सुतेषु सोमेभिरीं पृणता भोजमिन्द्रम् ।**
**कुवित् तस्मा असति नो भराय न सुष्विम् ॥ २१७ ॥**

हे सखायः वः युष्माकं भोजं भोगप्रदं तमीं तमेव इन्द्रं सोमेषु सुतेषु सत्सु यथा यथायोगं यथाकालं याथातथ्यं वा सोमेभिः सोमैः सं पृणत संयोजयत पूजयत । भराय अशेषाभीष्टभरणाय सुष्विं न सोमभिषवकर्तारं यजमानमिव नः अस्मान् अवति । तस्मा इन्द्राय कुवित्, बहुनामैतत्, बहुप्रकारं बहुसेवा असति अस्तु । विकरणव्यत्ययादिश्छान्दसः । अथ वा कुवित् अनन्तगुणजातं तस्मै तस्मिन्निन्द्रे असति अस्ति । अतस्तमेव पूजयतेति भावः ।

अनेन भक्तेभ्यः सद् भागं यापयतीति वा, समीचीना गुणा यान्त्यत्रेति वा, समीचीनान् गुणान् यापयतीति वा, अवितथं जगद् यापयतीति वा निरुक्तेः **सत्यमूर्तिरत्र** ॥ २१७ ॥

॥ ॐ सत्यपराक्रमाय नमः ॥

**इन्द्रोऽवसे मृधाति । एवेदिन्द्रः सुते अस्तावि सोमे**
**भरद्वाजेषु क्षयदिन्मघोनः । असद् यथा जरित्रे ॥ २१८ ॥**

अयमिन्द्रः जरित्रे स्तोत्रे यथा अवसे रक्षणाय असत् अभवत् तथा नः अवसे सोमे सुते सति मृधाति भवेत् गच्छेत् । भरद्वाजेषु भरद्वाजैः, व्यक्तिबाहुल्यमपेक्ष्य बहुवचनम्, भरद्वाजेन मया एवेत् एवमेव अस्तावि, कर्मणि लकारः, स्तुतोऽभूत् । किञ्च मघोनः धनवतः क्षयदित् ईश्वर एव ।

अनेन सत्यं समीचीनं सोमाभिषवादिकर्म, तत्परा भरद्वाजादयः, तानाक्रमते तद्गेहं प्राप्नोतीति निरुक्तेः **सत्यपराक्रममूर्तिरत्र** ॥ २१८ ॥

॥ ॐ निमिषाय नमः ॥

**उत सूरिरिन्द्रो रायो विश्ववारस्य दाता। [१]वृषा मद इन्द्रे**
**श्लोक उक्था सचा सोमेषु सुतपा ऋजीषी ॥ २१९ ॥**

उत किञ्च अयमिन्द्रः सूरिः विद्वान् सर्वदा जागर्ति। स्वतन्त्रोन्मेषणवान्। विश्ववारस्य सर्वैर्वरणीयस्य रायः धनस्य दाता। किञ्च इन्द्रे इन्द्रविषये श्लोकः स्तोत्ररूपशब्दः मदः हर्षश्च। वृषा कामानां वर्षिता। सोमेषु, अर्शआद्यच्, सोमवत्सु यागेषु उक्था उक्थस्तोत्रेण सह सुतपाः सोमपानकर्ता। तत्रापि ऋजीषी कल्कं गतरसमपि गृण्हाति। न तत्र किञ्चित् परित्यजति। एवं हि सोमप्रियः।

अनेन नितरां मिषन् जागरवान् निमिष इति निरुक्तेः **निमिषमूर्तिरत्र** ॥ २१९ ॥

॥ ॐ अनिमिषाय नमः ॥

**अर्चत्र्यो मघवा नृभ्य उक्थैर्द्युक्षो राजा गिरामक्षितोतिः।**
**ततुरिर्वीरो नर्यो विचेताः श्रोता हवम् ॥ २२० ॥**

मघवा मघवान् धनवान् द्युक्षः, द्यौः क्षं निवासो यस्य, देवो न मानुषः अक्षितोतिः अक्षीणरक्षणः गिरां स्तुतीनां राजा ततुरिः शत्रूणां हिंसकः वीरः विक्रान्तः नर्यः नरहितः विचेताः विविक्तज्ञानः हवं श्रोता अयमिन्द्रः नृभ्यः नृभिः कर्तृभिः उक्थैः स्तोत्रैः करणैः अर्चत्र्यः, पूजार्थादर्चतेः कर्माणि अत्र्यच् प्रत्ययः, पूजनीय एव।

अनेन अनिमिषो देव एव न मानुष इति निरुक्तेः **अनिमिषमूर्तिरत्र** ॥ २२० ॥

॥ ॐ स्रग्विणे नमः ॥

**गृणत उर्व्यूतिः। वसु शंसो नरां कारुधाया वाजी स्तुतो**
**विदथे दाति वाजम्। अक्षो न चक्र्योः शूर बृहन् ॥ २२१ ॥**

गृणतः स्तुवतः उर्व्यूतिः विस्तृतरक्षः वसु वासयिता नरां नृणां स्तोतृजनानां शंसः शंसनीयः कारुधायाः, धाञः कर्तरि यासुन् प्रत्ययः, कारूणां स्तोतॄणां धारयिता वाजी अन्नवानिन्द्रः विदथे यज्ञे अस्माभिः स्तुतः सन् वाजमन्नादिभोगजातं दाति ददाति। हे शूर इन्द्र चक्र्योः चक्रयोः चक्राभ्यां

---
१. ऋग्वेद ६-२४, बार्हस्पत्यो भरद्वाजः।

अक्षो न रथाक्ष इव बृहन् महान् अतिरिक्तो वर्तसे । चक्राभ्यां रथसम्बन्धी अक्षः चक्रमतिक्रम्याधिकपरिमाणो वर्तते, तथायमिन्द्रोऽपि जगत् सर्वमतिक्रम्य ततोऽपि बहिर्व्याप्तो वर्तते ।

अनेन सृज विसर्गे इत्यतो भावे क्विप् अमागमो यणादेशश्च । तथा च स्रग् विसर्गः अतिरेकः, तदस्यास्तीत्यस्मिन्नर्थे अस्मायामेधास्रजो विनिरिति स्रग्वीति निरुक्तेः **स्रग्विमूर्तिरत्र** ॥ २२१ ॥

॥ ॐ वाचस्पतये नमः ॥

**प्र ते मह्ना रिरिचे रोदस्योः । वृक्षस्य नु ते पुरुहूत**
**वया व्यूतयो रुरुहुरिन्द्र पूर्वीः । शचीवतस्ते ॥ २२२ ॥**

न केवलमिन्द्रः स्वरूपेणैव व्याप्तः किन्तु महिमादिनापीत्याह । हे इन्द्र ते तव मन्हा महिमा चक्राभ्यामक्ष इव रोदस्योः द्यावापृथिवीभ्यामपि प्र रिरिचे अतिरिक्तो वर्तते । किञ्च हे इन्द्र ते पूर्वीः पूर्व्यः ऊतयः रक्षाः वृक्षस्य वया नु शाखा इव विरुरुहुः विशेषेण रोहन्ति अतिरिच्यन्ते । हे इन्द्र शचीवतः, शचीशब्दो वाक्यपर्यायः, तद्वत्त्वं तत्पतित्वम्, वाचस्पतेः ते शाका शक्तयश्चातिरिच्यन्ते ।

अनेन वाचां पतिः वाचस्पतिः, पारस्करादित्वात् सुट्, इति निरुक्तेः, **वाचस्पतिमूर्तिरत्र** ॥ २२२ ॥

॥ ॐ उदारधिये नमः ॥

**पुरुशाक शाका गवामिव स्रुतयः सञ्चरणीः । वत्सानां न**
**तन्तयस्त इन्द्र दामन्वन्तो अदामानः सुदामन् ॥ २२३ ॥**

हे पुरुशाक बहुकर्मन् बहुशक्ते वा इन्द्र ते तव शाकाः कर्माणि शक्तयो वा गवां धेनूनां स्रुतयः मार्गाः सञ्चरणीः सञ्चरिण्यः बहुमुखा इव यद्वत् तद्वत् बहुमुखा वर्तन्ते । किञ्च हे इन्द्र सुदामन् हे सुदानशील इन्द्र अदामानः बन्धकरहिता शाका शक्तयः कर्माणि च वत्सानां तन्तवो न बन्धकरज्जव इव दामन्वन्तः शत्रूणां बन्धका भवन्ति । तस्या वाक् तन्तिर्नामानि दामानीति श्रुतेः ।

अनेन कर्मनामसु पाठाद् धीशब्दः कर्मपरः, उदाराणि सर्वबन्धनशक्तानि धियः कर्माणि यस्य स इति निरुक्तेः, **उदारधीमूर्तिरत्र** ॥ २२३ ॥

॥ ॐ अग्रण्यै नमः ॥

**अन्यदद्य कर्वरमन्यदु श्वोऽसच्च सन्मुहुराचक्रिरिन्द्रः ।**
**मित्रो नो अत्र वरुणश्च पूषाऽर्यः ॥ २२४ ॥**

अयमिन्द्रः अद्य अस्मिन् दिवसे अन्यत् कर्वरं, कर्मनामैतत्, कर्म करोति । श्वः परस्मिन् दिवसे स अन्यदु अन्यदेव उक्तविलक्षणमेव करोति । तदेव विक्रियते । असच्च अशुभमशनिपातादिकं सत् वर्षणादिकं शोभनं कर्म च । यद्वा विश्वरूपवधादिकमसत्कर्म वृत्रवधादिरूपं सत्कर्म । मुहुः पुनः आचक्रिः कर्ता भवति । करोतेः कर्तरि किः लिड्भावश्च । अत्र अस्मिन् यज्ञे नः इन्द्रप्रेरितैरस्माभिः मित्रो वरुणः पूषा च अर्यः पूज्यः अस्तु ।

अनेन अग्रे भवमग्रम्, भवार्थप्रत्ययलोपः, शुभमशुभं च कर्म कदाचिदशनिपाताद् वर्षणादेः पूर्वमुत्पत्तेः, तथा चासच्छब्दवद् विरुद्धोभयवाची अग्रशब्दः । अग्राणि शुभाशुभकर्माणि नयतीत्यग्रणीः । नयतेः कर्तरि क्विप् इति निरुक्तेः अग्रणीमूर्तिरत्र ॥ २२४ ॥

॥ ॐ ग्रामण्यै नमः ॥

**वशस्य पर्येतास्ति । वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरिन्द्रानयन्त यज्ञैः । तं त्वाभिः सुष्टुतिभिर्वाजयन्तः ॥ २२५ ॥**

हे इन्द्र त्वमस्माकं वशस्य, वश कान्तौ ततो भावे विच्, कमनीयस्य अभीष्टग्रामस्य पर्येता प्रापकः अस्ति अस्तु । हे इन्द्र तव स्तोतारो भरद्वाजाः वाजयन्तः अन्नादिभोगमिच्छन्तः पर्वतस्य पृष्ठादुपरिभागात् वृष्टा आपो न आप इव त्वत् त्वत्सकाशात् यज्ञैः यज्ञसाधनैः आभिः सुष्टुतिभिः उक्थेभिः उक्थस्तोत्रैः तं त्वामाराध्य अन्नादिभोगं वि अनयन्त आत्मानं प्रति प्रापयामासुः।

अनेन कमनीयमभीष्टग्रामं नयतीति ग्रामणीः इति निरुक्तेः ग्रामणीमूर्तिरत्र ॥ २२५ ॥

॥ ॐ श्रीमते नमः ॥

**आजिं न जग्मुर्गिर्वाहो अश्वाः । न यं जरन्ति शरदो न**
**मासा न द्याव इन्द्रमवकर्शयन्ति ॥ २२६ ॥**

हे गिर्वाहः वेदप्रतिपाद्य इन्द्र अश्वा आजिं न युद्धमिव त्वद्भक्ता अपि अभीष्टं जग्मुः प्रापुः। यमिन्द्रं शरदः संवत्सरा न जरन्ति न जरयन्ति नापक्षीणयन्ति तथा मासाश्च नापक्षीणयन्ति। तथा द्यावः दिवसाश्च तमिन्द्रं नावकर्शयन्ति नाल्पीभावयन्ति। मासादिभिरनल्पकान्तिरिति यावत्। उत्तरेण सम्बन्धः।

अनेन श्रयत इति श्रीः कान्तिः, असाधारण्येन व्यपदेशा भवन्ति, शरन्मासदिवसादिभिरनपक्षीण-कान्तिरस्यास्तीति निरुक्तेः **श्रीमन्मूर्तिरत्र** ॥ २२६ ॥

॥ ॐ न्यायाय नमः ॥

**वृद्धस्य चिद् वर्धतामस्य तनूः स्तोमेभिरुक्थैश्च शस्यमाना।**
**न वीळवे नमते न स्थिराय न शर्धते दस्युजूताय॥ २२७॥**

वृद्धस्य चित् नित्यप्रवृद्धस्याप्यस्येन्द्रस्य स्तोमेभिः अस्मदीयैः स्तोत्रैः उक्थैः शस्त्रैश्च शस्यमाना स्तूयमाना तनूः वर्धतां प्रवृद्धा भवतु। अयमिन्द्रः वीळवे दृढाय दार्ढ्यवते जनाय न नमते न वशो भवति। नाध्यक्षीक्रियते। एवं स्थिराय स्वसिद्धान्ते स्थैर्यवते अचलितायापि न नमते। दार्ढ्यस्थैर्यादिसाधनशतैरपि न व्यक्तो भवति। तदव्यक्तमाह हीति सूत्रात् स्वतोऽव्यक्तमेव। किं पुनः दस्युजूताय बह्मस्तेनप्रेरिताय मिथ्याज्ञानमुपदिष्टाय[१] जनाय न नमतीति वक्तव्यम्।

अनेन नितरां तन्वाऽपि आयः वृद्धिर्यस्येति वा, निशब्दो नञर्थे आयः आयमनं वशीकरणं, न विद्यते आयः वशीकरणं यस्येति वा, या प्रापण इत्यस्य कर्मणि डः यः गम्यः स न भवतीति अयः नितराम् आ निःशेषं अयः गम्यो न भवतीति वा न्यायः इति निरुक्तेः **न्यायमूर्तिरत्र**॥ २२७॥

॥ ॐ नेत्रे नमः ॥

**स्तवान्। अज्रा इन्द्रस्य गिरयश्चिद् ऋष्वा गम्भीरे चिद् भवति**
**गाधमस्मै। गम्भीरेण न उरुणामत्रिन्॥ २२८॥**

ष्टुञ् स्तुतौ भावे डः स्तं स्तोत्रमस्यास्तीति स्तवान् अस्मत्स्तोत्रविषयः। तस्येन्द्रस्य ऋष्वा महान्तः

---

१. मिथ्याज्ञानोपदेशवते जनाय न प्रत्यक्षो भवति, न वशीक्रियते चेति किमु वक्तव्यमित्यर्थः।

गिरयश्चित् गिरयोऽपि अज्राः छेत्तुं शक्या एव । एवमतिबलवानिन्द्रः गम्भीरे चित् नीचस्थाने स्थितः गाधं उन्नतस्थ इव भवति उत्कृष्टो वर्तते स्थानगतदोषलेपस्तारतम्यं वा नास्ति । हे अमत्रिन् बलवन् इन्द्र त्वं सर्वत्र गम्भीरेणानवगाह्येन मनसा नः पाहि ।

तेन महतः पर्वतानपि छेदनं नयति, महान्तोऽपि पर्वता अस्य अज्राः, अज गतिक्षेपणयोः, क्षिप्यमाणा भवन्तीति यावत्, अथवा नेतृशब्देनोत्कृष्टो राजादिरुच्यते, नीचस्थानस्थितोऽप्यनत एव उत्कृष्ट एव इति निर्वचनात् **नेतृमूर्तिरत्र** ॥ २२८ ॥

**॥ ॐ समीरणाय नमः ॥**

**प्रेषो यन्धि सुतपावन् वाजान् । स्था ऊ षु ऊर्ध्व ऊती**
**अरिषण्यन्नक्तोर्व्युष्टौ परितक्म्यायाम् । सचस्व नायम् ॥ २२९ ॥**

हे सुतपावन् सोमपात इन्द्र नः अस्मभ्यमिषः अन्नानि वाजान् बलानि च प्रयन्धि प्रयच्छ, यमश्छत्वाभावो विकरणव्यत्ययश्च । अक्तोः रात्रौ व्युष्टौ विवासे प्रातः परितक्म्यायां रात्रौ एवमहोरात्रं सर्वदा । हिंसार्थाद् ऋषेः कर्तरि कर्मणि वा अण्यप्रत्यये शत्रन्तस्येदं रूपम्, ऋषण्यं न भवतीत्यरिषण्यत्, तस्य सम्बुद्धिः हे अरिषण्यन् अहिंसक वा अहिंस्य वा त्वम् ऊती ऊतीः प्रेरणाः अस्मत्प्रेरणामुद्दिश्य ऊर्ध्वः उद्युक्तः सु सम्यक् स्थाः तिष्ठ उ एव । अहोरात्रमस्मत्प्रेरणोद्युक्तो भव । नायं कर्मणां स्तुतीनां च नेतारं भक्तजनं सचस्व सेवस्व फलदानेन ।

अनेन सं सन्ततमहोरात्रम् ईरणा प्रेरणा यस्येति वा सं समीचीनं स्वकर्मणि स्थितं जनं प्रति ईरणं फलप्रापणं यस्य (येन) सः इति वा निरुक्तेः **समीरणमूर्तिरत्र** ॥ २२९ ॥

**॥ ॐ सहस्रमूर्ध्ने नमः ॥**

**अवसे अभीक इतो वा तमिन्द्र पाहि रिषः । अमा चैनमरण्ये**
**पाहि रिषो मदेम शतहिमाः सुवीराः ॥ २३० ॥**

हे इन्द्र त्वमभीके संग्रामे तं भक्तजनम् अवसे रक्षणाय इतः अस्मात् सन्निकृष्टाद् वाशब्दादमुतः विप्रकृष्टाच्च रिषः शत्रोः पाहि । तथा अमा च, गृहनामैतत्, गृहे अरण्ये कानने च रिषः शत्रोः पाहि । ततश्च वयं सुवीराः शोभनपुत्राः सन्तः शतहिमाः सहस्रसंवत्सरायुषः मदेम हृष्येम ।

अनेन मूर्धशब्दः सर्वस्य गात्रस्य शिरः प्रधानमित्युक्तेः प्रधानपरः, सहस्रशब्दो बहुकालपरः, सहस्रेषु शतेषु कालेषु भक्तो जनः हर्षादिना प्रधानो भवति यस्मात् सः इति निरुक्तेः सहस्रमूर्धमूर्तिरत्र ॥ २३० ॥

॥ ॐ विश्वात्मने नमः ॥

[1]या त ऊतिरवमा या परमा या मध्यमेन्द्र शुष्मिन्नस्ति ।
ताभिरू षु वृत्रहत्येऽवीर्न एभिश्च वाजैः ॥ २३१ ॥

हे शुष्मिन् बलवन् इन्द्र त्वयि या ऊतिः दानम् अवमा अधमा अस्ति या च परमा उत्तमा या च मध्यमा अस्ति ताभिः एवमधमोत्तममध्यमार्थविषयतया त्रिविधाभिरूतिभिः दानैः वृत्रहत्ये युद्धे नः अस्मान् सु सम्यक् अवीः सर्वान् पुरुषार्थान् दत्वा पालय। किञ्च एभिर्भोगसाधनैः वाजैः अन्नैश्च नः अवीः ।

अनेन यच्चाप्नोति यदादत्ते यदत्ति विषयानिहेत्युक्तेः आङ् पूर्वाद् ददातेः कर्तरि मनिन् धात्वाकारलोपः दस्य च तः तथा चात्मशब्देन दानकर्तोच्यते। विश्वानि अधमोत्तममध्यमार्थविषयतया त्रिविधान्यपि दानानि यस्मात् भवन्तीति यावत् इति निरुक्तेः विश्वात्ममूर्तिरत्र ॥ २३१ ॥

॥ ॐ सहस्राक्षाय नमः ॥

महान् न उग्र। आभिः स्पृधो मिथतीररिषण्यन्नमित्रस्य
व्यथया मन्युमिन्द्र। आभिर्विश्वा अभियुजः ॥ २३२ ॥

हे उग्र महान् त्वं विश्वाः समस्ताः अभियुजः संयुक्ताः मिथतीः हिंसतीः शत्रुसैन्यानि व्यथया व्यथय। स्पृधः अस्मत्सेनाः अरिषण्यन् अहिंसन् आभिः स्तुतिभिः पालयन् नः अमित्रस्य शत्रोः मन्युं कोपम् आभिरेव स्तुतिभिः व्यथय।

अनेन सहस्राः सहस्रसंख्याकाः शत्रुसेनाः आ सम्यक् क्षिणोति व्यथयतीति सहस्राक्षः, क्षिणोतेः कर्तरि डः इति निरुक्तेः सहस्राक्षमूर्तिरत्र ॥ २३२ ॥

---

१. ऋग्वेद ६-२५, बार्हस्पत्यो भरद्वाजः।

॥ ॐ सहस्रपाते नमः ॥

**विषूचीरार्याय विशोऽव तारीर्दासीः । इन्द्र जामय उत**
**येऽजामयोऽर्वाचीनासो वनुषो युयुज्रे । त्वमेषाम् ॥ २३३ ॥**

हे इन्द्र विषूचीः सर्वतो वक्रगतीः दासीः कर्मणामुपक्षपयित्रीः विश्वाः समस्ताः सहस्रसंख्याकाः विशः प्रजाः आर्याय यज्ञादिकर्मकृते तद्रक्षार्थम् अवतारीः विनाशय । हे इन्द्र जामयः जामिवत् सह स्थिताः सन्निकृष्टाः ये शत्रवः अजामयः दूरे स्थिताश्च ये शत्रवः अर्वाचीनासः अधमाः वनुषः हिंसकाः युयुज्रे उद्युक्ता भवन्ति । तेषामेषामुभयविधानां शत्रूणां कर्माणि अवतारीः विनाशयेति सम्बन्धः ।

अनेन सहस्राः बहुसंख्याका विशः पातयतीति सहस्रपात् इति निरुक्तेः **सहस्रपान्मूर्तिरत्र** ॥ २३३ ॥

॥ ॐ आवर्तनाय नमः ॥

**विथुरा शवांसि जहि वृष्ण्यानि कृणुही पराचः । शूरो वा**
**शूरं वनते शरीरैस्तनूरुचा तरुषि यत् ॥ २३४ ॥**

हे इन्द्र त्वमेषामित्यनुवर्तते । एषां सन्निकृष्टानां विप्रकृष्टानामपि शत्रूणां शवांसि सुखानि विथुरा विधुराणि शिथिलानि कृणुहि कुरु । एषां वृष्ण्यानि बलानि जहि नाशय । एवमुभयविधान् शत्रून् पराचः पराङ्मुखान् कृणुहि कुरु । यत् येन शत्रुबलविनाशादिना तरुषि युद्धे शूरो वा अशूरो वा भक्तजनः शूरमपि वैरिणं तनूरुचा शरीरकान्त्या शरीरैः हस्तपादादिभिरेव वनते संहरति संहरेत् ।

अनेन आ समन्तात् स्थितान् सन्निकृष्टान् विप्रकृष्टांश्च पराचो वर्तयति इति निरुक्तेः **आवर्तन-मूर्तिरत्र** ॥ २३४ ॥

॥ ॐ निवृत्तात्मने नमः ॥

**कृण्वैते । तोके वा गोषु तनये यदप्सु वि क्रन्दसी उर्वरासु**
**ब्रवैते । न हि त्वा शूरो न तुरो न धृष्णुः ॥ २३५ ॥**

हे इन्द्र तोके पुत्रे तनये तत्पुत्रे गोषु पशुषु अप्सु उदकादिभोग्येषु उर्वरासु सर्वसस्याढ्यासु भूमिषु, निमित्तसप्तम्यः, भूम्यादिप्राप्त्यर्थं क्रन्दसी क्रन्दमानौ आक्रोशन्तौ जनौ वि ब्रुवेते विवादं कुर्वाते ।

युद्धं कृण्वैते कुर्वति च। तन्मध्ये त्वद्भक्तेन अशूरेणापि अभक्तं शूरमपि निवर्तयसि। यतः शूरः विक्रान्तोऽपि त्वा त्वां प्रति नहि युयोध न युद्ध्येत्। तथा तुरः हिंसकः त्वरावान् वा न हिंसेत्। धृष्णुः धर्षकोऽपि त्वां न दधर्ष। अतस्त्वद्भक्तोऽपि तादृश एवेति भावः।

तेन निवृत्तः आत्मा प्रतिभटो यस्मात् स इति निरुक्तेः **निवृत्तात्ममूर्तिरत्र** ॥ २३५ ॥

॥ ॐ संवृताय नमः ॥

**न त्वा योधो मन्यमानो युयोध। इन्द्र नकिष्ट्वा प्रत्यस्त्येषां**
**विश्वा जातान्यभ्यसि तानि। स पत्यत उभयोः ॥ २३६ ॥**

हे इन्द्र मन्यमानः क्रुध्यमानः स्वात्मानमधिकत्वेन मन्यमानो वा योधः योद्धृन् न युयोध न योद्धुं समर्थः। हे इन्द्र एषां योद्धृणां मध्ये त्वां प्रति प्रतियन्ता न किः अस्ति नैवास्ति। प्रत्युत विश्वा समस्तानि जातानि तानि प्रसिद्धानि अभिभावकोसि। एवमतिबलेन संवृतोसीति यावत्। उभयोः भक्ताभक्तयोः योद्ध्रोर्मध्ये स एव भक्त एव पत्यते पद्यते प्राप्नोति सुखमन्यत् तु न प्राप्नोति।

अनेन सं समीचीनेन बलेन वृत इति निरुक्तेः **संवृतमूर्तिरत्र** ॥ २३६ ॥

॥ ॐ सम्प्रतर्दनाय नमः ॥

**नृम्णमयोर्यदी वेधसः समिथे हवन्ते। वृत्रे वा महो**
**नृवति क्षये वा व्यचस्वन्ता यदि वितन्तसैते ॥ २३७ ॥**

हे इन्द्र यदी, अयं निपातो यावित्यर्थे, यौ जनौ महः महति वृत्रे (कल्याणे) ज्ञाने वा नृवति दासादिमति क्षये गृहे वा, निमित्तसप्तमी, एतानि प्राप्तुं व्यचस्वन्ता व्यचस्वन्तौ प्राप्तवन्तौ सन्तौ वितन्तसैते, तसेरुपक्षयकर्मणो विपूर्वस्य रूपमेतत्, अयोः नलोपः अनयोः मध्ये यदि यस्य जनस्य समिधे यज्ञे वेधसः कर्मणां विधातारः ऋत्विजः त्वां हवन्ते स्तुवन्ति स जनः नृम्णः धनं सुखं वा पत्यते प्राप्नोतीति सम्बन्धः। अन्यस्तु हिंस्यत इति यावत्।

तेन सम्यक् अभक्तान् तर्दयति हिनस्तीति निरुक्तेः **सम्प्रतर्दनमूर्तिरत्र**। सम्प्रमर्दन इति पाठे सम्प्रमर्दयतीति निरुक्तेः ॥ २३७ ॥

॥ ॐ अहःसंवर्तकाय नमः ॥

**अध स्मा ते चर्षणयो यदेजानिन्द्र त्रातोत भवा वरूता ।**
**अस्माकासो ये नृतमासो अर्य इन्द्र सूरयः ॥ २३८ ॥**

अध अथ किञ्च हे इन्द्र ते त्वदीयाः चर्षणयः प्रजाः यत् यदा एजान् एजेयुः भीत्या कम्पेयुः तदा त्वं तासां त्राता भव। किञ्च वरूता वरणीयश्च भव न त्याज्य इति यावत्। अस्माकासः अस्मदीयाः नृतमासः नेतृतमाः ये मनुष्याः त्वाम् अर्यः अरयः प्राप्तुमिच्छवः शिष्यवर्गाः तेषां त्राता भव। हे इन्द्र ये सूरयः ज्ञानिनः तेषामपि त्राता वरूता तैर्वरणीयश्च भव।

तेन अहर्दिनं प्रकाशश्चेत्युक्तेः प्रकाशवाचिनोऽहःशब्दात् मत्वर्थीयः, तस्य लुक्। अहः भक्तजनं ज्ञानिनं सं सम्यग् भयपरिहारादिना वर्तयतीति निरुक्तेः अहःसंवर्तकमूर्तिरत्र ॥ २३८ ॥

॥ ॐ वह्नये नमः ॥

**दधिरे पुरो नः। अनु ते दायि मह इन्द्रियाय सत्रा ते**
**विश्वमनु वृत्रहत्ये। अनु क्षत्रम् ॥ २३९ ॥**

हे इन्द्र नः अस्मान् पुरः अग्रे दधिरे स्थापितवन्तः, उपदेशादिना अस्मानग्रगण्यानकुर्वन् ये गुरवः, ते तेषामपि त्राता भवेति पूर्वेण सम्बन्धः। यः वृत्रहत्ये युद्धे महे महते महान्तम् इन्द्रियाय इन्द्रियप्रवर्तकं ते त्वाम् अनु अनुसृत्य वर्तते तस्मै क्षत्रं क्षात्रं बलं ते त्वया दायि अदायि दत्तम्। विश्वं येन शत्रूनभिभवति तद् गुणजातं बलादिसमस्तं सत्रा सह युगपदेव त्वया दायि। योद्धॄणां बलादिगुणप्रापक इति यावत्।

अनेन वहतेः करणे णिच्, उह्यते युद्धादिकमनेनेति वह् बलं तन्नयतीति निरुक्तेः **वन्हिमूर्तिरत्र** ॥ २३९ ॥

॥ ॐ अनिलाय नमः ॥

**अनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये। एवा नः**
**स्पृधः समजा समत्स्विन्द्र रारन्धि मिथतीरदेवीः ॥ २४० ॥**

हे यजत्र यजनीय इन्द्र ते त्वामनुवर्तमानस्य सहः बलं नृषह्ये युद्धे देवेभिर्देवैः दायि दापितम्। हे इन्द्र एवं स्तुतस्त्वं नः अस्मदीयाः स्पृधः शत्रुसेनाः समत्सु संग्रामेषु अनु, यथा वायुरिति शेषः, समज अनिलवत् प्रक्षिप। किञ्च मिथतीर्हिंसतीः अदेवीः आसुरीः सेनाः ररन्धि रन्धय हिंसय।

अनेनानिलवत् शत्रुसेनाप्रक्षेपकत्वादनिल इति निरुक्तः **अनिलमूर्तिरत्र** ॥ २४० ॥

॥ ॐ धरणीधराय नमः ॥

**विद्याम वस्तोरवसा गृणन्तो भरद्वाजा उत त इन्द्र नूनम्।**
**[1]अभूरेको रयिपते रयीणाम्॥ २४१॥**

उत अपि च हे इन्द्र ते त्वत्तः गृणन्तः त्वां स्तुवन्तः भरद्वाजा वयम् अवसा अन्नेन सह वस्तोः वस्तुं नूनमवश्यं विद्याम लभेमहि। अन्नादिभोगेन सहैव वासं कुर्मः। हे रयिपते धनपते इन्द्र रयीणां धनानां एकः प्रधानो दाता अभूः अभवः।

अनेन ध्रियते पुमान् पुरुषार्थायानयेति धरणी स्तुतिः। धरतेः करणे ल्युट् स्त्रियां ङीप्। धरणीं धरतीति[2] धरणीधाः, धात्रः कर्तरि डः, भरद्वाजाख्याः। तानन्त्रादिना रमयतीति धरणीधर इति निरुक्तः **धरणीधरमूर्तिरत्र** ॥ २४१ ॥

॥ ॐ सुप्रसादाय नमः ॥

**आ हस्तयोरधिथा इन्द्र कृष्टीः। वि तोके अप्सु तनये**
**च सूरेऽवोचन्त चर्षणयो विवाचः। त्वद् भियेन्द्र पार्थिवानि॥ २४२॥**

हे इन्द्र कृष्टीः प्रजाः हस्तयोर्बाह्वोः अधिथाः सम्यग् धत्से। सर्वं जगत् त्वदाज्ञया वर्तते। यद्वा समस्ताः प्रजाः हस्तयोः पाण्योः धत्से अतिप्रेम्णा पिता पुत्रानिव पाण्योर्धारयसि। किञ्च चर्षणयः प्रजाः तोकेषु पुत्रप्राप्त्यर्थं अप्सु अब्रादिभोगप्राप्त्यर्थं च सूरे शत्रूणां हिंसके तनये पौत्रप्राप्त्यर्थं विवाचः विशिष्टाः स्तुतीः व्यवोचन्त विविधं ब्रुवन्ति। हे इन्द्र त्वद्भिया तव भीत्या पार्थिवानि सस्यादीनि, पृथिवी जनयतीति शेषः।

---

१. ऋग्वेद ६-३१, सुहोत्रो भारद्वाजः।
२. दधतीति पाठः युक्तः स्यात्।

अनेन सु समीचीनाः प्रजाः पिता पुत्रानिव प्रकर्षेण हस्तयोरासादयति धारयतीति वा, सस्यादीनि पृथिव्यां प्रसादयति प्रसाधयति उत्पादयतीति वा निरुक्तेः **सुप्रसादमूर्तिरत्र** ॥ २४२ ॥

॥ ॐ प्रसन्नात्मने नमः ॥

**विश्वाऽच्युता चिच्च्यावयन्ते रजांसि । द्यावाक्षामा**
**पर्वतासो वनानि विश्वं दृळ्हं भयते अज्मन्ना ते ॥ २४३ ॥**

हे इन्द्र त्वद्भिया तव भयेन मेघा अच्युताः अच्युतानि च्यावयितुमशक्यानि चित् अपि विश्वा समस्तानि रजांसि उदकानि च्यावयन्ते च्यावयन्ति वर्षन्तीत्यर्थः। अपि च हे इन्द्र अज्मन् अज्मनि आगमे सति, द्यावा द्यौः क्षामा क्षमैव पृथिवी द्यावापृथिव्यौ, पर्वतासः गिरयः वनानि वृक्षाश्च भयन्ते भयं प्राप्नुवन्ति। किं बहुना। सर्वं प्राणिजातं दृळ्हं स्थिरमपि भयते बिभेति।

अनेन प्रसन्नाः विषण्णाः पर्जन्यद्यावापृथिव्यादिसमस्ताः आत्मानः चेतनाः सेवकाः यस्य स इति निरुक्तेः **प्रसन्नात्ममूर्तिरत्र** ॥ २४३ ॥

॥ ॐ विश्वदृशे नमः ॥

**त्वं कुत्सेनाभि शुष्णमिन्द्राऽशुषं युध्य कुयवं गविष्टौ ।**
**दश प्रपित्वे अध सूर्यस्य मूषायश्चक्रमविवेः ॥ २४४ ॥**

हे इन्द्र त्वं कुत्सेन सह अशुषं शोषयितुमशक्यं प्रबलं शुष्णं सर्वस्य शोषकत्वात् तन्नामानमसुरं अभि युध्य अभ्ययुध्यः, कुत्सस्य सहाये अर्थितस्तेनासुरेण युद्धं कृतवानित्यर्थः। तथा गावः बाणाः इच्छन्ति गच्छन्त्यत्रेति गविष्टः संग्रामः, तस्मिन् कुयवम् एतत्संज्ञकमसुरं दश अदंशः हिंसितवानसि। दंश दशने इत्येतस्य छान्दसं रूपमिदम्। अथ किञ्च अविवेः अस्माल्लोकादगमयः, अवधीरित्यर्थः। प्रपित्वे प्रपतने युद्धे सूर्यस्य चक्रं रथावयवं मुषायः अमुष्णाः। तदाप्रभृति सूर्यस्य रथ एकचक्रोऽभूत्। तथा चाम्नातं सप्त युञ्जन्ति रथमेकचक्रमिति। एतदाख्यऋषेः सूर्येण सह युद्धे सति तत्सहायार्थमागत इन्द्रः सूर्यस्य चक्रमपहृतवानित्याख्यानम्। सूरश्चक्रं प्रवृहज्जात ओजसेति निगमान्तरम्।

तेन विश्वानि शुष्णकुयवादिरक्षांसि दंशतीति विश्वदृक्। दंशेः कर्तरि क्विप् अनुस्वारस्य लोपः, उपधाकारस्य ऋकार इति निरुक्तेः **विश्वदृङ्मूर्तिरत्र** ॥ २४४ ॥

॥ ॐ विश्वभुजे नमः ॥

रपांसि । त्वं शतान्यव शम्बरस्य पुरो जघन्थाप्रतीनि
दस्योः । अशिक्षो यत्र शच्या शचीवो दिवोदासाय ॥ २४५ ॥

हे शचीवः प्रज्ञावन् यत्र यस्मिन् काले दिवोदासाय शच्या प्रज्ञया अशिक्षः धनानि प्रादाः । किञ्चास्य दिवोदासस्य रपांसि पापकर्माणि अव जघन्थ हिंसितवान् । तदा तस्मिन् काले त्वं शतानि बहुसंख्यानि दस्योः उपक्षपयितुः शम्बरस्य तत्संज्ञासुरस्य अप्रतीनि, लिङ्गव्यत्ययः, केनाप्यप्रतिगताः अनुपमा वा पुरः पुरीः अवजघन्थ हतवानसि ।

तेन विश्वानि बहुसंख्यानि शम्बराद्यसुरपुराणि भुनक्ति हिनस्तीति विश्वभुक् । विश्वशब्दे कर्मण्युपपदेऽभ्यवहारार्थस्य भुजेः कर्तरि क्विप् इति निरुक्तेः **विश्वभुङ्मूर्तिरत्र** ॥ २४५ ॥

॥ ॐ विभवे नमः ॥

सुन्वते सुतक्रे भरद्वाजाय गृणते वसूनि ।
स सत्यसत्वन् महते रणाय रथमा तिष्ठ ॥ २४६ ॥

हे सुतक्रे अभिसुतेन सोमेन क्रीत वशीकृत इन्द्र सुन्वते गृणते भरद्वाजाय वसूनि प्रादाः । हे सत्यसत्वन् सत्या विशिष्टाः सत्वानो भावा बलादयो धर्मा यस्य स तथोक्तः । स त्वं महते रणाय रथमातिष्ठ ।

तेन भवतीति भुः बलादिधर्मः । भवतेः कर्तरि डुः । वि विशिष्टः भुः बलादिधर्मः यस्य स विभुः । यद्वा वि विशिष्टरथे भवति सन्निहितो भवतीति विभुः पूर्ववत् डुः । इति निरुक्तेः **विभुमूर्तिरत्र** ॥ २४६ ॥

॥ ॐ सत्कर्त्रे नमः ॥

तुविनृम्ण भीमम् । याहि प्रपथिन्नवसोप मद्रिक् प्र च
श्रुत श्रावय चर्षणिभ्यः ।[1] अपूर्व्या पुरुतमान्यस्मै ॥ २४७ ॥

---

१. ऋग्वेद ६-३२, सुहोत्रो भारद्वाजः ।

हे तुविनृम्ण बहुसुख भीमं रथमास्थाय अवसा अन्नेन सह मद्रिक् मत्समीपमुपयाहि । हे प्रपथिन् प्रकृष्टमार्गदातः यद्वा प्रकृष्टमार्गभूत, एष पन्था एतत् कर्मेत्युक्तेः, श्रुत विश्रुत प्रसिद्ध इन्द्र नर्षणिभ्यः प्रश्रावय च अस्मान् प्रख्यापय च। वयं चास्मै तुभ्यम् अपूर्व्या अपूर्वाणि अन्यैरकृतानि पुरुतमानि बहूनि स्तोत्राणि कुर्मः ।

अनेन भक्तान् सतः प्रख्यातान् करोतीति निरुक्तेः **सत्कर्तृमूर्तिरत्र** ॥ २४७ ॥

**॥ ॐ सत्कृतये नमः ॥**

**महे वीराय तवसे तुराय । विरप्शिने वज्रिणे शन्तमानि**
**वचांस्यासा स्थविराय तक्षम् । स मातरा ॥ २४८ ॥**

महे महते वीराय तवसे प्रकाशमानाय तुराय त्वरमाणाय विरप्शिने विशिष्टबलवते स्थविराय पुरातनाय वज्रिणे इन्द्राय तत्प्रीत्यर्थं शन्तमानि सुखकृत्तमानि वचांसि स्तुतिरूपाणि वाक्यानि आसा आस्येन तक्षम् अतक्षम् अकरवम् । स मातरेत्यस्योत्तरेण सम्बन्धः ।

तेन सती समीचीना कृतिः स्तुतिनिर्माणरूपा कृतिर्यस्मिन् स इति निरुक्तेः **सत्कृतिमूर्तिरत्र** ॥ २४८ ॥

**॥ ॐ साधवे नमः ॥**

**सूर्येणा कवीनामवासयद् रुजदद्रिं गृणानः । स्वाधीभिर्ऋक-**
**भिर्वावशान उदुस्रियाणामसृजन्निदानम् ॥ २४९ ॥**

स इन्द्रः उस्रियाणां बलेनापहृतगवां अदर्शनाय स्थापितमद्रिं रुजत् अरुजत् बभञ्ज । तेन च उस्रियाणां बलभृत्यैः पणिभिरपहृतानां गवां निदानं बन्धनं उदसृजत् अमोचयत् । किञ्च स्वाधीभिः सम्यग्ध्यानशीलैः बुद्धिमद्भिर्वा ऋक्वभिः स्तोतृभिः वावशानः पुनःपुनः काम्यमानः गृणानः भक्तैः स्तूयमानः स इन्द्रः कवीनां क्रान्तदर्शिनामङ्गिरसामर्थाय मातरा मातरौ दिवं पृथिवीं च सूर्येण अवासयत् प्राकाशयत् । गोनिर्बन्धनहेतोः पर्वतस्य भङ्गेन सूर्यप्रकाशप्रतिबन्धकनिरसनं चाभूत् ।

तेन धृञ् कम्पन इत्यस्माद् भावे डुः । आ सम्यग् धुः कम्पनं बलासुरापहृतगवामदर्शनार्थं

स्थापितशिलायाः कम्पनं, तेन सह वर्तते तत् करोतीति यावत्। तथा च आधुना शिलाकम्पनेन शिलाप्रतिक्षेपणेन सहितः साधुरिति निरुक्तेः **साधुमूर्तिरत्र** ॥ २४९ ॥

**॥ ॐ जह्नवे नमः ॥**

**स वह्निभिर्ऋक्वभिर्गोषु शश्वन् मितज्ञुभिः पुरुकृत्वा जिगाय।**
**पुरः पुरोहा सखिभिः सखीयन् दृळ्हाः ॥ २५० ॥**

पुरुकृत्वा, नान्तोऽयम्, बहुकर्मकृत् स इन्द्रः वह्निभिर्वोढृभिः ऋक्वभिः स्तोतृभिः शश्वत् सर्वदा मितज्ञुभिः सङ्कुचितजानुभिः, आसनजयादिमद्भिरिति यावत्, अङ्गिरोभिः एतत्प्रभृतिसात्विकजनैः सह गोषु वलापहृतगोप्राप्त्यर्थं जिगाय असुरान् जितवान्। तदेव किञ्चिद् विवृणोति। पुरोहा पुराणां हन्ता स इन्द्रः सखिभिः समानस्थानैरङ्गिरोभिः सह सखीयन् सखित्वमात्मन इच्छन्, अन्यमन्यमति नेनीयमान इति श्रुतेः, तान् सात्विकजनानुत्कृष्टान् कुर्वन् दृळ्हा दृढाः स्थिराः पुरः असुरपुरीः अज्ञानादिततीर्वा जिगाय जितवान्।

अनेनासुरैः सह सख्यं जहाति सुरैः सह सख्यं करोति, शृण्वे वीरमुग्रमुग्रं दमायन्निति श्रुतेः, ओ हाक् त्यागे ओ हाक् गतौ इत्याभ्यां धातुभ्यां नुः, द्विर्वचनादि, इति निरुक्तेः **जन्हुमूर्तिरत्र** ॥२५०॥

**॥ ॐ नारायणाय नमः ॥**

**रुरोज कविभिः कविः सन्। स नीव्याभिर्जरितारमच्छा**
**महो वाजेभिर्महद्भिश्च शुष्मैः। पुरुवीराभिः ॥ २५१ ॥**

हे इन्द्र स भवान् कविभिः क्रान्तप्रज्ञैरङ्गिरोभिः सह तद्धितार्थं कविः निरुपचरितसर्वज्ञः सन् आसुरीः पुरीः रुरोज बभञ्ज। भङ्क्त्वा च महः महद्भिः वाजेभिरन्नैः महद्भिः शुष्मैर्बलैश्च सह जरितारं स्तोतारमच्छ आभिमुख्येन नीव्याभिर्नव्याभिः नवतराभिः पुरुवीराभिः पुरूणां बहूनां वीरयत्रीभिः वडवादिभिः अन्नादिकं दातुम्, आप्रयाहीति सम्बन्धः।

अनेन नराणामिदं नारमन्नबलादिदातृत्वेन तदाश्रयत्वात् नारायण इति निरुक्तेः **नारायणमूर्ति-रत्र** ॥ २५१ ॥

॥ ॐ नराय नमः ॥

**वृषभ क्षितीनामा गिर्वणः सुविताय प्र याहि ।**
**स सर्गेण शवसा तक्तो अत्यैरप इन्द्रो दक्षिणतस्तुराषाट् ॥ २५२ ॥**

हे क्षितीनां वृषभ प्रजानां स्वामिन् हे गिर्वणः वेदवेद्य इन्द्र सुविताय रक्षणाय आ प्रयाहि । तुराषाट् वैरिवेगसहः त्वं सर्गेण सर्वदोद्युक्तेन शवसा बलेन, सर्गेण जगत्सृष्ट्यादिना जातेन शवसा कीर्त्या च अत्यैः सततगामिभिरश्वैः तेजोभिर्वा तक्तः सङ्गतः सन् दक्षिणतः दक्षिणायने अपः, विसृजसीति शेषः ।

तेन अपः नक्षति भुवं गमयति विसृजतीति, नक्ष गतावित्यस्मात् कः, क्षकारस्य रेफादेश इति निरुक्तेः **नरमूर्तिरत्र** ॥ २५२ ॥

॥ ॐ असंख्येयाय नमः ॥

**इत्था सृजाना अनपावृदर्थं दिवेदिवे विविषुरप्रमृष्यम् ।**
**[1]य ओजिष्ठ इन्द्र तं सु नो दा मदः ॥ २५३ ॥**

इत्था इत्थं अनेन प्रकारेण सृजाना सृज्यमानास्ता आपः अर्थं गन्तव्यम् अप्रमृष्यमन्यैरक्षोभ्यं पारं गन्तुमशक्यं असंख्यं समुद्रं दिवेदिवे प्रतिदिनम् अनपावृत्, क्रियाविशेषणम्, अपावर्तनं पुनरागमनं यथा न भवति तथा विविषुः विविशुः प्राप्नुवन्ति । हे इन्द्र य ओजिष्ठः ओजस्वितमः स्वसैन्यैरभिभवितुमशक्यः, असंख्य इति यावत्, मदः सुखविशेषः, तं मदं नः अस्मभ्यं सु सम्यग् दाः देहि ।

अनेनासङ्ख्यं समुद्रम् उदकानि प्रापयतीति वा, असङ्ख्यं मदं भक्तान् प्रापयतीति वा असङ्ख्येयः । असंख्यशब्दोपपदादिण् गताविति धातोरन्तर्णीतण्यर्थात् कर्मणि यक्प्रत्यय इति निरुक्तेः **असंख्येयमूर्तिरत्र** ॥ २५३ ॥

॥ ॐ अप्रमेयात्मने नमः ॥

**वृषन् त्स्वभिष्टिर्दास्वान् । सौवश्व्यं यो वनवत् स्वश्वो**
**वृत्रा समत्सु सासहदमित्रान् । त्वां हीन्द्रावसे विवाचो हवन्ते ॥ २५४ ॥**

१. ऋग्वेद ६-३३. शुनहोत्रो भारद्वाजः ।

हे वृषन् इन्द्र यः पुत्रः स्वभिष्टिः शोभनाभ्येषणः सम्यगपेक्षणीयः दास्वान् हविषां दानं दाः तद्वान् स्वश्वः शोभनाश्वः समत्सु सङ्ग्रामेषु सौवश्व्यं शोभनाश्वानां समूहं वनवत् हिंस्यात्, तथा वृत्रा वृत्रान् वारयितॄन् अमित्रान् शत्रूंश्च ससहदत्यर्थमभिभवेच्च तं पुत्रमस्मभ्यं देहीति सम्बन्धः। हे इन्द्र त्वां हि त्वामेव विवाचः विविधाः स्तुतिरूपा वाच येषां ते ऋत्विजः अवसे हवन्ते।

तेन प्रमातुं योग्यः प्रमेयः। माङ् मान इत्यस्य कर्मणि रूपमेतत्। मानं च पर्येषणम्। पर्येषण-विषयः अपेक्षणीयः। तत आङा सम्बन्धः। आ समन्तात् प्रमेयः सम्यगपेक्षणीयः अप्रमेयः। आङो ह्रस्वत्वम्। अप्रमेयं सम्यगपेक्षणीयं गुणाढ्यं पुत्रम् आ सम्यग् ददातीत्यात्मा। आङ् पूर्वकाद् ददातेर्मनिन् टिलोपो धातोर्दस्य च तः। यद्वा अप्रमेयः प्रमातुं हिंसितुं शत्रुभिः पराभावयितुमशक्यः, प्रत्युत तद्विपर्ययस्य सोढा पुत्रस्तं ददातीत्यप्रमेयात्मेति निरुक्तेः **अप्रमेयात्ममूर्तिरत्र** ॥ २५४ ॥

॥ ॐ विशिष्टाय नमः ॥

**चर्षणयः शूरसातौ। त्वं विप्रेभिर्वि पर्णीँ रशायस्त्वोत**
**इत् सनिता वाजमर्वा। त्वं ताँ इन्द्रोभयान्॥ २५५॥**

हे इन्द्र विप्रेभिः प्रकृष्टज्ञानैः चर्षणयः चर्षणीभिर्मनुष्यैः त्वं स्तुतो भवसि। किञ्च हे इन्द्र त्वं तान् प्रसिद्धान् उभयान् बाह्यात्मभेदेन द्विविधान् पणीन् वलसम्बन्धिनो दैत्यान् गोनिरोधकत्वात् तत्वज्ञानप्रतिबन्धकान् चक्षुरादीन्द्रियप्रेरकानसुरांश्च व्यशायः विशेषेण अशायः हतवान्। ततः त्वोत इत् त्वया रक्षित एव सात्विको जनः सनिता संभक्ता वाजं मौक्तिकभोगम्, अर्वा वृ गतौ अभिगन्ता च भवति।

अनेन विशेषेण शिष्टः स्तुत इति वा विशेषेण शत्रूणां शिष्टः शायिता वेति निरुक्तेः **विशिष्टमूर्तिरत्र** ॥ २५५ ॥

॥ ॐ शिष्टकृते नमः ॥

**अमित्रान् दासा वृत्राण्यार्या च शूर। वधीर्वनेव सुधितेभिरत्कैरा**
**पृत्सु दर्षि नृणां नृतम। स त्वं नः॥ २५६॥**

हे इन्द्र त्वं दासा दासान्, दस वेधने, कर्मविरोधिनः वृत्राणि लोकोपद्रवहेतून् आवरकान्

वलादीन् आर्या आर्यान् सात्विकत्वेप्यसुरावेशादिना छद्मवृत्तीन् विश्वरूपादींश्च, एवमुभयविधान् जनान् वधीः अवधीः। तत्प्रकारं लेशतो दर्शयति। नृणां नेतॄणां मध्ये हे नृतम अतिशयेन नेतः शूर इन्द्र स त्वं पृत्सु सङ्ग्रामेषु नः अमित्रान् वनेव वनानीव सुधितेभिः निशितेभिः अत्कैः, वज्रनामसु पाठात् वज्रनामैतत्, बहुवचनमाद्यर्थे वज्राद्यायुधैः आ सम्यग् दर्षि, दृञ् विदारणे[१], विदारयसि। यथा वृक्षजातानि कुठारेण छिनत्ति तद्वत्।

अनेन शिष्टं शासनं शत्रूणां विदारणं तत् करोतीति निरुक्तेः **शिष्टकृन्मूर्तिरत्र** ॥ २५६ ॥

॥ ॐ शुचये नमः ॥

**इन्द्राकवाभिरूती सखा विश्वायुरविता वृधे भूः।**
**स्वर्षाता यद्ध्वयामसि त्वा युध्यन्तो नेमधिता पृत्सु॥ २५७॥**

हे इन्द्र नेमधिता, सुत्वनेमावर्धस्येति वचनात् नेमोऽर्धः, नेमे कतिपयाः पुरुषा धीयन्ते अवशिष्यन्ते यत्रेति नेमधिताः। एवंभूतासु पृत्सु युद्धेषु शत्रुभिर्युध्यन्तो वयं स्वर्षाता स्वरः सुखस्य साता सातौ प्राप्त्यर्थं त्वां यद् यदा ह्वायामसि आह्वयामः तदा स त्वं अकवाभिरकुत्सिताभिः, शुचिभिरिति यावत्, ऊती ऊतिभिः स्तुतिभिः सन्तुष्टः नः वृधे वर्धनाय अविता रक्षिता भूः भव। तथा विश्वायुः सर्वतोगन्ता पूर्णायुःप्रदो वा सखा च भव।

अनेन शुचिः ऊतिरस्यास्तीति शुचिः, मतुपो लुक्, इति निरुक्तेः **शुचिमूर्तिरत्र** ॥ २५७ ॥

॥ ॐ सिद्धार्थाय नमः ॥

**शूर। नूनं न इन्द्रापराय च स्या भवा मृळीक उत**
**नो अभिष्टौ। इत्था गृणन्तो महिनस्य शर्मन् दिवि॥ २५८॥**

हे इन्द्र शूर नूनम् अद्येदानीमपराय च अपरस्मिन्नप्यतीतेऽनागते च सर्वस्मिन्नपि नः अस्माकं स्वामी स्याः। उत तस्मात् अनाद्यनन्तकालेऽपि अस्मत्स्वामित्वादेव अभिष्टौ अभित इच्छाविषये

१. दृ विदारणे इति क्र्यादिर्धातुः प्रसिद्धः। भ्वादिर्धात्वन्तरमिति केचित्। दृञ् यद्वा दॄञ् विदारण इति वैदिको धातुः स्यात्।

मृळीकः सुखयिता भव । इत्था इत्थमनेन प्रकारेण गृणन्तो वयं महिनस्य महतस्तव दिवि ज्ञाने, त्वद्विषये ज्ञाने, शर्मन् सुखे च स्याम वृणीमहे ।

अनेन सिद्धा अतीतकालवर्तिनः, उपलक्षणमेतत्, वर्तमानकालवर्तिन एष्यत्कालवर्त्तिनश्च, तेषामर्थः प्राप्यः स्वामीति यावत्, ऋ गतावित्यतः कर्मणि थः, इति निरुक्तेः **सिद्धार्थमूर्तिरत्र** ॥ २५८ ॥

॥ ॐ सिद्धसङ्कल्पाय नमः ॥

**स्याम पार्ये गोषतमाः ।[१] सं च त्वे जग्मुर्गिर इन्द्र पूर्वीर्वि**
**च त्वद् यन्ति विभ्वो मनीषाः । पुरा नूनं च स्तुतयः ॥ २५९ ॥**

हे इन्द्र गोसतमा ज्ञानलाभवन्तः पार्ये संसारस्य पारे स्याम, संसारस्य पारं गच्छाम इति यावत् । हे इन्द्र ते त्वयि पूर्वीः पूर्व्यः अपौरुषेया गिरो वेदरूपा वाचः सं जग्मुः संगता बभूवुः । त्वत् त्वत्तः विभ्वः विभवः विस्तृताः त्वत्प्रेरिता मनीषाः बुद्धयः वि यन्ति अस्मान् गच्छन्ति । किञ्च पुरा पुरातनाः नूनम् अद्यतनाश्च स्तुतयः त्वां यन्ति प्राप्नुवन्ति ।

तेन सिद्धाः अनादिसिद्धाः अपौरुषेय्यो गिरः त्वयि सङ्कल्पन्ते सङ्गच्छन्त इति वा, सिद्धाः अतीतकालीना वर्तमानकालीना एष्यत्कालीनाश्च मनीषाः जनेषु सं सम्यक् कल्पयतीति वा निरुक्तेः **सिद्धसङ्कल्पमूर्तिरत्र** ॥ २५९ ॥

॥ ॐ सिद्धिदाय नमः ॥

**ऋषीणां पस्पृध्र इन्द्रे अध्युक्थार्का । पुरुहूतो यः पुरुगूर्त**
**ऋभ्वाँ एकः पुरुप्रशस्तो अस्ति यज्ञैः ॥ २६० ॥**

ऋषीणां भरद्वाजादीनाम् उक्थार्का उक्थार्काः उक्थस्तोत्ररूपा ऋचश्च इन्द्रे त्वयि अधि अत्यन्तं पस्पृध्रे अहंपूर्वमहंपूर्वमित्यहमहमिकया इन्द्रस्तवनाय स्पृधां चक्रुः । स पुरुहूतः पुरुभिराहूतः पुरुगूर्तः बहुभिरुद्यमितः ऋभ्वा महान् एकः प्रधानभूतः यज्ञैर्यष्टृभिः पुरुषैः यजनसाधनैः स्तोत्रैर्वा पुरुप्रशस्तः बहुधा स्तुतः अस्ति भवसि ।

---

१. ऋग्वेद ६-३४, शुनहोत्रो भारद्वाजः ।

अनेन सिद्धिर्युद्धम्, सिधू हिंसाराध्योरिति धातोः, ऋषीणामुक्थार्काणामुक्थस्तोत्ररूपाणां ऋचामहंपूर्वमहंपूर्वमित्यहमहमिकया सपर्यां (स्पर्धां) ददातीति निरुक्तेः **सिद्धिदमूर्तिरत्र** ॥ २६० ॥

॥ ॐ सिद्धिसाधनाय नमः ॥

**रथो न महे शवसे युजानोऽस्माभिरिन्द्रो अनुमाद्यो भूत् ।**
**न यं हिंसन्ति धीतयो न वाणीरिन्द्रं नक्षन्तीत् ॥ २६१ ॥**

स इन्द्रः रथो न रथ इव महे महसे शवसे बलाय बलप्राप्त्यर्थं युजानः अस्मत्स्तुतिभिः युज्यमानः सन् अस्माभिः स्तोतृभिः अनुमाद्यो भूत् सर्वदा सन्तोषणीयो भवतु । यमिन्द्रं धीतयः कर्माणि परिचरणानि न हिंसन्ति न बाधन्ते वाणी वाण्यः स्तुतयश्च न हिंसन्ति । दातुमसमर्थो हि पुरुषः अन्यकृतैः परिचरणैः स्तुतिभिश्च भृशं व्यथते । अस्य चेन्द्रस्य बहुधनत्वाद् दातृत्वाच्च तस्मिन् प्रयुज्यमानानि परिचरणानि स्तोत्राणि च व्यथाहेतवो नाभूवन्निति तात्पर्यम् । किं तर्हीत्यत आह । तमिन्द्रम् अभिनक्षन्तीत् अभिगच्छन्त्येव ।

अनेन संसिद्धिहेतुत्वात् सिद्धयः परिचर्याः स्तुतयश्च । ता आत्मनि साधयतीति साधनः । भक्तकृतपरिचर्याः स्तुतीश्च फलदानायाङ्गीकरोति । दातुमसमर्थो हि पुरुषः अन्यकृतैः परिचर्यादिभिः किं मया दातव्यमिति भृशं व्यथते । अयं तु बहुदानसमर्थत्वान्न व्यथते प्रत्युत हृष्यति इति निरुक्तेः **सिद्धिसाधनमूर्तिरत्र** ॥ २६१ ॥

॥ ॐ वृषाहिणे नमः ॥

**अभिवर्धयन्तीः । यदि स्तोतारः शतं यत् सहस्रं गृणन्ति**
**गिर्वणसं शं तदस्मै । अस्मा एतद् दिव्यर्चेव ॥ २६२ ॥**

य इन्द्रः दिवि स्वर्गे अर्चेव अर्केव अर्क इव सूर्य इव स्थितः अस्मै इन्द्राय शतं शतसंख्याका यदिवा सहस्रं सहस्रसंख्याका स्तोतारः स्तुवन्ति ताः स्तुतयश्च गिर्वणसं गिरां संभक्तारं तमिन्द्रं अभिवर्धयन्तीः अभिवर्धयन्त्यः सन्तोषयन्त्यो भवन्ति । तत् तस्मात् कारणात् शं सुखकरं एतत् स्तोत्रम् अस्मै करोमि ।

अनेन अपौरुषेयत्वात् श्रेष्ठो वृषः स्तोत्रसमुदायः तेन आ सम्यग् हिनोति, हि गतौ वृद्धौ च, वर्धत इत्याहीति निर्वचनसूचनाद् **वृषाहिमूर्तिरत्र** ॥ २६२ ॥

॥ ॐ वृषभाय नमः ॥

**मासा मिमिक्ष इन्द्रे न्ययामि सोमः । जनं न धन्वन्नभि**
**सं यदापः सत्रा वावृधुर्हवनानि यज्ञैः । अस्मा एतत् ॥ २६३ ॥**

यस्मिन्निन्द्रे मासा मन्त्रेण मिमिक्षः अद्भिः संसिक्तः सोमः नि नितरां अयामि, कर्मणि रूपमेतत्, नियुक्तो वर्तते । तमिन्द्रं हवनानि अस्मदीयानि स्तोत्राणि यज्ञैः यज्ञसाधनैः सत्रा सह धन्वन् धन्वनि मरुदेशे अभिसंयत् अभिसंयन्त्यः अभिमुखं प्रवहन्त्यः आपः जनं न प्राणिनमिव ववृधुः वर्धयेयुः अस्मै इन्द्राय एतत् स्तोत्रं कुर्मः ।

अनेन मन्त्रेणाद्भिः संस्कृतत्वाद् वृषः श्रेष्ठः सोमरसः भ्रियते संभ्रियते यस्मै स इति निरुक्तः **वृषभमूर्तिरत्र** ॥ २६३ ॥

॥ ॐ विष्णवे नमः ॥

**मह्यांगूषमस्मा इन्द्राय स्तोत्रं मतिभिरवाचि । असद् यथा**
**महति वृत्रतूर्य इन्द्रो विश्वायुरविता वृधश्च ॥ २६४ ॥**

महि महत् आङ्गूषं स्तोत्रं मतिभिः स्तोतृभिः अस्मन्मत्यनुसारेण वा अवाचि । कर्मणि रूपम् । एतदेवानुवदन् प्रयोजनं सूचयति । अस्मै इन्द्राय स्तोत्रमवाचि यत् तद् विश्वायुः सर्वत्र गन्ता नित्यो वा । महति प्रभूते वृत्रतूर्ये संग्रामे यथा येन प्रकारेणास्माकमविता बलसुखप्रदानादिना रक्षकः वृधः वर्धयिता च असत् स्यात् भवेत् ।

अनेन वि विशिष्टौ षकारणकारवाच्यौ बलचेष्टादिपुमर्थौ यस्मात् स इति निरुक्तः **विष्णुमूर्तिरत्र** ॥ २६४ ॥

॥ ॐ वृषपर्वणे नमः ॥

**[१]कदा भुवन् रथक्षयाणि ब्रह्म कदा स्तोत्रे सहस्रपोष्यं दाः ।**
**कदा स्तोमं वासयोऽस्य राया ॥ २६५ ॥**

१. ऋग्वेद ६-३५, नरो भारद्वाजः ।

फलविलम्बमसहमानो मन्त्रद्रष्टा नराख्यऋषिरिन्द्रं पृच्छत्युत्तराभिः । हे इन्द्र ब्रह्म ब्रह्माणि अस्माभिः कृतानि स्तोत्राणि रथक्षयाणि रथनिवासानि कदा कस्मिन् काले भूवन् भवेयुः । रथे स्थितं त्वां कदा विषयीकुर्युः । स्तोत्रे स्तुवते मह्यं सहस्रपोष्यं सहस्रसंख्याकपुरुषपोषकं गवादिकं पुत्रादिकं कदा दाः अदाः दास्यसि । अस्य स्तोतुर्मम स्तोमं स्तोत्रं राया धनेन कदा वासयः व्यापयेः । स्तोत्रेण प्रसन्नः धनं कदा दास्यसि ।

अनेन वृषं स्तोत्रं श्रेष्ठस्तोत्रं धनादिफलेन संपूरयति निवासयतीति वृषपर्वा । वृषशब्दे कर्मण्युपपदे पॄ पालनपूरणयोरित्यस्येदं रूपम् । इति निरुक्तिसूचनाद् **वृषपर्वमूर्तिरत्र** ॥ २६५ ॥

॥ ॐ वृषोदराय नमः ॥

**कदा धियः करसि वाजरत्नाः । कर्हिस्वित् तदिन्द्र**
**यन्नृभिर्नॄन् वीरैर्वीरान् नीळयासे जयाजीन् । त्रिधातु गाः ॥ २६६ ॥**

हे इन्द्र धियः कर्माणि ज्ञानानि च वाजरत्नाः वाजैरन्नै रमणीयाः वाजरत्नाभ्यां सहिता वा कदा करसि करिष्यसि । नृभिरस्मदीयैः पुरुषैः नॄन् शत्रुसम्बन्धिनः पुरुषान् तथा अस्मदीयैः पुत्रैः वीरान् शत्रून् राजकुमारान् नीळयसे, नीळयतिः संश्लेषणकर्मा, संश्लेषयेः इति यत् ते कर्म तत् कर्हिस्वित् कदा भवेत् । किञ्चास्मदर्थं आजीन् संग्रामान् कदा जय जयेः । किञ्च त्रिधातु त्रिधातॄः क्षीरदधिघृतानां त्रयाणां धारयित्रीः गाः कदा जय जयेः ।

अनेन वृषान् श्रेष्ठान् परकीयान् राजकुमारान् परकीयैर्नृभिः श्रेष्ठैः राजकुमारैः उत् उत्कृष्टम् आरयति संगमयतीति वृषोदरः । वृषशब्दे कर्मण्युपपदे उत्पूर्वस्यान्तर्णीतस्य दीर्घस्य (?) अर्तेरकारप्रत्यये रूपमेतत्, इति निरुक्तेः **वृषोदरमूर्तिरत्र** ॥ २६६ ॥

॥ ॐ वर्धनाय नमः ॥

**अधि जयासि गोष्विन्द्र द्युम्नं स्वर्वद् धेह्यस्मे । कर्हिस्वित्**
**तदिन्द्र यज्जरित्रे विश्वप्सु ब्रह्म कृणवः शविष्ठ ॥ २६७ ॥**

हे इन्द्र गोषु, गत्यर्थकस्य कर्तरि रूपमेतत्, अस्मानभिगन्तृषु शत्रुषु द्युम्नं सुखं कदा अधि

जयासि अपहरसि। किञ्च स्वर्वत् स्वर्गसहितं द्युम्नं सुखमस्मे अस्मासु गोषु च कदा धेहि धारयेः। हे शविष्ठ इन्द्र जरित्रे स्तोत्रे विश्वप्सु बहुविधं ब्रह्म अन्नं कृणवः करोषीति यत् तत् कदा भवेत्।

अनेन वृञ् वरणे इत्यस्मात् कर्मणि विच्, वः वरणीयं सुखं, धत्त इति धः, धाञः कर्तरि डः। वर्धः भक्तेषु सुखधाता। नयतेरन्तर्णीतण्यर्थात् कर्तरि डः। शत्रुभ्यः सुखमपगमयतीति नः। वर्धश्चासौ नश्च वर्धन इति निरुक्तेः **वर्धनमूर्तिरत्र** ॥ २६७॥

॥ ॐ वर्धमानाय नमः॥

**कदा धियो न नियुतो युवासे कदा गोमघा हवनानि गच्छाः।**
**स गोमघा जरित्रे अश्वश्चन्द्रा वाजश्रवसः॥ २६८॥**

धियः कर्माणि। नेति समुच्चये। नियुतश्च स्तुतीश्च युवासे आत्मनि नियोजयेः। यद्वा धियो न कर्माणीव स्तुतीः कदा युवासे। कदा च त्वं गोमघा, गमेः कर्तरि डोः गावः अभिगन्तारः शत्रवः, मन्हेः खण्डनार्थस्य करणे अकारप्रत्ययः, हस्य च घः, शत्रुखण्डनसाधनानि हवनानि स्तोत्राणि गच्छाः अभिगच्छाः। हे इन्द्र स त्वं जरित्रे स्तोत्रे गोमघा गवां धात्रीः अश्वश्चन्द्राः अश्वैराल्हादयतीः वाजश्रवसः वाजैर्बलैः प्रसिद्धाः पृक्षः अन्नानि अधि धेहि।

अनेन वर्धतेः करणे अकारप्रत्ययः, वृद्धिसाधनत्वाद् वर्ध स्तोत्रं मानम् अन्तर्गतम्, वर्धं स्तोत्रमन्तर्गमयति स्वात्मनि योजयतीति वर्धमान इति निरुक्तेः **वर्धमानमूर्तिरत्र** ॥ २६८॥

॥ ॐ विविक्ताय नमः॥

**अधि धेहि पृक्षः। पीपिहीषः सुदुघामिन्द्र धेनुं भरद्वाजेषु**
**सुरुचो रुरुच्याः। तमा नूनं वृजिनम्॥ २६९॥**

हे इन्द्र भरद्वाजेषु भरद्वाजपुत्रेष्वस्मासु पृक्षः अन्नानि अधि धेहि धारय। तथा इषः तान्यन्नानि सुदुघां शोभनदोग्ध्रीं धेनुं गाश्च पिपीहि पायय। किञ्च ता इषो गाश्च सुरुचः शोभनरुचो यथा भवन्ति तथा रुरुच्याः दीपयेः। शोभनदीप्तियुताश्च ताः सन्त्वित्यर्थः। किञ्च नूनं अद्यतनमेतज्जन्मकृतं तं कालान्तरभावि जन्मान्तरकृतं च वृजिनं पापं विवेचय वियोजयेति सम्बन्धः।

तेन विचिर् पृथग्भावे इत्यतः कर्तरि क्तप्रत्यये रूपमेतत्। विविक्तः पापवियोगकर्तेति निरुक्तेः **विविक्तमूर्तिरत्र**॥ २६९॥

॥ ॐ श्रुतिसागराय नमः॥

**अन्यथा चिच्छूरो यच्छक्र वि दुरो गृणीषे। मा निररं**
**शुक्रदुघस्य धेनोराङ्गिरसान् ब्रह्मणा विप्र जिन्व॥ २७०॥**

हे शक्र सर्वकार्येषु शक्त इन्द्र यद् यस्मात् शूरो विक्रान्तः विदुरः शत्रूणां विदारकः आ सम्यग् गृणीषे स्तूयसे। तस्मात् किञ्च शुक्रदुघस्य शुक्राणां निर्मलानां दोग्धुरिन्द्रस्य धेनोर्वाचः स्तोत्रात् अन्यथा चित् प्रकारान्तरेण, स्तोत्रं परित्यज्येति यावत्, मा निररं मा निर्गच्छेयम्। ऋ गतावित्यस्य रूपमेतत्। यद्वा शुक्रस्य पयसः दोग्धुर्धेनोः त्वद्दत्ताया गोः सकाशात् मा निर्गच्छेयम्। सा स्तुतिर्गौ वा अस्मासु सर्वदा निवसत्वित्यर्थः। हे विप्र प्राज्ञ इन्द्र आङ्गिरसान् अङ्गिरसो गोत्रजान् अस्मान् ब्रह्मणा अन्नेन जिन्व प्रीणय।

अनेन श्रु श्रवणे इत्यस्माद् भावे क्तिन्, श्रुतिः श्रवणं गुणानां श्रवणम्, स्तुतिरिति यावत्। श्रुतिभिः सागर इव परिपूर्णः श्रुतिसागर इति निरुक्तेः **श्रुतिसागरमूर्तिरत्र**॥ २७०॥

॥ ॐ सुभुजाय नमः॥

**[1]सत्रा मदासस्तव विश्वजन्याः सत्रा रायोऽध ये पार्थिवासः।**
**सत्रा वाजानामभवो विभक्ता यद् देवेषु॥ २७१॥**

हे इन्द्र तव त्वदीयाः मदासः सोमपानजनिताः मदाः विश्वजन्याः विश्वजनहिता भवन्ति इत्येतत् सत्रा सत्यम्। यद्वा सत्रेति महन्नाम। महतस्तव मदा इति योज्यम्। अधिकं च। पार्थिवासः, उपलक्षणमेतत्, लोकत्रयभवास्त्वदीया ये रायः धनसमूहाः सन्ति ते एतदपि सत्रा सत्यम्। किञ्च वाजानामन्नानां त्वं देवेषु भक्ता तत्तद्योग्यतानुसारेण विभज्य दाता अभवः भवतीत्येतदपि सत्रा सत्यम्। अभ्यासस्तु पारिभाषिकसत्वनिवृत्त्यर्थः।

१. ऋग्वेद ६-३६. नरो भारद्वाजः।

अनेन सुपूर्वाद् भुजः इगुपधलक्षणः कः, महान्तः पारमार्थिकाः भुजा मदा हर्षविशेषा यस्य स इति निरुक्तेः **सुभुजमूर्तिरत्र** ॥ २७१ ॥

**॥ ॐ दुर्धराय नमः ॥**

**धारयथा असुर्यम् । अनु प्र येजे जन ओजो अस्य सत्रा**
**दधिरे अनु वीर्याय । स्यूमगृभे दुधये ॥ २७२ ॥**

हे इन्द्र असुर्यं बलं देवेष्वपि धारयथाः स्थापयसि । अस्य तव ओजः शत्रूणामनभिभाव्यताशक्तिः, दुर्धरत्वमिति यावत्, सत्रा महत् पारमार्थिकं च । जनः सर्वोपि लोकः अनु प्र येजे, व्यत्ययेन एकारः, अनु प्र यजति सततं प्रकर्षेण पूजयति । अपि च तं सत्रा महान्तमिन्द्रं वीर्याय वीरकर्म कर्तुं स्यूमगृभे स्यूम्नः स्यूतान् अनुस्यूतान् अविच्छेदेन वर्तमानान् शत्रून् गृभे गृण्हते दुधये, दुधिर्हिंसाकर्मा तस्मै अनुदधिरं पुरो दधिरं यजमानाः ।

अनेन शत्रुभिर्दुर्धर्षः धर्त्तुमशक्यः ओजस्वीति निरुक्तेः **दुर्धरमूर्तिरत्र** ॥ २७२ ॥

**॥ ॐ वाग्मिने नमः ॥**

**अर्वते च क्रतुं वृञ्जन्त्यपि वृत्रहत्ये । तं सध्रीचीरूतयो**
**वृष्ण्यानि पौंस्यानि नियुतः सस्रुरिन्द्रम् । समुद्रम् ॥ २७३ ॥**

अर्वते शत्रूनभिगन्त्रे तस्मै इन्द्राय क्रतुं परिचरणात्मकं कर्म वृत्रहत्ये वृत्रस्यावरकस्य शत्रोर्हननार्थं यजमाना वृञ्जन्ति निष्पादयन्ति । शत्रुहननार्थं त्वां परिचरन्तीत्यर्थः । किञ्च ऊतयो मरुतः, तन्नामसु पाठात्, तमिन्द्रं सध्रीचीः सध्र्यञ्चः । यद्वा ऊतयः तर्पणान्यन्नानि सध्रीचीः सहवर्तमानानि भूत्वा तथा वृष्ण्यानि श्रेष्ठानि पौंस्यानि वीर्याणि तत्प्रतिपादका वा नियुतः रथे नियोज्यमानाः वडवाश्च समुद्रं समुद्रिक्तगुणं त्वामेवेन्द्रं सस्रुः स्रवन्ते ।

अनेन वाचो वेदरूपा अस्य सन्तीति वाग्मी, वाचो ग्मिनिर्मत्वर्थे, इति निरुक्तेः **वाग्मिमूर्तिरत्र** ॥ २७३ ॥

॥ ॐ महेन्द्राय नमः ॥

**न सिन्धव उक्थशुष्मा उरुव्यचसं गिर आ विशन्ति ।**
**स रायस्खामुप सृजा गृणानः पुरुश्चन्द्रस्य ॥ २७४ ॥**

अपि च उक्थशुष्मा उक्थं शस्त्रं तदेव बलं यासां ता गिरः स्तुतयः उरुव्यचसं विस्तीर्णव्याप्तिकं सिन्धवः स्यन्दनशीला नद्यः समुद्रं न समुद्रमिव आ विशन्ति। तद्वाचका एव भवन्तीत्यर्थः। हे इन्द्र गृणानः स्तूयमानः पुरुचन्द्रस्य बहूनामाल्हादकस्य पोषकस्य रायः खाम्, नदीनामैतत् अत्र च तत्सम्बन्धाद् धरा[१] लक्ष्यते, धराम्[२] उपसृज विमुञ्च सततं देहीत्यर्थः।

अनेन बहुव्याप्तिमानुरुव्यचा महान्, इदं धनधारां राति ददाति इतीन्द्रः, महांश्चासाविन्द्रश्चेति निरुक्तेः **महेन्द्रमूर्तिरत्र** ॥ २७४ ॥

॥ ॐ वसुदाय नमः ॥

**त्वमिन्द्र वस्वः। पतिर्बभूथासमो जनानामेको विश्वस्य**
**भुवनस्य राजा। स तु श्रुधि श्रुत्या यो दुवोयुर्द्यौर्न ॥ २७५ ॥**

पूर्वोक्तमिन्द्रत्वमनुवदन्नुपपादयति। हे इन्द्र यस्त्वं जनानां प्राणिनां पतिरधिपतिः तथा विश्वस्य सर्वस्य भुवनस्य लोकस्य एकः असाधारणो राजा बभूथ बभूविथेति महेन्द्रशब्दार्थानुवादः। स त्वं नु इदानीं दुवोयुः अस्मदीयं परिचरणमिच्छन् असमः अनुपमः वसूनि शत्रुसम्बन्धीनि द्यौर्न सूर्य इव अत्या इति[३] श्रुत्या श्रोतव्यानि स्तोत्राणि श्रुधि शृणु।

अनेन वसूनि ददाति आददातीति वसुद इति निरुक्तेः **वसुदमूर्तिरत्र** ॥ २७५ ॥

---

१. धारा इति पाठः युक्तः स्यात्।

२. अत्रापि धारामिति पाठः स्यात्।

३. अत्या इति इति पदयोः सङ्गतिर्न दृश्यते। कोपि लेखकप्रमादः स्यात्। सूर्यो यथा स्वरश्मिभिरुदकं स्वीकरोति तथा अस्मदीयानि स्तोत्राणि स्वीकुर्विति तात्पर्यार्थः स्यात्।

॥ ॐ वसवे नमः ॥

**भूमाभि रायो अर्यः। असो यथा नः शवसा चकानो**
**युगेयुगे वयसा चेकितानः।[४] अर्वाग् रथम्॥ २७६॥**

हे इन्द्र भूमा त्वं पूर्णस्त्वं रायो द्रविणस्य अर्यः स्वामी असः अभवः। युगेयुगे प्रतियुगं सर्वकालं वयसा अन्नेन शवसा वलेन चकनो युक्तस्त्वं रथं त्वदीयं नः अस्मभ्यम् अर्वाक् अस्मदभिमुखं यथा तथा चेकितानः कुर्वाणश्च असः अभवः।

अनेन वसून्यस्य सन्ति, वसूनां स्वामी भवतीति यावत्, पुर्ववन्मतुपो लुक्, इति निरुक्तेः वसुमूर्तिरत्र ॥ २७६ ॥

॥ ॐ नैकरूपाय नमः ॥

**विश्ववारं त उग्रेन्द्र युक्तासो हरयो वहन्तु। कीरिश्चिद्धि**
**त्वा हवते स्वर्वानृधीमहि सधमादस्ते अद्य॥ २७७॥**

हे उग्र इन्द्र हि यस्मात् स्वर्वान् स्वः सुष्ठु रमणीयं गुणजातं तद्वान्। कीरिः स्तोता भरद्वाजः चित् भरद्वाजोपि त्वा त्वां हवते आह्वयति। तस्माद् युक्तासः संयुक्ताः अनेके ते त्वदीयाः हरयः अश्वाः विश्ववारं विश्वैर्वरणीयं त्वां वहन्तु। वयं च अद्येदार्नी ते त्वया सधमादः सहमायन्तः ऋधीमहि समृद्धा भवेम।

अनेनैको न भवतीति नैकः, नगनाकादाविव नलोपाभावः। नैकैः बहुभिरश्वैः रूप्यते उह्यत इति नैकरूप इति निरक्तेः नैकरूपमूर्तिरत्र ॥२७७॥

॥ ॐ वृहद्रूपाय नमः ॥

**प्रो द्रोणे हरयः कर्माग्मन् पुनानास ऋज्यन्तो अभूवन्।**
**इन्द्रो नो अस्य पूर्व्यः पपीयाद् युक्षो मदस्य सोम्यस्य॥ २७८॥**

---

४. ऋग्वेद ६-३७, वार्हस्पत्यो भरद्वाजः।

हरयः हरितवर्णाः सोमाः अस्मदीयं यज्ञं प्रो अग्मन् प्रकर्षेण गच्छन्ति प्राप्नुवन्ति । प्राप्य च पुनानासः पूयमाना अत एव बृहन्तो द्रोणे द्रोणकलशे ऋज्यन्तः ऋजु गच्छन्तो अभूवन् भवन्ति । अस्य तेषां पूर्व्यः पुरातनः द्युक्षः दीप्तेर्निवासभूतः इन्द्रः मदस्य मदहेतोः सोम्यस्य सोमसम्बन्धिनोऽस्य रसस्य, अत्र सर्वत्र षष्ठी द्वितीयार्थे, मदहेतुसोमरसं पपीयात् पिबतु ।

अनेन बृहतः पूयमानत्वादिगुणवतः सोमरसान् रूपयति स्वोदरे आरोपयति पिबतीति यावत्, इति निरुक्तः **बृहद्रूपमूर्तिरत्र** ॥ २७८ ॥

॥ ॐ शिपिविष्टाय नमः ॥

**राजा । आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो**
**अश्वाः । अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु ॥ २७९ ॥**

आसस्राणासः परितो गच्छन्तः रथ्यासः रथयुक्ता अश्वा ऋज्यन्तो ऋजुगमनाः सन्तः सुचक्रे शोभनचक्रे रथे शवसानं सुखेन स्थितं यो राजा सर्वस्वामी तमिन्द्रं श्रवः श्रवणीयं अस्मदीययज्ञे स्थितं हविः अभि आभिमुख्येन अच्छ सम्यग् वहेयुः नु एव । नू चित् इदानीम् ।

अनेन शिपिशब्दो यज्ञसाधनहविःपरः शिपि यज्ञसाधनं चरुपुरोडाशादिकं विशति प्रविशति गृह्णातीति शिपिविष्ट इति निरुक्ते **शिपिविष्टमूर्तिरत्र** ॥ २७९ ॥

॥ ॐ प्रकाशनाय नमः ॥

**बायोरमृतं वि दस्येत् । वरिष्ठो अस्य दक्षिणामियर्तीन्द्रो**
**मघोनां तुविकूर्मितमः । यया वज्रिवः ॥ २८० ॥**

हे वज्रिवः वायोः वरिष्ठः तुविकूर्मतमः बहुकर्मकृत्तमः इन्द्रो भवान् यया दक्षिणया अमृतं हविः विदस्येत्, विर्निषेधार्थः, निराकुर्यात् तां दक्षिणां मघोनां यज्ञकर्तॄणां एषां यजमानानां इयर्ति दातव्यतया प्रेरयति ।

अनेन यज्ञकर्तॄणां दातव्यतया दक्षिणां प्रकाशयति प्रेरयतीति प्रकाशन इति निरुक्तः **प्रकाशनमूर्तिरत्र** ॥ २८० ॥

॥ ॐ ओजस्तेजोद्युतिधराय नमः ॥

**परियास्यंहो मघा च धृष्णो दयसे वि सूरीन्। इन्द्रो**
**वाजस्य स्थविरस्य दातेन्द्रो गीर्भिर्वर्धतां वृद्धमहाः ॥ २८१ ॥**

हे धृष्णो शत्रूणामभिभावक ओजस्विन् त्वम् अंहः यज्ञप्रतिबन्धकदुरितजातं परियासि विनाशयसि। मघा मघानि धनानि यशांसि तेजांसि वा सूरीन् ज्ञानिनः पुत्रांश्च विदयसे ददासि। अयमिन्द्रः स्थविरस्य वाजस्यान्नस्य बलस्य वा दाता भवति। स चेन्द्रो वृद्धमहाः प्रवृद्धद्युतिमान् गीर्भिः स्तुतिभिः वर्धताम्।

अनेन ओजश्च तेजश्च द्युतिश्च ओजस्तेजोद्युतयः, ताः धारयतीति ओजस्तेजोसद्युतिधर इति निरुक्तेः **ओजस्तेजोद्युतिधरमूर्तिरत्र** ॥ २८१ ॥

॥ ॐ प्रकाशात्मने नमः ॥

**इन्द्रो वृत्रं हनिष्ठो अस्तु सत्वाऽऽता सूरिः पृणति तूतुजानः।**
**[1]अपादित उदु नश्चित्रतमो महीं भर्षद् द्युमतीम् ॥ २८२ ॥**

सत्वा शत्रूणां सादयिता इन्द्रः वृत्रं शत्रुं हनिष्ठः हन्तृतमः अस्तु। किञ्च सूरिः प्रेरकः इन्द्रः तूतुजानः त्वरमाणः ता तानि धनानि आ पृणाति अस्मभ्यं प्रायच्छत्। चित्रतमः चायनीयतमः आश्चर्यतमो वा इन्द्रः नः अस्मदीयात् इतः अस्मद्गुरुशंसादेः अपात् सोमं पिबेत्। यद्वा इत अस्मच्छत्रोः नः अस्मान् अपात् पातु। किञ्च महीं महतीं द्युमतीं दीप्तिमतीं स्तुतिं उत् अत्यन्तं भर्षत् धारयत् उ एव।

अनेन प्रकाशत इति प्रकाशः स्तुतिः सोमादिश्च तस्यात्मा भर्ता प्रकाशात्मेति निरुक्तेः **प्रकाशात्ममूर्तिरत्र** ॥ २८२ ॥

॥ ॐ प्रतापनाय नमः ॥

**इन्द्रहूतिम्। पन्यसीं धीतिं दैव्यस्य यामन् जनस्य रातिं**
**वनते सुदानुः। दूराचिदा वसतो अस्य ॥ २८३ ॥**

---

१. ऋग्वेद ६-३८ बार्हस्पत्यो भरद्वाजः।

सुदानुः सुदानशीलः, यद्वा दो अवखण्डने, शत्रून् खण्डयति विनाशं प्रापयतीति सुदानुरिन्द्रः दैव्यस्य देवसम्बन्धिनः दूराच्चित् दूरदेशादपि आ वसतः निवसतः दूरदेशस्थितस्यापि अस्य जनस्य यजमानस्य यामन् यामनि यज्ञे क्रियमाणां पन्यसीं स्तुत्यतमां धीतिं परिचरणरूपक्रियां इन्द्रहूतिमिन्द्रस्य स्तुतिं दातव्यं हविश्च वनते संभजते।

अनेन शत्रून् प्रतापयतीति प्रतापन इति निरुक्तेः **प्रतापनमूर्तिरत्र** ॥ २८३ ॥

॥ ॐ रुद्धाय नमः ॥

**कर्णा घोषादिन्द्रस्य तन्यति ब्रुवाणः। एयमेनं**
**देवहूतिर्ववृत्यान्मद्र्यगिन्द्रमियमृच्यमाना ॥ २८४ ॥**

अस्येन्द्रस्य कर्णा कर्णौ दूरश्रवणसमर्थौ स्तः। तस्मादयं जनः इन्द्रस्य घोषात्, ल्यब्लोपनिमित्ता पञ्चमी, इन्द्रस्य स्तुतिं कृत्वा ब्रुवाणः वेदवाचमुच्चारयन् तदीयगुणजातं तन्यति विस्तारयति। देवहूतिः देवस्येन्द्रस्याह्वानरूपा स्तुतिः ऋच्यमाना स्वयमिन्द्रस्य प्रेर्यमाणा सती। द्वितीयः इयमितिशब्दः पूरणार्थ इति कश्चित्। तत्र बुद्ध्यामहे। किन्तु द्वितीयान्तः। इण् गतावित्यस्य कर्तर्यकारप्रत्यये लिङ्भावे यणादेशे च रूपमेतत्। अतिशयेन यज्ञवाटं प्रति गन्तारमेनमिन्द्रं अन्यगमनं प्रतिरुध्य मद्र्यक् मदभिमुखं आ ववृत्यात् आवर्तयेत्।

रुधः कर्तरि क्विप्। अन्यगमननिरोद्ध्री स्तुतिः रुधृशब्देनोच्यते। धत्त इति धः। धात्रः कर्तरि डः। रुधं धत्त इति रुद्ध इति निरुक्तेः **रुद्धमूर्तिरत्र** ॥ २८४ ॥

॥ ॐ स्पष्टाजराय नमः ॥

**तं वो धिया परमया पुराजामजरमिन्द्रमभ्यनूष्यर्कैः।**
**ब्रह्मा च गिरो दधिरे समस्मिन् महांश्च स्तोमः ॥ २८५ ॥**

हे ऋत्विजः वः पुराजां युष्मत्तोपि पूर्वजातं अजरं जरामरणदोषरहितं तमिन्द्रं परमया उत्कृष्टया धिया बुद्ध्या अर्कैः ऋग्भिः अभ्यनूषि, नू स्तुतौ वचनादिव्यत्ययेन अभिस्तुत। वः इति व्यत्ययेन

यूयमिति वा । अस्मिन्निन्द्रे ब्रह्म अत्रं गिरो वेदवाचश्च सं दधिरं संधीयन्ते । प्रतिपादकतया प्रयुज्यन्ते । ताभिः स्पष्टो भवतीति यावत् । महान् स्तोमश्च सन्दध्रे ।

तेन स्पश अज्ञातद्दशावित्यस्मात् कर्मणि क्तः । महास्तोमादिना स्पष्टो ज्ञातः । न जरति जरादिना नाशयुक्तो न भवतीत्यजरः । स्पष्टश्चासावजरश्चेति निरुक्तेः **स्पष्टाजरमूर्तिरत्र** ॥ २८५ ॥

**॥ ॐ मन्त्राय नमः ॥**

**अधि वर्धदिन्द्रे । वर्धाद् यं यज्ञ उत सोम इन्द्रं वर्धाद् ब्रह्म**
**गिर उक्था च मन्म । वर्धाहैनमुषसो यामन् ॥ २८६ ॥**

उषसः उषःकालस्य यामन् गमने सति प्रातःकाले इति यावत् । अधिवर्धत् अध्यवर्धत् प्रकाशते । सोम उत सोमश्च यम् इन्द्रं वर्धाद् अभिवर्धयेत् एनमिन्द्रं गिरः स्तोत्रं वर्धाद् मन्म मननीयानि उक्था उक्थानि ब्रह्म शस्त्राणि च वर्ध वर्धयन्ति । अहेत्याश्चर्ये ।

तेन मननीयत्वादुक्थस्तोत्रशस्त्राद्या मन्तव्या मन्ताः, अन्त्यलोपः । तान् आत्मनि लाति परिवर्तयतीति लः । रलयोरभेदात् स एव रः । मन्तान् मन्तव्यान् उक्थादीन् स्वात्मसन्तोषकत्वेन परिवर्तयतीति मन्त्रः, उपपदान्त्यलोपः, इति निरुक्तेः **मन्त्रमूर्तिरत्र** ॥ २८६ ॥

**॥ ॐ चन्द्रांशवे नमः ॥**

**अक्तोर्वर्धान् मासाः शरदो द्याव इन्द्रम् । एवा जज्ञानं सहसे**
**असामि वावृधानं राधसे च श्रुताय ॥ २८७ ॥**

अक्तोः रात्रेः यामन् विगमे, प्रातरिति यावत्, मासाः शरदः संवत्सराश्च द्यावः दिवसाः, एतदभिमानिनो देवाश्च इन्द्रं वर्धात् वर्धयन्तीति यावत् । एवं ज्ञानयज्ञेऽभिव्यज्यमानं सहसे शत्रूणामभिभवार्थं वावृधानं बहुळं वर्धमानं इन्द्रं श्रुताय प्रसिद्धाय राधसे धनाय असामि परिचरन् असानि ।

अनेनाह्लादकत्वाच्चन्द्राः शरन्मासदिनाभिमानिनो देवाः, त एव अंशाः सेवका अस्य, मत्वर्थे उप्रत्ययः, इति निरुक्तेः **चन्द्रांशुमूर्तिरत्र** ॥ २८७ ॥

॥ ॐ भास्करद्युतये नमः ॥

**महामुग्रमवसे विप्र नूनमा विवासेम वृत्रतूर्येषु ।**
**[१]कथा महामवृधत् कस्य होतुर्यज्ञं जुषाणः ॥ २८८ ॥**

हे विप्र मेधाविन् महां महान्तं उग्रमुद्गूर्णं त्वां नूनमद्य वृत्रतूर्येषु युद्धेषु अवसे रक्षणाय आविवासेम भरद्वाजा वयं परिचरेम। अयमिन्द्रः कस्य होतुः यजमानस्य महां पूजां कथा कथं अवृधत् वर्धयति। कस्य यज्ञे जुषाणः सेवमानो वर्तत इत्याक्षेपः। प्रश्नो वा आदरार्थः।

तेन भातीति भा द्युतिः, तां करोतीति भास्करः भरद्वाजादिः मन्त्रद्रष्टा। द्युतिः दीव्यतेः क्रीडार्थस्य रूपं परिचर्या च तदर्थः। भास्करैः मन्त्रद्रष्टृभिः क्रियमाणा द्युतिः परिचर्या यस्मिन् स भास्कर-द्युतिः। यद्वा भास्करस्येव उग्रा द्युतयो यस्य स इति निरुक्तेः **भास्करद्युतिमूर्तिरत्र** ॥ २८८ ॥

॥ ॐ अमृतांशूद्भवाय नमः ॥

**अभि सोममृध्वः। पिबन्नुशानो जुषमाणो अन्धो ववक्ष**
**ऋष्वः शुचते धनाय। को अस्य वीरः सधमादम्॥ २८९ ॥**

ऋष्वः महान्। अयमिन्द्रः ऊधः ऊधसि हविर्धाने स्थितं सोमं उशानः कामयमानः जुषमाणः सेवमानश्च अभि गच्छति। किञ्च शुचते दीप्यमानाय यजमानाय धनाय धनार्थं धनं दातुं अन्धः अन्नं ववक्षे कदा प्रापयेत्। अस्येन्द्रस्य सधमादम्, सधशब्दः सहार्थः, इन्द्रेण सह मादं सुखं को वा वीरः आप तेन वयमपि तं पूजयाम इति पृच्छति।

अनेन अमृतांशुः सोमो हविर्धाने स्थितः, तस्मिन् उत् उत्कृष्टः भवः भावः कामना यस्येति निरुक्तेः **अमृतांशूद्भवमूर्तिरत्र** ॥ २८९ ॥

॥ ॐ भानवे नमः ॥

**आप समानंश सुमतिभिः को अस्य। कदस्य चित्रं**
**चिकिते कदूती वृधे भुवच्छशमानस्य यज्योः॥ २९० ॥**

---

१. ऋग्वेद ४-२३, वामदेवो गौतमः।

अस्येन्द्रस्य सुमतिभिः सम्यज्ज्ञानैः को वा समानंश सङ्गत आस इन्द्रविषयप्रज्ञावान् बभूव। कदिति निपातः कदेत्यर्थे। अस्येन्द्रस्य चित्रमाश्चर्यं कदाऽयं यजमानः चिकिते पश्यति। शशमानस्य सुखमनुभवितुं योग्यस्य यज्योर्यजमानस्य ऊतीः रक्षाः वृधे वर्धनाय कत् कदा भुवत् अभवत्।

एतेन भां प्रभां नयतीति निरुक्तेः भानुमूर्तिरत्र ॥ २९० ॥

॥ ॐ शशिविन्दवे नमः ॥

**कथा शृणोति हूयमानमिन्द्रः कथा शृण्वन्नवसामस्य वेद।**
**का अस्य पूर्वीरुपमातयो ह कथैनम् ॥ २९१ ॥**

अयमिन्द्रः हूयमानमाह्वानं कथा कदा शृणोति। अस्मदीयमाह्वानं कदा अवधारयेत्। अस्य यजमानस्य अवसाम् अन्नानां दानायास्मदीयमाह्वानं कथा कदा वेद विद्यात्। अस्य इन्द्रस्य पूर्वीः पूर्व्यः उपमातयः समीपस्थबुद्धयश्च काः कीदृश्यः। एनमिन्द्रं कथा कथं आह। हेत्याश्चर्ये।

तेनाधिक्येऽधिकमिति न्यायेन शशम् अत्युद्रिक्तसुखं तदस्य साध्यत्वेनास्तीति शशी आह्वानम्, तद् वेत्ति जानाति लभते वेति शशिविन्दुरिति निरुक्तेः **शशिविन्दुमूर्तिरत्र** ॥ २९१ ॥

॥ ॐ सुरेश्वराय नमः ॥

**आहुः [1]प्रपुरिं जरित्रे। कथा सवाधः शशमानो अस्य नशदभि**
**द्रविणं दीध्यानः। देवो भुवन्नवेदा मे ॥ २९२ ॥**

जरित्रे स्तोत्रे यजमानाय प्रपुरिं प्रकामानां पूरयितारमिन्द्रं कथमाहुः। अस्येन्द्रस्य पूजको यजमानः सबाधः बाधेन सहितः सांसारिकक्लेशयुक्तः शशमानः सुखमनुभवितुं योग्यः कथा कथं भवेत्। दीध्यानः दीप्यमानः नवेदाः न विद्यते यस्मादधिको वेदो ज्ञानं स निरुपचरितसर्वज्ञः देव इन्द्रः मे द्रविणं कथा अभिनशत् कथं (कदा) दद्यात्।

अनेन सु सम्यग् रमत इति सुखानुभवयोग्यो जनः सुरः तस्येश्वरः स्वामीति निरुक्तेः **सुरेश्वरमूर्तिरत्र** ॥ २९२ ॥

---

१. पपुरिमिति मुद्रितपुस्तकस्थपाठः।

॥ ॐ औपधाय नमः ॥

**ऋतानां नमो जगृभ्वाँ अभि यज्जुजोषत्। कथा कदस्या**
**उषसो व्युष्टौ देवो मर्तस्य सख्यं जुजोष ॥ २९३ ॥**

ऋतानां सत्यानां मदीयानां वचसां नमः नमसश्च जगृभ्वान् स्वीकुर्वाणः कदा भुवत् कदा भवेत्। किञ्च यद्धविरादिकं जुजोषत् अभि तदाभिमुख्येन कदा भवेत्। अस्या उषसो व्युष्टे उषःकालातिक्रान्तसमये देव इन्द्रः मर्तस्य मनुष्यस्य सख्यं सखित्वं कत् कदा जुजोष सेवते।

तेनोषधीनामिदमौषधं चरुपुरोडाशादिद्रव्यं ततः पुनस्तस्येदमित्यण्। औषधस्य पुरोडाशादेः ग्राहकः रक्षकः, औषधशब्दस्वाभाव्यात्रपुंसकता, इति निरुक्तेः **औषधमूर्तिरत्र** ॥ २९३ ॥

॥ ॐ जगतःसेतवे नमः ॥

**कथा कदस्य सख्यं सखिभ्यो ये अस्मिन् कामं सुयुजं ततस्रे।**
**किमादमत्रं सख्यं सखिभ्यः कदा नु ते भ्रात्रम् ॥ २९४ ॥**

ये जनाः अस्मिन् इन्द्रे सख्यं सखित्वं सुयुजं सम्यक्संबन्धं ततस्रे कृतवन्तः तेभ्यः सखिभ्यः काममभिलषितं पुरुषार्थं कत् कदा जुजोष दद्यात्। हे इन्द्र ते सख्यं अमत्रमागमनशीलं किम्। अस्मान् प्रति ते सख्यमागन्तुमर्हं किमित्यर्थः। आत् तस्मात् त्वत्प्रसादात् अस्माकं सख्यं सखित्वं भ्रात्रं भ्रातृत्वं कदा नु भवेत्।

अनेन जगतः सखिजनस्य सेतुः वितरणसमर्थः (विधरणसमर्थः?) आश्रयः, सौभ्रात्रादिमानिति यावत्, इति निरुक्तेः **जगतःसेतुमूर्तिरत्र** ॥ २९४ ॥

॥ ॐ सत्यधर्मपराक्रमाय नमः ॥

**प्र ब्रवाम। श्रिये सुदृशो वपुरस्य सर्गाः स्वर्णं चित्रतममिष**
**आ गोः। द्रुहं जिघांसन् ध्वरसमनिन्द्राम् ॥ २९५ ॥**

हे इन्द्र ते महिमानं वयं प्रब्रवाम। अस्य इन्द्रस्य ते वपुः स्वर्णं स्वर्णमिव चित्रतमं आश्चर्यतमं भवति। किञ्च सुदृशः सम्यग् दर्शनीयाः सर्गाः त्वदीयसर्गादिव्यापारविशेषाः गोः स्तोतुर्जनस्य इषे

अन्नादिप्राप्तये श्रिये भाग्याय च भवन्ति। अयमिन्द्रः अनिन्द्रामीश्वररहितां द्रुहं सज्जनानां द्रोग्ध्रीं शत्रुसेनां जिघांसन् हन्तुमिच्छन् पराकुर्वन् ध्वरसमायुधविशेषमुपक्रान्तवान्।

अनेन सत्याः चित्रतमा धर्मा जगत्सर्गादयो गुण। धस्य स सत्यधर्मः। पराक्रमयितुमायुधविशेषं पराक्रान्तवान् गृहीतवानिति पराक्रमः। सत्यधर्मश्चासौ पराक्रमश्चेति निरुक्तेः **सत्यधर्मपराक्रममूर्तिरत्र** ॥ २९५ ॥

॥ ॐ भूतभव्यभवन्नाथाय नमः॥

**तेतिक्ते तिग्मा तुजसे अनीका। ऋणा चिद् यत्र ऋणया**
**न उग्रो दूरे अज्ञाता उषसो बबाधे। ऋतस्य हि॥ २९६ ॥**

अयमिन्द्रः तेतिक्ते आयुधानि तीक्ष्णीकरोति। किञ्च तिग्मा तीक्ष्णा अनीकाः शत्रुसेनाः ऋणा ऋणाति गच्छति। तुजसे चित्, तुर्जिहिंसार्थः, हिनस्ति च। उग्रः इन्द्रः ऋतस्य यथार्थज्ञान-पूर्वककर्मकारिणो यजमानस्य ऋणयाः ऋणानि परिहर्तिं यान्तीति (यापयतीति ?) तथाभूतः सन् नः अस्माकम् अज्ञाता अदृष्टिगोचरा उषसः शत्रून् कदा बबाधे बाधितवान्। हीत्याश्चर्यम्।

अनेन भूतं प्रसिद्धं वज्रायुधं भव्यं नवं निशितत्वादिगुणविशिष्टं भावयतीति भवत्। भवतेरन्तर्णीतण्यर्थात् लटः शत्रादेशः। ऋणपरिहाराय सर्वैः नाथ्यते याच्यत इति नाथः, भूतभव्यभवंश्चासौ नाथश्चेति निरुक्तेः **भूतभव्यभवन्नाथमूर्तिरत्र** ॥ २९६ ॥

॥ ॐ पवनाय नमः॥

**शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति। ऋतस्य**
**श्लोको बधिरा ततर्द कर्णा बुधानः॥ २९७ ॥**

ऋतस्येन्द्रस्य पूर्वीः पूर्व्यः अनादिभूताः शुरुधः शं रुन्धन्तीति शुरुधः शत्रूणां सुखनिरोद्धारः, अथवा शु शुक् शोकः तं निरुन्धन्तीति शुरुधः, ककारलोपः, सज्जनानां शोकनिरोद्धारः कर्मविशेषाः सन्ति। किञ्च ऋतस्य सर्वकालानुगतस्येन्द्रस्य धीतिः प्रज्ञा वृजिनानि पापानि हन्ति। किञ्च श्लोकः स्तुतिरूपः शब्दः बुधानः बुद्ध्यमान उच्चार्यमाणः बधिरा बधिरौ कर्णौ ततर्द हिंसति। तदीयनामकीर्तनं कर्णयोः बाधिर्यं परिहरतीति भावः।

तेन पूञ् पवन इत्यतः कर्तरि ल्युट्, पुनाति भक्तजनेषु स्थितं पापं परिहृत्य तान् पवित्रयतीति निरुक्तेः **पवनमूर्तिरत्र** ॥ २९७ ॥

॥ ॐ पावनाय नमः ॥

**शुचमान आयोः । ऋतस्य दृळ्हा धरुणानि सन्ति पुरूणि**
**चन्द्रा वपुषे वपूंषि । ऋतेन दीर्घमिषणन्त ॥ २९८ ॥**

आयोः मनुष्यस्य मनुष्यान् प्रति शुचमानः दीप्यमानो वर्तते । ऋतस्य अबाधितस्वरूपस्य दृळ्हा दृढानि धरुणानि मन्वादिचक्रवर्तिनां धारकाणि चन्द्रा आह्लादकानि पुरूणि बहूनि वपूंषि कर्माणि सन्ति । ऋतेन सत्यवचनेन वपुषे शरीररक्षणार्थं दीर्घं बहुकालम् इषणन्त प्रार्थयन्ते ।

अनेन पान्तीति पाः मन्वाद्याश्चक्रवर्तिनः तेषामवनानि रक्षणादिरूपकर्माणि यस्य स इति निरुक्तेः **पावनमूर्तिरत्र** ॥ २९८ ॥

॥ ॐ अनिलाय नमः ॥

**पृक्ष ऋतेन गाव ऋतमा विवेशुः । ऋतं येमान ऋतमिद्**
**वनोत्यृतस्य शुष्मस्तुरया उ गव्युः । ऋताय ॥ २९९ ॥**

ऋतेन यथार्थज्ञानरूपेण प्रेरिता गावः सूर्यरश्मयः ऋतं भुवं प्रति आ विवेशुः । इन्द्र ऋतं उदकं येमानः नियच्छन् ऋतमित् उदकमेव ऋताय भगवतः पृक्षः अन्नानि प्रति पुनर्वर्षाकाले वनोति प्रयच्छति । ऋतस्येन्द्रस्य शुष्मः बलं तुरया तूर्णगतिरेव सन् गव्युः गां भूमिं प्राप्तो भवति ।

अनेन अं उदकं नितरां लाति ददाति, निपूर्वात् लातेर्डः, इति निरुक्तेः **अनिलमूर्तिरत्र** ॥ २९९ ॥

॥ ॐ कामघ्ने नमः ॥

**पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते । नू ष्टुत**
**इन्द्र नू गृणान इषं जरित्रे नद्यो न ॥ ३०० ॥**

बहुले विस्तीर्णे गभीरे अगाधे नू पोषिके परमे उत्कृष्टे पृथ्वी द्यावापृथिव्यौ ऋताय परमेश्वराय तत्पूजार्थं तदाज्ञया वा दुहाते सस्यादिकमभिवर्धयतः । हे इन्द्र नु इदानीमस्माभिः स्तुतः स्तूयमानः गृणानः स्वामित्वेन गृह्यमाणः त्वं जरित्रे स्तोत्रे जनाय नद्यो न नद्य इव इषमन्नं ददासि ।

अनेन काम्यत इति कामोऽन्नम् । काममिषमन्नं हापयति, हन्तेः गत्यर्थस्यान्तर्णीतण्यर्थस्य रूपमिदम्, प्रापयतीति कामहेति निरुक्तेः **कामहमूर्तिरत्र** ॥ ३०० ॥

**॥ इति श्रीबृहतीसहस्रपारावारे तृतीयः खण्डः समाप्तः ॥**

**॥ ॐ कामकृते नमः ॥**

**पीपेः । अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः**
**सदासाः । [1]इन्द्रो मदाय वावृधे शवसे वृत्रहा ॥ ३०१ ॥**

हे हरिवः नव्यं स्तुत्यं सोमं पीपेः पिबसि । किञ्च ब्रह्म स्तोत्रं ते तुभ्यं धिया बुद्ध्या अकारि कृतम् । तेन त्वदीयस्तोत्रकरणेन वयं रथ्यः रथिनः सदासाः परिवारयुक्ताश्च स्याम भवेम । वृत्रहा इन्द्रः परमेश्वरः मदाय मदहेतोः सोमपानाय शवसे भक्तानां सुखदानाय च ववृधे यज्ञेष्वभिव्यक्तो भवति ।

अनेन आ समन्तात् मानम् आमः, आङ्पूर्वकस्य माङ् मान इत्यस्येदं रूपम्, आमो वृद्धिः, कं सुखं प्रति आमं वृद्धिं यज्ञेष्वभिव्यक्तं करोतीति कामकृदिति निरुक्तेः **कामकृन्मूर्तिरत्र** ॥ ३०१ ॥

**॥ ॐ कान्ताय नमः ॥**

**नृभिः । तमिन्महत्स्वाजिषूतेमर्भे हवामहे स वाजेषु**
**प्र नोऽविषत् । ता अस्य सूददोहसः सोमं श्रीणन्ति ॥ ३०२ ॥**

वयं तमित् तमेवेन्द्रं महत्सु आजिषु महायुद्धेषु अर्भे उत अल्पेष्वपि युद्धेषु हवामहे । ईम् एव । स अस्माभिराहूत इन्द्रः नृभिः सेनानेतृभिः सह शत्रुजनैः वाजेषु युद्धेषु नः अस्मान् प्र अविषत् प्रकर्षेण रक्षतु । हे इन्द्र सूददोहसः सर्वकर्मप्रवर्तकस्य तव पानार्थं ता आपो गावश्च सोमं श्रीणन्ति संयोजयन्ति ।

अनेन कमु कान्तौ, कान्तिरिच्छा, इच्छाविषयत्वात् कान्तः युद्धादावपेक्षणीयः, इति निरुक्तेः **कान्तमूर्तिरत्र** ॥ ३०२ ॥

---

१. ऋग्वेद १-८१-१, गोतमो राहूगणः ।

॥ ॐ कामाय नमः ॥

**पृश्नयः । जन्मन् देवानां विशस्त्रिष्वारोचने दिवः ।**

**[1]इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः ॥ ३०३ ॥**

पृश्नयः प्रश्नयोग्याः आपो गावो वाचश्च विशो ऋत्विजश्च आरोचने आरोचनेषु आरोचमानेषु आदित्यचन्द्रविद्युल्लोकेषु स्थिता ये देवाः दिवः स्वर्गस्य अधिपतयश्च देवाः तेषां देवानां जन्मन् जन्मनि अभिव्यक्तिस्थाने यज्ञे, सोमं श्रीणन्तीति सम्बन्धः । तत्र माहात्म्योत्कर्षजिज्ञासाकातरः शिष्यो गुरुं पृच्छति । नु इदानीम् इमा इमानि भुवना भुवनानि अशेषप्राण्याधारभूतं ब्रह्माण्डमिति यावत् कं कः पुरुषः सीषधाम साधयामास, निर्मातीति यावत् । अथ गुरुराह । इन्द्रः उत्पादयति तदनु तदनुगृहीताः विश्वे च देवा उत्पादयन्तीति ।

अनेन कं ब्रह्माण्डम् आ समन्तात् माति निर्मातीति निरुक्तेः **काममूर्तिरत्र** ॥ ३०३ ॥

॥ ॐ कामप्रदाय नमः ॥

**यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह चीक्लृपाति ।**

**आदित्यैरिन्द्रः सगणो मरुद्भिरस्माकं भूतु ॥ ३०४ ॥**

तर्हीन्द्रस्येतरेषां च तुल्यवदेकक्रियान्वयवाचिशब्दबलात् समप्राधान्यमुक्तमिति भ्रान्तिमुक्तविवरणेन परिहरति । इन्द्रः स्वयं प्रधानः सन् आदित्यैरदितिपुत्रैः विश्वेदेवैश्च सहितः नः यज्ञं तन्वं प्रजां च समस्तभुवनानि च चीक्लृपाति, क्लृपेः यङ्लुगन्तस्य लेटि रूपम्, कल्पयति । सहयोगे तृतीया । पुत्रेण सहागतः पितेत्यादौ पुत्रस्येव विश्वेषामादित्यादीनामप्राधान्यम् । इन्द्रस्तु भगवान् प्रधान एव । इतरे तु द्वारमात्रमिति भावः । एवं भ्रान्तिं परिहृत्य तमेव प्रार्थयते । सगण इन्द्रः आदित्यैर्द्वादशभिः मरुद्भिः पञ्चाशद्भिः सह अस्माकमिष्टदो भूतु भवतु ।

अनेन कामं कामितं तनुप्रजादिकं प्रददाति कल्पयतीति निरुक्तेः **कामप्रदमूर्तिरत्र** ॥ ३०४ ॥

---

१. ऋग्वेद १०-१५७, भुवन आप्त्यः, साधनो वा भौवनः ।

॥ ॐ प्रभवे नमः ॥

**अविता तनूनाम् । हत्वाय देवा असुरान् यदायन् देवा**
**देवत्वमभिरक्षमाणाः । प्रत्यञ्चमर्कमनयन् ॥ ३०५ ॥**

किञ्चायमिन्द्रः तनूनां शरीराणामविता रक्षकश्च । देवाः सर्वेपि स्वकीयं देवत्वमभिरक्षमाणाः तत्तद्देवतापदोपघातकानसुरान् हत्वाय हन्तुं यत् यस्मात् यमिन्द्रमायन् प्राप्नुवन् प्रार्थयन्ते । (अतः) तमिन्द्रं प्रत्यञ्चं स्वाभिमुखम् अर्कम् अस्माभिः पूजनीयम्, अतिकं अतिसुखं वा अनयन् चक्रुः ।

अनेन प्रकृष्टं देवत्वं देवेषु भावयतीति प्रभुरिति निरुक्तः **प्रभुमूर्तिरत्र** ॥ ३०५ ॥

॥ ॐ युगादिकृते नमः ॥

**शचीभिरादित् स्वधामिषिरां पर्यपश्यन् । [1]आ याहि**
**वनसा सह गावः सचन्त वर्तनिं यदूधभिः ॥ ३०६ ॥**

आत् स्वाभिमुखीकरणादेव इषिरां इच्छाविषयभूतां स्वधां सुखं शचीभिः स्तुतिभिः पर्यपश्यन् अन्वभूवन् । हे इन्द्र गावो धेनवः ऊधभिः ऊधोभिः यत् यस्मिन् गृहे सचन्त समवेता वर्तन्ते वर्तनिं तद्गृहं प्रति वनसा संभोजनेन संभोक्तुम् आयाहीति सम्बन्धः ।

अनेन युज्यते चेतनेषु सम्बध्यत इति युक् स्वधाऽपरर्यायं सुखम्, आङ् पूर्वस्यादेः किः आदिर्भोक्ता, तथाच युजः सुखस्य आदिं समन्ताद् भोक्तारं करोतीति निरुक्तः **युगादिकृन्मूर्तिरत्र** ॥ ३०६ ॥

॥ ॐ युगावर्ताय नमः ॥

**आ याहि वस्व्या धिया मंहिष्ठो जारयन्मखः सुदानुभिः ।**
**पितुभृतो न तन्तुमित् सुदानवः प्रति दध्मो यजामसि ॥ ३०७ ॥**

हे इन्द्र मखो यज्ञः तं जारयति जरयति पुनःपुनरावर्तयतीति जारयन्मखः मंहिष्ठो महत्तमस्त्वं वस्व्या वासविषयिकया बुद्ध्या एतस्मिन् गृहे वत्स्यामीति बुद्ध्या सुदानुभिः समीचीनदानैः सह

१. ऋग्वेद १०-१७२, संवर्त आङ्गिरसः ।

आ याहि। हे इन्द्र वयं त्वां यजामसि यजामः इत् एव। तस्मात् त्वत्तः तन्तुं तन्वन् विस्तृतान्[१] सुदानवः समीचीनदानानि पितुभृतो न पितुः अन्नं तद् बिभर्ति ददातीति पितुभृत् अन्नदानशीलात् पुरुषादिव प्रति दध्मः प्रतिदिनं धारयामः। पुनःपुनरावर्तमानस्य त्वदीयदानस्य वयं सम्प्रदानं भवेम।

अनेन अभीष्टजातं युज्यते सम्बध्यते अनेनेति युक् यज्ञो दानं च। तद् आवर्तयति पुनःपुनः प्रवर्तयतीति युगावर्त इति निरुक्तेः **युगावर्तमूर्तिरत्र** ॥ ३०७॥

**॥ ॐ अनेकमायाय नमः॥**

**उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता।**

**[२]प्र व इन्द्राय वृत्रहन्तमाय विप्रा गाथम्॥ ३०८॥**

अयमिन्द्रः उषाः, वश कान्तौ, कमनीयः, स्वसुः सु समीचीना असवः प्राणा बलानि, सामर्थ्यानीति यावत्, अस्य सन्तीति स्वसुः तमः शत्रूणां ग्लानिकरश्च सन् अपः कर्माणि सुजातता सुजाततां सुजन्मानि वर्तनिं वर्तनं च संवर्तयति सम्यक् प्रवर्तयति। कर्मणां जन्मनामवस्थानस्य च इन्द्र एव प्रवर्तक इति भावः। हे विप्राः प्राज्ञा ऋत्विजः वः युष्माकं वृत्रहन्तमाय आवरकाज्ञानादिनिवारकायेन्द्राय गाथं गायत सम्यक् स्तुत।

अनेन अनेके माया असवः प्राणाः सामर्थ्यानि च यस्य स इति निरुक्तेः **अनेकमायमूर्तिरत्र** ॥ ३०८॥

**॥ ॐ महाशनाय नमः॥**

**गायत यज्जुजोषत्। अर्चन्त्यर्कं देवताः स्वर्का आस्तोभति**

**श्रुतो युवास इन्द्रः। उपप्रक्षे मधुमति॥ ३०९॥**

मधुमति सोमरसवति उपप्रक्षे सम्यग्वासयोग्ये यज्ञवाटे यत् स्तोत्रमिन्द्रः जुजोषत् स्वीकुर्यात् तथाविधं स्तोत्रं प्रगायतेति सम्बन्धः। स्वर्काः सु समीचीना अर्का ऋचः अभिमन्यमानतया यासां

---

१. तन्वन् विस्तृतानित्येव सर्वेष्वपि कोशेषु। अर्थस्तु न स्फुटः। लेखने प्रमादः स्यात्।

२. प्र व इन्द्रायेत्यारभ्य स्पृशद्भिरित्यन्ता नव ऋचः शाखान्तरगता आरण्यके शंसनीयत्वेन पठिताः।

ता देवताः अर्कमर्चनीयं तमिन्द्रम् अर्चन्ति पूजयन्ति । अयमिन्द्रः आश्रुतः सम्यग् भक्तैः शरणं प्राप्तः सन् युवासः, शत्रुनामैतत्, महतोऽपि शत्रून् आस्तोभति अश्नाति, विनाशयतीति यावत् ।

अनेन महतः शत्रून् अश्नातीति निरुक्तेः **महाशनमूर्तिरत्र** ॥ ३०९ ॥

**॥ ॐ अदृश्याय नमः ॥**

**क्षियन्तः पुष्यन्तो रयिं धीमहे तमिन्द्र । विश्वतो दावन्**
**विश्वतो न आ भर यं त्वा शविष्ठमीमहे । स सुप्रणीते ॥ ३१० ॥**

सुप्रणीते सम्यक्तया निर्मिते गृहे रयिं द्रविणादिकं पुष्यन्तः पोषयन्तः क्षियन्तः निवासं कुर्वन्तः वयं धीमहे ध्यायेम । ध्यानं विना दर्शनायोगादिति भावः । हे विश्वतोदावन् सर्वाभीष्टप्रद इन्द्र विश्वतः सर्वस्मादपि शत्रुवर्गतः धनान्यपहृत्य नः आभर । हे इन्द्र यं शविष्ठं सुखकृत्तमं त्वामीमहे प्राप्नुमः स त्वं नः आभरेति सम्बन्धः ।

अनेन स्वतः दृश्यो न भवतीति निरुक्तेः **अदृश्यमूर्तिरत्र** ॥ ३१० ॥

**॥ ॐ व्यक्तरूपाय नमः ॥**

**नृतमः स्वराळसि मंहिष्ठो वाजसातये । त्वं ह्येक ईशिषे**
**सनादमृक्त ओजसा । विश्वस्य ॥ ३११ ॥**

हे इन्द्र त्वं नृतमः इन्द्रियप्रेरकाणां देवानामपि सकाशात् श्रेष्ठः । अत एव स्वराट् स्वयमेव स्वस्य राट् राजा अन्यो नास्ति, स्वतन्त्रोऽसि । वाजसातये भक्तानामन्नादिभोगप्राप्तये मंहिष्ठः महत्तमश्चासि । हे इन्द्र त्वम् एक एव विश्वस्य व्यक्ताव्यक्तात्मकस्य प्रपञ्चस्य ईशिषे स्वाम्यसि । निर्मातासि । ओजसा स्वकीयसांसिद्धिकबलेन सनात् नित्यम् अमृक्तः व्यत्ययेन अमृतः, नित्यमुक्तश्चासि ।

अनेन व्यक्तं ब्रह्माण्डादिकं रूपयति निर्मातीति निरुक्तेः **व्यक्तरूपमूर्तिरत्र** ॥ ३११ ॥

**॥ ॐ सहस्रजिते नमः ॥**

**प्रस्तोभ विद्वान् पुरा वा यदिवेहास नूनम् । इषं नो**
**मित्रावरुणा कर्तनेळां पीवरीमिषं कृणुही न इन्द्र ॥ ३१२ ॥**

हे प्रस्तोभ अतिदृढ इन्द्र त्वं पुरा आस पुरातनं यदासीत्, अतीतमिति यावत्, यदि वा यद्वा भविष्यति, यदि वा नूनमिदानीम् आस वर्तते, यदि वा इह समीपे आस, यदि वा दूरे आस, अतीतानागतवर्तमानदूरसमीपादिस्थं सर्वमपि विद्वान् जानासि । हे इन्द्र त्वत्प्रेरितौ मित्रावरुणौ देवौ नः अस्मभ्यम् इषमन्नं इळां भूमिं स्थानं च कर्तना कर्तनौ कर्तारौ भवेताम् । त्वं च पीवरीं बहुळां पूर्णामिषमन्नं नः अस्मभ्यं कृणुहि देहि ।

अनेन सहस्रं देशकालादिव्यवहितमव्यवहितं च सर्वं जयति प्रापयतीति सहस्रजित् । जयेः कर्तरि क्विप् । ह्रस्वस्य पिति कृति तुक्, इति निरुक्तेः **सहस्रजिन्मूर्तिरत्र** ॥ ३१२ ॥

**॥ ॐ अनन्तजिते नमः ॥**

**शं पदं मघं रयीषणि न सोमो अव्रतं हिनोति न**

**स्पृशद्रयिः । [१]एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतः ॥ ३१३ ॥**

हे इन्द्र रयीषणि रयिश्च इट् च रयीषौ, उपलक्षणमेतत्, अनन्तान्यपि तान्यस्य सन्तीति रयीषी, इकारस्याकारः यद्वा रयेः सन् लाभो यस्य सः रयिषणु, व्यत्ययेन दीर्घः, तस्मिन् बहुवित्तवति त्वयि शं सुखसाधनं पदं गतिसाधनं मघं यज्ञसाधनं सोमचरुपुरोडाशादिद्रव्यम् अस्मभिः समर्पितमस्तु । यतः अव्रतं त्वत्पूजात्मककर्मरहितं जनं सोमो देवः न हिनोति न वर्धयति, रयिश्च न स्पृशत् न स्पृशति, तत इति सम्बन्धः । य इन्द्रः नाम श्रुतः प्रसिद्धः एष ऋत्वियः ऋत्विक्षु याज्यः एष ब्रह्मा परिपूर्णश्च ।

अनेनानन्तानि भोग्यानि जयतीति निरुक्तेः **अनन्तजिन्मूर्तिरत्र** ॥ ३१३ ॥

**॥ ॐ इष्टाय नमः ॥**

**गृणे । विश्पतयो यथायथमिन्द्र त्वाद्याभिरातयः ।**

**त्वामिच्छवसस्पते इन्द्र संयान्ति गिरो न संयतः ॥ ३१४ ॥**

हे इन्द्र विश्पतयो राजानो मन्वाद्याः सर्वेपि त्वाद्य त्वामेवाश्रित्य अभिरातयः अत्युत्कृष्टरमणवन्तः अतिदातारो वा यथायथं स्वं स्वं स्थानं प्राप्तवन्तश्च बभूवुः । हे शवसस्पते सुखादीनां पते परमेष्ट

---

१. एष ब्रह्मेत्यादितिस्रो द्विपदा ऋचः शाखान्तरगताः शंसनीयतया आरण्यके पठिताः ।

इन्द्र संयतः संयतां त्वां शरणं प्राप्तानां नः अस्माकं गिरो वेदरूपा वाचः त्वामित् त्वामेव संयान्ति संगच्छन्ति, त्वत्प्रतिपादका एव। अतस्त्वामहं गृण इति सम्बन्धः।

अनेन परमेष्टसुखरूपत्वादिष्टः यद्वा वेदवाचां प्रतिपादयितुमिष्ट इति निरुक्तेः **इष्टमूर्तिरत्र** ॥ ३१४ ॥

**॥ ॐ विशिष्टाय नमः ॥**

**[1]आ धूर्ष्वस्मै दधाताश्वानिन्द्रो न वज्री हिरण्यबाहुः।**
**ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः। जन्मन् देवानाम्॥ ३१५॥**

वज्री ज्ञानसुखादिमान् हिरण्यबाहुः आनन्दात्मकदेहः धूर्षु युद्धेषु अस्मै योद्ध्रे अश्वान् अस्मै स्तोत्रे मह्यम् अश्वान् गवाश्वादीनां दधाता आदध्यात्। किञ्चास्य सूददोहस इन्द्रस्य अर्थे देवानां जन्मन् यज्ञे ताः पृश्नयः सोमं श्रीणन्ति।

अनेन ज्ञानानन्दात्मकत्वेन वि उत्कृष्टतया शिष्टः वेदवाक्यैर्विहित इति निरुक्तेः **विशिष्टमूर्तिरत्र** ॥ ३१५ ॥

**॥ ॐ शिष्टेष्टाय नमः ॥**

**विशस्त्रिष्वारोचने दिवः। [2]यद्वावान पुरुतमं पुराषाळा**
**वृत्रहेन्द्रो नामान्यप्राः। अचेति प्रासहस्पतिः॥ ३१६॥**

शत्रूणां पुराणि सहत इति पुराषाट् वृत्रहा इन्द्रः पतिः यं पुरुषं मनुष्यं वावान भक्तत्वेन सं भजते तं पुरुषं पुरुतमं पूर्णतमं सर्वकामैः परिपूर्णम् आ सम्यक् अचेति करोति। न केवलं मनुष्यमेव किन्त्वारोचमानेषु त्रिषु आदित्यचन्द्रविद्युल्लोकेषु दिवि च या विशः प्रजाः ता अपि पुरुतमाः करोति। किञ्चायमिन्द्रः प्रसहस्पतिः प्रकर्षेण सहसोऽवष्टम्भकशक्तेः पतिः स्वामी। अत एव हे इन्द्र त्वं नामानि पुरुतमपुराषाड्वृत्रहेत्यादिनामानि अप्राः प्राप्तोऽभूः।

१. ऋग्वेद ७-३४-४, मैत्रावरुणिर्वासिष्ठः।
२. ऋग्वेद १०-७४-६, गौरिवीतिः शाक्त्यः।

अनेन वेदे शिष्टानां मुक्तानां देवर्षिजनानामिष्टं कामपूरणं यस्मात् स इति निरुक्तेः शिष्टेष्टमूर्तिरत्र ॥ ३१६ ॥

॥ ॐ शिखण्डिने नमः ॥

**तुविष्मान् यदीमुश्मसि कर्तवे करत् तत् । ता अस्य**
**सूददोहसः सोमं श्रीणन्ति पृश्नयः । जन्मन् देवानाम् ॥ ३१७ ॥**

तुविष्मान् बलवानिन्द्रः यत् कार्यं शत्रुसुखखण्डनादिकं कर्तवे कर्तुम् उश्मसि इच्छसि तत् कार्यं करत् ईम् करोत्येव, सत्यसंकल्प इत्यर्थः । अस्य सूददोहस इन्द्रस्य ताः पृश्नयो देवानां जन्मनि यज्ञे सोमं श्रीणन्ति ।

अनेन शं सुखं तदेवातिशयितं शि तस्य खण्डः खण्डनमस्यास्ति, शत्रूणामतिशयितं सुखं खण्डयतीति निरुक्तेः शिखण्डिमूर्तिरत्र ॥ ३१७ ॥

॥ इति प्राग्भागः समाप्तः ॥

## ॥ अथ गायत्रतृचाशीतिः ॥

॥ ॐ नहुषाय नमः ॥

**विशास्त्रिष्वारोचने दिवः । [1]महाँ इन्द्रो य ओजसा पर्जन्यो**
**वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधे । प्रजाम् ॥ ३१८ ॥**

य इन्द्रः आरोचनेषु त्रिष्वादित्यचन्द्रविद्युल्लोकेषु दिवि च स्थिताः विश अन्याश्च प्रजाः वन्धादमोचयत् । अत एव ओजसा महान् स इन्द्रः पर्जन्यो मेघः वृष्टिमानिव वृष्टिं कुर्वाण इव वत्सस्य एतन्मन्त्र-द्रष्टुर्वत्सनामकस्य ऋषेर्मम स्तोमैः प्रजां भक्तजनं प्रति ववृधे अत्यन्तं तुष्टो भवेत् ।

अनेन णह वन्धने उकारप्रत्ययः, तस्मिन्नुपपदे सर्तेरन्तर्णीतण्यर्थात् डः, नहुं वन्धं सारयति अपगमयतीति नहुषः, षत्वं छान्दसम् । यद्वा हु दानादानयोरित्यस्मात् कर्मणि कुषन्प्रत्ययः हुषो भक्षणीयः, स न भवतीति नहुषः, नभ्राडिति नलोपाभावः, वत्सस्तोत्रेणातिवृद्धत्वान्न केनापि भक्षणीयः परिमितमेव वस्तु भक्षणीयं दृष्टम्, इति निरुक्तेः **नहुषमूर्तिरत्र** ॥ ३१८ ॥

॥ ॐ वृषाय नमः ॥

**ऋतस्य पिप्रतः प्र यद् भरन्त वह्नयः । विप्रा ऋतस्य वाहसा ।**
**कण्वा इन्द्रं यदक्रत स्तौमैर्यज्ञस्य साधनम् ॥ ३१९ ॥**

पिप्रतः पॄ पालनपूरणयोरित्यस्येदं रूपम्, सर्वाभीष्टपूरकस्य ऋतस्य सर्वदेशकालानुगतस्येन्द्रस्य पूजनाय वह्नयः कर्मनिर्वाहकाः विप्रा मेधाविनो ऋत्विजः हविरादिकं प्रभरन्त सम्पादितवन्तः । यत् तत्सम्पादनं ऋतस्याविकारिणः इन्द्रस्य वाहसा प्रेरणेनैव । कण्वाः कण्वप्रभृतयो ऋषयः इन्द्रमुद्दिश्य स्तोमैः स्तोत्रैः यस्य साधनमुत्पादनम् अकृत अकुर्वन्निति यत् तदपि ऋतस्य वाहसा ।

अनेन वर्षतेः कर्तरि इगुपधलक्षणः कः, भक्ताभिलषितं वर्षति पूरयतीति वृष इति निरुक्तेः **वृषमूर्तिरत्र** ॥ ३१९ ॥

---

१. ऋग्वेद ८-६, वत्सः काण्वः ।

॥ ॐ क्रोधघ्ने नमः ॥

**जामि ब्रुवत आयुधम् । समस्य मन्यवे विशो विश्वा**
**नमन्त कृष्टयः । समुद्रायेव सिन्धवः । ओजः ॥ ३२० ॥**

हे जनाः जामि सहजामिव स्थितम् आयुधमायुधवत् स्थितं शत्रुसंहारकं मन्त्रं ब्रुवते ब्रूत । अस्येन्द्रस्य मन्यवे क्रोधाय सिन्धवो नद्यः समुद्रायेव विश्वाः समस्ता कृष्टयः कर्षणीयाः विशः शत्रुप्रजाः सं नमन्त सम्यक् प्रविशन्ति । यथा समुद्रे नद्यः प्रविष्टा न दृश्यन्ते तथा त्वत्क्रोधे निविष्टा शत्रवोपि न दृश्यन्ते ।

अनेन क्रोधेन शत्रून् निहन्तीति निरुक्तेः **क्रोधहमूर्तिरत्र** ॥ ३२० ॥

॥ ॐ क्रोधकृते नमः ॥

**तदस्य तित्विष उभे यत् समवर्तयत् । इन्द्रश्चर्मेव रोदसी ।**
**वि चिद् वृत्रस्य दोधतो वज्रेण शतपर्वणा ॥ ३२१ ॥**

यद् यदा अस्येन्द्रस्य ओजः तित्विषे दीप्तमासीत् तत् तदा अयमिन्द्रः ....[१] दोधतः विश्वद्रोग्धुः विश्वद्रोहिणो वृत्रासुरस्य शिरः शतपर्वणा शतानि पर्वाणि विच्छेदा यस्य तेनातिदृढेन वज्रायुधेन, शिरो विभेदेत्युत्तरेणान्वयः ।

अनेन कृञः कर्तयौणादिकः अप्रत्ययः, करोतीति क्रम्, द्यौर्हास्मै वृष्टिमन्नाद्यं संप्रयच्छतीति श्रुतेः क्रं द्यौः, उ सम्यक् सस्यादिकं धत्त इति उधं पृथिवी, अस्यामोषधयो जायन्त इति श्रुतेः, उपूर्वस्य धात्रः कर्तरि कः । क्रं च उधं क्रोधे द्यावापृथिव्यौ, ते आत्मनि करोति संस्थापयतीति निरुक्तेः **क्रोधकृन्मूर्तिरत्र** ॥ ३२१ ॥

॥ ॐ कर्त्रे नमः ॥

**शिरो विभेद वृष्णिना । इमा अभि प्र णोनुमो विपामग्रेषु**
**धीतयः । अग्नेः शोचिर्न दियुतः ॥ ३२२ ॥**

य इन्द्रः वृष्णिना अभिवर्षणशीलेन वज्रेण दैत्यानां शिरो विभेद तस्येन्द्रस्य धीतयः क्रियाः

१. अत्र ग्रन्थपातः कोशेषु ।

प्रेरणादिक्रियाः दिद्युतो दीप्तिमतः अग्रेः शोचिर्न ज्वालेव, विपां विशेषेण पान्तीति विपा लोकपालाः तेषामग्रेष्वपि प्रवर्तकाः सन्ति। तेषु प्रेरको भूत्वा कर्माणि करोतीति यावत्। इमाः ताः प्रेरणादिक्रियाः अभि प्रणोनुमः सम्यक् स्तुमः।

अनेन लोकपालादिषु स्थित्वा तदुचिताः क्रियाः करोतीति निरुक्तेः **कर्तृमूर्तिरत्र**॥ ३२२॥

**॥ ॐ विश्वबाहवे नमः॥**

**गुहा सतीरुप त्मना प्र यच्छोचन्त धीतयः। कण्वा ऋतस्य धारया। प्र तमिन्द्र नशीमहि रयिं गोमन्तम्॥ ३२३॥**

रयिं प्रनशीमहि वयं प्राप्नुमः।[१]..........

अनेन वहेः कर्मणि उणप्रत्ययः, वकारस्य बकारादेशः। उह्यन्ते प्रकटीक्रियन्त इति बाहवः क्रियाः। विश्वेषु समस्तेषु प्रकटीकृता बाहवः क्रिया यस्येति निरुक्तेः **विश्वबाहुमूर्तिरत्र**॥ ३२३॥

**॥ ॐ महीधराय नमः॥**

**अश्विनम्। प्र ब्रह्म पूर्वचित्तये। अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ। अहं सूर्य इवाजनि॥ ३२४॥**

अश्वोऽस्यास्तीत्यश्वी तमश्विनम् अश्वसहितभागं प्र नशीमहि प्राप्नुमः। किञ्च पूर्वचित्तये पूर्वमनादिसिद्धं ब्रह्म स्तोत्रं प्रनशीमहि। अनेन स्तोत्रेण ब्रह्मज्ञानं स्वस्वरूपज्ञानं च प्राप्नुमः। वत्सोऽहं ऋतस्य अविकारिणः पितुर्जनकस्येन्द्रस्य प्रसादात् परि परितः मेधां सर्वविषयकज्ञानं जग्रभ गृहीतवानस्मि। हि प्रसिद्धमेतत्। किञ्चाहं वत्सः सूर्य इव प्रकाशमानोऽजनि जातः।

अनेन मही मेधा वर्णविकारादिः, तां धत्त इति महीधः। महीशब्दे कर्मण्युपपदे धात्रः कः। महीधं मेधाविनं वत्सनामकमृषिं रमयति प्रकाशयतीति निरुक्तेः **महीधरमूर्तिरत्र**॥ ३२४॥

---

१. अत्र परिशीलितेषु सर्वेष्वपि हस्तलिखितपुस्तकेषु ग्रन्थपातो दृश्यते। ''अत्र ग्रन्थपातः'' इति एकस्मिन् कोशे निर्दिष्टश्च। अतो ज्ञायते सर्वं इमे ग्रन्था एकस्मादेव मूलग्रन्थात् सम्पादिताः, तस्मिन् मूललिखितग्रन्थे एव एतादृशा दोषाः सन्तीति। अतः शोधनं दुष्करं सम्पन्नम्।

॥ ॐ अच्युताय नमः ॥

अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत् । येनेन्द्रः
शुष्ममिद् दधे । ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः ॥ ३२५ ॥

येन भोगसाध्येन (?) मन्मना ज्ञानेन कण्ववत् कण्वो यथा तथा अहमपि गिरः अस्मदीया वाचः शुम्भामि शोभयामि । गिरां तद्विषयज्ञानेन हि शोभमानता । हे इन्द्र ये असुरजना त्वां न तुष्टुवुः ते विनष्टा अभवन् । ये च ऋषयः सात्विका जना त्वां तुष्टुवुः ते अभिवृद्धा आसन् इत्यध्याहारः।

अनेन स्तावको जनः च्युतः क्षीणो न भवत्यस्मादित्यच्युत इति निरुक्तेः अच्युतमूर्तिरत्र ॥ ३२५ ॥

॥ ॐ प्रथिताय नमः ॥

ममेद् वर्धस्व सुष्टुतः । यदस्य मन्युरध्वनीद् वि वृत्रं
पर्वशो रुजन् । अपः समुद्रमैरयत् ॥ ३२६ ॥

इत् तस्मात् मम मया सुस्तुतः सम्यक् स्तुतः त्वं वर्धस्व प्रवृद्धो भव प्रख्यातो भव । अस्येन्द्रस्य यत् योग्यं मन्युः क्रोधः प्रज्ञाविशेषो वा अध्वनि अपां मार्गे निरोधकत्वेन स्थितं वृत्रमसुरं पर्वशः सन्धिषु विरुजन् विशेषेण भञ्जयन् अपो नदीजलानि समुद्रम् ऐरयत् प्रापयत् । वृत्रं हत्वा नदीमार्गान् शोधयित्वा समुद्रं प्रापयामास ।

अनेन प्रथ प्रख्यान इत्यस्मात् कर्मणि क्तः प्रथितः प्रख्यातः अतिवृद्धः । यद्वा प्रथाशब्दान्मतुबर्थे अकारप्रत्ययः, प्रथं प्रथितं गङ्गादिनदीजातं समुद्रं गमयतीति प्रथितः, इण् गतावित्यस्मादन्तर्णीत-ण्यर्थात् कर्तरि क्तः, प्रसिद्धस्य गङ्गादेः समुद्रप्रापकत्वात् प्रथितः । यद्वा उक्तरीत्या प्रथः प्रसिद्धो मन्युः, तेन इतः प्राप्तः, पररूपमुपपदान्त्यलोपो वा, इति निरुक्तेः प्रथितमूर्तिरत्र ॥ ३२६ ॥

॥ ॐ प्राणाय नमः ॥

नि शुष्ण इन्द्र धर्णसिं वज्रं जघन्थ दस्यवि । वृषा ह्युग्र
शृण्विषे । न याव इन्द्रमोजसा नान्तरिक्षाणि वज्रिणम् ॥ ३२७ ॥

उग्र शत्रूणां क्रूर शुष्णे जगच्छोषके दस्यवि उपक्षयकरेऽसुरे धर्णसिं तीक्ष्णधारं वज्रं नि जघन्थ प्रहरसि। हि यस्मादेवं प्रकृष्टचेष्टावान् तस्माद् वृषा अभिलषितवर्षिता शृण्विषे श्रूयसे। किञ्च द्यावः स्वर्गाद्युपरितनलोकाः अन्तरिक्षाणि अन्तरिक्षलोकाः भूमयो भूलोकाश्च एवं चतुर्दशलोकास्तत्स्थ-जनाश्च वज्रिणमिन्द्रम् ओजसा बलेन न विव्यचन्त न पृथक् कुर्वन्ति। सर्व एते मिलिता इन्द्रं स्वस्थानाच्चालयितुमसमर्थाः, अतोऽसौ प्रकृष्टबलवानिति तात्पर्यम्।

अनेन प्र प्रकृष्टमनं चेष्टा दस्युषु वज्रप्रहरणादिरूपा क्रिया यस्य सः, अथवा आणिः कीलम् आणिरिवाणिः चालयितुमशक्यः प्राणः, इकारस्याकारः, इति निरुक्तेः **प्राणमूर्तिरत्र** ॥ ३२७॥

॥ ॐ प्राणदाय नमः ॥

**न विव्यचन्त भूमयः। यस्त इन्द्र महीरपः स्तभूयमान**
**आशयत्। नि तं पद्यासु शिश्नथः। य इमे ॥ ३२८ ॥**

हे इन्द्र भूमयः भूम्या जनाः न विव्यचन्त न विवेक्तुं शक्नुवन्ति। स त्वं यो वृत्रः ते त्वया महीः महतीः अप उदकानि आ स्तभूयमानः सम्यक् स्तम्भमानः य इमे रोदसी प्रसिद्धे द्यावापृथिव्यौ आ स्तभूयमानः निरुन्धन् अशयत् अशेरत तं वृत्रं पद्यासु नदीमार्गेषु स्थितं नि शिश्नथः, श्नथतिर्वधकर्मा, अहनत्। नितरां संहृतवानेव। वृत्रं हत्वा प्राणिनां जलानि ददातीति तात्पर्यम्।

अनेन प्राणं जीवनमिति यावत्, तथा च प्राणं जीवनमुदकं ददातीति निरुक्तेः **प्राणदमूर्तिरत्र** ॥ ३२८ ॥

॥ ॐ वासवानुजाय नमः ॥

**रोदसी मही समीची समजग्रभीत्। तमोभिरिन्द्र तं गुहः।**
**य इन्द्र यतयस्त्वा भृगवो ये च तुष्टुवुः ॥ ३२९ ॥**

हे इन्द्र ये यतयः संन्यासिनो ये च भृगवः भृगुप्रभृतयो गृहस्थाः ये चान्ये जनाश्च त्वा त्वां तुष्टुवुः, त्वद्भक्ता इति यावत्, तेषां साधनानुष्ठानवारणाय मही महत्यौ समीची समीचीने रोदसी द्यावापृथिव्यौ (कर्म) यस्तमोरूपोऽसुरः तमोभिः स्वशरीरसृष्टैरन्धकारैः समजग्रभीत् सम्यगाक्रान्तवान् तम् असुरं गुहः अगुहः, गुह संवरणे, गूहितवानसि। द्यावापृथिवीव्याप्तमसुरं हत्वा तच्छरीरं कचिन्निम्नप्रदेशे स्थापितवान्।

अनेन वासः स्वविहितकर्मानुष्ठानेनावस्थानम्, तद् वारयतीति वासवः तमोरूपोऽसुरः । वृञः कर्तरि डः । वासवं तमोरूपमसुरम् अनु सम्यक् जयति संहरतीति निरुक्तेः **वासवानुजमूर्तिरत्र** ॥ ३२९ ॥

**॥ ॐ अपांनिधये नमः ॥**

**ममेदुग्र श्रुधी हवम् । इमास्त इन्द्र पृश्नयो घृतं**
**दुहत आशिरम् । एनामृतस्य पिप्युषीः । या इन्द्र ॥ ३३० ॥**

हे उग्र उत्कृष्टत्वेन गृहीत इत् इदानीं मम हवमाह्वानं श्रुधि शृणु । इमा वक्ष्यमाणा पृश्नयो होमधेनवः आपो वाचश्च घृतं सर्पिः आशिरं दधि च दुहते दुहन्ति । त्वत्पूजात्मकयज्ञसिद्ध्यर्थमाज्यादिद्रव्यं कल्पयन्ति । आपश्चेद् धेनूनामाहारभूततृणादिनिर्माणद्वारा घृतादीन् कल्पयन्ति । वाचश्चेद् ग्रहणसाधनत्वेन ग्रहणादिद्वारा घृतादीन् कल्पयन्ति । ऋतस्य ऋतम् एनाम् एतद् आज्यादिरूपं हविः पिप्युषीः[१] पिब ।

अनेनोक्तरीत्या अपामपूकार्याणां घृतदध्यादीनां निधिः पातृत्वेनाश्रय इति निरुक्तेः **अपांनिधिमूर्तिरत्र** ॥ ३३० ॥

**॥ ॐ अधिष्ठानाय नमः ॥**

**प्रस्वस्त्वाऽऽसा गर्भमचक्रिरन् । परि धर्मेव सूर्यम् ।**
**त्वामिच्छवसस्पते कण्वा उक्थेन वावृधुः । त्वां सुतास इन्दवः ॥ ३३१ ॥**

हे इन्द्र या गाव आपो वाचश्च प्रस्वः जगतां मातृवद् हितरूपाः सत्यः आसा आसाम् अन्तिके सर्वेषामन्तर्यामितया स्थितं गर्भं स्वान्तर्गतं सूर्यं धर्मेव यज्ञ इव पर्यचक्रिरन् अकुर्वन् । यथा यज्ञः सूर्योदयमपेक्ष्य प्रवर्तते एवं गाव इन्द्रमपेक्ष्यैव हविरादिकं दुहन्ति । ताभिर्धेन्वादिभिः कण्वाः कण्वप्रभृतयः उक्थेन स्तोत्रेण त्वामेव ववृधुः वर्धयामासुः । हे शवसस्पते सुखस्य पते इन्द्र सुतास इन्दवः सोमाः त्वां त्वामेव ववृधुः ।

---

१. पिप्युषीरितिपदं मध्योदात्तम् । तस्य क्रियापदत्वं क्लेशसाध्यम् । एवं ग्रन्थकारैः क्वचिदेव स्वरमतिहायार्थो वर्णितः ।

अनेन अधि अत्यन्तं मांसादिवत् श्लिष्टतया अवस्थानं यस्य तत् अधिष्ठानं गर्भः। गर्भवत् सर्वदा वीरेषु संश्लिष्टतया वर्तत इत्यधिष्ठानमिति निरुक्तेः **अधिष्ठानमूर्तिरत्र** ॥ ३३१ ॥

॥ ॐ अप्रमत्ताय नमः ॥

**तवेदिन्द्र प्रणीतिषूत प्रशस्तिरद्रिवः। यज्ञो वितन्तसाय्यः।**
**आ न इन्द्र महीमिषं पुरं न दर्षि ॥ ३३२ ॥**

हे अद्रिवः आदरयोग्यत्वादद्रिर्वायुः, तद्वदतिवेगेनाप्रमत्त एव वर्तत इत्यद्रिवाः, तस्य सम्बुद्धिः हे अद्रिवः इन्द्र। अत एवाप्रमत्तस्य सकाशाज्जातासु प्रणीतिषु प्रेरणास्वेव प्रशस्तिः स्तोत्रं वर्तते। उत किञ्च वितन्तसाय्यः विशेषेण सन्ततो यज्ञः तव प्रणीतिष्वेव जायते। इन्द्र नः अस्मभ्यं महीं महतीं इषमन्नं पुरं न पुरमिव आ दर्षि सम्यक् रासि। पुरातनराजेभ्य इव इषमन्नमस्मभ्यं देहीत्यर्थः।

अनेन वायुरिवाप्रमत्तो भवतीत्यप्रमत्त इति निरुक्तेः **अप्रमत्तमूर्तिरत्र** ॥ ३३२ ॥

॥ ॐ प्रतिष्ठिताय नमः ॥

**गोमतीम्। उत प्रजां सुवीर्यम्। उत त्यदाश्वश्व्यं यदिन्द्र**
**नाहुषीष्वा। उग्रे विक्षु प्रदीदयत्। अभि व्रजं न ॥ ३३३ ॥**

गोमतीं पशुमतीं प्रजाम् उत किञ्च सुवीर्यं सामर्थ्यं नाहुषीषु नहुषराजसम्बन्धिनीषु विक्षु प्रजासु आश्वश्व्यं आशु गमनशीलमेधजातम्(?) उत प्रसिद्धं सर्वभोगमपि अग्रे आदौ भवान् आ प्रदीदयत् प्रादात्। यद् यस्मादेवं तस्माद् अभिव्रजं न नहुषादिभ्योऽभीष्टसमूहमिव नः गवादिकं देहीत्यर्थः।

अनेन नाहुषप्रजा इव नोऽस्मान् प्रति अभीष्टदातृत्वेन स्थित इति वा प्रतिपुरुषं गवादिदातृत्वेन स्थित इति वा निरुक्तेः **प्रतिष्ठितमूर्तिरत्र** ॥ ३३३ ॥

॥ ॐ स्कन्दाय नमः ॥

**तत्त्विषे सूर उपाकचक्षसम्। यदिन्द्र मृळयासि नः।**
**यदङ्ग तविषीयस इन्द्र प्राजसि क्षितीः ॥ ३३४ ॥**

हे इन्द्र सूरः सूर्य इव स्थितः अथवा ज्ञानिभिः सम्यगङ्गीकृतस्वरूपः त्वम् उपाकचक्षसं

सर्वान्तर्यामितया सर्वेषां समीपस्थत्वादुपाको हरिः तं पश्यतीत्युपाकचक्षास्तं भक्तजनम् अभितन्निषे सम्यग् विस्तारयसि, प्रसिद्धं करोषि । यद् यस्मादेवं तस्मात् नः मृळयासि, लोट्, मृळय सुखदो भव। हे अङ्ग इन्द्र क्षितीः अशेषभूमण्डलं तविषीयसे, ऐश्वर्यकर्माऽयम्, अशेषभूमण्डलस्यापीश्वरो भवसि।

अनेन सुष्ठु कं सुकं सुकमेव स्कम्, उपपदान्त्यलोपः, तद् ददातीति स्कन्द इति निरुक्तेः **स्कन्दमूर्तिरत्र** ॥ ३३४ ॥

॥ ॐ स्कन्दधराय नमः ॥

**महाँ अपार ओजसा। तं त्वा हविष्मतीर्विश उप**
**ब्रुवत ऊतये। उरुज्रयसमिन्दुभिः। उपह्वरे ॥ ३३५ ॥**

हे इन्द्र यस्मादखण्डभूमण्डलाधिपतिस्तस्मात् ओजसा ओजःप्रभृत्यशेषगुणैः महान् अपारश्च अपरिमितश्चासि। हे इन्द्र तं पूर्वोक्तगुणं त्वाम् अत एव उरुज्रयसम् उरूणां यशस्विनां ब्रह्मादीनां ज्रयसं ज्यायांसं श्रेष्ठं, आधारमिति यावत्, हविष्मतीः हविष्मत्यः विशः प्रजाः त्वत्पूजका इन्दुभिः सोमैः सह ऊतये रक्षार्थमुपह्वरे समीपे उपब्रुवते आह्वयन्ति स्तुवन्ति च।

अनेन स्कं सुखमितरेभ्यो ददतीति स्कन्दा ब्रह्मादयः, तान् धरति बिभर्ति, अत्युत्तम इति यावत्, इति निरुक्तेः **स्कन्दधरमूर्तिरत्र** ॥ ३३५ ॥

॥ ॐ धुर्याय नमः ॥

**गिरीणां संगथे च नदीनाम्। धिया विप्रो अजायत।**
**अतः समुद्रमुद्वतश्चिकित्वाँ अव पश्यति ॥ ३३६ ॥**

अयमिन्द्रः गिरीणामुपह्वरे समीपे नदीनां संगथे संगमे च गिरिनद्याद्युचितसहनप्रवहणादि-कर्मनियामकतया स्थितत्वात् विप्रः विशेषेण गतिमान् अग्रगामी अजायत प्रसिद्धो बभूव। किञ्च यतोऽयमिन्द्रः उद्वतः उदकपूर्णस्य समुद्रं समुद्रस्य चिकित्वान् कर्ता। अवपश्यति च समुद्रादीन्।

तेन धुरमशेषदेवानामग्रभागं याति वहतीति धुर्यः, अशेषदेवानां दुरन्धरोऽग्रगामीति यावत्, इति निरुक्तेः **धुर्यमूर्तिरत्र** ॥ ३३६ ॥

॥ ॐ वरदाय नमः ॥

**यतो विपान एजति । आदित् प्रत्नस्य रेतसो ज्योतिष्प-**
**श्यन्ति वासरम् । परो यदिध्यते दिवा । कण्वास इन्द्र ते ॥ ३३७ ॥**

हे इन्द्र यतो यस्मादेवं भवान् उक्तरीत्या विपानः विशिष्टमग्रिमं पानं यस्य सः विपानः सन् यज्ञवाटम् एजति यज्ञवाटं प्रगच्छति, देवानां धुरन्धर इति यावत्, आदित् धुरन्धरत्वादेव रेतसः सर्वश्रेष्ठस्य प्रत्नस्य पुरातनस्य ते वासरं वासेन सुखप्रदं यज्ज्योतिः ते कण्वासः प्रसिद्धाः कण्वाः पश्यन्ति अपरोक्षतो जानन्ति ।

अनेन वरमुत्तमं ज्योतिः कण्वादिभ्यो ददाति, स्वज्योतिर्विषयमपरोक्षं ददातीति यावत्, इति निरुक्तेः **वरदमूर्तिरत्र** ॥ ३३७ ॥

॥ ॐ वायुवाहनाय नमः ॥

**मर्ति विश्वे वर्धन्ति पौंस्यम् । उतो शविष्ठ वृष्ण्यम् ।**
**इमां म इन्द्र सुष्टुतिं जुषस्व प्र सु मामव । उत ॥ ३३८ ॥**

हे शविष्ठ सुखवत्तम इन्द्र ते मतिं बुद्धिं पौंस्यं बलं उत किञ्च वृष्ण्यं भक्ताभिलषितसेचकत्वं विश्वे विश्वो वायुः तत्सम्बन्धिनो जनाः सात्त्विकाः वायुना प्रेरिताः वर्धन्ति वर्धयन्ति प्रकाशयन्ति शिष्येभ्यो व्याकुर्वन्ति । हे इन्द्र मे मया कृतां पूजामिमां सुष्टुतिं जुषस्व स्वीकुरु । उत किञ्च तदनु मा मां प्र सु अव अत्यन्तं रक्ष ।

अनेन गुरुस्थेन वायुना वाहनीया उपदेश्या मतिपौंस्यादयो गुणा यस्य स इति निरुक्तेः **वायुवाहनमूर्तिरत्र** ॥ ३३८ ॥

॥ ॐ वासुदेवाय नमः ॥

**प्र वर्धया मतिम् । उत ब्रह्मण्या वयं तुभ्यं प्रवृद्ध वज्रिवः ।**
**विप्रा अतक्ष्म जीवसे । अभि कण्वा अनूषताऽऽपो न ॥ ३३९ ॥**

हे वज्रिवः प्रवृद्ध सर्ववस्तुषु परिपूर्ण इन्द्र ते मतिं त्वद्विषयिणीं बुद्धिम् अस्मासु प्रवर्धय । उत किञ्च

विप्राः वयं तुभ्यं ब्रह्मण्या स्तुत्या जीवसे जीवितुं आपो न उदकानीव निम्नप्रदेशं अतक्ष्म त्वां प्राप्ताः स्मः। त्वत्स्तुत्यैव जीवनं देहीति यावत्। उत किञ्च कण्वाः कण्वप्रभृतयः इन्द्रमभ्यनूषत अस्तुवन्।

अनेन वसुषु आकाशादिद्रव्येषु दीव्यति व्याप्तो वर्तत इति वसुदेवः, वसुदेव एव वासुदेव इति निरुक्तेः **वासुदेवमूर्तिरत्र** ॥ ३३९ ॥

**॥ ॐ बृहद्भानवे नमः ॥**

**प्रवता यतीः। इन्द्रं वनन्वती मतिः । इन्द्रमुक्थानि**
**वावृधुः समुद्रमिव सिन्धवः। अनुत्तमन्युमजरम् ॥ ३४० ॥**

एनमिन्द्रं प्रवता प्रवतानि निम्नप्रदेशान् यतीः यन्त्यः गच्छन्त्यः आपो न आप इव मतिः सज्जनानां बुद्धयः कर्माणि वा वनन्वती वनन्वत्यो गच्छन्त्यो बभूवुः। किञ्च अनुत्तमन्युं अनुत्तममन्युम्, समाने लोप इत्येकमकारलोपः, अनुत्तमप्रज्ञम् अजरं जगरहितामन्द्रं उक्थानि स्तोत्राणि सिन्धवो नद्यः समुद्रमिव ववृधुः वर्धयन्ति।

अनेन नद्यो बृहन्तः गच्छन्तः प्राप्नुवन्तो भानवः प्रकाशमाना उक्थादिस्तोत्रविशेषा यमिति निरुक्तेः[१] **बृहद्भानुमूर्तिरत्र** ॥ ३४० ॥

**॥ ॐ आदिदेवाय नमः ॥**

**आनो याहि परावतो हरिभ्यां हर्यताभ्याम्। इममिन्द्र**
**सुतं पिब। त्वमिद् वृत्रहन्तम जनासो वृक्तबर्हिषः ॥ ३४१ ॥**

हे इन्द्र परावतः पराक् स्थितान् अस्मान् नः प्रति हर्यताभ्यां (हरिद्वर्णाभ्याम्) हरिभ्यामश्वाभ्यां युक्तेन रथेन आ याहि। आगत्य च सुतं सोमं पिब। हे वृत्रहन्तम वैरिहन्तृतम इन्द्र वृक्तबर्हिषो यज्वानः जनासो जनाः त्वामित् त्वामेव हवन्ते आह्वयन्ति। इति (उत्तरेण) सम्बन्धः।

अनेनादनादिव्यवहारार्थाद् दीव्यतेः कर्तरि घञ्, भक्षणार्थस्यादेः कर्मणि णिः। आदिम् आद्यं सुतं सोमं दीव्यति पिबतीत्यादिदेव इति निरुक्तेः **आदिदेवमूर्तिरत्र** ॥ ३४१ ॥

१. अस्पष्टमिदं निर्वचनम्। लेखकप्रमादः स्यात्। नद्यः समुद्रमिव बृहन्तो गच्छन्तः प्राप्नुवन्तो भानवः स्तोत्रविशेषा यं स इत्यभिप्रायः स्याद्वा ?

॥ ॐ पुरन्दराय नमः ॥

**हवन्ते वाजसातये। अनु त्वा रोदसी उभे चक्रं न वर्त्येतशम्। अनु सुवानास इन्दवः ॥ ३४२ ॥**

जनासो वाजसातये अन्नादिभोगप्राप्तये हे इन्द्र त्वामेव हवन्ते। एतशम्, अश्वनामैतत्, पुरोगच्छन्तमश्वम् अनुवर्ति अनुवृत्तिमत् चक्रं न चक्रमिव रोदसी द्यावापृथिव्यौ उभे अपि अनु त्वा त्वामनुसृत्य वर्तेते। किञ्च सुवानासः सुताः इन्दवः सोमाश्च त्वामनुसृत्यैव त्वामुद्दिश्यैव वर्तन्ते।

अनेन पुरं द्यावापृथिव्यादिकं दरयति विदारयति परिवर्तयतीति पुरन्दरः। यद्वा आदरार्थस्य दृञः कर्तरि दर इति रूपम्, पुरं द्यावापृथिव्यादिकं रथनाभिरिव द्रियते आद्रियत इति **पुरन्दरमूर्तिरत्र** ॥ ३४२ ॥

॥ ॐ अशोकाय नमः ॥

**मन्दस्वा सु स्वर्णर उतेन्द्र शर्यणावति। मत्स्वा विवस्वतो मती। वावृधान उप द्यवि वृषा वज्र्यरोरवीत् ॥ ३४३ ॥**

हे इन्द्र स्वर्णरि सुखयुक्तनरवति शर्यणावति यज्ञे मन्दस्व मदमाप्नुहि। उत किञ्च विवस्वतः कान्तिमतो यजमानस्य मती मतीः मत्स्व देहि। वज्री वज्रधरः, शोकवर्जनाद् वज्रीति वा, वृषा इन्द्रः द्यवि राज्ञे उप सम्यक् वावृधानः सन् अत एव शोकरहितः अरोरवीत् आनन्दोद्रेकाच्छब्दमकरोत्। सुपीतं मयेति उपद्यवि द्युलोके स्थित एव आगतोऽस्मीति शब्दमकरोदिति वा सम्बन्धः।

तेन न विद्यते शोको यस्येति निरुक्तेः **अशोकमूर्तिरत्र** ॥ ३४३ ॥

॥ ॐ तारणाय नमः ॥

**वृत्रहा सोमपातमः। ऋषिर्हि पूर्वजा अस्येक ईशान ओजसा। इन्द्र चोष्कूयसे वसु। अस्माकम् ॥ ३४४ ॥**

वृत्रहा इन्द्रः सोमपातमः सोमपातॄणां देवानां तारकः। सोमपाशब्दे कर्मण्युपपदे तॄ प्लवनतरण-

योरित्यस्मादन्तर्णीतण्यर्थात् मप्रत्ययः[१]। ऋषिः सर्वज्ञश्च। पूर्वजाः सर्वेभ्यः पूर्वं यज्ञेऽभिव्यक्तः। ओजसा बलेन एको मुख्यः ईशानः स्वामी च। हि यस्मादेवं तस्माद् वसु वसूनि अस्माकमस्मभ्यं चोष्कूयसे देहि। वसूनि प्राणिनां ददातीति वा।

अनेन सज्जनान् संसारात् तारयतीति तारणः, तरतेर्णिजन्तात् कर्तरि ल्युट्, यद्वा वसूनि तारयति वितरति ददातीति निरुक्तेः **तारणमूर्तिरत्र** ॥ ३४४ ॥

॥ ॐ ताराय नमः ॥

**त्वा सुताँ उप वीतपृष्ठा अभि प्रयः। शतं वहन्तु हरयः।**
**इमां सु पूर्व्यां धियं मधोर्घृतस्य पिप्युषीम्॥ ३४५ ॥**

हे इन्द्र त्वामुद्दिश्य अभिसुतान् सोमान् पातुं वीतपृष्ठाः प्रयः प्रियाः शतं हरयः शतसंख्याकाः अश्वाः उपवहन्तु। हे इन्द्र मधोः स्वादोः घृतस्य हविषः पिप्युर्षीं पूर्णां स्वादुहविरादियुक्तां पूर्व्यां पुरातनैः प्रवर्तितामिमां धियं यज्ञक्रियां प्रति हरयस्त्वां वहन्तु।

अनेन तनु विस्तारे इत्यस्मात् कर्मणि डप्रत्यये तेति रूपम्। ऋ गतावित्यस्मात् कर्तरि अप्रत्यये अरेति रूपम्। तथा च तां मधुघृतादिपूर्णां यज्ञक्रियां ऋच्छति गच्छतीति तार इति निरुक्तेः **तारमूर्तिरत्र** ॥ ३४५ ॥

॥ ॐ शूराय नमः ॥

**कण्वा उक्थेन वावृधुः। इन्द्रमिद् विमहीनां मेघे वृणीत**
**मर्त्यः। इन्द्रं सनिष्युरूतये। अर्वाञ्चं त्वा॥ ३४६ ॥**

हे इन्द्र कण्वा मेधाविनः अर्वाञ्चं अर्वाक्स्थितयज्ञवाटाभिमुखेन प्रस्थितं इन्द्रं त्वां उक्थेन स्तोत्रेण ववृधुः वर्धयामासुः। उत्साहितमकुर्वन्। मर्त्यो नरः विमहीनां विशेषेण महतां मेघे यज्ञे इन्द्रमित् इन्द्रमेव ऊतये रक्षार्थं सनिष्युः लाभेच्छुः सन् वृणीत वृणोति स्वामित्वेन स्वीकरोति।

अनेन शं सुखमस्माद् भवतीति शुः महतां यज्ञः, शशब्दान्मत्वर्थीय उकारप्रत्ययः, तस्मिन् महतां यज्ञे उ उत्कर्षेण रमत इति निरुक्तेः **शूरमूर्तिरत्र** ॥ ३४६ ॥

---

१. सोमं पिबन्तीति सोमपाः। सोमपान् तारयतीति सोमपातम इत्यस्मिन्नर्थे अन्तर्णीतण्यर्थात् तरतेर्डमप्रत्ययो वा अन्यो वा कश्चनानुकूलप्रत्ययः कार्यः।

॥ ॐ शौरये नमः ॥

**पुरुष्टुत प्रियमेधस्तुता हरी । सोमपेयाय वक्षतः ।[1] पुरोळाशं**
**नो अन्धस इन्द्र सहस्रमा भर । शता च ॥ ३४७ ॥**

हे पुरुस्तुत पुरुभिः स्तुत इन्द्र प्रियमेधस्तुता प्रियमेधस्तुतौ प्रियः मेधो यज्ञो ययोस्तौ स्तुतौ च, प्रियमेधैदेवैः स्तुतौ वा, हरी अश्वौ सोमपेयाय अस्मदीयसोमपानाय त्वा त्वां वक्षतः वहतः, वहताम् । हे इन्द्र नः स्तोतॄणामस्माकं पुरोळाशं स्तुतिं शृण्विति योग्यक्रियाध्याहारः । श्रुत्वा च अन्धसो अन्नस्य शता शतानि सहस्रसंख्यं च आभर आहर देहि ।

टु ओ श्वि गतिवृद्ध्योरित्यस्माद् ग्लानुदिभ्यां डावित्यत्र योगविभागाद् वहुलग्रहणाद्वा डौ प्रत्ययः, टिलोपः, पृषोदरादित्वाद् वलोपः । तथाच गतिमत्त्वात् शौ अश्वौ ताभ्यां सोमपानाय यजमानगृहं प्रति रजति गच्छतीति रिः, रजेर्गत्यर्थात् कर्तरि डिः, इति निरुक्तेः **शौरिमूर्तिरत्र** ॥ ३४७ ॥

॥ ॐ जनेश्वराय नमः ॥

**शूर गोनाम् । आ नो भर व्यञ्जनं गामश्वमभ्यञ्जनम् ।**
**सचा मना हिरण्यया । उत नः कर्णशोभना ॥ ३४८ ॥**

हे शूर विक्रान्त ईश्वररहित इन्द्र गोनाम् आह्वानानि मना महर्ती गां धेनुमश्वं च हिरण्यया, तृतीयाया यादेशः, हिरण्येन सचा सह कर्णशोभना कर्णशोभनानि कर्णाभरणानि उत च अभ्यञ्जनं [2]........गामश्वं च व्यञ्जनं अञ्जनं स्नेहः विशेषेण प्रीतियुक्तं यथा भवति तथा नः अस्मान् प्रति आभर आहर, देहीति यावत् ।

तेन गवाश्वहिरण्यादीन् जनयति उत्पादयति ददातीति जः, जनेर्डः, ईश्वरः अस्य नास्तीति नेश्वरः, नसमासः, जश्चासौ नेश्वरश्च जनेश्वर इति निरुक्तेः **जनेश्वरमूर्तिरत्र** ॥ ३४८ ॥

---

१. ऋग्वेद ८-७८, कुरुसुतिः काण्वः ।

२. अत्र ग्रन्थपातः कोशेषु सर्वेषु ।

॥ ॐ अनुकूलाय नमः ॥

**पुरूणि धृष्णवा भर । त्वं हि शृण्विषे वसो ।[1] इन्द्र इत्**
**सोमपा एक इन्द्रः सुतपा विश्वायुः । अन्तर्देवान् मर्त्यांश्च ॥ ३४९ ॥**

अस्मासु अनुकूलतया वसतीति वसुः । तस्य सम्बुद्धिः हे वसो । धृष्णो शत्रुधर्षणशील शत्रूणां प्रतिकूल इन्द्र पुरूणि बहूनि स्तोत्राणि त्वं शृण्विषे शृणु । श्रुत्वा च पुरूणि वसूनि आ भर देहि । सोमपाः सोमपानकर्ता एको मुख्यः इन्द्र इत् इन्द्र एव सुतपाः, कर्तरि क्तः, सुन्वतो यजमानस्य रक्षकः । इन्द्र एक एव विश्वायुः पूर्णायुःप्रदश्च । इन्द्र एव मर्त्यान् देवांश्च अन्तः अन्तःस्थित्वा नियामकः । सर्वेषामनुकूलश्चेन्द्र एव । तस्मात् स एव प्रार्थ्यत इति शेषः ।

अनेन सर्वेषामन्तः स्थित्वाऽनुकूलो वर्तत इति निरुक्तेः **अनुकूलमूर्तिरत्र** ॥ ३४९ ॥

॥ ॐ शतावर्ताय नमः ॥

**न यं शुक्रो न दुराशीर्न तृप्रा उरुव्यचसम् । अपस्पृण्वते**
**सुहर्दिम्[2] । गोभिर्यदीमन्ये अस्मन्मृगं न व्राः ॥ ३५० ॥**

यमिन्द्रं शुक्रः शोकः उदकं वा न स्पृण्वते न क्लेदयति । दुराशीः दुष्टाभिप्रायश्च पुरुषः तं सुहर्दिं सुहृदयम् उरुव्यचसं बहुव्याप्तमिन्द्रं तृप्राः उद्वेगकरा जनाः न स्पृण्वते नातिक्रामन्ति । व्राः सल्लोकगमनशीला वयं अस्मत्तोऽन्ये च यत् यम् ईम् एव गीर्भिर्वाग्भिः मृगं न मृगमिव, मृगयन्त इत्युत्तरेणान्वयः ।

अनेन शतैः उद्वेगकरदुष्टाभिप्रायजनैः आवर्तः वर्जित इति निरुक्तेः **शतावर्तमूर्तिरत्र** ॥ ३५० ॥

॥ ॐ पद्मिने नमः ॥

**मृगयन्ते । अभित्सरन्ति धेनुभिः । त्रय इन्द्रस्य सोमाः**
**सुतासः सन्तु देवस्य । स्वे क्षये सुतपाव्नः ॥ ३५१ ॥**

यमिन्द्रं सज्जना मृगयन्ते तमिन्द्रमुद्दिश्य धेनुभिः धेनुजन्यैः दधिपयआदिद्रव्यैः अभित्सरन्ति

१. ऋग्वेद ८-२-४, मेधातिथिः काण्वः, आङ्गिरसः प्रियमेधश्च । २. सुहार्दमिति मुद्रितपाठः ।

अभिगच्छन्ति। तमुद्दिश्यैव यज्ञादिकर्म कुर्वते सज्जनाः। सुतपाव्नः सोमपानकर्तुः देवस्य स्वे स्वेनाभिगम्ये क्षये गृहे त्रयः सवनत्रयसम्बन्धिनः सुतासः अभिष्टुताः सोमाः सन्तु वर्तन्ते। तान् पातुमायाहीति यावत्।

तेन सवनत्रयानुगतः सोमः पद्मः, पदेः कर्तरि मक्, सोऽस्य पेयत्वेनास्तीति पद्मीति निरुक्तेः **पद्मिमूर्तिरत्र** ॥ ३५१ ॥

॥ ॐ पद्मनिभेक्षणाय नमः ॥

**त्रयः कोशासः श्चोतन्ति तिस्रश्चम्वः सुपूर्णाः। समाने**
**अधि भार्मन्। शुचिरसि पुरुनिःष्ठाः क्षीरैर्मध्यत आशीर्तः ॥ ३५२ ॥**

समाने मानसहिते सम्यक्चेष्टके च भार्मन्, भर्मशब्दो हिरण्यवाची, तद्वान् भार्मा, हिरण्यवर्णो वा भार्मा, तस्मिन् इन्द्रे सुपूर्णाः रत्नादिभिर्युक्ताः त्रयः कोशासः ब्रह्माण्डपुरुषदेहस्त्रीदेहाख्याः, अनन्तासनश्वेतद्वीपवैकुण्ठाख्या वा, अधिश्चोतन्ति अधिकं गच्छन्ति तिष्ठन्ति, अधिष्ठानभूतानीति यावत्। तिस्रश्चम्वः त्रिविधा राजससात्त्विकतामसाख्याः सेनाः अधिश्चोतन्ति परमेश्वरादेवोत्पद्यन्ते। हे इन्द्र त्वं शुचिरसि अग्निरिव दीप्तिमानसि। पुरुनिःष्ठाः पुरुषु वहुषु स्थानेषु निःष्ठाः नितरां स्थाता चासि । तव पानार्थं सोमः क्षीरैः दध्ना च मध्यतः मध्यमार्गे आशीर्तः आसिक्तः सम्मिश्रितोऽस्ति।

अनेन पूर्ववत् पदेः कर्मणि मक्, सर्वैरभिगम्यत्वात् पद्मं भर्म सुवर्णं, तन्निभं तत्सदृशम् ईक्षणं, शरीरोपलक्षणमेतत्, तथाविधं शरीरमस्यास्तीति हिरण्यवर्णशरीरवान् पद्मनिभेक्षणः, आ प्र णखात् सुवर्ण इति निगमात्, इति निरुक्तेः **पद्मनिभेक्षणमूर्तिरत्र** ॥ ३५२ ॥

॥ ॐ पद्मनाभाय नमः ॥

**दध्ना मन्दिष्टः शूरस्य। इमे त इन्द्र सोमास्तीव्रा अस्मे**
**सुतासः। शुक्रा आशिरं याचन्ते। ताँ आशिरम् ॥ ३५३ ॥**

अयमिन्द्रः दध्ना मन्दिष्टः सन्तुष्टो भवति। हे इन्द्र तस्य शूरस्य ते तव पानार्थं तीव्राः वेगशालिनः

॥ ॐ अनुकूलाय नमः ॥

**पुरूणि धृष्णवा भर । त्वं हि शृण्विषे वसो ।**[1] **इन्द्र इत्**
**सोमपा एक इन्द्रः सुतपा विश्वायुः । अन्तर्देवान् मर्त्यांश्च ॥ ३४९ ॥**

अस्मासु अनुकूलतया वसतीति वसुः । तस्य सम्बुद्धिः हे वसो । धृष्णो शत्रुधर्षणशील शत्रूणां प्रतिकूल इन्द्र पुरूणि बहूनि स्तोत्राणि त्वं शृण्विषे शृणु । श्रुत्वा च पुरूणि वसूनि आ भर देहि । सोमपाः सोमपानकर्ता एको मुख्यः इन्द्र इत् इन्द्र एव सुतपाः, कर्तरि क्तः, सुन्वतो यजमानस्य रक्षकः । इन्द्र एक एव विश्वायुः पूर्णायुःप्रदश्च । इन्द्र एव मर्त्यान् देवांश्च अन्तः अन्तःस्थित्वा नियामकः । सर्वेषामनुकूलश्चेन्द्र एव । तस्मात् स एव प्रार्थ्यत इति शेषः ।

अनेन सर्वेषामन्तः स्थित्वाऽनुकूलो वर्तत इति निरुक्तेः **अनुकूलमूर्तिरत्र** ॥ ३४९ ॥

॥ ॐ शतावर्ताय नमः ॥

**न यं शुक्रो न दुराशीर्न तृप्रा उरुव्यचसम् । अपस्पृण्वते**
**सुहर्दिम्**[2] **। गोभिर्यदीमन्ये अस्मन्मृगं न व्राः ॥ ३५० ॥**

यमिन्द्रं शुक्रः शोकः उदकं वा न स्पृण्वते न क्लेदयति । दुराशीः दुष्टाभिप्रायश्च पुरुषः तं सुहर्दिं सुहृदयम् उरुव्यचसं बहुव्याप्तमिन्द्रं तृप्राः उद्वेगकरा जनाः न स्पृण्वते नातिक्रामन्ति । व्राः सल्लोकगमनशीला वयं अस्मत्तोऽन्ये च यत् यम् ईम् एव गीर्भिर्वाग्भिः मृगं न मृगमिव, मृगयन्त इत्युत्तरेणान्वयः ।

अनेन शतैः उद्वेगकरदुष्टाभिप्रायजनैः आवर्तः वर्जित इति निरुक्तेः **शतावर्तमूर्तिरत्र** ॥ ३५० ॥

॥ ॐ पद्मिने नमः ॥

**मृगयन्ते । अभित्सरन्ति धेनुभिः । त्रय इन्द्रस्य सोमाः**
**सुतासः सन्तु देवस्य । स्वे क्षये सुतपाव्नः ॥ ३५१ ॥**

यमिन्द्रं सज्जना मृगयन्ते तमिन्द्रमुद्दिश्य धेनुभिः धेनुजन्यैः दधिपयआदिद्रव्यैः अभित्सरन्ति

१. ऋग्वेद ८-२-४, मेधातिथिः काण्वः, आङ्गिरसः प्रियमेधश्च । २. सुहार्दमिति मुद्रितपाठः ।

अभिगच्छन्ति। तमुद्दिश्यैव यज्ञादिकर्म कुर्वते सज्जनाः। सुतपाव्नः सोमपानकर्तुः देवस्य स्वे स्वेनाभिगम्ये क्षये गृहे त्रयः सवनत्रयसम्बन्धिनः सुतासः अभिष्टुताः सोमाः सन्तु वर्तन्ते। तान् पातुमायाहीति यावत्।

तेन सवनत्रयानुगतः सोमः पद्मः, पदेः कर्तरि मक्, सोऽस्य पेयत्वेनास्तीति पद्मीति निरुक्तेः **पद्मिमूर्तिरत्र**॥ ३५१॥

॥ ॐ पद्मनिभेक्षणाय नमः॥

**त्रयः कोशासः श्चोतन्ति तिस्रश्चम्वः सुपूर्णाः। समाने**
**अधि भार्मन्। शुचिरसि पुरुनिःष्ठाः क्षीरैर्मध्यत आशीर्तः॥ ३५२॥**

समाने मानसहिते सम्यक्चेष्टके च भार्मन्, भर्मशब्दो हिरण्यवाची, तद्वान् भार्मा, हिरण्यवर्णो वा भार्मा, तस्मिन् इन्द्रे सुपूर्णाः रत्नादिभिर्युक्ताः त्रयः कोशासः ब्रह्माण्डपुरुषदेहस्त्रीदेहाख्याः, अनन्तासनश्वेतद्वीपवैकुण्ठाख्या वा, अधिश्चोतन्ति अधिकं गच्छन्ति तिष्ठन्ति, अधिष्ठानभूतानीति यावत्। तिस्रश्चम्वः त्रिविधा राजससात्त्विकतामसाख्याः सेनाः अधिश्चोतन्ति परमेश्वरादेवोत्पद्यन्ते। हे इन्द्र त्वं शुचिरसि अग्निरिव दीप्तिमानसि। पुरुनिःष्ठाः पुरुषु बहुषु स्थानेषु निःष्ठाः नितरां स्थाता चासि। तव पानार्थं सोमः क्षीरैः दध्ना च मध्यतः मध्यमार्गे आशीर्तः आसिक्तः सम्मिश्रितोऽस्ति।

अनेन पूर्ववत् पदेः कर्मणि मक्, सर्वैरभिगम्यत्वात् पद्मं भर्म सुवर्णं, तन्निभं तत्सदृशम् ईक्षणं, शरीरोपलक्षणमेतत्, तथाविधं शरीरमस्यास्तीति हिरण्यवर्णशरीरवान् पद्मनिभेक्षणः, आ प्र णखात् सुवर्ण इति निगमात्, इति निरुक्तेः **पद्मनिभेक्षणमूर्तिरत्र**॥ ३५२॥

॥ ॐ पद्मनाभाय नमः॥

**दध्ना मन्दिष्टः शूरस्य। इमे त इन्द्र सोमास्तीव्रा अस्मे**
**सुतासः। शुक्रा आशिरं याचन्ते। ताँ आशिरम्॥ ३५३॥**

अयमिन्द्रः दध्ना मन्दिष्टः सन्तुष्टो भवति। हे इन्द्र तस्य शूरस्य ते तव पानार्थं तीव्राः वेगशालिनः

स्यन्दमानाः शुक्राः उदकमिश्रिताः सुतासः अभिषुता य इमे सोमाः अस्मे अस्मासु अस्मद्गृहेषु आशिरं दधि याचन्ते सम्पद्यन्ते तान् सोमान् दधि च पिबेति शेषः ।

अनेन पूर्ववत् पद्मः सोमः, स नाभौ कुक्षौ यस्य सः पद्मनाभः सोमपानकर्तेति यावत्, इति निरुक्तेः **पद्मनाभमूर्तिरत्र** ॥ ३५३ ॥

॥ ॐ अरविन्दाक्षाय नमः ॥

**पुरोळाशमिन्द्रेमं सोमं श्रीणीहि । रेवन्तं हि त्वा शृणोमि ।**
**हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुराणाम् ॥ ३५४ ॥**

हे इन्द्र पुरोळाशं पिष्टविकारं सोमं च त्वा त्वां शृणोमि मिश्रीकरोमि । त्वयि पुरोळाशादिकं संगमयामि स्थापयामीति यावत् । हि यस्मात् तस्मान्मां रेवन्तं धनवन्तं श्रीणीहि सेवय । मह्यं धनं देहीति यावत् । पीतासः सोमपानकर्तारस्त्वद्भक्ताः दुर्मदासः देवाः सुरायां न अमृतविषये यथा तथा हृत्सु, हृच्छब्दः प्रज्ञापर्यायः, निमित्तसप्तमी, प्रज्ञाप्राप्त्यर्थं युध्यन्ते समरं कुर्वन्ति ।

तेन अर्यते गम्यत इत्यरं द्रविणं विन्दयति प्रापयतीति विन्दः । आ सम्यक् पुरोळाशादेराश्रयः स्थापनाश्रयः आक्षः । आङ्पूर्वस्य क्षि निवासगत्योरित्यस्याधिकरणे डः । तथा च अरस्य द्रविणस्य विन्दः प्रापकः अरविन्दः । पुरोळाशादेः प्रक्षेपभूमिः आक्षः । अरविन्दश्चसावाक्षश्चारविन्दाक्ष इति निरुक्तेः **अरबिन्दाक्षमूर्तिरत्र** ॥ ३५४ ॥

॥ ॐ पद्मगर्भाय नमः ॥

**ऊधर्न नग्ना जरन्ते । रेवाँ इद् रेवतः स्तोता स्यात् त्वावतो**
**मघोनः । प्रेदु हरिवः श्रुतस्य । उक्थं चन ॥ ३५५ ॥**

ऊधर्न, रात्रिनामैतत्, रात्रिरहर्जरं संवत्सरमिव नग्नाः समुद्रमिव त्वां सर्वे जनाः जरन्ते प्रविशन्ति, अशेषप्राण्याधारकुक्षिरिति यावत् । हे हरिवः इन्द्र रेवतः धनवतस्तव स्तोता रेवान् धनवान् स्यात् । किञ्च त्वावतः, त्वं स्वामी यस्य त्वावान्, त्वत्स्वामिकस्य तस्य मघोनः मघवतो यज्विनः श्रुतस्य प्रसिद्धस्य यजमानस्य उक्थं चन स्तोत्रमपि शृणोषि । श्रुत्वा च प्र प्राविता स्याः । उ एव ।

अनेन पदेः कर्तरि मकृप्रत्यये पद्माः गमनागमनवन्तः प्राणिनः, ते गर्भे कुक्षौ यस्यासौ पद्मगर्भ इति निरुक्तेः **पद्मगर्भमूर्तिरत्र** ॥ ३५५ ॥

॥ ॐ शरीरभृते नमः ॥

**शस्यमानमगोररिरा चिकेत । न गायत्रं गीयमानम् ।**
**मा न इन्द्र पीयत्नवे मा शर्धते परा दाः । शिक्षा ॥ ३५६ ॥**

अगोः वाग्रहितस्य, अस्तोतुरिति यावत्, अरिः शत्रुः शरीरापहर्ता इन्द्रः गीयमानमुच्चार्यमाणं गायत्रं सामैव शस्यमानं शंसनीयम् उक्थं चन स्तोत्राणि आ चिकेत सम्यक् स्वीकरोति। हे इन्द्र नोऽस्मान् पीयत्नवे सोमपानाय मा परा दाः पराङ्मुखान् मा कुरु। शर्धते बलप्राप्त्यै अस्मान् मा परा दाः।

तेन शरवत् पराधीनप्रवृत्तित्वात् शरो जीवः। यद्वा शीर्यते नित्यमेवास्मादिति शरो जीवः। तेन ईरितं स्तोत्रमीरम्। ईरतेः कर्मण्यकारप्रत्ययः पररूपं च। तद् बिभर्ति स्वीकरोतीति भृत्। सज्जीवकृतोक्थादिस्तोत्रग्रहणपटुः शरीरभृत्। यद्वा अस्तोतुः शत्रुजनस्य शरीरं हरतीति शरीरभृत्। हकारस्य भकारः। अस्तोतुररिरिति यावत्। इति निरुक्तेः **शरीरभृन्मूर्तिरत्र** ॥ ३५६ ॥

॥ ॐ महर्द्धये नमः ॥

**शचीवः शचीभिः। वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः।**
**कण्वा उक्थेभिर्जरन्ते। न घेमन्यदा पपन ॥ ३५७ ॥**

हे शचीवः वाक्प्रवर्तक शचीभिर्विद्याभिः नोऽस्मान् शिक्ष उपदिश। विद्याख्यऋद्धिं प्रापय। कण्वा मेधाविनः त्वायन्तः त्वामाप्तुमिच्छन्तः, तदित् तदेव त्वच्छरणमेव अर्थः प्रयोजनं येषां ते तदिदर्थाः, त्वच्छरणप्राप्तिमेव कामयमानाः उक्थेभिः स्तोत्रैः जरन्ते स्तुवन्ति। तस्माद् वयमप्येवंभूताः सन्तः त्वा उ त्वामेव उक्थेभिः स्तोत्रैः स्तुमः। अत एव सज्जनः अन्यद् देवतान्तरं ईम् एव न आ पपन नैव स्तौति। घ प्रसिद्धमेतत्।

तेन महती विद्यादिप्राप्तिरूपा ऋद्धिः समृद्धिः यस्मात् स महर्धिरिति निरुक्तेः **महर्धिमूर्तिरत्र** ॥ ३५७ ॥

॥ ॐ ऋद्धाय नमः ॥

**वज्रिन्नपसो नविष्टौ। तवेदु स्तोमं चिकेत। इच्छन्ति देवाः**
**सुन्वन्तं न स्वप्नाय स्पृहयन्ति। यन्ति॥ ३५८॥**

हे वज्रिन् इन्द्र अपसः कर्माण्यपि अन्यदेवतापरिचरणरूपकर्माण्यपि नविष्टौ नूतनपुरुषार्थप्राप्तौ नैव चिकेत नैव करोति सज्जनः। किन्तु तव स्तोममित् स्तुतिमेव करोति। सर्वाभीष्टप्रदानादिगुण-गणसमृद्धो भवानेवेति तात्पर्यम्। अत एव देवास्तत्वाभिमानिनो ब्रह्माद्याः त्वामुद्दिश्य सुन्वन्तं सोमाभिषवनादिना पूजयन्तं भक्तं स्वप्राय मिथ्याज्ञानाय न स्पृशन्ति। नेच्छन्ति। किन्तु तत्वज्ञानायैव यन्ति गच्छन्ति।

तेन ऐहिकामुष्मिकादिसकलाभीष्टप्रदातृत्वादिगुणैः समृद्ध इति निरुक्तेः **ऋद्धमूर्तिरत्र**॥ ३५८॥

॥ ॐ वृद्धात्मने नमः ॥

**प्रमादमतन्द्राः। ओ षु प्र याहि वाजेभिर्मा हृणीथा**
**अभ्यस्मान् महाँ इव युवजानिः। मो ष्वद्य॥ ३५९॥**

किञ्च त्वद्भक्तजनम् अतन्द्राः तन्द्रारहिता ब्रह्माद्या देवाः प्रमादमनवधानताम् ओ नैव आ समन्तात् सु सम्यक् यन्ति प्रापयन्ति। त्वत्पूजकस्य जनस्य तत्वाभिमानिनो देवाः प्रमादात् सन्निवार्य तस्मिन् दयामेव कुर्वन्ति। एवं त्वद्भक्ता ब्रह्मादयो दीनदयालुत्वादिगुणसमृद्धा इति तात्पर्यम्। हे इन्द्र अस्मान् वाजेभिरन्नाद्यैः, अस्माकमन्नादिकं दातुं, सु प्र याहि सम्यगायाहि। ओ एव। अस्मदभीष्टदाने मनः कुर्विति तात्पर्यम्। किञ्च युवजानिः युवत्यो जायाः यस्य स युवतीपतिः महानिव वृद्ध इव, युवतीपतिर्वृद्धो यथा लोके क्लिश्यते, बह्वचः सपत्न्य इव गेहपतिं लुनन्तीत्यादेः, तथा अस्मानभि मा हृणीथाः न प्राप्नुयाः। तथा अस्मान् मा कुर्विति तात्पर्यम्।

तेन वृद्धाः दयालुत्वादिगुणसमृद्धा आत्मानः आत्मा विरिञ्चः सुमहानित्युक्तेः ब्रह्माद्या देवाः सेवकत्वेन यस्य स वृद्धात्मा। यद्वा वृद्धेषु समृद्धेषु वाजाद्यभीष्टेषु, वाजाद्यभीष्टं दातुमिति यावत्, आत्मा मनो यस्य स इति निरुक्तेः **वृद्धात्ममूर्तिरत्र**॥ ३५९॥

॥ ॐ महाक्षाय नमः ॥

**दुर्हणावान् त्सायं करदारे अस्मत् । अश्रीर इव जामाता ।**
**विद्मा ह्यस्य वीरस्य भूरिदावरीं सुमतिम् । त्रिषु जातस्य ॥ ३६० ॥**

हे इन्द्र आरे दूरे समीपे च अस्मत् अस्मभ्यं दुर्हणावान् दुष्टाभिप्रायवान् शत्रुः अश्रीर इव, श्रीः सुखं तद् राति ददातीति श्रीरः न श्रीरः अश्रीरः दुःखदः जामाता इव सायम् अन्तं विनाशं अद्य इदानीं मो करत् न कुर्यात् । अस्य ते वीरस्य भूरिदावरीं भूरिदानशीलां सुमतिं शोभनप्रज्ञां वयं विद्मः । किञ्च त्रिषु सवनेषु जातस्याभिव्यक्तस्य ते मनांसि मनआदीन्द्रियाणि सुदानशीलानि विद्मः जानीमः । हि यस्मात् तस्मात् त्वामेव पूजयामः ।

अनेन महान्ति सुदानशीलानि अक्षाणि मनआदीन्द्रियाणि यस्य स इति निरुक्तेः **महाक्षमूर्तिरत्र** ॥ ३६० ॥

॥ ॐ गरुडध्वजाय नमः ॥

**मनांसि । आ तू षिञ्च कण्वमन्तं न घा विद्म शवसानात् ।**
**यशस्तरं शतमूतेः । ज्येष्ठेन सोतरिन्द्राय ॥ ३६१ ॥**

(शतम् ऊतयो यस्मात् स शतमूतिः ) विभक्तेरलुक् । शवसानात् शवः सुखं तस्य सानो लाभो यस्मात् तस्मात् सुखदातुः त्वत्तोऽन्यं यशस्तरं यशस्वितरं कण्वमन्तं प्रज्ञावन्तं पुरुषं न विद्मः । अतः स नास्त्येव । आ तस्मात् तु विशेषतः ते मनांसि सिञ्च पुरुषार्थैः संयोजय । अस्माकं पुरुषार्थान् दातुं मनः कुरु । हे सोतः अस्मदीयऋत्विग्गण ज्येष्ठेन ज्येष्ठायोत्तमाय इन्द्राय नमस्कुरु । घ एव ।

अनेन गच्छत्यवगच्छतीति गः ज्ञानी । स्वस्मादतिशयितज्ञानवान् , तेन रुः युद्धम्, रुर्ना युद्धे भवेद् ध्वनावित्युक्तेः, तस्मिन् डः ध्वनिः, डः पुमान् विषये शम्भौ हासे त्रासे भवेद् ध्वनावित्युक्तेः, ध्वनिरेव ध्वजं चिन्हं यस्य सः, पताकाचिन्हखङ्गाङ्गमेढ्रेषु ध्वजमस्त्रियामित्युक्तेः । तथा च स्वापेक्षया गुणाधिकेन पुरुषेण युध्यति तज्जयेन नादं करोति, स्वाधिकपुरुषासहिष्णुरिति यावत्, इति निरुक्तेः गरुडध्वजमूर्तिरत्र ॥ ३६१ ॥

॥ ॐ अतुलाय नमः ॥

**सोमं वीराय शक्राय । भरा पिबन्नर्याय । यो वेदिष्ठो अव्यथि-ष्वश्वावन्तं जरितृभ्यः । वाजं स्तोतृभ्यो गोमन्तम् ॥ ३६२ ॥**

हे सोतः नर्याय नरेषु हिताय वीराय पिबत् पिबते शक्राय शक्तिमते इन्द्राय सोमं भर संस्कृतं कुरु । यः इन्द्रः अव्यथिषु यज्ञेषु स्तोतृभ्यो जरितृभ्यो ऋत्विग्भ्यः गोमन्तमश्ववन्तं गवाश्वादियुक्तं वाजमन्नं वेदिष्ठः प्रापयितृतमः । तस्मै भरेति सम्बन्धः ।

अनेन न विद्यते तुलः सदृशो यस्य स इति निरुक्तः अतुलमूर्तिरत्र ॥ ३६२ ॥

॥ ॐ शरभाय नमः ॥

**पन्यंपन्यमित् सोतार आ धावत मद्याय । सोमं वीराय शूराय । पाता वृत्रहा सुतमा घा गमन्न ॥ ३६३ ॥**

हे सोतारः पन्यंपन्यं प्रतिज्ञानिपुणं मद्याय मदहेतवे वीराय विक्रान्ताय शूरायेन्द्रायैव सोममाधावत प्रापयत । अयं वृत्रहा इन्द्रः सुतं सोमरसं पाता आ गमत् विहाय न गच्छेत्[1] । घा अवधारणं ।

तेन 'शरो दध्याद्यग्रसारे बाणे काण्डे तृणान्तरे' इत्युक्तेः[2] शरः सोमरसः, तस्मिन् भः भावो यस्य सः, भः शम्भौ भ्रमरे भावे शुक्रेशौ जलदे पुमानित्युक्तेः । यद्वा सोमसारवाचिनि शरशब्दे कर्मण्युपपदे भुजेर्डः, सोमसारं भुङ्क्ते इति शरभ इति निरुक्तः शरभमूर्तिरत्र ॥ ३६३ ॥

॥ ॐ भीमाय नमः ॥

**आरे अस्मत् । नि यमते शतमूतिः । एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् । गीर्भिः श्रुतं गिर्वणसम् ॥ ३६४ ॥**

शतमूतिः बहूनां रक्षको बह्वभिप्रायवान् वा अयमिन्द्रः अस्मत् आरे अस्मत्समीपे

१. देवो देवेभिरागमदित्यादाविव आगमत् आगच्छतु इत्यपि व्याख्या शक्या ।

२. नानार्थरत्नमालाकोशादाहरणमिदम् । द्वितारमेव समग्रे व्याख्याने अमरकोष उदाहृतः । अन्यत्र सर्वत्रापि नानार्थरत्नमालैव प्राय उदाहृता । सा च परिशिष्टे दत्ता ।

अस्मदन्तर्यामितया नियमते नियामयति। गीर्भिर्वेदवाक्यैः श्रुतमावेदितं गिर्वणसं गीर्भिर्भजनीयं सखायमुपकारिणमिन्द्रं ब्रह्मयुजा मन्त्रेण रथे योजितौ हरी अश्वौ शग्मा अस्मदीयान् श्रमान् इह आ वक्षतः वहताम्।[१]

अनेन भा भुव्यलंकृतौ दीप्तौ भा स्त्रियां किरणे द्युतावित्युक्तेः भा दीप्तिः, अतिशयेन दीप्तिः भीः तृतीयोऽतिशये इत्युक्तेः भीं दीप्तिं दीपनं नियमनं माति निर्मातीति भीमः, सर्वप्राणिनियामक इति यावत्, इति निरुक्तेः **भीममूर्तिरत्र**॥ ३६४॥

॥ ॐ समयज्ञाय नमः॥

**[२]नह्यन्यं बळाकरं मर्डितारं शतक्रतो। त्वं न इन्द्र मृळय।**
**[३]स्तुतश्च यास्त्वा वर्धन्ति महे राधसे नृम्णाय॥ ३६५॥**

हे शतक्रतो इन्द्र त्वत्तः अन्यं बळाकरं बलस्य आकरं बलाढ्यं मर्डितारं सुखदातारं नहि पश्यामि। तस्मात् नः अस्मान् त्वं मृळय सुखय। त्वां या वाचो वर्धन्ति वर्धयन्ति ताभिर्वाग्भिः स्तुतः त्वं नृम्णायास्माकं बलाय महे महते राधसे संसिद्ध्यै च भव।

अनेन समा स्त्री वत्सरे साधुसर्वतुल्येषु तु त्रिष्वित्युक्तेः समं सर्वमभीष्टजातं नृम्ण संसिद्ध्यादिरूपं साधुवस्तुजातं वा यजति ददातीति समयज्ञः, यजेर्नक्, इति निरुक्तेः **समयज्ञमूर्तिरत्र**॥ ३६५॥

॥ ॐ हविर्हरये नमः॥

**इन्द्र कारिणं वृधन्तः। गिरश्च यास्ते गिर्वाह उक्था**
**च तुभ्यं तानि। सत्रा दधिरे शवांसि। एवेदेषः॥ ३६६॥**

या गिरः यानि चोक्थानि कारिणं कर्तारमिन्द्रं वर्धन्ति वर्धयन्ति ताभिर्गीर्भिस्तैरुक्थैः वयं

---

१. अत्र कोऽपि लिपिकृतां प्रमादः स्यात्। शग्मा शग्मौ शक्तिमन्तौ हरी अश्वौ अस्माकं सखायमिन्द्रमिह आ वक्षतः आवहेतामिति व्याख्यानं सरलं भाति।

२. ऋग्वेद ८-८०-१. एकद्युर्नैधसः।

३. ऋग्वेद ८-२-२९. काण्वः प्रियमेधश्च।

वृधन्तः अभिवर्धन्तो[१] भवेम । तानि च सर्वाणि तुभ्यं तव सत्रा सहैव शवांसि सुखानि दधिरे धारयेयुः । आत्मन्याधत्स्वेति यावत् । एष इन्द्रः एवमेव नित्यमभिवृद्ध एव ।

तेन हु दानादनयोरित्यस्मात् करणे इसिप्रत्ययः, हूयते एभिरिति हवींषि उक्थादिस्तोत्राणि तान्यात्मनि सुखसाधनतया हरति आहरतीति हरिः, उक्थादिस्तोत्राणि स्वात्मनि सुखसाधकतया अङ्गीकरोतीति यावत्, इति निरुक्तेः **हविर्हरिमूर्तिरत्र** ॥ ३६६ ॥

**॥ ॐ सर्वलक्षणलक्षिण्याय नमः ॥**

**तुविकूर्मिर्वाजाँ एको वज्रहस्तः । सनादमृक्तो दयते ।**
**हन्ता वृत्रं दक्षिणेनेन्द्रः पुरू पुरुहूतः ॥ ३६७ ॥**

तुविकूर्मिर्बहुकर्मा अमृक्तोऽमृतः वज्रहस्त इन्द्रः एक एव वाजान् भोग्यान् सनात् सनाति अस्मभ्यं ददाति । दयते प्रकाशते । किञ्च पुरुहूत इन्द्रः दक्षिणेनोदारेण वज्रेण पुरु महान्तं वृत्रं वृत्रासुरं हन्ता भवति ।

अनेन सर्वाणि वस्तूनि लक्षणानि चिन्हानि येषां तानि सर्वलक्षणानि सर्वजगत्सर्जनादिकर्माणि तैर्लक्षिण्यः, लक्षणमसाधारणो धर्मः, तेन तज्जन्यप्रतीतिर्लक्ष्यते, तत्र साधुरित्यर्थे यप्रत्ययः, अकारस्य चेकारादेशः, सर्वजगद्विषयकसर्जनादिबहुकर्माख्यलक्षणजन्यप्रतीतिविषयः बहुकर्मेति यावत्, इति निरुक्तेः **सर्वलक्षणलक्षिण्यमूर्तिरत्र** ॥ ३६७ ॥

**॥ ॐ लक्ष्मीवते नमः ॥**

**महान् महीभिः शचीभिः । यस्मिन् विश्वाश्चर्षणय उत**
**च्यौत्ना ज्रयांसि च । अनु घेन्मन्दी मघोनः । एष एतानि ॥ ३६८ ॥**

महीभिर्महतीभिरनादिनित्याभिः शचीभिः महान् अवगतः । किञ्च यस्मिन्निन्द्रे विश्वाश्चर्षणयः समस्तप्रजाः च्यौत्ना च्यौत्नानि उत ज्रयांसि जयाश्च सन्ति स इन्द्रः मघोनः अनु मन्दी मदकारी सुखकारी । घ इदानीम् इत् एव एतानि बलादीनि एषः दद्यात् ।

---

१. वृधन्त इति श्रौतप्रयोगमाश्रित्याभिवर्धन्त इति व्याख्यातम् । आत्मनेपदत्वं तु नाश्रितम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

अनेन लक्ष्मीः सम्पद्रमाशोभेत्युक्तेः च्यौत्नजयादिशब्दितशोभा सम्पद्वा लक्ष्मीः, सा अस्यास्तीति लक्ष्मीवानिति निरुक्तेः **लक्ष्मीवन्मूर्तिरत्र** ॥ ३६८ ॥

**॥ ॐ समितिञ्जयाय नमः ॥**

**चकारेन्द्रो विश्वा योऽति शृण्वे । वाजदावा मघोनाम् ।**
**प्रभर्ता रथं गव्यन्तमपाकाचिद् यमवति । इनः ॥ ३६९ ॥**

य इन्द्रो मघोनां यज्वनां वाजदावा भाग्यदाता विश्वा विश्वानि चकार कृतवान् । अत एव अति शृण्वे अधिकत्वेन श्रूयते । य इन्द्रो गव्यन्तं ज्ञानेच्छुं रथं देहाख्यरथवन्तमधिकारिणं प्रभर्ता बिभर्ति स इन्द्रः इनः स्वामी । स इन्द्रो यमधिकारिणम् अवति रक्षति तमधिकारिणमपाकाद् दूरात् चित् अपि रक्षितुमायाति ।

अनेन समितिं वाजादिसमूहं जयति ददाति, जेः कर्तर्यच्प्रत्यय उदरम्भर इत्यादिवत् मुमागमश्च, इति निरुक्तेः **समतिञ्जयमूर्तिरत्र** ॥ ३६९ ॥

**॥ ॐ विक्षराय नमः ॥**

**वसु स हि वोळ्हा । सनिता विप्रो अर्वद्भिर्हन्ता वृत्रं नृभिः**
**शूरः । सत्योऽविता विधन्तम् । यजध्वैनं प्रियमेधाः ॥ ३७० ॥**

स इन्द्रो वसु द्रविणानि वोळ्हा भवति, भक्तेभ्यो दातुं वहति स्वयं च वसुमानित्यर्थः । किञ्च सत्यः सदाशब्दादव्ययात् त्यबिति त्यपि उपपदान्त्यलोपे चर्त्वे च सत्यः सदातनः अविनाशी विप्रो विशिष्टतमः शूर इन्द्रो वृत्रमसुरजातं नृभिः सेनानेतृभिर्योद्धृभिः सह हन्ता । तृन्नन्तोयम् । वृत्रं हत्वा च तदीयधनम् अर्वद्भिरश्वैः आदाय भक्तेभ्यः सनिता दाता । किञ्च विधन्तं विद्धयन्तं जनं रक्षिता च । हे प्रियमेधाः प्रिययज्ञा ऋत्विजो यूयमेनमिन्द्रं यजध्व यजध्वं पूजयत ।

अनेन क्षरः क्षरणं विनाशः, विगतः क्षरो यस्मात् स विक्षर इति निरुक्तेः **विक्षरमूर्तिरत्र** ॥ ३७० ॥

॥ ॐ रोहिताय नमः ॥

**इन्द्रं सत्राचा मनसा । यो भूत् सोमैः सत्यमद्वा ।**
**गाथश्रवसं सत्पतिं श्रवस्कामं पुरुत्मानम् । कण्वासः ॥ ३७१ ॥**

हे कण्वासो मेधाविनः सत्राचा सध्रीचीनेन मनसा यः सत्यमद्वा, मदि हर्ष इत्यतो वनिप् सत्यः अबाधितः मद्वा सुखवान् भूत् अभूत् तं गाथश्रवसं गीतश्रवसं वेदैराघुष्टकीर्तिं सत्पतिं सतां पतिं श्रवःकामं कीर्तिकामं पुरुत्मानम्, पुरुः आत्मा शरीरं यस्य, शरीरतोऽपि पूर्णं, यद्वा पुरुः पूर्णः प्रज्वलितः आत्मा अग्निः, आत्माऽर्कचन्द्रनभाग्नि(?) जीवेषु परमात्मनीत्युक्तेः[1]। तथा च पुरुः अग्निः आत्मा उपमानं यस्य सः, आकारलोपः, रक्तवर्ण इति यावत्। इन्द्रं सोमैर्यजध्वमिति सम्बन्धः।

तेन लोहितो रोहितो रक्त इत्युक्तेः रक्तवर्णत्वाद् रोहित इति निरुक्तेः **रोहितमूर्तिरत्र** ॥ ३७१ ॥

॥ ॐ मार्गाय नमः ॥

**गात वाजिनम् । य ऋते चिद् गास्पदेभ्यो दात् सखा नृभ्यः**
**शचीवान् । ये अस्मिन् काममश्रियन् ।[2] जज्ञानो नु शतक्रतुः ॥ ३७२ ॥**

ये अधिकारिणः अस्मिन् इन्द्रे कामं स्वाभीष्टजातम् अश्रियन् आशासितवन्तः तेभ्यो नृभ्यः शचीवान् शचीसहायो बुद्धिमान्वा सखा य इन्द्रः ऋते वेदे मोक्षे वा, मोक्षार्थमिति, गाः ज्ञानं पदेभ्यो योग्येभ्यः दात् अदात् । एष एव मुमुक्षूणां मार्ग इत्यर्थः । एष एव सदा पन्था इत्युक्तेः । तं वाजिनमन्नादिभोग्यवन्तं गात । किञ्चायमिन्द्रः जज्ञानो नु जायमान एव शतक्रतुः पूर्णप्रज्ञो भवति ।

अनेन मुमुक्षूणां मार्ग इव मार्गः स्वात्मप्रापकः स्वयमेवेति निरुक्तेः **मार्गमूर्तिरत्र** ॥ ३७२ ॥

॥ ॐ हेतवे नमः ॥

**वि पृच्छदिति मातरम् । क उग्राः के ह शृण्विरे ।[3] पुरुहूतं**
**पुरुष्टुतं गाथान्यं सनश्रुतम् । इन्द्र इति ॥ ३७३ ॥**

---

१. नेयं रत्नमालोक्तिः । अस्य मूलं तु मृग्यम् । २. ऋग्वेद ८-७७-१, कुरुसुतिः काण्वः ।
३. ऋग्वेद ८-९२-२, श्रुतकक्षः सुकक्षो वा आङ्गिरसः ।

किश्चायमिन्द्रः उग्रास्तीव्राः के सन्ति के इह शृण्विरे प्रसिद्धाः इति मातरं स्वमातरमदितिं विपृच्छत् व्यपृच्छत् पप्रच्छ। ह आश्चर्यम्। इन्द्रः खलु जायमान एव उग्रान् हन्तुमेवमपृच्छत्, तस्माद् दुष्टसंहारहेतुः स एवेति तात्पर्यम्। हे जनाः पुरुहूतं पुरुहेतुं बह्वभीष्टकरणं पुरुष्टुतं गाथान्यं गाथान् स्तोत्रविशेषान् यातीति गाथान्यः स्तोत्रकर्मभूतस्तं सनश्रुतं सने दाने श्रुतं विश्रुतं दातृत्वेन प्रसिद्धं पुरुषं इन्द्र इति ब्रवीतन उपदिशत शिष्येभ्यो व्याकुरुत।

अनेन दुष्टसंहारहेतुरभीष्टदानहेतुरिति हेतुः, हेतुः कारणकर्मणोरित्युक्तेः स्तोत्रकर्मीभूतो वेति निरुक्तेः **हेतुमूर्तिरत्र** ॥ ३७३ ॥

**॥ ॐ दामोदराय नमः ॥**

**ब्रवीतन। इन्द्र इनो महानां दाता वाजानां नृतुः।**
**महाँ अभिज्ञ्वा यमत्। अपादु शिप्र्यन्धसः सुदक्षस्य ॥ ३७४ ॥**

महानिन्द्रः महानां महतां वाजानामन्नानां युद्धानां वा दाता इत् दातैव। किञ्च नृतुः नृषु अन्तर्यामितया ततः। ब्रह्मादिदेवतान्तर्यामितया ततः उदरे प्रविष्टः। तनोतेर्डुः। अभिज्ञु ज्ञानं आ यमत् आ सम्यग् यमत् नियमयति। यद्वा नृतुः नॄन् शत्रुजनान् तुदतीति नृतुः। व्यथाकर्मणस्तुदेः डुः, शत्रूणां व्यथां कुर्वन्। अभिज्ञुः संकुचितजानुः, तुविज्यमास्थायेति यावत्, शत्रून् हन्तुं धनुरादिकमायमत् उदयच्छत्। शिप्री प्रकृष्टसुखवानिन्द्रः सुदक्षस्य यजमानस्य अन्धसः अन्धांसि चरुपुरोडाशादीनि अपात् अपिबत्।

तेन दो अवखण्डन इत्यतः कर्तरि डः, द्यति खण्डयतीति दः, शत्रूणां व्यथाकर इति यावत्। आ सम्यक् मा ज्ञानं येषां ते आमाः सर्वज्ञा ब्रह्मादिचेतनगणाः। तेषु उत् उत्कृष्टं अन्तर्नियामकतया गतः अरः। ब्रह्मादिदेवेषु नियामकतया स्थितः आमोदरः। दश्चासावामोदरश्च दामोदर इति निर्वचनाद् **दामोदरमूर्तिरत्र** ॥ ३७४ ॥

**॥ ॐ सहाय नमः ॥**

**प्रहोषिणः। इन्दोरिन्द्रो यवाशिरः। तम्वभि प्रार्चतेन्द्रं**
**सोमस्य पीतये। तदिद्धचस्य वर्धनम्। अस्य पीत्वा ॥ ३७५ ॥**

यवाशिरो यवमिश्रितो रसः। अयमिन्द्रः अस्य इन्दोः एनं सोमरसं पीत्वा प्रहोषिणो यजमानस्य

शत्रून् सहते। तमेनमिन्द्रं सोमस्य पीतये सोमपानार्थं हे ऋत्विजः अभि प्रार्चत सम्यक् स्तुवत। कुतः। तत् इत् तदेव स्तोत्रमेव अस्येन्द्रस्य वर्धनं सन्तोषहेतुः। हि यस्मात्। स्तोत्रेण प्रसन्न एव पिबेन्नान्यथेति भावः।

अनेन षह मर्षणे इत्यस्मात् कर्तर्यचूप्रत्ययः, यजमानस्य शत्रून् सहत इत्युक्तेः **सहमूर्तिरत्र**॥ ३७५॥

॥ ॐ महीधराय नमः॥

**मदानां देवो देवस्यौजसा। विश्वाऽभि भुवना भुवत्। त्यमु**
**वः सत्रासाहं विश्वासु गीर्ष्वायतम्। आ च्यावयसि॥ ३७६॥**

मदानां सुखानां देवो राजा इन्द्रः देवस्यौजसा देवसम्बन्ध्यवष्टम्भकशक्त्या युक्तः, अलौकिकतेजोयुक्तः सन्, विश्वा विश्वानि समस्तानि भुवना भुवनानि जनान्, महीमिति यावत्, अभिभुवत् तिरस्कृतवान्। ततोऽभ्यधिकधारणादिशक्तिमान् महीमपि स्वयं धत्त इति यावत्। हे ऋत्विजः वः युष्माकं विश्वासु गीर्षु वाक्षु आयतं प्रतिपाद्यं त्यमु प्रसिद्धं तमेव सत्रासहं बलवर्धकं शत्रुवेगसहं वा इन्द्रं आ च्यावयसि व्यत्ययेन आ च्यावयथ शरणं गच्छत।

अनेन सर्वधारकत्वेन प्रसिद्धमहीं धरतीति महीधर इति निरुक्तेः **महीधरमूर्तिरत्र**॥ ३७६॥

॥ ॐ महाभागाय नमः॥

**ऊतये युध्मं सन्तमनर्वाणं सोमपामनपच्युतम्। नरमवार्यक्रतुम्।**
**शिक्षा ण इन्द्र राय आ पुरु विद्वान्॥ ३७७॥**

हे ऋत्विजः युध्मं युद्धवन्तम्, युधेर्भावे क्विबन्तान्मत्वर्थे मप्रत्ययः, सन्तं समीचीनम् अनर्वाणमनिन्द्रियं अनपच्युतमपच्युतिरहितं सोमपां सोमपानकर्तारं नरं नाशरहितम् अवार्यक्रतुमप्रतिहतप्रज्ञमवार्यकर्माणं वा। अत एवेन्द्रं अवार्यकर्मत्वादिमहामाहात्म्यवत्त्वेन दीप्तिमन्तम् ऊतये रक्षायै शरणं गच्छत। हे इन्द्र पुरु विद्वान् सर्वज्ञस्त्वं नः अस्मभ्यं रायो वित्तानि आ शिक्ष देहि।

अनेन भगः श्रीकाममाहात्म्यवीर्यरत्नार्ककीर्तिष्वित्युक्तेः[१] भगो योद्धृत्वसमीचीनत्वानिन्द्रियत्व-

१. भगः श्रीकाममाहात्म्ययत्नैश्वर्यार्कमुक्तिष्विति रत्नमाला।

पदच्युतिराहित्यसोमपानकर्तृत्वनाशदिराहित्यावार्यक्रतुत्वादिमहामाहात्म्यम् । स्वार्थे प्रज्ञादित्वा-दण् । भग एव भागः । महान् भागो माहात्म्यं यस्य स महाभाग इति निरुक्तेः **महाभागमूर्तिरत्र** ।। ३७७ ।।

**।। ॐ वेगवते नमः ।।**

**ऋचीषम । अवा नः पार्ये धने । अतश्चिदिन्द्र ण**
**उपाऽऽयाहि शतवाजया । इषा सहस्रवाजया ।। ३७८ ।।**

हे ऋचीषम ऋचीषं सोमस्य त्वक्, तदुपमात्वेनास्यास्तीति ऋचीषमः, ऋचीषशब्दान्मत्वर्थे मः तस्य सम्बुद्धिः ऋचीषवदत्यन्तदृढ अतिवेगवन्[१] । यद्वा ऋची ऋक् ऋचः समं रूपं यस्य सः ऋची-षमः । यादृशं रूपं प्रतिपाद्यं तादृशरूपगुणप्रवाहवानित्यर्थः । एवंभूत इन्द्र नः अस्मभ्यं पार्ये धने प्राप्यधनविषये अव रक्ष । दत्तानि धनानि पालय । हे इन्द्र यतस्त्वमत्यन्तदृढो गुणप्रवाहवांश्च अतश्चित् अत एव शतवाजया शतयोग्यभोग्यवत्या सहस्रवाजया सहस्रजनभोग्ययुक्तया इषा अन्नेन सह नोऽस्मान् उपायाहि ।

अनेन वेगाः प्रवाहकिंपाकजवा इत्युक्तेः ऋक्प्रतिपाद्यगुणप्रवाहो वेगस्तद्वानिति निरुक्तेः **वेगवन्मूर्तिरत्र** ।। ३७८ ।।

**।। ॐ अमिताशनाय नमः ।।**

**अयाम धीवतो धियोऽर्वद्भिः शक्र गोदरे । जयेम पृत्सु**
**वज्रिवः । वयमु त्वा शतक्रतो गावो न यवसेष्वा ।। ३७९ ।।**

हे वज्रिवः शतक्रतो बहुयज्ञ इन्द्र धीवतो बुद्धिमतस्त्वत्तो वयं धियः सर्वविषयबुद्धीः अयाम प्राप्नुमः । किञ्च हे शक्र अर्वद्भिरश्वैः पृत्सु युद्धेषु गोदरे गोर्भूमेर्धनस्य वा दरे प्राप्त्यर्थं शत्रून् जयेम । हे शतक्रतो यवसेषु तृणादिषु विषये गावो न गाव इव उक्थेषु उक्थविषये त्वं रणयामसि । गावो यथा तृणदातारमाह्वयन्ति तथा त्वमप्युक्थैः स्तोतारमाह्वयसीति सम्बन्धः । तस्माद् वयं त्वामु त्वामेव

१. नद्यदृढं तूलादि तादृशवेगवद् भवतीति भावः ।

आह्वयामः । यद्वा यवसेषु गाव इव गा इव उक्थेषु त्वां वयं रणयामसि शब्दं कारयामः । यथा तृणादिकं गृहीत्वा गाः शब्दं कुर्वन्ति (आह्वयन्ति ) तथा उक्थेन त्वां शब्दयाम इत्यर्थः ।

अनेन अमितं बहुवस्तु अश्नाति विषयीकरोतीत्यमिताशः प्रज्ञाविशेषः, तं नयति प्रापयतीत्यमिताशनः बहुप्रज्ञाप्रापक इति निरुक्तेः **अमिताशनमूर्तिरत्र** ॥ ३७९ ॥

॥ ॐ उद्भवक्षोभणाय नमः ॥

**उक्थेषु रणयामसि । विश्वा हि मर्त्यत्वनाऽनुकामा**
**शतक्रतो । अगन्म वज्रिन्नाशसः । त्वे सु पुत्र ॥ ३८० ॥**

हे सुपुत्र नरकादितः सम्यक् पावनशील उक्थेषु स्तोमेषु अस्मान् रणयामसि सम्यगुत्साहशब्दं कारयसि । हे शतक्रतो वज्रिन् आशसः सम्यक् सुखवतः त्वे त्वत्तः विश्वा विश्वान् अनुकामा समीचीनकामान् मर्त्यत्वना मर्त्यत्वेन, त्यक्तेनेति शेषः, जननमरणादिग्रस्तशरीरहानेन अगन्म प्राप्नुमः । उद्भवादिक्लेशं परिहृत्य सर्वभोगान् देहीति यावत् ।

अनेनोद्भवं जननादिक्लेशं क्षोभयति निवारयतीति निरुक्तेः **उद्भवक्षोभणमूर्तिरत्र** ॥ ३८० ॥

॥ ॐ देवाय नमः ॥

**शवसोऽवृत्रन् कामकातयः । न त्वामिन्द्राति रिच्यते । स नो**
**वृषन् त्सनिष्ठया सं घोरया द्रवित्न्वा । धिया ॥ ३८१ ॥**

हे इन्द्र कश्चिदपि जनः त्वां नातिरिच्यते नातिक्रामति । त्वत्तोऽधिको नास्ति । तस्मात् कामकातयः कामसमूहाः अवृत्रन् निरुद्धा अभवन् । त्वय्येवाश्रिताः नान्यत्र गच्छन्ति । हे वृषन् अभिलषितवर्षिष्ठ सर्वाभीष्टप्रापक स त्वं सनिष्ठया भक्तेषु दानशीलया द्रवित्न्वा आर्द्रया करुणया अभक्तेषु संघोरया निष्ठुरया धिया बुद्ध्या नः अस्मभ्यं शवसः सुखानि देहि ।

अनेनान्तर्णीतण्यर्थाद् गत्यर्थाद् दीव्यतेर्घञ्, अभीष्टजातं गमयतीति देव इति निरुक्तेः **देवमूर्तिरत्र** ॥ ३८१ ॥

॥ ॐ श्रीगर्भाय नमः ॥

**अविड्ढि पुरन्ध्या । यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः ।**
**तेन नूनं मदे मदेः । यस्ते चित्रश्रवस्तमः ॥ ३८२ ॥**

हे इन्द्र पुरन्ध्या शरीरादिरूपाशेषजगद्विषयकया त्वत्प्रेरणया इदं जगत् अविड्ढि प्राप्तम् । अशेषजगत् प्रापयसीति यावत् । यत एवं तस्मात् द्युम्नितमः तेजस्वितमः उद्रिक्ततमः मद आनन्दः ते नूनमस्ति । यदेष आकाश आनन्दो न स्यात् को ह्येवान्यात् कः प्राण्यादित्यादितर्कं नूंनमितिशब्देन सूचयति । य एवंभूत उद्रिक्तो मद आनन्दः तेन मदे अस्माकं सुखाय सुखदानार्थं त्वं मदेः उत्साहयुक्तो भवसि । यस्य ते चित्रश्रवस्तमः विचित्रकीर्त्या युक्तो महिमाविशेषः तेन च मदे मदेरिति सम्बन्धः ।

अनेन श्रीर्वेषरचनाशोभासंपत्सरलशाखिष्वित्युक्तेः श्रीः जगद्रचनानुकूलप्रेरणा सैव गर्भे यस्य सः, जगन्निर्माणप्रेरणावान्, इति निरुक्तेः, यद्वा श्रीः उद्रिक्तानन्दरूपा सम्पत् सैव गर्भे यस्य स इति निरुक्तेः **श्रीगर्भमूर्तिरत्र** ॥ ३८२ ॥

॥ ॐ परमेश्वराय नमः ॥

**य इन्द्र वृत्रहन्तमः । य ओजोदातमो मदः । विद्मा हि**
**यस्ते अद्रिवस्त्वादत्तः सत्य सोमपाः । विश्वासु दस्म ॥ ३८३ ॥**

हे इन्द्र वृत्रहन्तमः वृत्रहननातिसमर्थो यो मदः, किञ्च ओजोदातमः भक्तानामवष्टम्भकशक्तिप्रदो यो मदः, स सत्यः अबाधितः । असमर्थो हि मिथ्यासृष्टिं करोति त्वं च परमेश्वरत्वात् सत्यसृष्टिमेव करोषि । अतस्त्वं परमेश्वर इति वयं विद्महे ।[१]

अनेन परमश्चासावीश्वरश्चेति वा परमस्य पारमार्थिकस्य सत्यस्य ईश्वरः कर्तेति वा निरुक्तेः **परमेश्वरमूर्तिरत्र** ॥ ३८३ ॥

॥ ॐ करणाय नमः ॥

**कृष्टिषु । इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः ।**
**अर्कमर्चन्तु कारवः । यस्मिन् विश्वा अधि श्रियः ॥ ३८४ ॥**

---

१. अपूर्णमिदं व्याख्यानम् । नूनं लेखकाः प्रमाद्यन्ति ।

यस्मिन् अधि अधिकाः श्रियः सम्पदः सन्ति तस्मा इन्द्राय कृष्टिषु प्रजासु मध्ये नः अस्माकं मद्वने सुखप्राप्त्यर्थं गिरः अस्मदीयाः सुतं सोमं परिष्टोभन्तु प्रार्पयन्तु । मन्त्रसंस्कृतं हि पिबति नान्यथेति भावः । किञ्च कारवः अस्मदीया ऋत्विजः अर्कमधि अर्कं सूर्यं अधिकुर्वन्तम्, सूर्यादेः सुखप्रदमिति वा, इन्द्रमर्चन्तु पूजयन्तु ।

तेन को ब्रह्मात्मानिलार्काग्निचित्तधीयमकेकिष्वित्युक्तेः कः[1] पावकः कामो रः[2], णं सरोजदले ज्ञाने चेत्युक्तेः णं ज्ञानम्, कश्च रश्च करौ सूर्याग्निकामाः, तयोः णं ज्ञानं यस्मात् तत् करणम् । सूर्यादीन् ज्ञानप्रदानादिनाऽधिकान् करोतीति निरुक्तेः **करणमूर्तिरत्र** । यद्यपि परमेश्वर इति पुल्लिङ्गनिर्देशादत्रापि पुल्लिङ्गेन भवितव्यम् । तथापि विश्वं विष्णुरित्युपक्रमात् त्रिलिङ्गानामपि शब्दानां भगवति प्रयोगोस्तीत्युक्तमेव । एवमधस्तादुपरिष्टाच्च द्रष्टव्यम् ॥ ३८४ ॥

**॥ ॐ कारणाय नमः ॥**

**रणन्ति सप्त संसदः । इन्द्रं सुते हवामहे । त्रिकद्रुकेषु**
**चेतनं देवासो यज्ञमत्नत । तमिद् वर्धन्तु ॥ ३८५ ॥**

यस्मिन् यज्ञे सप्त संसदः अध्वर्युहोतृब्रह्माग्नीध्रयजमानपत्नीभेदेन[3] सप्तविधाः सभास्थाः जनाः रणन्ति शब्दं कुर्वन्ति । मन्त्रोच्चारणादिभिस्तस्मिन् यज्ञे सोमे सुते सति वयमिन्द्रं हवामहे । यं च यज्ञं देवासो देवाः त्रिकद्रुकेषु, द्रुतं सुखं येषु तानि कद्रुकाणि सवनानि तेषु, त्रिषु सवनेषु अत्नतः, अत सातत्यगमने, सन्ततं गच्छन्ति व्याप्नुवन्ति । तं चेतनं ज्ञानसाधनं यज्ञं वर्धन्तु वर्धयन्तु । यज्ञमविकलं कुर्वन्तु ।

अनेन सुखवत्त्वात् कं सवनत्रयम्, आ सम्यक् रणः शब्दः, तथा च केषु त्रिकद्रुकेषु सवनेषु आ सम्यग् अध्वर्युहोत्रादिसप्तसंसत्सु कृतः रणः शब्दो यस्मिन् तत् कारणमिति निरुक्तेः **कारणमूर्तिरत्र** ॥ ३८५ ॥

**॥ ॐ कर्त्रे नमः ॥**

**नो गिरः । आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।**
**न त्वामिन्द्राति रिच्यते । विव्यक्थ महिना वृषन् भक्षम् ॥ ३८६ ॥**

---

१. कः सूर्यः पावकश्च इति पाठः युक्तः स्यात् ।

२. रः पुमान् पावके कामे क्षये वज्रे शरं धृते इत्यभिधानम् ।

३. उद्गातृनिवेशोऽप्यत्र स्यात् ।

हे इन्द्र नो गिरः अस्मदीया वाचः इन्दवः सोमाश्च सिन्धवो नद्यः समुद्रमिव त्वा त्वामाविशन्तु। त्वदुदरं हृदयं च न कस्यापि कर्ता भवति (?) त्वत्कर्तृत्व एवान्तर्गतो हृदयं च प्रविशन्तु (?)[1]। हे वृषन् वर्षित इन्द्र त्वां कश्चिदपि जनो नातिरिच्यते नातिशेते। अतस्त्वमेव भक्षं यज्ञे दीयमानं सोमादिकं महिना स्वमहिम्ना सर्वोत्तमत्वादिना विव्यक्थ विशेषेण संयमयसि स्वोदरं प्रापयसि। त्वमेव सोमस्य आद्यः पाता।

अनेन स्वतन्त्रः कर्तेत्युक्तेः त्वमेव स्वतन्त्र इति निरुक्तेः **कर्तृमूर्तिरत्र** ॥ ३८६ ॥

॥ ॐ विकर्त्रे नमः ॥

**सोमस्य जागृवे। य इन्द्र जठरेषु ते। अरं त इन्द्र कुक्षये**
**सोमो भवतु वृत्रहन्। अरं धामभ्यः ॥ ३८७ ॥**

हे जागृवे सर्वदा जागरणशील इन्द्र ते जठरेषु त्वदीयोदरे यः सोमस्य भक्षः भक्षणीयोंशः प्रविष्ट आसीत्। सः अस्माभिर्दत्तः सोमः ते कुक्षये अरम् अलं पर्याप्तं भवेत्। अस्मदीयेनाल्पेनापि सोमेन ते कुक्षिः पूर्यताम्। किञ्च सोमस्ते कुक्षौ निविष्टः धामभ्यः तेजोवलादिभ्यः अरं पर्याप्तमस्तु। भक्तदत्तेनाल्पेनापि द्रव्येण सन्तुष्टः अस्मभ्यं तेजोवलादिकं देहीति यावत्।

अनेनाल्पेनापि सोमादिना विशेषेण तेजोबलादिकार्यस्य कर्तेति निरुक्तेः **विकर्तृमूर्तिरत्र** ॥ ३८७ ॥

॥ ॐ गहनाय नमः ॥

**इन्दवः। अरमश्वाय गायति श्रुतकक्षो अरं गवे।**
**अरमिन्द्रस्य धाम्ने। अरं हि ष्मा सुतेषु णः सोमेषु ॥ ३८८ ॥**

हे इन्द्र त्वयि समर्पिता इन्दवः सोमाः अरमश्वाय सम्यगश्वप्राप्तये पर्याप्ताः अरं गवे सम्यग् गोप्राप्तये पर्याप्ताः इन्द्रस्य धाम्ने इन्दधामप्राप्तये अरं पर्याप्ता भवन्ति। अत एव श्रुतकक्षो नाम ऋषिः अश्वाय गवे धाम्ने च त्वां अरं गायति। हि यस्मात् सुतेषु सोमेषु सत्सु नः अस्मभ्यं तेजोधामादिप्राप्त्यर्थमरं पर्याप्तं भूयासुः स्म।

---

१. अस्पष्टमिदं सर्वकोशेष्वपि एवमेव लिखितम्।

अनेन गच्छतीति गम् अश्वादिकम्, गमेर्डः । हं क्लीबमस्त्रसुखयोः कणिते मणिरोचिषीत्युक्तेः हं रोचिर्धाम तेजः । गं च हं च गहे गवाश्वादितेजोधामादिकं नयति प्रापयतीति गहनः नयतेर्डः इति निरुक्तेः **गहनमूर्तिरत्र** ।। ३८८ ।।

**।। ॐ गुहाय नमः ।।**

**इन्द्र भूषसि । अरं ते शक्र दावने । पराकात्ताच्चिदद्रिवस्त्वां**
**नक्षन्त नो गिरः । अरं गमाम ते वयम् ।। ३८९ ।।**

हे इन्द्र दावने दात्रे सकलाभीष्टदात्रे तुभ्यं दत्तं सोमादिहविः भूषसि भूषयसि स्वीकारेणालङ्करोषि । भोज्यवस्तूनां भोग एवालङ्कारः । हे अद्रिवः पराकात्तात् पराक् स्थितं गूहितत्वेन स्थितं चित् अपि नो गिरः नक्षन्त नक्षन्तु, नक्षतिर्गत्यर्थः, प्राप्नुवन्तु । तेन स्तुतिप्रापणेन वयं ते त्वदीयाः त्वद्दासाः अरं गमाम भवेम ।

अनेन गुह संवरण इत्यस्मात् कर्मणि कप्रत्ययः, गुहो गूहित इति निरुक्तेः **गुहमूर्तिरत्र** ।। ३८९ ।।

**।। ॐ व्यवसायाय नमः ।।**

**एवा ह्यसि वीरयुरेवा शूर उत स्थिरः । एवा ते राध्यं**
**मनः । एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः ।। ३९० ।।**

हे इन्द्र त्वं वीरयुः सुभटोत्तमयोर्वीर इत्युक्तेः सुयोद्धृभिरुत्तमपुरुषैर्ब्रह्मादिभिश्च प्राप्योसि । एव एवं व्यवसितश्चासि । उत किञ्च त्वं शूर एव एवं व्यवसितः । स्थिरः अचलश्च । एव एवं व्यवसितः । किञ्च ते मनो राध्यं सम्पूर्णम् एव एवं व्यवसितः । हे तुविमघ बहुयज्ञ पूज्य इन्द्र ते रातिर्दानं रक्षा च विश्वेभिर्विश्वैः धातृभिर्लोकपालैः स्वात्मनि धायि अधायि । तेऽपि त्वदीयदानमेवोपजीवन्तीत्यर्थः ।

अनेन वीरप्राप्यत्वशूरत्वमनःपूर्णत्वलोकपालोपजीव्यत्वविषयको व्यवसायो निश्चयो यस्मिन् स व्यवसायः, गुणवचनेभ्यो मतुपो लुगिष्टः, इति निरुक्तेः **व्यवसायमूर्तिरत्र** ।। ३९० ।।

॥ ॐ व्यवस्थानाय नमः ॥

**अधा चिदिन्द्र मे सचा । मो षु ब्रह्मेव तन्द्रयुर्भुवो**
**वाजानां पते । मत्स्वा सुतस्य गोमतः । मा नः ॥ ३९१ ॥**

यस्मात् सर्वोपजीव्यः त्वम् अध चित् अस्मादेव मे मया सचा सह भव मदीयेन्द्रियादिव्यवस्थापको भव । भुवो भूमण्डलस्य वाजानामन्नादीनां च पते इन्द्र त्वं सु ब्रह्मेव निर्दोषः, तस्मात् तन्द्रयुः तन्द्रायुर्नैव भव । अस्मदिन्द्रियादिव्यवस्थापने तव तन्द्रा मास्त्विति यावत् । अत एव गोमतः गोभिः श्रीणीत मत्सरमित्युक्तेर्गोपयसा मिश्रितस्य सुतस्य सोमस्य पानार्थं मत्स्व उत्साहयुक्तो भव ।

अनेन इन्द्रियादीनां व्यवस्थापनं तत्तत्स्थानविषययोर्नियमनं तद् यस्माद् भवति स व्यवस्थान इति निरुक्तेः **व्यवस्थानमूर्तिरत्र** ॥ ३९१ ॥

॥ ॐ संस्थानाय नमः ॥

**इन्द्राभ्यादिशः सूरो अक्तुष्वा यमन् । त्वा युजा**
**वनेम तत् । त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः ॥ ३९२ ॥**

हे इन्द्र अक्तुषु रात्रिषु सूरः सूर्यः अभ्यादिशः प्रतिदिशम् आयमन् आयमयन् स्वरश्मीन् निगृण्हन् यथाऽप्रकाशको भवति तथा त्वमस्मान् प्रति मा भूः । अस्मासु सन्निहितानि त्वद्रूपाण्यपहृत्य अस्मदीयप्रकाशकत्वादिशक्तिविघटनं मा कार्षीरिति यावत् । अस्मदादिचक्षुरिन्द्रियस्थितेन वा त्वया युजा सख्या तत् स्वस्वविषयप्रकाशनादिकार्यं वनेम प्राप्नुम इति तत्वाभिमानिदेवानां वचनम् । एतच्च ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मीत्याद्यैतरेयारणसिद्धम् । अत एव विवादजनितापराधक्षमापनं कुर्वन्ति । हे इन्द्र वयं युजा प्रेरकेण त्वयैव, त्वत्प्रेरिता एवेति यावत्, स्पृधः अहमुक्थमस्मि न त्वमित्यादिरूपेण स्पर्धमानाः प्रतिब्रवीमहि त्वदुक्तेः प्रत्याख्यानं कृतवन्तः । अतो न स्वतन्त्रा वयं नोऽपराधं क्षमस्वेति तात्पर्यम् ।

अनेन तत्तदिन्द्रियदेवेषु संस्थानं स्वरूपाणामवस्थानं यस्य सः संस्थान इति निरुक्तेः **संस्थानमूर्तिरत्र** ॥ ३९२ ॥

॥ ॐ स्थानदाय नमः ॥

**त्वमस्माकं तव स्मसि । त्वामिद्धि त्वायवोऽनुनोनुवतश्चरान् ।**
**सखाय इन्द्र कारवः । [१]उद्वेदभि श्रुतामघम् ॥ ३९३ ॥**

पुनरपराधं शमयितुं देवास्तं स्तुवन्ति । हे इन्द्र त्वमस्माकमसि, स्वामीति शेषः । वयं च तव स्मसि तव स्मः, त्वमस्माकमसीति स्वयमेव व्याख्यानात् । तथा च स्तुत्या प्रसन्नस्ता देवता अब्रवीत् यथायतनं प्रविशतेति अग्निर्वाग् भूत्वा मुखं प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदित्यादेः देवानां वागादिस्थानदोऽभवदिति च ग्राह्यम् ।

अत एवेन्द्रशब्दो मुख्यप्राणपरः, इन्द्रियव्यवस्थापकत्वस्य प्रसिद्धे इन्द्रेऽयोगात् । एतन्न्यायेन बृहतीसहस्रे सर्वत्र प्रयुक्तः सर्वोपीन्द्रशब्दो न पुरन्दरपरः किन्तु मुख्यप्राणपर एवेति साधूक्तमाचार्यैः । यद्यपि बृहतीसहस्रस्य भगवत्परत्वमुक्तं नारायणादिपञ्चरूपाणां मत्स्यादिरूपाणां विश्वादिरूपाणां च प्रतिपाद्यत्वोक्तेः । तथापि परममुख्यवृत्त्या भगवत्परत्वेप्यवान्तरमुख्यवृत्त्या वायुपरत्वमप्युपपद्यते । यद्यप्येवं पुरन्दरपरत्वमप्युपपद्यते तथापि न मुख्यप्राणविषयया वृत्त्या प्रतिपाद्यताऽस्ति । अतो न मुख्यया वृत्त्या प्रतिपाद्यता पुरन्दरस्य, निकृष्टवृत्त्या प्रतिपाद्यता त्विष्टैव । परममुख्यया वृत्त्या विष्णुः प्रतिपाद्यः, तदनन्तरमुख्यया वृत्त्या मुख्यप्राणः, तदनन्तरमुख्यया वृत्त्या पुरन्दर इत्यस्यार्थस्य प्रमाणसिद्धत्वात् न किञ्चिदनुपपन्नम् । यद्यपि श्रुतकक्ष आसां ऋषिरिति प्रसिद्धत्वात् तद्वचनमेवेदं न देवानामिति प्रतीयते । तथाप्येकस्यापि सूक्तस्य ऋचो वा वहवो ऋषयः स्युः, 'तत्रैकस्यापि बहवः स्युः सूक्तस्यर्च एव वा' इत्यादि प्रमाणप्रसिद्धत्वाद् देवानामपीदं वचनं भवतीति न कुचोद्यावकाशः । एवमन्यत्रापि द्रष्टव्यम् ।

हे इन्द्र त्वायवो त्वामिच्छन्तः त्वत्प्रीतिकामाः कारवः कर्मकर्तारो जनाः त्वामित् त्वामेव अनुनोनुवतः सम्यक् स्तुवतः चरान् प्राणिनः प्रति सखायः उपकारिणः स्निग्धा वा अभवन् । अतो वयमपि मघे श्रुतः श्रुतमघः विपरीतसमासः, तं यज्ञे प्रसिद्धमिन्द्रं उदभि नोनुमः । घ निश्चितम् ।

अनेन वागादिदेवानां मुखादिस्थानप्रदत्वात् स्थानद इति निरुक्तेः **स्थानदमूर्तिरत्र** ॥ ३९३ ॥

१. ऋग्वेद ८-९३, सुकक्ष आङ्गिरसः ।

॥ ॐ ध्रुवाय नमः ॥

**वृषभं नर्यापसम् । अस्तारमेषि सूर्य । नव यो नवतिं**
**पुरो बिभेद बाह्वोजसा । अहिं च वृत्रहाऽवधीत् ॥ ३९४ ॥**

हे सूर्य शुचिसद्म वृषभं श्रेष्ठं नर्यापसं नर्यं नरेषु हितं अपः कर्म यस्य तम्, नरहितं कुर्वाणम्, अस्तारम् अस्तानि निरस्तानि अनित्यत्वचाश्चल्यादीनि अराणि यस्मात् स अस्तारः तं निर्दोषमिन्द्रं एषि तदभिमुखो भव। तमेव पूजयेति यावत्। य इन्द्रः बाह्वोजसा बाहुबलेन नवनवतिं नवनवतिसंख्यकाः पुरः शत्रूणां पुराणि विभेद बभञ्ज । यश्चेन्द्रः वृत्रहा वृत्रस्य हन्ता अहिं च अवधीत् तमेषीति सम्बन्धः।

अनेन ध्रुवो नित्यनिश्चलयोस्त्रिष्वित्युक्तेः नित्यत्वान्निश्चलत्वाच्च ध्रुव इति निरुक्तेः **ध्रुवमूर्तिरत्र** ॥ ३९४ ॥

॥ ॐ परर्द्धये नमः ॥

**स न इन्द्रः शिवः सखाऽश्ववाद्गोमद्यवमत् । उरुधारेव**
**दोहते । यदद्य कच्च वृत्रहन्नुदगा अभि ॥ ३९५ ॥**

स पूर्वोक्त इन्द्रः शिवः सखा माङ्गलिकसखा चास्तु। किञ्च उरुधारेव कामधेनुरिव अश्ववदश्वसहितं गोमद् गोसहितं यवमद् यवसहितं कामितं दोहते दुहेत्। हे वृत्रहन् यद् वस्तु अद्य अद्यतनं वर्तमानं कत् कचित् कालान्तरे देशान्तरे च तत्सर्वं त्वम् अभि उदगाः सम्यक् प्राप्नोषि। यच्च किञ्चित् जगत् सर्वमित्यादेः।

अनेन परस्य अश्वगवादिवस्तुजातस्य ऋद्धिः समृद्धिर्यस्मात् सः परर्धिरिति निरुक्तेः **परर्द्धिमूर्तिरत्र** ॥ ३९५ ॥

॥ ॐ परमाय नमः ॥

सूर्य । सर्वं तदिन्द्र ते वशे । यद्वा प्रवृद्ध सत्पते न
मरा इति मन्यसे । उतो तत् सत्यमित् तव ॥ ३९६ ॥

हे सूर्य सूरिगम्य इन्द्र तत् सर्वं पूर्वोक्तं भूतभविष्यद्वर्तमानं जगत् ते तव वशे वर्तते। हे सत्पते प्रवृद्ध सम्यग्व्याप्त त्वं न मरै न म्रियेयमिति मन्यसे यद्वा न जनिष्य इति मन्यसे तत् सर्वमजननमरणजातं तत्वकामनं वा तवेत् तवैव सत्यमबाधितममोघं च। उतो न जरां प्राप्नुयामिति वा मन्यसे तदपि सत्यम्।

अनेन परं स्वात्मानं जननमरणादिदोषराहित्येन मन्यत इति परमः, मन अवबोधन इत्यतः कर्तरि डः, इति निरुक्तेः **परममूर्तिरत्र** ॥ ३९६ ॥

**॥ ॐ स्पष्टाय नमः ॥**

**ये सोमासः परावति ये अर्वावति सुन्विरे। सर्वाँस्ताँ**
**इन्द्र गच्छसि। तमिन्द्रं वाजयामसि महे वृत्राय ॥ ३९७ ॥**

हे इन्द्र ये सोमासः सोमाः परावति दूरे सुन्विरे ये च अर्वावति समीपे वा सुन्विरे सूयन्ते तान् सुतान् सोमान् प्रति गच्छसि तत्तद्यज्ञगृहे सोमान् पातुं स्पष्टं भवसि। तं त्वा वयं महे महते वृत्रायासुराय वाजयामसि योधयामः। वृत्रेण सह युद्धाय प्रार्थयामः।

अनेन पूर्वमस्पष्टं एव यज्ञेषु सोमग्रहणाय स्पष्टो भवतीति स्पष्टः, स्पश अज्ञातदृशावित्यस्मात् कर्मणि क्त इति निरुक्तेः **स्पष्टमूर्तिरत्र** ॥ ३९७ ॥

**॥ ॐ तुष्टाय नमः ॥**

**हन्तवे। स वृषा वृषभो भुवत्। इन्द्रः स दामने कृत**
**ओजिष्ठः स मदे हितः। द्युम्नी श्लोकी स सोम्यः। गिरा ॥ ३९८ ॥**

स इन्द्रः हन्तवे असुरान् हन्तुं वृषभः श्रेष्ठः, वृषभः पुङ्गवो वृष इत्यभिधानात्, वृषा नः कामान् वर्षिता भुवत् अभवत् भवेत्। ककुद्मिराजेनासुरान् संहर्तुं तस्य वाहनत्वेन वृषभः पुङ्गवोऽभवदिति वा। किञ्च द्युम्नी सुखवान् वा सदा तुष्टः श्लोकी कीर्तिमान् सोम्यः अक्रूरः इन्द्रः सः दामने दाने कृतः क्लृप्तः ओजिष्ठः ओजस्वितमः मदे अस्माकं सुखाय गिरा स्तुत्या हितः देहे सन्निहितः भवेत्।

अनेन सदा तुष्यतीति तुष्टः, अत एव द्युम्नीति निरुक्तेः **तुष्टमूर्तिरत्र** ॥ ३९८ ॥

॥ ॐ पुष्टाय नमः ॥

**वज्रो न संभृतः सबलो अनपच्युतः । ववक्ष ऋष्वो अस्तृतः ।**
**दुर्गे चिन्नः सुगं कृधि गृणान इन्द्र गिर्वणः ॥ ३९९ ॥**

संभृतः शाणोल्लीढः वज्रं न वज्रायुधमिव सबलो बलेन सहितः अनपच्युतः अपच्युतिरहितः, पुष्ट इति यावत्, ऋष्वो महान् अस्तृतोऽनाच्छन्नः स इन्द्रः ववक्षे अस्मत्कामान् वहति, अस्मद्योगक्षेमं वहेत् । हे गिर्वणः इन्द्र नः अस्माभिः गृणानः स्तूयमानस्त्वं दुर्गे चित् बहुशत्रुसङ्कुलेऽपि राष्ट्रे नः अस्माकं सुगं सुगमं कृधि कुरु ।

अनेन बलेन सहितः बलादिना पुष्ट इति निरुक्तेः **पुष्टमूर्तिरत्र** ॥ ३९९ ॥

॥ ॐ शुभेक्षणाय नमः ॥

**त्वं च मघवन् वशः । यस्य ते नूचिदादिशं न मिनन्ति**
**स्वराज्यम् । न देवो नाध्रिगुर्जनः । अधा ते ॥ ४०० ॥**

हे इन्द्र गृणानः स्तुत्या प्रसन्नस्त्वं वशे भव अस्मदधीनो भव । हे मघवन् यस्य ते तव आदिशमादेशं नू चित् इदानीमपि जनाः न मिनन्ति न हिंसन्ति । देवोऽपि स्वराज्यं त्वदीयं स्वातन्त्र्यं न मिनाति । अध्रिगुः अधिको जनोऽपि न मिनाति । अध तस्मात् स त्वं ते तव प्रसादादेव वशे भव ।

अनेन शुभं देवादिभिरप्रतिहतमीक्षणम् आज्ञा आदेशो यस्य स इति निरुक्तेः **शुभेक्षणमूर्तिरत्र** ॥ ४०० ॥

॥ इति बृहतीसहस्रपारावारे चतुर्थः खण्डः ॥

॥ ॐ रामाय नमः ॥

**अप्रतिष्कुतं देवी शुष्मं सपर्यतः । उभे सुशिप्र रोदसी ।**
**त्वमेतदधारयः कृष्णासु रोहिणीषु च । परुष्णीषु ॥ ४०१ ॥**

हे सुशिप्र अत्यन्तसुखेन प्रकृष्ट अप्रतिष्कुतं प्रतिद्वन्द्वरहितं शुष्मं बलं देवी देव्यौ उभे रोदसी द्यावापृथिव्यौ सपर्यतः परिचरणकर्मसु पाठात्[१] परिचरतः। द्यावापृथिवीभ्यामपि त्वद्बलं सेव्यम्। हे इन्द्र त्वं कृष्णासु नीलासु रोहिणीषु लोहिनीषु रोहिणीवर्णविशिष्टासु परुष्णीषु नदीषु एतत् पयः उदकजातं अधारयः धृतवानसि। जलपूर्णा नदीः करोषि। अथवा कृष्णासु नीलासु रोहिणीषु परुष्णीषु नालादिगोव्यक्तिषु पयः क्षीरं देवानां हविर्दानार्थमधारयः स्थापितवानसि।

अनेन रमते अनेनेति रं शुष्मं बलं, तेन अमः अमितः, द्यावापृथिव्याद्युपजीव्यबलवान्। अथवा रः पुमान् पावके कामे क्षये वज्रे शरे घृते इत्यभिधानात् रः घृतं तत्कारणं पयः, तम् आ समन्तात् नीलरोहिण्यादिगोव्यक्तिषु निर्मातीति रामः, रश्चासावामश्च राम इति वा. रस्य आम इति वा निरुक्तेः **राममूर्तिरत्र** ॥ ४०१ ॥

**॥ ॐ विरामाय नमः ॥**

**रुशत् पयः। वि यदहेरध त्विषो विश्वे देवासो अक्रमुः।**
**विदन् मृगस्य ताँ अमः। आदु मे निवरः ॥ ४०२ ॥**

यद् ये विश्वे देवासः समस्तदेवाः अहेः असुरस्य त्विषः दीप्तीः व्यक्रमुः विशेषेणाक्रामन्त तान् देवान् मृगस्य, व्यत्ययेन मृगं, मार्गणीयं रुशत् संस्कारेणोज्वलत् पयः पाययामास अध तस्मात् अमः परिच्छिन्नमर्यादारहितः मे मदुपलक्षितसर्वचेतनगणात् निवरः नितरामुत्तमश्च।

अनेन वि विशिष्टा रा अग्न्यादयश्चेतनगणाः तेभ्यः आ सम्यक् नितराम् अमः स्वामी वर इति निरुक्तेः **विराममूर्तिरत्र** ॥ ४०१ ॥

**॥ ॐ विरजाय नमः ॥**

**भुवद् वृत्रहादिष्ट पौंस्यम्। अजातशत्रुरस्तृतः। श्रुतं वो**
**वृत्रहन्तमं प्र शर्धं चर्षणीनाम्। आ शुषे ॥ ४०३ ॥**

वृत्रहा इन्द्रः यस्मात् पौंस्यं सामर्थ्यम् आदिष्ट दत्तवान्, सर्वेषामिति शेषः, तस्मादजातशत्रुः

---

१. परिचरणार्थकधातूनां मध्ये 'सपर्य' इति पाठात् इति भावः।

शत्रुशून्यः अस्तृतः अनाच्छाद्यः, दोषलेपरहितश्च, भुवत् अभवत्। हे जनाः चर्षणीनां वः श्रुतं प्रसिद्धं वृत्रहन्तमं शर्ध बलाढ्यमिन्द्रम् आ शुषे सुखाय प्र स्तुत।

अनेन वि विगतं रजः रजोगुणोपलक्षितपापलेपादिकं यस्मात् सः विरजः, सकारलोपः, इति निरुक्तेः **विरजमूर्तिरत्र** ॥ ४०३ ॥

**॥ ॐ मार्गाय नमः ॥**

**राधसे महे। अया धिया च गव्यया पुरुणामन् पुरुष्टुत।**
**यत् सोमेसोम आभवः। बोधिन्मना इदस्तु नः॥ ४०४॥**

हे पुरुनामन् बहुनामधेय पुरुष्टुत बहुस्तुत इन्द्र यद् यस्मात् सोमेसोमे प्रतिसोमं गव्यया वेदरूपया अया अनया धिया स्तुत्या आ सम्यग्व्यक्तः अभवः। तस्मात् महे महते राधसे, त्वां स्तुम इति शेषः। स चेन्द्रः नः अस्माकं बोधिन्मनाः, बोधो ज्ञानं तस्य इत् प्रेरकं मनो यस्य सः बोधिन्मनाः शकन्ध्वादित्वात् पररूपम्, बोधप्रधानमना एवास्तु।

अनेन मृग्यत इति मृगो वेदः, प्रतिपाद्यतया तत्संबन्धित्वान्मार्ग इति निरुक्तेः **मार्गमूर्तिरत्र** ॥ ४०४ ॥

**॥ ॐ नेयाय नमः ॥**

**वृत्रहा भूर्यासुतिः। शृणोतु शक्र आशिषम्। कया त्वं**
**न ऊत्याऽभि प्र मन्दसे वृषन्। कया स्तोतृभ्य आ भर॥ ४०५॥**

भूर्यासुतिः भूरिः आसुतिर्दानं यस्य स भूर्यासुतिः वृत्रहा इन्द्रः नः आशिषं कामितं शृणोतु। हे वृषन् इन्द्र त्वं कया ऊत्या रक्षया अभिप्रायेण वा नोऽस्मान् अभि प्र मन्दसे सुखयसि। स्तोतृभ्यो जनेभ्यः कया ऊत्या आ भर आहरसीति प्रश्नद्वयार्थः। इति प्रश्नद्वयवता आदरवता नेय इति भावः।

तेनादरवता भक्तेन नीयत इति नेयः, अचोद्यदिति [१](?) निरुक्तेः **नेयमूर्तिरत्र** ॥ ४०५ ॥

१. अस्य पदस्यान्वयो न व्यक्तः। लिपिकृतां प्रमादः स्यात्।

॥ ॐ नयाय नमः ॥

**कस्य वृषा सुते सचा नियुत्वान् वृषभो रणत् । वृत्रहा**
**सोमपीतये । अभी षु णस्त्वं रयिं मन्दसानः ॥ ४०६ ॥**

नियुत्वान् नियोजकः वृषा वर्षिता वृषभः श्रेष्ठः वृत्रहा इन्द्रः कस्य यजमानस्य सोमे सुते सति सचा स्वगणैः सह सोमपीतये सोमपानार्थं रणत् शब्दं कुर्यात् । हे इन्द्र त्वं मन्दसानः सुखदाता सन् नः अस्मभ्यं सु रयिं समीचीनं द्रविणं अभि देहि ।

अनेन रयिं नयतीति नयः, सुप्रत्ययः[१] (?) गुणायादेशौ, इति निरुक्तेः **नयमूर्तिरत्र** ॥ ४०६ ॥

॥ ॐ अनयाय नमः ॥

**सहस्रिणम् । प्रयन्ता बोधि दाशुषे । पत्नीवन्तः सुता इम**
**उशन्तो यन्ति वीतये । अपां जग्मिर्निचुम्पुणः ॥ ४०७ ॥**

हे इन्द्र अपां जग्मिर्गमकः स्यन्दनहेतुः, अहिवधादिना अपः प्रस्रावयतीति यावत्, निचुम्पुणः नितरां पोषकश्च त्वम् । तस्मात् त्वामुद्दिश्य पत्नीवतः, पत्नीशब्दो धेनुपर्यायः, तज्जन्यपयसा मिश्रिता इमे सोमासः सोमरसाः वीतये यजमानस्य देवताप्राप्तये उशन्तः त्वामेव पातृत्वेनेच्छन्तः तं यन्ति गच्छन्ति द्रवन्ति । किञ्च दाशुषे यजमानाय सहस्रिणं सहस्रसंख्यं रयिं प्रयन्ता प्रकर्षेण प्रापयिता बोधि अबोधि, कर्मणि रूपमेतत्, प्राज्ञायि । यजमानेन सर्वाभीष्टप्रापकत्वेन प्रज्ञातः ।

अनेन अन चेष्टायामित्यतो भावे अप्रत्ययः, अनं अपां प्रस्रवणादिरूपचेष्टां यापयतीत्यनयः, यातेरन्तर्णीतण्यर्थात् डः, इति निरुक्तेः **अनयमूर्तिरत्र** ॥ ४०७ ॥

॥ ॐ वीराय नमः ॥

**इष्टा होत्रा असृक्षतेन्द्रं वृधासो अध्वरे । अच्छावभृथ-**
**मोजसा । इह त्या सधमाद्या हरी हिरण्यकेश्या ॥ ४०८ ॥**

इष्टाः कामिता होत्राः आह्वानसाधनभूताः वृधासो वर्धनहेतवः अस्मदीया मन्त्राः अध्वरे यज्ञे

१. अप्रत्यय इति वा अप्रत्यय इति वा स्यात् ।

ओजसा बलेन अवभृथं जगद्धरणसमर्थमुत्तममिन्द्रं अच्छ सम्यक् असृक्षत संगता बभूवुः । त्या त्यौ प्रसिद्धौ सधमाद्या सधमाद्यौ सुखवर्धितौ, यज्ञे हर्षवन्तौ, हिरण्यकेश्यौ हिरण्यवर्णकेशवन्तौ हरी अश्वौ इह, तमिन्द्रं वहेतामिति सम्बन्धः ।

अनेन सुभटोत्तमयोर्वीर इत्युक्तेः जगद्भर्तृत्वात् उत्तमा वीर इति निरुक्तेः **वीरमूर्तिरत्र** ॥ ४०८ ॥

॥ ॐ शक्तिमतां श्रेष्ठाय नमः ॥

**वोळ्हामभि प्रयो हितम् । तुभ्यं सोमाः सुता इमे स्तीर्णं**
**बर्हिर्विभावसो । स्तोतृभ्य इन्द्रमा वह । आ ते दक्षम् ॥ ४०९ ॥**

प्रयः प्रियं हितकारिणमिन्द्रं तौ अश्वौ अभि वोळ्हामिति सम्बन्धः । हे विभावसो अग्रे तुभ्यं त्वदर्थम् इमे सोमाः सुता अभिषुताः । बर्हिश्च स्तीर्णमास्तीर्णमस्ति । तस्मात् त्वं ते तव दक्षं समर्थं स्वामिनं स्तोतृभ्यः स्तुतिशक्तिमताम् इन्द्रं श्रेष्ठं इह यज्ञवाटे आवह ।

अनेन स्तवनादिशक्तिमतां श्रेष्ठ इति निरुक्तेः **शक्तिमतां श्रेष्ठमूर्तिरत्र** ॥ ४०९ ॥

॥ ॐ धर्माय नमः ॥

**वि रोचना दधद्रत्ना वि दाशुषे । स्तोतृभ्य इन्द्रमर्चत ।**
**आ ते दधामीन्द्रियमुक्था विश्वा शतक्रतो ॥ ४१० ॥**

हे जनाः य इन्द्रः दाशुषे यजमानाय स्तोतृभ्यश्च विरोचना विरोचनानि विशेषेण रोचमानानि रत्ना रत्नानि वि दधत् व्यधात् , तेषु स्थापितवानित्यर्थः, तमिन्द्रमर्चत स्तुत । हे शतक्रतो ते तुभ्यमहं विश्वा विश्वानि उक्था उक्थरूपाणि शस्त्राणि इन्द्रियम् इन्द्रियाणि धनानि आ दधामि स्थापयामि ।

अनेन रत्नानि यजमाने आदधातीति धर्मः, धृञः कर्तरि मप्रत्ययो गुणश्च, इति निरुक्तेः **धर्ममूर्तिरत्र** ॥ ४१० ॥

॥ ॐ धर्मविदे नमः ॥

**स्तोतृभ्य इन्द्र मृळय । भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो ।**
**यदिन्द्र मृळयासि नः । स नो विश्वान्या भर ॥ ४११ ॥**

हे इन्द्र शतक्रतो स्तोतृभ्यो मृळय सुखय। यत् यस्मात् नः अस्मान्, मदुपलक्षितसज्जनान्, मृळयासि सुखयसि, यस्मात् सज्जनसुखदानं तव स्वभावः तस्मात् भद्रंभद्रं समस्तानि मङ्गलानि ऊर्जं देवभोग्यमिषमन्नं च नः अस्मभ्यमाभर। किं बहुना। स त्वं विश्वानि समस्तान्यभीष्टान्यपि आभर।

अनेन ध्रियत इति धर्मः अभीष्टसमूहः, तं वेदयति प्रापयतीति वित्, धर्मशब्दे उपपदे विदेरन्तर्णीतण्यर्थात् क्विप्, इति निरुक्तेः **धर्मविन्मूर्तिरत्र** ॥ ४११ ॥

॥ ॐ उत्तमाय नमः ॥

**सुवितानि शतक्रतो। यदिन्द्र मृळयासि नः। त्वामिद्**
**वृत्रहन्तम सुतावन्तो हवामहे। यदिन्द्र ॥ ४१२ ॥**

हे शतक्रतो इन्द्र यद् यस्मात् सुवितानि, अकारलोपः[1] समग्रहितानि धनानि दत्वा नः अस्मान् मृळयासि। तस्मात् त्वमिन्द्र इन्द्रः प्रथमाया लुक्, परमैश्वर्यादिन्द्रः, उत्तम इति यावत्। यत् यस्मात् त्वमुत्तमस्तस्माद् वयं त्वामित् त्वामेवोद्दिश्य सुतवन्तः अभिषवं कुर्वन्तो हवामहे आह्वयामः।

अनेन परमैश्वर्यादुत्कृष्टतम उत्तम इति निरुक्तेः **उत्तममूर्तिरत्र** ॥ ४१२ ॥

॥ ॐ वैकुण्ठाय नमः ॥

**मृळयासि नः। उप नो हरिभिः सुतं याहि मदानां पते।**
**उप नो हरिभिः सुतम्। द्विता यो वृत्रहन्तमः ॥ ४१३ ॥**

मदानां सुखानां पते यः द्विता द्वयोः इहलोकयो[2] ऊर्ध्वाधःस्थितलोकयोर्वा इता गन्ता, सर्वलोकेष्वप्यकुण्ठितगतिमानिति यावत्, वृत्रहन्तमः असुरसंहर्ता च स इन्द्रस्त्वं हरिभिः ऋग्भिः नः अस्माभिः उप संस्कृतं नः सुतं सोमं प्रति हरिभिरश्वैरुपयाहि। आगत्य च नः अस्मान् मृळयासि मृळय।

१. सु अवितानीति वक्तव्ये सुवितानीत्यकारलोप इति यावत्।

२. इहपरलोकयोरिति पाठः स्यात्।

अनेन कुण्ठनं प्रतिहतिः कुण्ठः, वि विगतः कुण्ठः कुण्ठनं सर्वलोकसञ्चारप्रतिहतिः यस्मात् स विकुण्ठः, ततः स्वार्थिकोऽण् इति निरुक्तेः **वैकुण्ठमूर्तिरत्र** ॥ ४१३ ॥

॥ ॐ पुरुषाय नमः ॥

**विद इन्द्रः शतक्रतुः । उप नो हरिभिः सुतम् । त्वं हि**
**वृत्रहन्नेषां पाता सोमानामसि । उप नो हरिभिः सुतम् ॥ ४१४ ॥**

हे वृत्रहन् इन्द्र येषां नो हरिभिरद्रिभिः उप सम्यक् सुतं संस्कृतं सोमं हरिभिरश्वैरागत्य पातासि तेषां नः एषां सोमानां रसान् शतक्रतुरिन्द्रः उप विदे सम्यक् लब्धवान् हि ।

अनेन पुरून् सोमरसान् सनोति संभजते लभत इति पुरुष इति निरुक्तेः **पुरुषमूर्तिरत्र** ॥ ४१४ ॥

॥ ॐ प्राणाय नमः ॥

**[१]प्रकृतान्यृजीषिणः कण्वा इन्द्रस्य गाथया । मदे सोमस्य**
**वोचत । यः सृबिन्दमनर्शनिं पिप्रुं दासम् ॥ ४१५ ॥**

य इन्द्र सृबिन्दं सर्वत्र गमनवन्तं अनर्शनिं अशनिनिष्ठुरं पिप्रुं पानशीलं व्याप्तं वा दासं, दसु उपक्षये, लोकोपद्रवकरमसुरं वधीत् प्राणैर्वियोजयामास तमिन्द्रं कण्वाः कण्वप्रभृतयो ऋषयः इन्द्रस्य गाथया इन्द्रस्तुत्या सोमस्य सोमसम्बन्धिनः प्रकृतानि प्रकृतान् प्रकर्षेण संस्कृतान् ऋजीषिणः स्यन्दमानान् रसान् मदे इन्द्रस्य सुखार्थं वोचत अवोचन् । सोमरसानिन्द्राय समर्पितवन्त इति यावत् ।

तेन प्रकृतान् सोमरसान् आनयति यमिति प्राणः, यद्वा प्र प्रकृष्टान् प्राणान् शत्रूणां आनयति अपहरतीति प्राण इति निरुक्तेः **प्राणमूर्तिरत्र** ॥ ४१५ ॥

॥ ॐ प्राणदाय नमः ॥

**अहीशुवम् । वधीदुग्रो रिणन्नपः । न्यर्बुदस्य विष्टपं**
**वर्ष्माणं वृहतस्तिर । कृषे तदिन्द्र पौंस्यम् ॥ ४१६ ॥**

---

१. ऋग्वेद ८-३२, मेधातिथिः काण्वः ।

अयमिन्द्रः अहीशुवं अहिसंज्ञं दैत्यसमूहं अपः तत्प्रतिबद्धानि जलानि कर्माणि वा रिणन् समुद्रं विष्णुं वा गमयन् सन् वधीत् अवधीत् । स त्वमिन्द्र पौंस्यमेवमादि पौरुषं कृषे यस्मात् प्रकटीकरोषि तस्मात् न्यर्बुदस्य न्यर्बुदं बहुसंख्याकं विष्टपं स्थानं योनिं तिर तारय । किञ्च बृहन्तं वर्ष्माणं विग्रहं शरीरं तिर तारय । अनेकयोनिप्राप्तिं तत्कृतशरीरयोगं चास्माकं निवारय ।

अनेन प्रकर्षेण अनः अननं गमनं प्राणः नद्यादीनां समुद्रगमनम्, तद् ददातीति प्राणदः । यद्वा प्र प्रकृष्टासु बहुसंख्याकयोनिषु गमनं प्राणः, तद् द्यति खण्डयति निवारयतीति प्राणद इति निरुक्तेः **प्राणदमूर्तिरत्र** ॥ ४१६ ॥

॥ ॐ प्रणवाय नमः ॥

**प्रति श्रुताय वो धृषत् तूर्णाशं न गिरेरधि । हुवे**
**सुशिप्रमूतये । स गोरश्वस्य वि व्रजं मन्दानः सोम्येभ्यः ॥ ४१७ ॥**

हे जनाः युष्माकं प्रतिश्रुताय प्रतिश्रुतं प्रसिद्धं शत्रुं गिरेः अधि अधिकं शृङ्गं तूर्णाशं न वज्रायुधमिव य इन्द्रः धृषत् अधर्षयत् । यथा वज्रं गिरेः शृङ्गं धर्षयति तथा जनानां प्रसिद्धं शत्रुमधर्षयदित्यर्थः । तं सुशिप्रं सुखपूर्णमिन्द्रं ऊतये रक्षायै अहं हुवे । हे इन्द्र स त्वं मन्दानः भक्तजनान् सुखयन् सन् गोर्व्रजं वि ददासि । अश्वस्य व्रजमश्वसमूहमपि सोम्येभ्यः सोमार्हेभ्यो वि ददासि ।

अनेन णः सुखं वः वलम्, णश्च वश्च णवौ, प्रकर्षेण णवौ यस्माद् भवतः सः सुशिप्रो मन्दानश्च प्रणव इति निरुक्तेः **प्रणवमूर्तिरत्र** ॥ ४१७ ॥

॥ ॐ पृथवे नमः ॥

**पुरं न शूर दर्पसि । यदि मे रारणः सुत उक्थे वा**
**दधसे चनः । आरादुप स्वधा गहि । वयं घा ते ॥ ४१८ ॥**

ननु इदानीं पुरं शत्रूणां निवासस्थानं दर्पसि, दृञ् विदारणे, विदारयसि । मया सोमे सुते सति उक्थे वा मया कृते स्तोत्रे वा चनो मनः यदि दधसे धत्से तदा रारणः शब्दं कुर्वाणः आराद् दूरादपि स्वधा सुखेनैव उप अस्मद्गृहं प्रति आ गहि आगच्छ । वयं च ते तव स्मः । घ एव । त्वद्दासा एव ।

अनेन भक्तदत्तहविरादिषु मनः प्रथयति विस्तारयतीति पृथुः, प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्चेति सूत्रेण प्रथ प्रथन इत्यस्माद् घञर्थात् (?) कुप्रत्ययः सम्प्रसारणं चेति निरुक्तेः **पृथुमूर्तिरत्र** ॥ ४१८ ॥

**॥ ॐ हिरण्यगर्भाय नमः ॥**

**अपि ष्मसि स्तोतार इन्द्र गिर्वणः । त्वं नो जिन्व सोमपाः ।**
**उत नः पितुमा भर संरराणो अविक्षितम् ॥ ४१९ ॥**

हे गिर्वणः इन्द्र वयं यदि त्वदीयाः स्मसि अपि वा यदि वा स्तोतारः स्मसि स्मः तर्हि सोमपाः सन् अस्मदीयं सोमं पिबन्नेव नः अस्मान् जिन्व प्राप्नुहि । उत आगत्य संरराणः पानानुकूलशब्दं कुर्वन् अविक्षितं क्षयरहितम्, पः किच्चेति सूत्रात् पा पाने इत्यस्मात्तुन् प्रत्ययः कित्त्वात् घुमास्थेतीत्वं पीयत इति पितुः अन्नं, तं वा पितुश्चक्षुर्वा, नः अस्मभ्यमाभर ।

अनेन हि हितं रूपादिकं रणति गच्छति विषयीकरोतीति हिरण्यं चक्षुः, तद् गृण्हाति ददातीति गर्भः, गृहेरकारप्रत्ययो गुणो हस्य भश्च, तथा च हिरण्यस्य चक्षुषोऽन्नस्य वा गर्भो दाता हिरण्यगर्भ इति निरुक्तेः **हिरण्यगर्भमूर्तिरत्र** ॥ ४१९ ॥

**॥ ॐ शत्रुघ्नाय नमः ॥**

**मघवन् भूरि ते वसु । उत नो गोमतस्कृधि हिरण्यवतो**
**अश्विनः । इळाभिः सं रभेमहि । वृबदुक्थम् ॥ ४२० ॥**

हे मघवन् यज्ञपूज्य ते तव भूरि वसु बहु वित्तमस्ति । उत तस्मादेव नः अस्मान् गोमतः हिरण्यवतः अश्विनः अश्ववतश्च कृधि । वयं च इळाभिरन्नैः सं रभेमहि संरभयुक्ता भवामः । वृबदुक्थं व्यत्ययेन वृहदुक्थं वृहदुक्थप्रतिपाद्यं त्वां यजाम ।

अनेन शं क्लीबे शास्त्रे श्रेयसि मङ्गले इत्यभिधानात् शं श्रेयोरूपं द्रविणं गवाश्वादिकं च । तनु विस्तारे इत्यतो भावे डु प्रत्ययः टिलोपः त्रुः विस्तारः । घण्टायां घटने च घः इत्युक्तेर्घः घटना । नी प्रापणे इत्येतस्मादन्तर्णीतण्यर्थात् केवलाद्वा डः । तथा च श्रेयःसाधनद्रविणादिविस्तारघटना-

प्राप्तिमत्त्वाद् घटनाप्रापकत्वाद्वा शत्रुघ्नः, पृषोदरादित्वाद् घशब्दान्त्यलोप इति निरुक्तेः शत्रुघ्नमूर्तिरत्र ॥ ४२० ॥

॥ ॐ व्याप्ताय नमः ॥

**हवामहे सृप्रकरस्नमूतये । साधु कृण्वन्तमवसे ।**
**यः संस्थे चिच्छतक्रतुरादीं कृणोति वृत्रहा ॥ ४२१ ॥**

सृप्रकरस्नं सृप्लृ गतावित्यस्मात् रक्प्रत्ययः । सर्पति सर्वदेशकालेष्विति सृप्रः, व्याप्त इति यावत् । करोतीति कः । कृञो डः । तृषिशुषिरसिभ्यः किदिति सूत्रेण रस आस्वादन इत्यस्मान्नप्रत्ययः । रस्यते आस्वाद्यते सर्वैरुपजीव्यत इति रस्नः । सृप्रश्चासौ कश्चासौ रस्नश्च सृप्रकरस्नः । तं व्याप्तं सर्वकर्तारं सर्वोपजीव्यमत एव भक्तानां साधु सुखं कृण्वन्तं इन्द्रमवसे रक्षणाय ऊतये अभिप्रायसिद्धये हवामहे । यः शतक्रतुर्वृत्रहा बहुकर्मा बहुज्ञानो वा संस्थे जयगतः संस्थित्यै आत् व्याप्तिं ईम् एव कृणोति करोति । स्वकीयव्याप्तिं जगद्रक्षणायाङ्गीकरोति । तमिन्द्रं हवामहे इति सम्बन्धः ।

अनेन जगद्धारणाय स्वयं व्याप्नोतीति व्याप्त इति निरुक्तेः व्याप्तमूर्तिरत्र ॥ ४२१ ॥

॥ ॐ वायवे नमः ॥

**जरितृभ्यः पुरूवसुः । स नः शक्रश्चिदा शकद् दानवाँ अन्तराभरः ।**
**इन्द्रो विश्वाभिरूतिभिः । यो रायोऽवनिः ॥ ४२२ ॥**

य इन्द्र रायः वित्तोपलक्षिताशेषाभीष्टस्य अवनिराश्रयः । अन्तराभरः, अन्तःस्थित्वा वायुरिव रमणकृद् अन्तरः, आ सम्यग् बिभर्तीत्याभरः, अन्तरश्चासावाभरश्च । शं करोतीति शक्रः । पुरूवसुः बहुवित्तवान्, बहुषु वसतीति वा । स एवंविध इन्द्रः विश्वाभिरूतिभिः अस्मदीयसमस्ताभिप्रायैः दानवान् दाता आ शकत् सम्यक् शक्नोति । अस्मदभिप्रेतार्थान् सर्वानपि दातुं शक्नोत्येव ।

अनेन वातेः कर्तरि डः, वाति गच्छति, असाधारण्येन व्यपदेशा भवन्तीति न्यायादन्तः स्थित्वा रमणकृत्, वः । गत्यर्थादयतेरन्तर्णीतण्यर्थादुप्रत्ययः, जगत् स्वात्मनि गमयति बिभर्तीत्ययुः । वश्चासावयुश्चेति वायुः । जगदन्तःस्थितो रमणहेतुर्जगद्धारकश्चेति अन्तराभर इत्यनेन सूचनाद् वायुमूर्तिरत्र ॥ ४२२ ॥

॥ ॐ अधोक्षजाय नमः ॥

**महान् त्सुपारः सुन्वतः सखा । तमिन्द्रमभि गायत ।**
**आयन्तारं महिस्थिरं पृतनासु श्रवोजितम् । भूरेः ॥ ४२३ ॥**

हे उद्गातारः य इन्द्रः सुन्वतो यजमानस्य महान् सुपारः पारभूतः सखा तमिन्द्रमभिगायत । आयन्तारं सर्वजगन्नियन्तारं महि महान्तं स्थिरमचञ्चलमविनाशिनं पृतनासु युद्धेषु श्रवोजितं श्रवसो धनस्यान्नस्य वा यशसो वा जितमपहर्तारं भूरेर्दातारमिन्द्रमभिगायतेति सम्बन्धः ।

अनेन सर्वं जगत् स्वाधः करोति नियम्यतया अधःकरोतीत्यधः, आयन्तेति यावत् । क्षि क्षये, अस्माद् भावे डः, क्षः क्षयो विनाशः, न विद्यते क्षो विनाशो यस्येत्यक्षः । श्रवःशब्दोदितान्नादेर्जेता अपहर्ता, जि जय इत्यतो डप्रत्ययः । अधश्चासावक्षश्चासौ जश्चेत्यधोक्षज इति निरुक्तः आयन्तारं स्थिरं श्रवोजितमित्यनेन सूचनाद् अधोक्षजमूर्तिरत्र ॥ ४२३ ॥

॥ ॐ ऋतवे नमः ॥

**ईशानमोजसा । नकिरस्य शचीनां नियन्ता सूनृतानाम् ।**
**नकिर्वक्ता न दादिति । न नूनं ब्रह्मणामृणम् ॥ ४२४ ॥**

ओजसा बलेन ईशानं सर्वजगत्स्वामिनं नतु मायया, तं प्रगायतेति सम्बन्धः । अस्येन्द्रस्य शचीनां बुद्धीनां नियन्ता नकिः नैवास्ति । अस्य वक्ता उपदेष्टा च नकिः । सूनृतानां वचसां नियन्ता नकिः । ततोऽन्यः दात् दाता च नैवास्ति । ब्रह्मणां स्तोत्राणां ऋणं न नास्ति इति नूनं निश्चितम् । नूनं तर्के विनिश्चये ।

अनेन अर्यते बुद्ध्यादिप्रेरकपुरुषान्तराभाववत्तया ज्ञायते निश्चीयत इति ऋतुः । ऋ गतिप्रापणयोरित्यस्मात् अर्तेश्च तुरिति सूत्रेण तुः, स किच्च, इति निरुक्तः ऋतुमूर्तिरत्र ॥ ४२४ ॥

॥ ॐ सुदर्शनाय नमः ॥

**प्राशूनामस्ति सुन्वताम् । न सोमो अप्रता पपे । पन्य**
**इदुप गायत पन्य उक्थानि शंसत । ब्रह्मा कृणोत ॥ ४२५ ॥**

प्राशूनां त्वयि भक्त्या उन्नतानां सुन्वतां यजमानानामपि देवऋणं नास्ति। अप्रता अप्रयतेनेन्द्रेण वा सोमो न पपे न पीयते। इन्द्राभक्तः सोमपानार्हो न भवतीत्यर्थः। हे उद्गातारः पन्ये, पन्यं ज्ञानं निमित्तसप्तमी, ज्ञानार्थम् इत् एव इन्द्रमेव उपगायत। हे होतारः पन्ये पन्यार्थम् उक्थानि स्तोत्राणि शंसत। इन्द्रं स्तुवत। पन्य इत् पन्यार्थमेव हे होतारः ब्रह्म स्तोत्रं कृणोत कृणुत। स युष्माकं ज्ञानं दास्यतीति तात्पर्यम्।

अनेन सु सम्यग् दर्शो ज्ञानम्, दृशेर्भावे अप्रत्ययः, तं नयतीति सुदर्शनः। यद्वा सुष्ठु दर्शनं ज्ञानं यस्मादिति निरुक्तेः **सुदर्शनमूर्तिरत्र** ॥ ४२५ ॥

**॥ ॐ कालाय नमः ॥**

**पन्य इत्। पन्य आ दर्दिरच्छता सहस्रा वाज्यवृतः।**
**इन्द्रो यो यज्वनो वृधः। वि षू चर स्वधा अनु॥ ४२६ ॥**

य इन्द्रो पन्यः ज्ञानरूपः। अवृतः, वृणोतीति वृत् पूजकः स न भवतीत्यवृत् तस्य, अयज्वनः अपूजकस्य जनस्य सम्बन्धिनः शता शतसंख्याकान् सहस्रा सहस्रसंख्याकान् वाजी वाजिनोऽश्वान् आ दर्दिरत् सम्यग् व्यदारयत्। स इन्द्रः यज्वनः पूजकस्य वृधः वर्धकः, अश्वादीनामभिवृद्धिकरः। हे इन्द्र स्वधा अनु सुखान्यनु पन्य इत् ज्ञानार्थमेव सु वि चर अस्मद्यज्ञवाटेषु चर।

अनेन कल च्छेदने इत्यस्मादण्। छिनत्त्यभक्तानां वाज्यादिसम्पदमिति कालः। यद्वा दानार्थस्य कलेरणप्रत्ययः। भक्ताय वाज्यादिसम्पदं ददातीति काल इति निरुक्तेः वाज्यादर्दिरदित्यादिपदैः सूचनात् **कालमूर्तिरत्र** ॥ ४२६ ॥

**॥ ॐ परमेष्ठिने नमः ॥**

**कृष्टीनामन्वाहुवः। इन्द्र पिब सुतानाम्। पिब स्वधैनवानामुत**
**यस्तुग्र्ये सचा। उतायमिन्द्र यस्तव॥ ४२७ ॥**

हे इन्द्र कृष्टीनां प्रजानाम् अन्वाहुवः अनुकूलतया हूतस्त्वं सुतानां सुतान् सोमान् पिब। आहुवः आह्वानकर्तुः सोमान् पिबेति वा। हे इन्द्र तव वशे योऽयं वर्तते, त्वद्भक्त इति यावत्, यश्च तुग्र्ये

सन्ततौ वर्तते यस्त्वद्भक्तसन्ततावुत्पन्नः, तयोर्गृहेपि स्वधैनवानाम् स्वस्य धेनवः स्वधेनवस्तासामिमे स्वधैनवाः, द्वितीयार्थे षष्ठी, तदीयधेनुनिष्णादितान् क्षीरदध्यादींश्च पिब सचा सुखेन।

अनेन परमेश्वरभक्तद्वंद्वयोर्गृहे तदीयदधिपयआदि पातुं तिष्ठतीति परमेष्ठी। परमपदे सप्तम्यन्ते उपपदे ष्ठा गतिनिवृत्तावित्यस्मात् स्थः किच्च स्थाधातोरिन्प्रत्ययः सच किद् भवतीति इन्प्रत्यये आतोलोप इटि चेत्याकारलोपे तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् णत्वं[१] ष्टुत्वमिति निरुक्तेरूतयस्तुग्रेत्यादिपदैः सूचनात् **परमेष्ठिमूर्तिरत्र** ॥ ४२७ ॥

॥ ॐ परिग्रहाय नमः ॥

**अतीहि मन्युषाविणं सुषुवांसमुपारणे। इमं रातं सुतं पिब।**
**इहि तिस्रः परावत इह पञ्च जनान् ॥ ४२८ ॥**

हे इन्द्र सुषुवांसं सोमाभिषवकर्तारं मन्युषाविणं ज्ञानेन सहितं जनं प्रति अतीहि अतिशयेन प्राप्नुहि। उपारणे एतद्गृहे सुतमभिषुतं रातमस्माभिर्दत्तं इमं सोमं पिब। परावतो नीचाः तिस्रो दैत्यरक्षःपिशाचाख्याः प्रजाः अतिक्रम्य ता निरस्य इह पञ्चजनान् इतरमनुष्यांश्चातिक्रम्य अस्मान् प्रति इहि अस्मानेव परिगृहाण।

अनेन इतरान् परित्यज्य स्वभक्तानेव परिगृण्हातीति निरुक्तेः **परिग्रहमूर्तिरत्र** ॥ ४२८ ॥

॥ ॐ उग्राय नमः ॥

**अति। धेना इन्द्रावचाकशत्। सूर्यो रश्मिं यथा सृजाऽऽत्वा**
**यच्छन्तु मे गिरः। निम्नमापो न सध्य्रक्। अध्वर्यो॥ ४२९ ॥**

अध्वरं युनक्तीत्यध्वर्युः। हे अध्वर्यो इन्द्र धेनाः अस्मदीयानि स्तोत्ररूपाणि वाक्यानि भवान् अवचाकशत् प्रकाशयेत् प्रेरयत्। त्वत्प्रेरिताश्च मे मदीया गिरः, सूर्यः रश्मिं रश्मीन् सृज सृजति यथा, सूर्यप्रेरितरश्मयो यथा, (एवम्) आपो निम्नं न नीचप्रदेशमिव त्वा त्वां सध्य्रक् सम्यक् अति आ यच्छन्तु अत्यायच्छन्तु।

१. पत्वमिति पाठः स्यात्।

अनेन भक्तगिरः उचन्ति समवयन्त्यत्रेत्युग्रः । उच समवाये । ऋज्रेन्द्राग्रवज्रेत्यादिना रन्प्रत्ययः, चस्य गः, गुणाभावश्च । इति निरुक्तेः मे गिर आ त्वा यच्छन्त्वित्यादिना सूचनात् उग्रमूर्तिरत्र ॥ ४२९ ॥

॥ ॐ संवत्सराय नमः ॥

**आ तु हि पिञ्च सोमं वीराय शिप्रिणे । भरा सुतस्य पीतये ।**
**य उद्रः फलिगं भिनन्न्यक् सिन्धूँरवासृजत् ॥ ४३० ॥**

हे अध्वर्यो ऋत्विक् य इन्द्रः उदकस्य फलिगं निष्पत्तिप्रतिबन्धकमसुरं भिनत् । भित्वा च सिन्धून् नदीः समुद्रं प्रति न्यक् सम्यगवनार्थं भर संभर संस्कृतं कुरु । संस्कृतमेव पिबति नान्यथेति[1] ।

अनेन सं सम्यक् वत्साः सुतादिवत् प्रीतिविषया गङ्गादिनदीः समुद्रसंयोजनेन रमयतीति संवत्सर इति निरुक्तेः सिन्धूँरवासृजदित्यनेन सूचनात् संवत्सरमूर्तिरत्र ॥ ४३० ॥

॥ ॐ दक्षाय नमः ॥

**यो गोपु पक्वं धारयत् । अहन् वृत्रमृचीपम और्णवाभ-**
**महीशुवम् । हिमेनाविध्यदर्वुदम् । प्र व उग्राय ॥ ४३१ ॥**

हे ऋत्विजः य इन्द्रः गोषु धेनुषु पक्वं पयः धारयन् अधारयत् । अन्नं रसादिरूपेण प्राणः परिणयत्यसावित्युक्तेः । ऋचीपमः, समाने लोपः, ऋचीषसमः ऋचीषवदत्यन्तं दृढः, दक्ष इति यावत् । यद्वा ऋची ऋक् तत्समः, ऋचि यादृग् रूपं प्रतिपादितं तादृग्रूपवानिन्द्रः और्णवाभं ऊर्णासम्बन्धि और्णवमाविकं नीलकम्बलं तद्वदाभा कान्तिर्यस्य तं वृत्रं हिमेन फेनेन अहन् हतवान् । अपां फेनेन नमुचेः शिरः इन्द्रो वर्तयदिति श्रुतेः । किञ्च अर्बुदं बहुसंख्यं अहीशुवमहीनामीश्वरं, अहीनां समुदायं वा, अविध्यत् संहृतवान् । तस्मै वो युष्मासु उग्राय समवेताय, इन्द्राय प्रणमतेति शेषः ।

अनेन ऋजीषवदतिदृढत्वाद् दक्षः । यद्वा क्षदिः पाकार्थः, वैदिको धातुः । होतेव क्षदसे प्रियमित्यादिप्रयोगात् । तथा च गोपु स्थित्वा तृणादीन् पयआदिरूपेण पचतीति क्षदः ।

१. असमग्रं व्याख्यानमिदं सर्वेष्वपि कोशेषु । लेखकदोषोऽयम् ।

स एव वर्णविपर्ययेण दक्ष इति निरुक्तेः ऋचीषमः गोषु पक्वं धारयदित्यादिना सूचनाद् **दक्षमूर्तिरत्र** ॥ ४३१ ॥

॥ ॐ विश्राभाग नमः ॥

**निष्टुरेऽपाळ्हाय प्रसक्षिणे । देवत्तं ब्रह्म गायत ।**
**यो विश्वान्यभि व्रता सोमस्य मदे अन्धसः । इन्द्रः ॥ ४३२ ॥**

हे ऋत्विजः निष्टुरे नितरां त्वरावते, यद्वा निपूर्वात् तिष्ठतेः मुद्गरादयश्चेति कुरच् (?) किन्त्वादाकारलोपः षत्वं च निस्तुरः संहारकः, उपतिष्ठते इत्यादाविवोपसर्गवशात् संहारोऽप्यर्थः । तथा च नि नितरां तिष्ठति शत्रून् संहरतीति निष्टुरः, चतुर्थ्यर्थे सप्तमी, निष्टुराय । अषाळ्हाय शत्रुभिरसह्याय प्रसक्षिणे प्रकर्षेण सङ्गवते इन्द्राय देवत्तं देवेषु व्याप्तं ब्रह्म स्तोत्रं गायत । य इन्द्रः विश्वानि समस्तानि व्रता व्रतानि कर्माणि चक्रे स इन्द्रः अन्धसः अन्नस्य सोमस्य पाने सति मदे सुखाय देवानभिभवति ।

अनेन विपूर्वात् शृ हिंसायामित्यतः कर्तरि आमप्रत्ययो यणादेशश्च, विश्रामः संहर्तेति निरुक्तेः निष्टुरशब्देन सूचनाद् **विश्राममूर्तिरत्र** ॥ ४३२ ॥

॥ ॐ विश्वदक्षिणाय नमः ॥

**देवेषु चेतति । इह त्या सधमाद्या हरी हिरण्यकेश्या ।**
**वोळ्हामभि प्रयो हितम् । अर्वाश्चं त्वा पुरुष्टुत ॥ ४३३ ॥**

हे इन्द्र यो भवान् देवेषु चेतति देवेष्वपि स्वच्छन्दवृत्त्या वर्तते तं प्रयः प्रियं जगतां हितं तं त्वा त्वां त्या त्यौ प्रसिद्धौ हिरण्यकेश्या सधमाद्या हरी अश्वौ अर्वाश्चमर्वाकृस्थितं इह यज्ञवाटं प्रति अभि वोळ्हां सम्यग् वहेताम् ।

अनेन विश्वस्मिन् देवादिचेतनेषु, 'दक्षिणः सरले याम्ये रिक्ते छन्दानुवर्तिनि' इत्युक्तेः दक्षिणः छन्दानुवर्ती स्वेच्छया वर्तते इति विश्वदक्षिण इति निरुक्तेर्देवेषु चेततीति सूचनाद् **विश्वदक्षिणमूर्तिरत्र** ॥ ४३३ ॥

॥ ॐ विस्ताराय नमः ॥

**प्रियमेधस्तुता हरी । सोमपेयाय वक्षतः । [1]आ घा ये**
**अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रः ॥ ४३४ ॥**

ये जनाः अग्निं घ निश्चये आ सम्यग् इन्धते प्रकाशयन्ति, आहिताग्नय इति यावत्, ये च आनुषक् सर्वतो बर्हिरिन्द्रमुद्दिश्य स्तृणन्ति आस्तृणन्ति विस्तारयन्ति। येषां जनानां गृहे सोमपेयाय सोमपानाय प्रियमेधस्तुता प्रियमेधसा प्रिययज्ञेन यजमानेनेन्द्रेण वा स्तुता स्तुतौ श्लाघितौ हरी इन्द्रः इन्द्रं वक्षतः वहतः।

अनेन यज्ञेन बर्हिर्विस्तारयन्ति यं (उद्दिश्य) सः विस्तारः, विपूर्वात् स्तृणोतेर्घञ् इति निरुक्तेः बर्हिः स्तृणन्तीति सूचनात् **विस्तारमूर्तिरत्र** ॥ ४३४ ॥

॥ ॐ स्थावराय नमः ॥

**युवा सखा । बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः ।**
**येषामिन्द्रो युवा सखा । अयुद्ध इद् युधा वृतम् ॥ ४३५ ॥**

येषां जनानां गृहे बृहत् महान् इध्मः समिद्विशेषः अस्ति तेषामेषामयमिन्द्रः सखा युवा सखा संमिश्रः मित्रम् । सखा सहाये मित्रे चेत्युक्तेः । हे इन्द्र त्वमित् त्वमेव तमेव यजमानं युधा वृतं योद्धृभिरावृतं युधे युद्धे प्रसक्तं जनम् अयुद्धः अयोधयः । तेषां बलप्रदानादिना आवृणोषि[2] ।

तेन युद्धे तिष्ठन्ति प्रसक्ता वर्तन्त इति स्थाः भक्तजनाः, तिष्ठतेः कर्तरि क्विप्, तान् बलदानादिना वृणोतीति वरः, वृञः कर्तर्यच्, इति निरुक्तेः अयुद्ध इद् युधा वृतमिति सूचनात् **स्थावरमूर्तिरत्र** ॥ ४३५ ॥

॥ ॐ स्थाणवे नमः ॥

**शूर आजति सत्वभिः । येषामिन्द्रो युवा सखा । आ वुन्दं**
**वृत्रहा ददे जातः पृच्छद् वि मातरम् । क उग्राः के ह ॥ ४३६ ॥**

---

१. ऋग्वेद ८-४५, त्रिशोकः काण्वः । २. असमग्रं व्याख्यानमिदं सर्वेष्वपि कोशेषु ।

किञ्च शूर इन्द्रो येषां भक्तजनानां युवा संयुक्तः सखा मित्रं भवति तान् जनान् सत्वभिर्बलैः आ सर्वतः अजति गच्छति अभीष्टं दातुम्। किञ्च वृत्रहा अयमिन्द्रः जातो ह जात एव बुन्दमायुधं आ ददं गृहीतवान्। आदाय च के उग्राः क्रूराः सन्ति के, शृण्विरे श्रूयन्ते प्रसिद्धा इत्युत्तरेण सम्बन्धः, इति मातरमदितिं विपृच्छत् व्यपृच्छत्।

अनेन तिष्ठन्ति भगवति भक्त्यादिनेति स्था भक्तजनाः, पूर्ववत् स्थातेः क्विप्, तान् अणति बलादिप्रदानेन गच्छतीति स्थाणुः, अणु गतावित्यत उप्रत्ययः अणश्चेति सूत्रादिति निरुक्तेः शूरः सत्वभिराजतीतिपदैः सूचनात् **स्थाणुमूर्तिरत्र** ॥ ४३६ ॥

॥ ॐ प्रमाणाय नमः ॥

**शृण्विरे। प्रति त्वा शवसी वदद् गिरावप्सो न योधिषत्।**
**यस्ते शत्रुत्वमा चके। उत त्वं मघवञ्छृणु ॥ ४३७ ॥**

हे मघवन् उत महिमान्तरं शृणु निबोध। तदेवोच्यते। यः ते तव शत्रुत्वमाचक्रे करोत्यनुसन्धत्ते वा स जनः त्वा त्वां प्रति शवसि सुखविषये वदत् अवदत् वदेत्। न केवलमेतावत्। गिरौ पर्वते वृष्टम् अप्सो न उदकमिव योधिषत्, युधिः पतनार्थः, अधः पतेत्।

अनेन अमानोनाः प्रतिषेधे, माशब्दोयं नञर्थः, णश्च निर्वृतिवाचकः। तथा च णशब्दस्य माशब्देन समासः। तेन माणः सुखाभाव इति सिद्ध्यति। प्र प्रकर्षेण माणः सुखाभावः अधःपातादिदुःखं वा यस्माद् भवति तत् प्रमाणमिति निरुक्तेः शवसीवदद् योधिषदित्यादिना सूचनात् **प्रमाणमूर्तिरत्र** ॥ ४३७ ॥

॥ ॐ वीजाय नमः ॥

**यस्ते वष्टि विवक्षि तत्। यद् वीळयासि वीळु तत्। यदाजिं**
**यात्याजिकृदिन्द्रः स्वश्वयुरुप। रथीतमो रथीनाम् ॥ ४३८ ॥**

हे इन्द्र यो जनः ते तव सकाशात् यद् अभीष्टं वष्टि इच्छति तदभीष्टं तं प्रति विवक्षि वहसि प्रापयसि उत्पादयसि। किञ्च यद् वस्तु वीळयसि दृढयसि तत् वीळु दृढमेव भवति। (यत् यः

त्वद्भक्तः आजिं युद्धं याति स आजिकृदेव भवति ।) किञ्च यं जनमिन्द्रः स्वश्वयुः वृद्धचर्थस्य इवयते रूपमेतत्, वर्धयितुमिच्छति, स रथीनां रथिनां मध्ये रथितमो भवति ।

अनेन विपूर्वाज्जिनेर्डः, उपसर्गे च सञ्ज्ञायामिति सूत्रात्, अन्येषामपीति दीर्घः, वबयोरभेदाद् वीजमेव बीजं विशेषेण भक्तानां सुखोत्पादक इति निरुक्तेः यस्ते वष्टि विवक्षि तदित्यादिपदैः सूचनाद् **बीजमूर्तिरत्र ॥ ४३८ ॥**

**॥ ॐ अव्ययाय नमः ॥**

**वि षु विश्वा अभियुजो वज्रिन् विष्वग् यथा वृह । भवा नः सुश्रवस्तमः । अस्माकं सु रथं पुर इन्द्रः कृणोतु ॥ ४३९ ॥**

हे वज्रिन् विश्वाः समस्ताः अभियुजः, युजेर्भावे क्विप्, समस्तान् रक्षणोपायान् नः अस्मान् प्रति विवृह, वहेर्लोटि रमागमोऽकारलोपश्च, सु वृह सम्यग् वह प्रापय । तेन यथा यथावत् विष्वक् सर्वतः सुश्रवस्तमः सुकीर्तिमान् भव । किञ्च अस्माकं सुरथं पुरः शत्रुसेनाया अग्रे कृणोतु । अस्मदीयो रथो माऽपगच्छेत् ।

तेन अवतेर्भावे किः, अविरवनम्, अयतेरिणो वा करणे अकारप्रत्ययः । अवेः रक्षणस्य अयः करणमुपायो यस्मात् तदव्ययम् । यद्वा विपूर्वादयतेरिणो वा भावे अप्रत्ययः व्येतीति व्ययोऽपगमः, न विद्यते व्ययोऽपगमोऽस्मदीयरथस्य यस्मात् तदव्ययमिति निरुक्तेः अभियुजः सुविवृह इति पदाभ्यां सुरथं पुरः कृणोत्विति पदत्रयेण च सूचनाद् **अव्ययमूर्तिरत्र ॥ ४३९ ॥**

**॥ ॐ अर्थाय नमः ॥**

**सातये । न यं धूर्वन्ति धूर्तयः । वृज्याम ते परि द्विषोऽरं ते शक्र दावने । गमेमेदिन्द्र गोमतः ॥ ४४० ॥**

हे शक्र सातये युद्धाय धूर्तयो हिंसकाः यं त्वां न धूर्वन्ति ते तव द्विषो द्वेषिणः परिवृज्याम, वृजी वर्जने, वर्जयामः । ''न विष्णुं वैष्णवांश्चैव ह्युत्सृजेयमिति त्रिशः । न चान्यदेवतासाम्यं तदैक्यमथ वा हरेः । चिन्तयेयं मृतौ वापि न चाप्येकत्ववादिभिः । समत्ववादिभिर्वाऽहं संगच्छेयं कथञ्चन । तन्निन्दकैश्च तद्भक्तनिन्दकैर्वा महामुने ।'' इत्युक्तेस्त्वद्द्वेषिणो वयं वहिष्कुर्म इति यावत् । दावने

दानशीलस्य ते त्वत्तः गोमतः गवादियुक्तान् भोगान् अरमलं गमेम प्राप्नुमः इत् एव ।

अनेन रमेर्भावे डः । रं रमणम् । न विद्यते रमणं रतिर्भगवति येषां ते अराः भगवद्द्वेषिणः, तेभ्यः तत्सङ्गजनितभयाद् भक्तानां निवारणं थं यस्माद् भवति स अर्थः, उपपदान्त्यलोपः । मिथ्याज्ञानिनोऽस्माभिर्वर्जनीया इति यावत् । ''थः पुंस्यूर्मिगिरीन्दुषु । स्त्रीलिङ्गोऽयं तरङ्गिण्यां क्लीबे भयनिवारणे'' इत्युक्तेः । मिथ्याज्ञानिसंसर्गदोषपरिहाराय मिथ्याज्ञानिनो वर्जनीया इति निरुक्तेः वृज्याम ते परि द्विष इत्यनेन सूचनाद् **अर्थमूर्तिरत्र** ॥ ४४० ॥

॥ ॐ अनर्थाय नमः ॥

**शनैश्चिद् यन्तो अद्रिवोऽश्वावन्तः शतग्विनः । विवक्षणा**
**अनेहसः । ऊर्ध्वा हि ते दिवेदिवे सहस्रा सूनृता ॥ ४४१ ॥**

आदरणयोग्यत्वादद्रिर्वायुः प्राणादिस्थः, तं वर्तयति स्वोपभोग्यं करोतीत्यद्रिवाः, वर्ततेः सुप्रत्ययः, तस्य सम्बुद्धिः, हे अद्रिवः शनैः क्रमेण वयं त्वां यन्तः शरणं प्राप्ता भवेम चित् । किञ्च अश्वावन्तः शतग्विनो शतगोमन्तः विवक्षणा विशेषेण बहूनां योगक्षेमवाहकाः अनेहसः अचञ्चलाश्च भवेम । हे इन्द्र ते ऊर्ध्वा उत्तमा सूनृता स्तुतिः दिवेदिवे प्रतिदिनं सहस्रा बहुसहस्राणि धनानि, मंहते ददातीति सम्बन्धः ।

अनेन अनेषु प्राणेषु रमत इत्यनरः आदरयोग्यो मुख्यप्राणः । स थं अन्नं भोग्यं प्रवर्तनीयो यस्य सोऽनर्थः, उपपदान्त्यलोपः, इति निरुक्तेरद्रिवःशब्देन सूचनाद् **अनर्थमूर्तिरत्र** ॥ ४४१ ॥

॥ ॐ महाकोशाय नमः ॥

**शता । जरितृभ्यो वि मंहते । विद्मा हि त्वा धनञ्जयमिन्द्र**
**दृळ्हा चिदारुजम् । आदारिणं यथा गयम् ॥ ४४२ ॥**

य इन्द्रः शता शतानि बहून्यभीष्टजातानि जरितृभ्यः स्तोतृभ्यः विमंहते ददाति । हे इन्द्र तं त्वां धनञ्जयं धनानां जेतारं विद्म जानीम । दृळ्हा दृढं चित् अपि । ब्रह्माण्डादिकमपि आरुजम्, रुजो भङ्गे, भग्नं कुर्वाणं विद्म । गयं शत्रूणां गृहं पुरं वा यथा तथा भक्तानां पापजातम् आदारिणं विदारयन्तं विद्म । हि प्रसिद्धम् ।

अनेन महान् कोशोऽर्थसमूहो यस्येति महान्, महान् कोशोऽण्डं यस्य वशे भेद्यत्वादिना अस्तीति महाकोशः, कोशोऽस्त्री कुड्मलेऽर्थौघे गृह्येऽङ्गे शास्त्रदिव्ययोरित्युक्तेः, इति निरुक्तेर्धनञ्जयं दृळहा चिदारुजमित्यनेन सूचनात् **महाकोशमूर्तिरत्र** ॥ ४४२ ॥

**॥ ॐ महाभोगाय नमः ॥**

**ककुहं चित् त्वा कवे मन्दन्तु धृष्णविन्दवः । आ त्वा पणिं**
**यदीमहे । यस्ते रेवाँ अदाशुरिः प्रममर्ष मघत्तये ॥ ४४३ ॥**

हे इन्द्र धृष्णो कवे ज्ञानिन् यद् यस्मात् आ सम्यक् वयं पणिं स्तुत्यं त्वामीमहे शरणं प्राप्नुमः तस्मात् ककुहं कचिद् यज्ञगृहे इन्दवः सोमाः त्वां मदन्तु सुखयन्तु । यो जनः रेवानपि (धनवानपि) ते तव प्रीत्यर्थं त्वामुद्दिश्य अदाशुरिः अदाता भवति प्रत्युत मघत्तये मघवत्तये कीर्तिप्राप्त्यर्थं प्रममर्ष धनं सङ्गृण्हाति । अस्योत्तरेणान्वयः ।

अनेन महान् सोमपानजनितो भोगः सुखं यस्य सः, भोगस्तु भोजने चित्ते निर्वेशे पालने सुखे इत्यभिधानात्, इति निरुक्तेः इन्दवो मदन्त्विवितिपदाभ्यां सूचनात् **महाभोगमूर्तिरत्र** ॥ ४४३ ॥

**॥ ॐ महाधनाय नमः ॥**

**तस्य नो वेद आ भर । इम उ त्वा वि चक्षते सखाय इन्द्र**
**सोमिनः । पुष्टावन्तो यथा पशुम् । उत त्वा ॥ ४४४ ॥**

हे इन्द्र तस्य जनस्य वेदो धनमपहृत्य नः अस्मभ्यमाभर । महान्त्यपि धनान्यस्मभ्यं देहीति यावत् । ते सखायः सोमिनः सोमयाजिन इमे जनाः त्वा त्वां उ एव पुष्टवन्तः पशुपोषका जनाः पशुं यथा तथा वि चक्षते जानन्ति, काङ्क्षन्ते त्वत्तः फललाभाय । उतत्वेति पदद्वयमुत्तरान्वयि ।

तेन महान्ति धनानि यस्मादिति निरुक्तेर्वेद आभरेति पदाभ्यां सूचनात्, रेको रिक्थं वेदो वरिव इति धननामसु पाठात्, **महाधनमूर्तिरत्र** ॥ ४४४ ॥

**॥ ॐ अनिर्विण्णाय नमः ॥**

**अवधिरं वयं श्रुत्कर्णं सन्तमूतये । दूरादिह हवामहे ।**
**यच्छुश्रूया इमं हवं दुर्मर्षं चक्रिया उत ॥ ४४५ ॥**

हे इन्द्र उत किञ्च दूरात् दूरादेव श्रुत्कर्णं श्रवणसमर्थकर्णवन्तं अत एवावधिरं सन्तमुत्तमं त्वाम् ऊतये रक्षायै इह वयं हवामहे। यद् यस्माद् इममस्मदीयं हवमाह्वानं शुश्रूयाः शृणुयाः उत तस्मात् दुर्मर्षं शत्रुभिरमर्षणीयं कर्म चक्रियाः अकरोः।

अनेन बाधिर्यादिदोषैर्निर्विण्णो न भवतीत्यनिर्विण्ण इति निरुक्तेः अबधिरं श्रुत्कर्णं दूरादित्यनेन सूचनाद् **अनिर्विण्णमूर्तिरत्र** ॥ ४४५ ॥

॥ ॐ स्थविष्ठाय नमः ॥

**भवेरापिर्नो अन्तमः। यच्चिद्धि ते अपि व्यथिर्जगन्वांसो**
**अमन्महि। गोदा इदिन्द्र वोधि नः। आ त्वा ॥ ४४६ ॥**

तस्मात् नः आपिः प्राप्यः ,आप्लृ व्याप्तौ तस्मात् क्तिः, व्याप्तः स्थूलो वा भवेः। अन्तमः सर्वस्य जगतोऽन्ते मितः सर्वोत्तमत्वेन स्थूलत्वेन वा ज्ञातो भवेः। हे इन्द्र ते तव व्यथिः, सकारान्तः, ज्ञानं चिदपि कर्म च जगन्वांसः गच्छन्तः त्वज्ज्ञानक्रियाविषयाः सन्तः रम्भं शत्रूणां हिंसकं त्वां अमन्महि जानीमः। अपि किञ्च गोदाः ज्ञानप्रद हे इन्द्र नः अस्मान् अबोधि सम्यग् बोधय।

अनेन स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुण इति सूत्रेण स्थूलशब्दादिष्ठन्प्रत्यये लशब्दलोपे गुणावादेशयोश्च स्थविष्ठ इति भवति। तथाचातिशयेन स्थूलः जगद् व्याप्य तिष्ठतीति स्थविष्ठ इति निरुक्तेः आपिरन्तम इति पदाभ्यां सूचनात् **स्थविष्ठमूर्तिरत्र** ॥ ४४६ ॥

॥ ॐ भुवे नमः ॥

**रम्भं न जिव्रयो ररभ्मा शवसस्पते। उश्मसि त्वा**
**सधस्थ आ। स्तोत्रमिन्द्राय गायत पुरुनृम्णाय सत्वने ॥ ४४७ ॥**

हे इन्द्र जिव्रयः जयकांक्षिणः वयं त्वां न ररभ्म न हिंसयामः, न पीडयामः। हे शवसस्पते सुखपते इन्द्र त्वां सधस्थे सहस्थानाय आ सम्यग् उष्मसि कांक्षयामः। हे उद्गातारः पुरुनृम्णाय बहुसुखाय सत्वने समीचीनसत्तावते इन्द्राय स्तोत्रं गायत।

अनेन भवतीति भूः, कर्तरि क्विप्, सत्तावान् भूरिति निरुक्तेः सत्वपदेन सूचनाद् भूमूर्तिरत्र ॥ ४४७ ॥

॥ ॐ धर्मयूपाय नमः ॥

**नकिर्यं वृण्वते युधि । अभि त्वा वृषभा सुते सुतं**
**सृजामि पीतये । तृम्पा व्यश्नुही मदम् । मा त्वा मूराः ॥ ४४८ ॥**

हे वृषभ इन्द्र यं त्वां युधि युद्धे नकिः न कोपि वृण्वते तं प्रतिभटरहितं त्वां प्रति सोमे सुते सति पीतये तव सोमपानार्थं सोममभि सृजामि संयुनज्मि । दास्यामीति यावत् । त्वं च मदं मदसाधनं सोमं व्यश्नुहि पिब । पीत्वा च तृम्प तृप्तो भव । मूराः मूर्खाः त्वां मा भजन्तु ।

तेन ध्रियते अनेनेति धर्मः, अर्तिस्तुसुहसुधृक्षिषु इत्यादिना धृ धारण इत्यतो मन् प्रत्ययः । अथ धर्मोऽस्त्री पुण्ये सामान्यभावयोरित्युक्तेर्धर्मः पुण्यं तत्साधनत्वादिह धर्मः सोमः, तं यौति (तेन) संसृज्यत इति युः, यु मिश्रणामिश्रणयोरित्यत उप्रत्ययः । पिबतीति पः, पा रक्षणे इत्यतो डप्रत्ययः । तथा च धर्मं सोमं यौति पिबति रक्षति चेति धर्मयूप इति निरुक्तेः सुतं सृजामि व्यश्नुहि मदमित्यनेन सूचनाद् **धर्मयूपमूर्तिरत्र** ॥ ४४८ ॥

॥ ॐ महामखाय नमः ॥

**अविष्यवो मोपहस्वान आ दभन् । माकीं ब्रह्मद्विषो वनः ।**
**इह त्वा गोपरीणसा महे मन्दन्तु राधसे ॥ ४४९ ॥**

हे इन्द्र अविष्यवः स्वात्मानमवितुमिच्छवः केवलं शरीरपोषकाः उपहस्वानः हिंसाशीलाश्च त्वा मा आ दभन् मा हिंसन् । त्वं च ब्रह्मद्विषो जनान् माकीं नैव वनः अवनः संभजस्व । तेषां नैव फलं देहि, खण्डयेति यावत् । गोपरीणसा गोरसेन पयसा संस्कृताः, सर इति वक्ष्यमाणमत्रापि ग्राह्यम्, सृ गतौ अस्माद् विच् गुणः, रेफान्तस्य बहुवचनमेतत्, सरो गमनशीलाः सोमरसाः महे महते राधसे संसिद्धये च इह यज्ञवाटे त्वां मन्दन्तु प्रीणयन्तु ।

अनेन मीङ् हिंसायामित्यतः कर्तरि डः, आङ्पूर्वात् । आ समन्तात् मिनोतीत्यामो हिंसको जनः । महान्तश्च ते आमाश्च महामा अतिहिंसकाः । ब्रह्मद्विष इति यावत् । खनु अवदारणे इत्यतो डः । खनति खण्डयतीति खः । महामानां ब्रह्मद्विषां खः विदारक इति महामख इति निरुक्तेः माकीं ब्रह्मद्विषो वन इति सूचनात् **महामखमूर्तिरत्र** ॥ ४४९ ॥

॥ ॐ नक्षत्रनेमये नमः ॥

**सरो गौरो यथा पिब । या वृत्रहा परावति सना नवा च
चुच्युवे । ता संसत्सु प्र वोचत । अपिबत् ॥ ४५० ॥**

हे इन्द्र सरः, द्वितीयाबहुवचनमेतत्, गमनशीलान् सोमरसान् अस्माभिर्दत्तान् तृषितो गौरो मृगो यथा तथा पिब। हे जनाः वृत्रहा इन्द्रः या यानि नवा नवानि, नञ्पूर्वाद् वातेर्डः, अविनश्वराणि णु स्तुतावित्यस्माद्वा कर्मण्यकारप्रत्ययः नवानि स्तुत्यानि, सना कर्माणि परावति इहलोके चुच्युवे कृतवान् ता तानि कर्माणि संसत्सु सभासु प्रवोचत व्याकुरुत। अपिबदित्यस्योत्तरेण सम्बन्धः।

अनेन न क्षरति नक्षीयत इति वा नक्षत्रं, क्षि क्षये ष्ट्रन्, नाकवत् नञः प्रकृतिभावः। क्षियो नञ्पूर्वान्नक्षत्रमिति निपाताद् वा साधुः । णीञ् प्रापण इत्यतो नीञो मिरिति[1] मिप्रत्ययः नेमिः नेता। नक्षत्राणामविनश्वराणां कर्मणां कर्ता नक्षत्रनेमिरिति निरुक्तेः सना नवा च चुच्युव इति सूचनात् **नक्षत्रनेमिमूर्तिरत्र** ॥ ४५० ॥

॥ ॐ नक्षत्रिणे नमः ॥

**कद्रुवः सुतमिन्द्रः सहस्रबाह्वे । अत्रादेदिष्ट पौंस्यम् ।
सत्यं तत् तुर्वशे यदौ विदानो अह्नवाय्यम् । व्यानट् ॥ ४५१ ॥**

हे जनाः अयमिन्द्रः कद्रुवः कं सुखं द्रुतं यस्मिन्निति कद्रुः सवनम्, तद् वाति गच्छतीति कद्रुवः सवनं गच्छन् सन् सोममपिबत्। तस्य सहस्रबाह्वे सहस्रबाहवे सहस्रबाहोः पौंस्यं सामर्थ्यमत्र इह लोके अदेदिष्ट, दिश अतिसर्जने, उपदिशत। किञ्चायमिन्द्रः तुर्वशे एतन्नामकाय राज्ञे यदौ च अह्नवाय्यं साहाय्यं विदानः कुर्वाणः व्यानट् व्याप्तोऽभूत्। तत् एतत् सत्यं अमोघं न मिथ्या।

अनेन नक्षत्राणि अबाधितानि यदुतुर्वशादिराजसाहाय्यकरणादीनि कर्माणि यस्य सः नक्षत्रीति निरुक्तेः सत्यं तत् तुर्वशे यदावित्यादिना सूचनात् **नक्षत्रिमूर्तिरत्र** ॥ ४५१ ॥

॥ ॐ क्षमाय नमः ॥

**तुर्वणे शमि । तरणिं वो जनानां त्रदं वाजस्य गोमतः ।
समानमु प्र शंसिपम् । ऋभुक्षणं न वर्तवे ॥ ४५२ ॥**

---

१. कुत्रत्यमिदं सूत्रमिदं न ज्ञायते। एवं तत्र तत्रान्यानि सूत्राण्यपि।

हे जनाः जनानां वो युष्माकं तुर्वणे तन्नामकराज्ञे शमि सुखविषयं तरणिं, तरति सुखप्रतिबन्धकं दुष्कर्मजातमनेनेति तरणिः, तरतेरनिप्रत्ययः, तं व्यसनाब्धितारकं गोमतो वाजस्य त्रदं इन्द्रं च स्तुत। समानं वृद्धिक्षयरहितं, यद्वा समशब्दः सर्वपर्यायः, समः साधुः सर्वसाम्येषु त्रिष्वित्युक्तेः, सर्वेषु अनति चेष्टत इति समानः समर्थः तं च वर्तवे स्वात्मानं सुखिनं वर्तयितुं ऋभुक्षणमिन्द्रं न पूर्वमिन्द्रं च यथा तथा इदानीमपि प्रशंसिषं प्राशंसिषमस्तुवम्।

अनेन क्षमः शक्ते हिते त्रिष्वित्युक्तेः[१] क्षमः शक्तः समर्थ इति निरुक्तेः समानशब्देन सूचनात् **क्षममूर्तिरत्र**॥ ४५२॥

॥ ॐ क्षामाय नमः॥

**उक्थेषु तुग्र्यावृधम्। इन्द्रं सोमे सचा सुते। यः कृन्तदिद्**
**वि योन्यं त्रिशोकाय गिरिं पृथुम्। गोभ्यो गातुं निरेतवे॥ ४५३॥**

य इन्द्रः त्रिशोकाय एतन्नाम्ने राज्ञे वियोन्यं शत्रुं कृन्तत् न्यकृन्तत् छेदितवान्। किञ्च गोभ्यो गवां निरेतवे निर्गमनाय पृथुं महान्तं गिरिं पर्वतं न्यकृन्तत्। तं तुग्रवृधं सन्तानवृद्धिकरं इन्द्रं गातुम् उक्थेषु स्तोत्रेषु प्रवृत्तेषु सत्सु सोमे सुते च सति सचा सुखेनैव अहं प्रशंसिषमिति पूर्वेण सम्बन्धः।

अनेन क्षः संरोधे विरोधे च क्षमदुःस्वप्नयोश्च नेत्युक्तेः क्षः पणिकृतो गवां संरोधविशेषः। आङ्-पूर्वान्मिनोतेः कर्तरि डः। क्षं गवां संरोधविशेषं आमिनोति कृन्ततीति क्षाम इति निरुक्तेः गोभ्यो निरतवे पृथुं गिरिं कृन्तदित्यनेन सूचनात् **क्षाममूर्तिरत्र**॥ ४५३॥

॥ ॐ समीहनाय नमः॥

**यद् दधिषे मनस्यसि मन्दानः प्रेदियक्षसि। मा तत्**
**करिन्द्र मृळय। दभ्रं चिद्धि त्वावतः कृतं शृण्वे॥ ४५४॥**

हे इन्द्र यत् कर्तुं मनस्यसि मनः करोषि तत् कः अकः अकरोः इत् एव करोष्येव। किञ्च मन्दानः प्राणिनां सुखकरः त्वं यत् प्र इयक्षसि प्रकर्षेण दातुमिच्छसि तद् दधिषे इत् करोष्येव। किञ्च

१. नेयं रत्नमालोक्तिः। क्षमा क्षोण्यां तितिक्षायां योग्य शक्तहितेषु तु। त्रिष्विति रत्नमाला।

त्वावतस्त्वद्भक्तस्य त्वद्भक्तेन कृतं स्तोत्रं दभ्रं चित् अल्पमपि शृण्वे शृणोषि। तस्मात् त्वं मां मृळय।

तेन सं सम्यग् भक्तानां हितकरणाभीष्टदानतत्कृतस्तुतिश्रवणादिरूपमीहनं चेष्टा यस्य स इति निरुक्तः यद् दधिषे मनस्यसीत्यादिपदैः सूचनात् **समीहनमूर्तिरत्र** ॥ ४५४ ॥

**॥ ॐ यज्ञइज्याय नमः ॥**

**अधि क्षमि। जिगात्विन्द्र ते मनः। तवेदु ताः सुकीर्तयोऽ-**
**सन्नुत प्रशस्तयः। यदिन्द्र मृळयासि नः॥ ४५५ ॥**

हे इन्द्र ते तव यद् यस्मात् अधिक्षमि यज्ञभूम्यां प्रशस्तयः स्तुतयः असन् आसन् इत् एव। ताः प्रसिद्धा सुकीर्तयश्च आसन्। ते मनः जिगातु जयति च, उत्कृष्टं वर्तते। यस्मादेवं यज्ञे स्तुत्यस्तस्मात् नः अस्मान् मृळयासि।

अनेन यज्ञे इज्यः स्तुत्यः पूज्यः यज्ञइज्यः, अलुक्समासः, इति निरुक्तः अधिक्षमि प्रशस्तय इत्यादिना सूचनाद् **यज्ञइज्यमूर्तिरत्र** ॥ ४५५ ॥

**॥ ॐ महेज्याय नमः ॥**

**मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु। वधीर्मा शूर**
**भूरिषु। विभया हि त्वावत उग्रादभिप्रभङ्गिणः॥ ४५६ ॥**

हे शूर नः अस्मान् एकस्मिन्नागसि अपराधे सति मा वधीः मा हिंसीः अप्राप्यो भूः। द्वयोरागसोरपराधयोर्मा वधीः। त्रिषु वा आगस्सु मा वधीः। भूरिषु वा आगस्सु अनन्तेष्वपराधेषु मा वधीः। त्वावतस्त्वद्भक्तस्य उग्रात् क्रूरात् अभिप्रभङ्गिणः पुरादिभङ्गकारिणः शत्रून् विभय भयं प्रापय। हि प्रसिद्धम्।

अनेन महता बहुना अपराधेन इज्यः, यजिः संगतिकरणार्थः, सङ्गतिकरणीयः महेज्यः, उपपदान्त्यलोपः, महापराधिनमपि भक्तं स्वात्मनि संगमयत्येव नतु परित्यजतीति निरुक्तः मा न एकस्मिन्नागसीत्यनेन सूचनात् **महेज्यमूर्तिरत्र** ॥ ४५६ ॥

॥ ॐ क्रतवे नमः ॥

**दस्मादहमृतीषहः। मा सख्युः शूनमा विदे मा पुत्रस्य**
**प्रभूवसो। आवृत्वद् भूतु ते मनः। को नु मर्याः॥ ४५७॥**

प्रभुषु नियामकतया वसतीति प्रभूवसुः। हे प्रभूवसो इन्द्र, दसु भेदने इत्यस्मात् इषियुधीर्धदसि-स्याद्युइनुभ्यो मगिति सूत्रेण कर्तरि मक्, दस्मात् शत्रूणां भेदकात् त्वत्तः अहं ऋतिसहः ऋतिर्गमनं तत् सहत इति वेगसहो भूयासम्। त्वं च सख्युः मम शूनं सुखं मा विदे मा विदः, अनेकार्थत्वाद् धातूनां मा विच्छिन्द्याः। किञ्च मदीयपुत्रस्यापि शूनं सुखं मा विदेः। ते मनः अस्मान् प्रति आवृत्वत् सर्वथा अस्मच्छ्रेयोऽर्थे वर्तमानं भूतु भवेत्। यद्वा मा मे, एकारस्याकारादेशः, सख्युः शूनं सुखम् आ विदेः उत्पादयः, विद उत्पत्ताविति धातोः। त्वां विना मर्यः मनुष्यः को नु सुखं दद्यात्।

अनेन कृञः क्रतुरिति करोतेः क्रतुप्रत्ययः, कित्त्वाद् गुणाभावः, यणादेशश्च। करोति भक्तजनस्य सुखमिति क्रतुरिति निरुक्तेः मा सख्युः शूनमाविद इत्यनेन सूचनात् क्रतुमूर्तिरत्र॥ ४५७॥

॥ ॐ सत्राय नमः ॥

**अमिथितः सखा सखायमब्रवीत्। जहा को अस्मदीषते।**
**एवारे वृषभा सुतेऽसिन्वन् भूर्यावयः। श्वघ्नीव॥ ४५८॥**

इण् गतावित्यतः कर्तरि वप्रत्यये गुणे च एवेति रूपम्। एवः निर्गतः अरिः यस्मात् स एवारिः। हे एवारे वृषभ इन्द्र सखायं त्वाम् अमिथितः श्रवणादिरूपमथनमप्राप्तः पुरुषः अस्माकं सखापि कोऽब्रवीत्। न कोपि। वयमेव त्वां वक्तुं समर्थाः। यत एवं तस्मात् त्वद्भक्तान् जहा हातुं क ईषते इच्छति। सर्वेऽप्यस्मानेवाश्रयन्ति न कश्चिज्जहातीत्यर्थः। किञ्च चरन् चरन्तः त्वद्भक्ताः सोमे सुते सति त्वत्पूजनेन भूरि पूर्णं वहु वयः आयुः आ सम्यक् निवता निवतानि निम्नप्रदेशाः श्वघ्नीव नदीजलानीव आत्मनि स्वात्मनि असिन्वन् निवबन्धुः, पूर्णायुष्यं प्राप्ता इत्युत्तरेण सम्बन्धः।

अनेन गृध्र् वीपचि वचि यमि सदिक्षदिभ्यस्त्रन्निति सदेः त्रनुप्रत्ययः। सीदति प्राप्नोति पूर्णायुष्यमनेनेति सत्रमिति निरुक्तेः असिन्वन् भूर्यावय इत्यनेन सूचनात् सत्रमूर्तिरत्र॥ ४५८॥

॥ ॐ सतांगतये नमः ॥

**निवता चरन् । आ त एता वचोयुजा हरी गृभ्णे सुमद्रथा ।**
**यदीं ब्रह्मभ्य इद् ददः । भिन्धि विश्वा अपद्विषः ॥ ४५९ ॥**

हे इन्द्र ब्रह्मभ्यः स्तोतृभ्यः यदीं यदेव ददः तदित् तदेव दातुं वचोयुजा वचोयुजौ वाङ्मात्रेण योगिनौ एता एतौ सुमद्रथा सुमहद्रथा सुमहद्रथौ सुमहद्रथसम्बन्धिनौ ते त्वदीयौ हरी अश्वौ आ गृभ्णे गृहीतवानसि । विश्वाः विश्वान् द्विषो द्वेषिणः अपभिन्धि ।

अनेन सतां सद्भ्यो गतिः दानविषयिणी बुद्धिर्यस्य सः सतां गतिः, षष्ठ्या अलुक्, गतिस्तु गमने मार्गे दशायां बुद्ध्युपाययोरित्युक्तेः, इति निरुक्तेः यदीं ब्रह्मभ्य इद् दद इत्यादिना सूचनात् **सतांगतिमूर्तिरत्र** ॥ ४५९ ॥

॥ ॐ सर्वदर्शिने नमः ॥

**परि बाधो जही मृधः । वसु स्पार्हं तदा भर । यद्वीळाविन्द्र**
**यत् स्थिरे यत् पर्शाने पराभृतम् । वसु ॥ ४६० ॥**

हे इन्द्र परिबाधः सर्वतो बाधं कुर्वतः मृधो हिंसकान् जहि संहर । तत् तदीयं स्पार्हं स्पृहणीयं वसु आ भर । वीळौ दृढे अत्यक्ते (?) स्थिरे कोशे च यत् संभृतं पूरितं यच्च पर्शाने स्पर्शाने पराभृतं सम्यक् संभृतं तदाभर ।

अनेन दृञ् आदरणे इत्यतः कर्मणि शप्रत्ययः गुणः दर्श आदरणीयः । सर्वः समस्तः दर्शो वसुसमूहः परकीयः, सः अस्य भक्तेभ्यो दातृतासम्बन्धेनास्तीति सर्वदर्शीति निरुक्तेः वसु स्पार्हं तदाभरेत्यनेन सूचनात् **सर्वदर्शिमूर्तिरत्र** ॥ ४६० ॥

॥ ॐ विमुक्तात्मने नमः ॥

**स्पार्हं तदा भर । यस्य ते विश्वमानुषो भूरेर्दत्तस्य वेदति ।**
**वसु स्पार्हं तदा भर ।[1] आ तू न इन्द्र क्षुमन्तम् ॥ ४६१ ॥**

---

१. ऋग्वेद ८-८१. कुसीदी काण्वः

हे इन्द्र स्पार्हं स्पृहणीयं तत् अस्मभ्यमा भर। किं तत्। यस्य ते त्वया दत्तस्य भूरेर्वित्तस्य सकाशाद् विश्वमानुषः समस्तो मनुष्यः वेदति लाभवान् भवति तत् क्षुमन्तं क्षुमत् शब्दवत् प्रसिद्धिमत् स्पार्हं वसु नः तु विशेषेण आ भर।

अनेन मुच्लृ मोक्षणे इत्यतः कर्मणि क्तः। मुक्तं मोचनार्हं दातव्यं लाभयुक्तं च वसु। आङ्पूर्वाद् दा दान इत्यतः कर्तरि मनिन्, आत्मा दाता। विशेषेण मुक्तस्य लाभयुक्तस्य द्रविणस्य दाता विमुक्तात्मेति निरुक्तेः भूरेर्दत्तस्य वेदतीत्यादिना सूचनाद् **विमुक्तात्ममूर्तिरत्र** ॥ ४६१ ॥

॥ ॐ सर्वज्ञाय नमः ॥

**चित्रं ग्राभं सं गृभाय। महाहस्ती दक्षिणेन। विद्मा हि**
**त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम्। तुविमात्रम्॥ ४६२ ॥**

हे इन्द्र चित्रं विचित्रं क्षुमन्तं क्षुमत् शब्दं कुर्वन्तं ग्राभं ग्राहं ते महाहस्ती ऐरावतो गजः दक्षिणेन भागेन संगृभाय संजग्राह। तदीयवाहनमपि दुरितनिवारकं यतस्ततो वयं त्वां तुविकूर्मिं बहुकर्माणं तुविदेष्णं बहुदानशीलं, मघोना च धनमिति श्रुतेः विद्यात्मकं धनं मघं तदस्यास्तीति तुविमघस्तं सर्वज्ञम्, मात्रा अंशाः तुवयो बहवो मात्रा अंशा यस्य सः तं तुविमात्रमनन्तरूपिणं च विद्म हि।

अनेन सर्वं जानातीति सर्वज्ञ इति निरुक्तेस्तुविमघशब्देन सूचनात् **सर्वज्ञमूर्तिरत्र** ॥ ४६२ ॥

॥ ॐ ज्ञानाय नमः ॥

**अवोभिः। न हि त्वा शूर देवा न मर्तासो दित्सन्तम्।**
**भीमं न गां वारयन्ते। एतो न्विन्द्रं स्तवामेशानम्॥ ४६३ ॥**

हे शूर इन्द्र भक्तेभ्योऽभीष्टनि दित्सन्तं त्वां देवाः भीमं भयङ्करं गां न गोवृषभमिव न हि वारयन्ते न वारयितुं समर्थाः। मर्तासो मर्त्या न वारयन्तीति किमु। आङ् पूर्वादिणः कर्तरि क्तुः कित्त्वाद् गुणाभाव आद्गुणः एतुर्गन्ता, तस्य सम्बुद्धिः हे एतो सर्वगमनशील इन्द्र। ईश ऐश्वर्ये, ऐश्वर्यं ज्ञानमेव, ततः कप्रत्ययः, ईशः सर्वज्ञो ब्रह्मादिस्तमनति चेष्टयतीतीशानस्तं सर्वज्ञप्रभुमिन्द्रं त्वाम् अवोभिः रक्षणैः, रक्षणमुद्दिश्य, स्तवाम स्तुमः।

अनेन जानातीति ज्ञो ब्रह्मादिस्तमनति चेष्टयतीति ज्ञानमिति निरुक्तेरीशानशब्देन सूचनात् ज्ञानमूर्तिरत्र ॥ ४६३ ॥

॥ ॐ उत्तमाय नमः ॥

**वस्वः स्वराजम् । न राधसा मर्धिषन्नः । प्र स्तोपद्रुग**
**गासिषच्छ्रवत् साम गीयमानम् । अभि राधसा जुगुरत् ॥ ४६४ ॥**

वस्वः वसूनां द्रविणानां प्राणिनां च स्वराजं स्वामिनं त्वां स्तवामेति पूर्वेण सम्बन्धः । स इन्द्रः नोऽस्मान् राधसा श्रेयसा न मर्धिषत्, मृधिर्हिंसार्थः, न हिंसेत् । अस्मदीयश्रेयोविनाशनं न कुर्यात् । गीयमानं साम श्रवत् श्रोतृ सत् स्वयम् उप गासिषत् अनुगातृ सत् प्रस्तोषत्[१] । स्वयं स्तूयमानमेव स्तुतिं कुर्वद् इन्द्राख्यं परं ब्रह्म राधसा श्रेयसा नः अस्मान् अभि जुगुरत् समगमयत् ।

अनेन उत् उत्कृष्टं राधः तमयतीत्युत्तमम्, तम्यतिरत्र गत्यर्थः अनेकार्थत्वाद् धातूनाम्, इति निरुक्तेः अभि राधसा जुगुरदित्यनेन सूचनात् उत्तममूर्तिरत्र ॥ ४६४ ॥

॥ ॐ सुव्रताय नमः ॥

**आ नो भर दक्षिणेनाभि सव्येन प्र मृश । इन्द्र मा नो**
**वसोर्निर्भाक् । उप क्रमस्वा भर धृषता धृष्णो ॥ ४६५ ॥**

हे इन्द्र नः अस्मान् दक्षिणेन भागेन आ भर वसून् वाहय । सव्येन सव्यभागेन अभिप्र मृश स्पृशः । नः अस्मान् वसोर्वसुनः निर्भाक् भागरहितान् मा कृधि । अथवा वसोर्निर्भाक् वसुरहितो जनः नः अस्मान् मा गादिति (अध्याहृतेन) सम्बन्धः । हे धृष्णो धर्षक इन्द्र धृषता धृषत् शत्रुधर्षणशीलः सन् तदीयद्रव्याहरणाय उपक्रमस्व । क्रमु पादविक्षेपे । अस्मच्छत्रुगृहं गच्छेति यावत् । गत्वा चास्मभ्यं तदीयं धनमाभर आहर ।

अनेन सव्यतो दक्षिणतश्च धनान्याहृत्य भक्तेभ्यो दातुं शत्रुगृहगमनादिरूपं सु समीचीनं व्रतं कर्म यस्य सः सुव्रत इति निरुक्तेरानोभर दक्षिणेनेत्यादिना सूचनात् सुव्रतमूर्तिरत्र ॥ ४६५ ॥

---

१. प्रस्तोपत् प्रतुष्यतु. छान्दसः सुडिति भावः स्यात् ।

॥ ॐ सुमुखाय नमः ॥

जनानाम् । अदाशूष्टरस्य वेदः । इन्द्र य उ नु ते अस्ति
वाजो विप्रेभिः सनित्वः । अस्माभिः सु तं सनुहि ॥ ४६६ ॥

अदाशूस्तरस्य अदातृतमस्य जनानां जनस्य वेदः ज्ञानं बलं च धृषता धर्षयिता भव । हे इन्द्र ते तव नु इदानीं विप्रेभिः विप्रेभ्यः यष्टृभ्यः सनित्वः दातव्यः वाजः अन्नोपलक्षितभोग्यसमूहः योऽस्ति यष्टृणामिदं दास्य इति संकल्पितो योऽस्तीति यावत्, तं वाजादिभोग्यसमूहम् अस्माभिरस्मभ्यं सु सम्यक् सनुहि देहि ।

अनेन सु सम्यक् मुखं प्रधानं वाजादिभोग्यजातं यस्मात् सः सुमुखः, मुखं प्रधाने प्रारम्भे इत्यभिधानात्, इति निरुक्तेः य उ नु ते वाजो अस्तीत्यादिना सूचनात् सुमुखमूर्तिरत्र ॥ ४६६ ॥

॥ ॐ सूक्ष्माय नमः ॥

सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः । वशैश्च मक्षू
जरन्ते । [1]आ प्र द्रव परावतोऽर्वावतश्च वृत्रहन् ॥ ४६७ ॥

हे इन्द्र सद्योजुवः सद्यो वेगशालिनः विश्वश्चन्द्राः,पारस्करादित्वात् सुट्, विश्वाह्लादकराः ते वाजास्त्वदीयाश्वाः अस्मभ्यमस्मदीयं गृहं प्रति गन्तुमिच्छया मक्षु क्षिप्रं त्वां वोढुं जरन्ते कामयन्ते । हे वृत्रहन् परावतः अधस्तात् अर्वावतः अर्वाक् च आ प्र द्रव, अस्मद्गृहं प्रतीति शेषः, शीघ्रमेवेहि ।

अनेन क्षः संरोधे विरोधे च क्षेमदुःस्वप्नयोश्च नेत्युक्तेः क्षः क्षेमः, त्रिष्वथ क्षेममस्त्री स्यान्मङ्गले लब्धरक्षणे इत्युक्तेः क्षेमो मङ्गलम्, उत्कृष्टं क्षं मङ्गलं वेगशालित्वादिगुणजातं येषां ते उक्षा अश्वाः, सु शोभनाश्च ते उक्षाश्च सूक्षाः, ते अस्य सन्तीति सूक्ष्मः, अन्त्यलोपः, इति निरुक्तेः सद्योजुवस्ते वाजा इत्यादिना सूचनात् सूक्ष्ममूर्तिरत्र ॥ ४६७ ॥

॥ ॐ सुघोपाय नमः ॥

मध्वः प्रति प्र भर्मणि । तीव्राः सोमास आ गहि सुतासो
मादयिष्णवः । पिवा दधृग् यथोचिषे । इषा मन्दस्व ॥ ४६८ ॥

---

१. ऋग्वेद ८.८२ कुसीदी काण्वः ।

हे इन्द्र मध्वः मधोः सोमस्य प्रभर्मणि प्रभरणे सति तीव्रा वेगशालिनः सुतासः अभिषुताः मादयिष्णवः सुखहेतवः सोमासः सोमरसाः प्रति त्वां प्रतीच्छन्ति। तान् पातुमागहि। आगत्य च यथोचिषे यथेच्छसि (तथा) दधृक् सम्यक् पिब। पीत्वा च इषा अस्मद्दत्तेन हविरादिना अन्नेन मन्दस्व प्रीतो भव।

अनेन घुषि कान्तिकरण इत्यस्मादकारप्रत्ययो गुणश्च, घुष्यन्ति इच्छन्तीति घोषाः सोमरसाः, सु समीचीना घोषा यस्य सः सुघोष इति निरुक्तेः सुतासः प्रतीत्यादिना सूचनात् सुघोषमूर्तिरत्र ॥ ४६८ ॥

॥ ॐ सुहृदाय नमः ॥

आदु तेऽरं वराय मन्यवे। भुवत् त इन्द्र शं हृदे।
आ त्वशत्रवा गहि न्युक्थानि च हूयसे। उपमे ॥ ४६९ ॥

हे अशत्रो न विद्यते शत्रुर्यस्य तस्य सम्बुद्धिः इन्द्र वराय श्रेष्ठाय मन्यवे ज्ञानाय इदं समस्तं विश्वं अरं अलं पर्याप्तं भुवत् भवति। सर्वं त्वत्प्रज्ञायामन्तर्गतं यस्मादेवं आत् तस्माद् उ एव ते हृदे हृदि शं सुखं अरं भुवत् परिपूर्णं भवति। यस्मादेवं परिपूर्णज्ञानः परिपूर्णसुखश्चासि तस्मात् उपमे तव सदृशे त्वदागमनयोग्ये यज्ञगृहे क्रियमाणानि उक्थानि उक्थस्तोत्राणि प्रति तु विशेषेण नि नितराम् आहूयसे। तस्मादिह आ गहि।

अनेन सु सुखपूर्णं हृत् हृदयं अस्यास्तीति सुहृदः, सुहृच्छब्दान्मत्वर्थे अप्रत्ययः, इति निरुक्तेः भुवत् त इन्द्र शं हृदे इत्यनेन सूचनात् सुहृदमूर्तिरत्र ॥ ४६९ ॥

॥ ॐ सुहृते नमः ॥

रोचने दिवः। तुभ्यायमद्रिभिः सुतो गोभिः श्रीतो मदाय कम्।
प्र सोम इन्द्र हूयते। इन्द्र श्रुधि सु मे हवम् ॥ ४७० ॥

हे इन्द्र रोचने रोचमानस्य दिवः स्वर्गस्य उपमे सदृशे उपदीप्यमाने यज्ञगृहे अद्रिभिः पाषाणैरयं सोमः तुभ्य तुभ्यं त्वामुद्दिश्य सुतः अभिषुतः गोभिः गोपयोभिः श्रीतः सम्मिश्रः कम् उदकं च श्रीतः

प्राप्तः मदाय सुखाय, तव प्रीत्यर्थम्, प्रहूयते दीयते। हे इन्द्र मे हवं मदीयमाह्वानं सु सम्यक् श्रुधि शृणु।

अनेन सु सम्यग् भक्तकृतस्तुतिं हरति गृह्णाति शृणोतीति सुहृत्, सुपूर्वाद् हरतेः कर्तरि क्विप्, ह्रस्वस्य पिति कृति तुगिति तुक् इति निरुक्तेः मे हवं श्रुधीत्यनेन सूचनात् **सुहृन्मूर्तिरत्र** ॥ ४७० ॥

**॥ ॐ मनोहराय नमः ॥**

**अस्मे सुतस्य गोमतः। वि पीतिं तृप्तिमश्नुहि। य इन्द्र**
**चमसेष्वा सोमश्चमूषु ते सुतः। पिबेदस्य ॥ ४७१ ॥**

हे इन्द्र अस्मे अस्माभिः सुतस्य अभिषुतस्य गोमतः गोपयोमिश्रितस्य सोमस्य पीतिं पानं कुरु। पीत्वा च तृप्तिं वि विशेषेण अश्नुहि प्राप्नुहि। चमसेषु चमसपात्रेषु चमूषु चर्मणि ते तुभ्यं त्वदर्थं यः सोमः सुतोऽभिषुतोऽस्ति अस्येत् तमेव सोमं त्वं पिब।

अनेन मनःसोमयोरेकदैवत्यत्वात् मनः सोमः, तं हरति पिबतीति निरुक्तेः सोमश्चमूषु ते सुत इत्यादिना सूचनात् **मनोहरमूर्तिरत्र** ॥ ४७१ ॥

**॥ ॐ जितक्रोधाय नमः ॥**

**त्वमीशिषे। यो अप्सु चन्द्रमा इव सोमश्चमूषु ददृशे।**
**पिबेदस्य त्वमीशिषे। यं ते श्येनः पदाभरत् ॥ ४७२ ॥**

हे इन्द्र त्वं जगतः स्वाम्यसि। यः सोमः अप्सु चन्द्रमा इव चमूषु ग्रहकेषु ददृशे दृश्यते, स्वच्छ इति यावत्, अस्य सोमस्य त्वमीशिषे स्वाम्यसि। अतस्त्वं पिब। इत् एव। हे इन्द्र ते तव श्येनः पक्षी पदा पक्ष्मभिः (?) यं सोममाभरत् संभृतवान् तं च सोमं पिबेति सम्बन्धः। अत्र चमूसंभरणाभिषवादि-संस्कारचमसपात्रनिधानश्येननिवारितरजस्कत्वादिगुणानां भिन्नभिन्नत्वात् तत्तद्विशिष्टवेषेण सोमस्यापि भिन्नत्वात् पिबेदस्येत्यादेर्न पुनरुक्तिः शङ्कनीया। एवमधस्तादुपरिष्टाच्च प्रत्येतव्यम्।

अनेन क्रुध्यतीति क्रोधः श्येनपक्षी। जि जये इत्यतः कर्तरि क्तः। सोमाभिघातपाँस्त्वादीन् (?) जयतीति जितः। जितः क्रोधः श्येनाख्यपक्षी यस्य स इति निरुक्तेः यं ते श्येनः पदाभरदित्यनेन सूचनात् **जितक्रोधमूर्तिरत्र** ॥ ४७२ ॥

॥ ॐ वीरबाहवे नमः ॥

**तिरो रजांस्यस्पृतम्। पिबेदस्य त्वमीशिषे। ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः। जन्मन् देवानाम्॥ ४७३॥**

पूर्वोक्तं श्येनपक्ष्मसंभृतत्वं सोमस्य विवृण्वन् गुणान्तरं चाह। रजांसि पांसून् अस्पृतं अस्पृष्टं यथा भवति तथा तिरः दूरीकरणेन यं सोमं श्येनः पक्ष्मभिराभरत्, तं पिबेति सम्बन्धः। पक्ष्मभिः सोमरसेषु पतिष्यमाणरजोदूरीकरणमेव सोमस्य तत्संभृतत्वमिति भावः। अस्यापि त्वमीशिषे। पिब। किञ्चास्य सूददोहस इन्द्रस्य पानार्थं पृश्नयः प्रश्नयोग्याः प्रशंसायोग्याश्च ता वाचो गाव आपश्च देवानां जन्मनि अभिव्यक्तिस्थाने यज्ञे सोमं श्रीणन्ति गृह्णन्ति। तथाविधं सोमं पिबेति सम्बन्धः।

अनेन सुभटोत्तमयोर्वीर इत्युक्तः वीर उत्तमः। बाध्यते मिथ्याज्ञानादिकमेनेनेति बाहः वेदमन्त्रः गाव आपश्च। अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्तुकूदीर्घहकाराश्चेति सूत्रेण बाधृ विलोडने इत्यस्मात् कुप्रत्यये धकारस्य हकारादेशे बाहशब्दनिष्पत्तेः वीरबाहः उत्तमो वेदमन्त्रादिः ग्राहकत्वेनास्यास्तीति वीरबाहुः सोमः, मन्त्रैः सोमो गृह्यत इत्युक्तेः। तथा च वीरबाहुः सोमः पेयत्वेन अस्यास्तीति वीरबाहुः, गुणवचनेभ्यो मतुपो लुगिष्टः, इति निरुक्तेः **वीरबाहुमूर्तिरत्र**॥ ४७३॥

॥ इति गायत्रतृचाशीतिः ॥

## ।। अथ बार्हततृचाशीतिः ।।

।। ॐ विदारणाय नमः ।।

**विशास्त्विष्वारोचने दिवः । [1]मा चिदन्यद् वि शंसत सखायो**
**मा रिषण्यत । इन्द्रमित् स्तोता वृषणं सचा सुते ।। ४७४ ।।**

आरोचने आरोचनेषु त्रिषु आदित्यचन्द्रविद्युल्लोकेषु दिवि वा स्थिताः, विशः मनुष्यलोके स्थिता जनाः । सम्बुद्ध्यन्तमेतत् । हे सखायः सर्वे जनाः इन्द्रादन्यच्चित् यत्किञ्चिदपि वस्तु मा विशंसत नैव स्तुवत । इन्द्रं मा रिषण्यत मा हिंसत नैवापाकुरुत । किन्तु वृषणं भक्ताभिलषितसेचकं इन्द्रमित् इन्द्रमेव सोमे सुते सति सचा सुखेनैव स्तोता स्तुत ।

अनेन दृ विदारणे, दार्यते हिंस्यत इति दारणः, विर्निषेधार्थः, न दारणः विदारण इति निरुक्तेः सखायो मा रिषण्यतेत्यनेन सूचनाद् **विदारणमूर्तिरत्र** ।। ४७४ ।।

।। ॐ स्वापनाय नमः ।।

**मुहुरुक्था च शंसत । अवक्रक्षिणं वृषभं यथाजुरं**
**गां न चर्षणीसहम् । विद्वेषणं संवनना ।। ४७५ ।।**

हे सखायः मुहुः पुनःपुनः उक्था उक्थानि च इन्द्राय शंसत । अवक्रक्षिणमपगतनिवासस्थानं बहुदुर्दर्शनमनर्थं च अजुरं जरारहितं युवानं वृषभं यथा तथा अभक्तानां विद्वेषणं विद्वेषविषयम्, वर्जनीयमिति यावत्, चर्षणीसहं प्रजासंमर्दसहं गां न धेनुमिव संवननं संवननीयं संभजनीयमुपादेयं सुखकरमिन्द्रं शंसतेति सम्बन्धः ।

अनेन सुपूर्वादाप्लृ व्याप्तावित्यतः कर्मण्यकारप्रत्ययः, सम्यग्जनैराप्यत इति स्वापः सुखं तं भक्तान् नयतीति स्वापनः, नीञः कर्तरि डः, इति निरुक्तेः चर्षणीसहं गां न संवननेत्यनेन सूचनात् **स्वापनमूर्तिरत्र** ।। ४७५ ।।

---

१. ऋग्वेद ८-१, प्रथमद्वितीययोः प्रगाथः काण्वः । तदुत्तराणामत्र पठितानां मेधातिथिमेध्यातिथी काण्वौ ।।

॥ ॐ स्ववशाय नमः ॥

**उभयङ्करं मंहिष्ठमुभयाविनम् । यच्चिद्धि त्वा जना इमे**
**नाना हवन्त ऊतये । अस्माकं ब्रह्मेदमिन्द्र ॥ ४७६ ॥**

उभयङ्करं भक्ताभक्तयोः सुखदुःखसाधनम् उभयाविनं इहपरलोकयो रक्षितारमुभयविधजनमवन्तं वा मंहिष्ठं महत्तममिन्द्रं स्तुतेति सम्बन्धः । हे इन्द्र यच्चिद् यद्यपि इमे भक्तजनाः नाना नानाप्रकारं त्वा त्वाम् ऊतये हवन्ते । तथापि अस्माकमस्मदीयमिदं ब्रह्म स्तोत्रं तव भूतु इति वक्ष्यमाणेन सम्बन्धः ।

अनेन स्वस्यैव वशो नान्यस्य, स्वतन्त्रः स्ववश इति निरुक्तेर्महिष्ठशब्देन सूचनात् स्ववशमूर्तिरत्र ॥ ४७६ ॥

॥ ॐ व्यापिने नमः ॥

**भूतु तेऽहा विश्वा च वर्धनम् । वि तर्तूर्यन्ते मघवन्**
**विपश्चितोऽर्यो विपो जनानाम् । उपक्रमस्व पुरुरूपम् ॥ ४७७ ॥**

हे मघवन् ते तव अहा अहेयं विश्वा विश्वं समस्तं स्तोत्रं वर्धनमभिव्यक्तिसाधनं भूतु भवतु । विपश्चितो ज्ञानिनः त्वदाह्वाने वितर्तूर्यन्ते (विशेषेणातिशयितत्वरावन्तो भवन्ति) । त्वं च जनानामर्यः स्वामी विपश्च पालकश्च । अतस्तत्रतत्र त्वया गन्तव्यमेव । तस्मात् पुरुरूपं बहूनि रूपाणि उपक्रमस्व (भक्तपालनोन्मुखीकुरुष्व) ।

अनेन बहूनि रूपाण्यस्य सन्तीति व्यापीति निरुक्तेः उपक्रमस्व पुरुरूपमित्यनेन सूचनाद् व्यापिमूर्तिरत्र ॥ ४७७ ॥

॥ ॐ नैकात्मने नमः ॥

**आ भर वाजं नेदिष्ठमूतये । महे चन त्वामद्रिवः परा**
**शुल्काय देयाम् । न सहस्राय नायुताय ॥ ४७८ ॥**

हे अद्रिवः ऊतये अस्मद्रक्षार्थं वाजमन्नं नेदिष्ठं समीपस्थमा भर कुरु । किञ्च हे इन्द्र त्वां प्रति शुल्काय लोकोपकर्त्रे महे महते प्रतिदानाय शताय शतं न देयां दातुं नार्हम् । एवं सहस्राय सहस्रं च न देयम् । एवमयुताय अयुतं च न देयम् । परा च न ततोऽप्यधिकमर्बुदादिकं च त्वदुपकृतेः प्रतिदातव्यं नास्तीत्यर्थः ।

अनेनाङ्पूर्वकाद् दाण् दाने इत्यतः कर्तरि मनिन्प्रत्यये धात्वाकारलोपे दकारस्य तकारादेशे आत्मा दाता प्रत्युपकर्ता, एकः मुख्यः एकोऽपि वा प्रत्युपकर्ता अस्य नास्तीति नैकात्मा, नसमासः, इति निरुक्तेः न सहस्राय नायुताय देयामित्यनेन सूचनात् **नैकात्ममूर्तिरत्र** ॥ ४७८ ॥

**॥ ॐ अनेककर्मकृते नमः ॥**

**वज्रिवो न शताय शतामघ। वस्याँ इन्द्रासि मे पितुरुत**
**भ्रातुरभुञ्जतः। माता च मे छदयथः॥ ४७९ ॥**

हे वज्रिवः शतमघ इन्द्र अभुञ्जतो भोगरहितस्य मे पितुः भ्रातुः उत वस्यान् असि वासयितासि। सुखेनैवावासमकरोः। त्वं च मे माता निर्माता ज्ञाता चासि। छदयथः स्वं वक्ष्यमाणरीत्या सम्पूर्णकामैराच्छादयः।

अनेन कर्म न्यासक्रिया चेत्यभिधानात् क्रियत इति कर्म फलन्यासः, अनेकेषां भक्तसम्बन्धि-पितृभ्रात्रादीनां सुखन्यासं करोतीत्यनेककर्मकृदिति निरुक्तेः वस्याँ इन्द्रासि मे पितुरित्यादिना सूचनात् **अनेककर्मकृन्मूर्तिरत्र** ॥ ४७९ ॥

**॥ ॐ वत्सराय नमः ॥**

**समा वसो वसुत्वनाय राधसे। क्वेयथ क्वेदसि पुरुत्रा**
**चिद्धि ते मनः। अलर्षि युध्म खजकृत् पुरन्दर॥ ४८० ॥**

समा सममेव वसो वसतीति वसुः, हे वसो वसुत्वनाय वसुपूर्णाय राधसे संसिद्ध्यै मां छदयथः आच्छादय। हे पुरन्दर त्वं क्व इयथ, इण् गतौ, क्व गच्छसि क्वेद् असि कुत्र वर्तसे। ते तव मनः पुरुत्रा बहुषु स्थलेषु व्यापृतमस्ति चिद् किम्। हे युध्म योगशालिन् खजकृत् युद्धकृत् ज्ञानकृद्वा त्वम् अलर्षि सम्यग् व्याप्नोषि।

अनेन सममेव वसतीति वत्सरः, वसेश्चेति सूत्रेण सरप्रत्ययः, सस्यार्धधातुके इति धातुसकारस्य तकारादेश इति निरुक्तेः समा वसो इत्यनेन सूचनात् **वत्सरमूर्तिरत्र** ॥ ४८० ॥

॥ ॐ वत्सलाय नमः ॥

**प्र गायत्रा अगासिषुः । प्रास्मै गायत्रमर्चत वावातुर्यः**
**पुरन्दरः । याभिः काण्वस्योप बर्हिरासदम् ॥ ४८१ ॥**

किञ्च गायत्राः गायत्रसामगातारः त्वां प्रागासिषुः गानं कृतवन्तः । हे सखायः यः पुरन्दरः वावातुः ववातुः, वातेर्यङ्लुगन्तस्य तुप्रत्यये रूपमेतत्, सर्वनियन्ता । अस्मै इन्द्राय याभिर्गायत्रसामस्तुतिभिः काण्वस्य कण्वपुत्रस्य मेधातिथेः बर्हिः प्रति आसदं स्थानं यासत् लब्धवान् ताभिः गायत्रं गायत्रैः गायत्रसामभिः प्रार्चत सम्यक् स्तुत ।

अनेन वदति भगवद्गुणजातमिति वत्सो गायत्रादिसामविशेषः, वृतॄवदिहनिकमिकषिभ्यः स इति सूत्रेण वद व्यक्तायां वाचीत्यतः सप्रत्ययः, दस्य तः । ततो वत्सशब्दात् ला दान इत्यत आतोऽनुपसर्गे कः, वत्सं गायत्रादिसामादि लाति आदत्ते गृण्हातीति वत्सलः, लः खण्डने त्रिष्वादाने इत्यभिधानात्, इति निरुक्तेः गायत्रमर्चतेत्यादिना सूचनाद् **वत्सलमूर्तिरत्र** ॥ ४८१ ॥

॥ ॐ वत्सिने नमः ॥

**यासद् वज्री भिनत् पुरः । ये ते सन्ति दशग्विनः शतिनो**
**ये सहस्रिणः । अश्वासो ये ते वृषणो रघुद्रुवः ॥ ४८२ ॥**

किञ्च वज्री इन्द्रः पुरः शत्रूणां पुराणि भिनत् । हे इन्द्र ये ते प्रसिद्धाः दशग्विनो दशगोमन्तो वहुज्ञाता वा, ये शतिनः शतसंख्याकधनादिमन्तः ये च सहस्रिणः ये च रघुद्रुवः शीघ्रगामिनः अश्वासः वृषणः भक्ताभीष्टदातुस्तव सम्वन्धिनो ये च परिवाराः तैरागहीति सम्वन्धः ।

अनेन वत्सरे कुटजे वत्सः सुतादौ वर्णके त्रिषु इति नानार्थमालोक्तेः वत्सः सुतादिपरिवारः सोऽस्यास्तीति वत्सीति निरुक्तेर्वृषणो रघुद्रुवोऽश्वास इत्यादिना सूचनाद् **वत्सिमूर्तिरत्र** ॥ ४८२ ॥

॥ ॐ रत्नगर्भाय नमः ॥

**तेभिर्नस्तूयमा गहि । आ त्वद्य सवर्दुघां हुवे गायत्र-**
**वेपसम् । इन्द्रं धेनुं सुदुधामन्यामिषमुरुधाराम् ॥ ४८३ ॥**

हे इन्द्र तेभिः स्वपरिवारभूतैः सह नः अस्मान् तूयं तूर्णमा गहि । काम्यं सवरित्युच्यते. काम्यं

दोग्धीति सबर्दुघा ताम् अभीष्टवर्षिणीं सुदुघां सम्यग् दोहनशीलां अन्यां धेनुं कामधेनुमिव स्थितं गायत्रवेपसं गायत्रं वेपः स्तुतिर्यस्य तं गायत्रसामस्तुत्यमिन्द्रं त्वामुरुधारामविच्छिन्नपरम्पराम् इषमन्नं दातुं आ सम्यक् तु विशेषेण अद्य इदानीं हुवे आह्वयामि।

अनेन रमु क्रीडायामित्यतः रमेस्तचेति नप्रत्ययः, मस्य च तः, रमते अनेनेति रत्नं काम्यं पुरुषार्थजातं, तद् गर्भे कुक्षौ यस्य, गर्भोऽर्भके नाट्यसन्धौ कुक्षौ पनसकण्टके इत्यभिधानात् रत्नगर्भः भक्तानामभीष्टजातं दातुं सकलाभीष्टं स्वकुक्षौ धारयतीत्यर्थः, इति निरुक्तेः सबर्दुघां धेनुमिव स्थितं त्वामित्यनेन सूचनाद् रत्नगर्भमूर्तिरत्र॥ ४८३॥

॥ ॐ धनेश्वराय नमः ॥

**अरंकृतम्। यत् तुदत् सूर एतशं वङ्कू वातस्य**
**पर्णिना। वहत् कुत्समार्जुनेयं शतक्रतुः॥ ४८४॥**

यत् यः सूरः शूरः शतक्रतुरिन्द्रः एतशम् एतन्नामानं तुदत् अव्यथत्। अरङ्कृतमलङ्कृतम् आर्जुनेयं कुत्सं कुत्सनामानमृषिं वातस्य पर्णिना पर्णिनि प्रदेशविशेषे वङ्कू ज्ञानं सुखं धनं च प्रति वहत् आवहत् प्रापयामास।

अनेन स्वभक्तान् कुत्सादीन् धनेशान् वृणोति करोतीति धनेश्वरः, उपपदान्त्यलोपः, इति निरुक्तेर्वत्सं वङ्कू वहदित्यादिना सूचनाद् धनेश्वरमूर्तिरत्र॥ ४८४॥

॥ ॐ धर्मकृते नमः ॥

**त्सरद् गन्धर्वमस्तृतम्। य ऋते चिदभिश्रिषः पुरा**
**जत्रुभ्य आ तृदः। सन्धाता सन्धिं मघवा पुरूवसुरिष्कर्ता॥ ४८५॥**

य इन्द्रः गन्धर्वं कंचिद् भक्तजनं अस्तृतमनाच्छादितं कामं त्सरत् अत्सरत् गमयामास। किञ्च यो मघवा यज्ञपूज्य इन्द्रः ऋते चित् उदकेपि अभिश्रिषः सम्यक् श्लिष्टो भवति। पुरा पूर्वं जत्रुभ्यः आतृदः संहारकश्च भवति। सन्धिं विरुद्धयोः संयोगं संधाता सम्यक् कर्ता, पुरूवसुः इष्कर्ता इष अन्नस्य कर्ता उत्पादकश्च तमिन्द्रं स्तुतेति सम्बन्धः।

अनेन धृ धारणे इत्यस्मात् 'अर्तिस्तुसुहुसृधृक्षिक्षुभायापदियक्षिनीभ्यो मन्' इति मनुप्रत्ययः। ध्रियतेऽनेनेति धर्मः सन्धिः संयोगः, तं करोतीति धर्मकृदिति निरुक्तेः सन्धातेत्यनेन सूचनाद् **धर्मकृन्मूर्तिरत्र**॥ ४८५॥

॥ ॐ धर्मगुपे नमः ॥

**विह्रुतं पुनः। मा भूम निष्ट्या इवेन्द्र त्वदरणा इव।**
**वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महि॥ ४८६॥**

हे अद्रिवः इन्द्र विह्रुतं कुत्सितं जनं पुनः अकुटिलं च संयोजयसि। वयं निष्ठ्या इव, त्यशब्दो गृहनाम, निर्गतं त्यं गृहमाश्रयो येभ्यस्ते नित्याः, षकारादेशः ष्टुत्वं च, निराश्रया इव मा भूम न भवाम। किन्तु त्वत् तव अरणा इव त्वद्रक्षिता एव भवाम। तव वनानि दानानि न प्रजहितानि न नश्वराणि। दुरोषासः अप्रकाशा न भवाम। किन्तु अमन्महि भक्तरक्षकत्वादिना त्वामेव जानीमः।

अनेन धत्ते ज्ञानभक्त्यादिकमिति धर्मो भक्तः, तं गोपायतीति धर्मगुप्, गुपू रक्षणे इत्यतः क्विप्, इति निरुक्तेस्त्वदरणा इव भवेमेत्यादिना सूचनाद् **धर्मगुम्मूर्तिरत्र**॥ ४८६॥

॥ ॐ धर्मिणे नमः ॥

**[१]अमन्महीदनाशवोऽनुग्रासश्च वृत्रहन्।**
**सकृत् सु ते महता शूर राधसाऽनु स्तोमं मुदीमहि॥ ४८७॥**

हे वृत्रहन् शूर इन्द्र, अनाशवः, आशुशब्दः क्षिप्रपर्यायः, वेगरहिताः मन्दाः अनुग्रासः अनुग्रा अनुद्गीर्णाः चित् अपि वयं सकृत् सदा (ते तव महता राधसा अनुस्तोमं प्रतिस्तोत्रं) मुदीमहि सम्यक् मोदेम।

अनेन धार्यते महद् राधः मोदो वा अनेनेति धर्मः स्तोमो माहात्म्यं वा, तदस्यास्तीति धर्मीति निरुक्तेर्महता राधसा अनु स्तोमं मुदीमहीति सूचनाद् **धर्मिमूर्तिरत्र**॥ ४८७॥

---

१. पूर्णा बृहतीयं संहितायामपि। नेयं विहता। उत्तरे द्वे अपि तथा।

॥ ॐ सदसत्क्षराय नमः ॥

**यदि स्तोमं मम श्रवदस्माकमिन्द्रमिन्दवः ।**
**तिरः पवित्रं ससृवांस आशवो मन्दन्तु तुग्र्यावृधः ॥ ४८८ ॥**

यदि यदा मम स्तोमं मया कृतं स्तोत्रमिन्द्रः श्रवत् शृणोत् तदा अस्माकमस्मत्संबन्धिनः आशवः क्षिप्राः पवित्रं द्रोणकलशोपरिस्थापितं दर्भविशेषं तिरः तिर्यक् ससृवांसः संसर्गवन्तः पवित्रं तिर्यक् कुर्वन्तः तुग्र्यवृधः सन्तानवृद्धिकराः सततं धारायुक्ता वा इन्दवः सोमरसाः तमिन्द्रं मन्दन्तु मादयन्तु।

अनेन तिष्ठतीति (सीदतीति?) सत्, षद्लृ विशरणगत्यवसादनेषु, ततः क्विप्, द्रोणकलशे आसादितम् । न तिष्ठतीत्यसत् वेगवत् ग्रहेष्वासादितम् । तदुभयोः सोमरसाख्यद्रव्ययोः क्षि निवासगत्योरित्यस्मादधिकरणे डः, क्षं निवासस्थानम्, क्षं क्लीबे क्षेत्ररक्षसोरित्युक्तेः। गृहीतागृहीतभेदेन द्विविधसोमरसवान् यज्ञः सदसत्क्षम्, तेन रमते मोदत इति रः रमेः कर्तरि डः। यज्ञवाटस्थितसोमेन मोदत इति सदसत्क्षर इति निरुक्तेरिन्दव आशवो मन्दन्त्वित्यादिना सूचनात् सदसत्क्षरमूर्तिरत्र ॥ ४८८ ॥

॥ ॐ अक्षराय नमः ॥

**आ त्वद्य सधस्तुतिं वावातुः सख्युरा गहि ।**
**उपस्तुतिर्मघोनां प्र त्वावत्वधा ते वश्मि सुष्टुतिम् ॥ ४८९ ॥**

हे इन्द्र वावातुः ववातुः, यङ्लुगन्तस्य वातेस्तृचि रूपमेतत्। त्वां गन्तुं योग्यस्य सख्युः त्वद्भक्तस्य आ समन्तात् सधस्तुतिं भक्तिसहितस्तुतिं तु विशेषेण स्वीकर्तुमा गहि । अथ अनन्तरं मघोनां यज्वनाम् उपस्तुतिः समीचीना स्तुतिः त्वा त्वाम् अवतु प्रकाशयतु । अहं च ते सुष्टुतिं सुस्तुतिं त्वद्विषयस्तुतिं वश्मि, वश कान्तौ, त्वां स्तोतुमिच्छामि।

अनेन अशू व्याप्तावित्यस्मादशेः सरन्निति सरन्प्रत्ययः। धातु शकारस्य षः, षढो कः सीति कः, इणकोरिति षत्वम् । अश्नुत इत्यक्षरं, भक्तकृतस्तुतिं स्वीकरोतीति अक्षरमिति निरुक्तेरुप-स्तुतिर्मघोनामित्यादिना सूचनाद् अक्षरमूर्तिरत्र ॥ ४८९ ॥

॥ ॐ अविज्ञात्रे नमः ॥

**सोता हि सोममद्रिभिरेमेनमप्सु धावत । गव्या वस्त्रेव**
**वासयन्त इन्नरो निर्धुक्षन् वक्षणाभ्यः । अध ज्मः ॥ ४९० ॥**

हे नरः कर्मणां नेतारः ऋत्विजः, अद्रिभिः पाषाणैः सोमं फलकयोः स्थापयित्वा आ सोत इत् सुनुतैव । एनं सोमम् अप्सु कर्मसु आ सम्यग् धावत, धावु गतिशुद्ध्योः, शोधयत । तत्प्रकारमेव विशदयति । गव्या गोपयआदिना वासयन्तः संमिश्रयन्तः वक्षणाभ्यः (?) वस्त्रेव वस्त्राणीव निर्धुक्षन् नितरां शोधयत । पुरुषव्यत्ययः ।

अनेन अवतेस्तृप्त्यर्थात् किः, अवति तर्पयतीत्यविः पयआदिः, ज्ञ शुद्धभावे इत्यतः कः, अविना गोपयआदिना शुद्धः सोमरसः अविज्ञः, तं आतनोति स्वीकरोतीत्याता, आङ्पूर्वात् तनु विस्तारे इत्यतस्तृच्प्रत्ययः, तथा च गोपयआदिना सम्यक् परिशोधितसोमरसग्राही अविज्ञातेति निरुक्तेः अप्सु धावत गव्या वस्त्रेवेत्यादिना सूचनाद् **अविज्ञातृमूर्तिरत्र** ॥ ४९० ॥

॥ ॐ सहस्रांशवे नमः ॥

**अध वा दिवो बृहतो रोचनादधि । अया वर्धस्व तन्वा**
**गिरा ममाऽऽजाता सुक्रतो पृण । इन्द्राय ॥ ४९१ ॥**

हे सुक्रतो आजाता सम्यग् यज्ञेऽभिव्यक्तः त्वं ज्मः अध पृथिव्याश्च अधवा अथवा रोचनात् प्रकाशमानाद् बृहतो महतः दिवो द्युलोकाच्च अधि अधिकं इन्द्राय इन्द्रस्य तव अया अनयैव तन्वा शरीरेण मम गिरा स्तुतिरूपया मदीयया वेदवाचा वर्धस्व पृण सुखय च ।

अनेन हस हासशब्दयोरित्यस्माद् स्फायीत्यादिसूत्रेण(?)हसिसिधिशुभिभ्यो रगिति रक्प्रत्ययः । हस्रः शब्दः प्रसिद्धिरिति यावत् । हस्रेण सहितः सहस्रः द्युलोकः पृथिवीलोकश्च । तौ अश्नुते व्याप्नोतीति सहस्रांशुरिति निरुक्तेः अध ज्मो अधवा दिव इत्यादिना सूचनात् **सहस्रांशुमूर्तिरत्र** ॥ ४९१ ॥

॥ ॐ विधात्रे नमः ॥

**सु मदिन्तमं सोमं सोता वरेण्यम् । शक्र एणं पीपयद्**
**विश्वया धिया हिन्वानं न वाजयुम् । मा त्वा सोमस्य गल्दया ॥ ४९२ ॥**

हे नरः सुमदिन्तममत्यन्तमदहेतुं वरेण्यं वरणीयं सोमं सोत अभिषुत। स च शक्र इन्द्रः एनं सोमं पीपयत् पिबतु। किञ्च विश्वया समस्तया धिया कर्मणा वाजयुं न युद्धमपेक्षमाणं क्षत्रियमिव हिन्वानं वर्धमानं सोमस्य गल्दया सोमप्रतिपादिकया मदीयया(?) गिरा तु विशेषेण आ अर्चत।

अनेन वि विशेषेण सोममादधाति पाति पिबतीति विधातेति निरुक्तेः शक्र एणं पीपयदित्यनेन सूचनाद् **विधातृमूर्तिरत्र**॥ ४९२॥

॥ ॐ कृतलक्षणाय नमः ॥

**सदा याचन्नहं गिरा। भूर्णिं मृगं न सवनेषु चुक्रुधं**
**क ईशानं न याचिषत्। मदेनेषितं मदम्॥ ४९३॥**

हे इन्द्र सदा त्वां गिरा स्तुत्या याचन्नहं त्वदन्यं मा याचामि। भूर्णिं बहुसुखिनं मृगं न मृगमिव सवनेषु यज्ञगृहेषु चुक्रुधं क्रोशन्तम् ईशानं सर्वस्वामिनं त्वां कः मदेन सुखात्मकेन त्वया इषितं प्रेरितं मदं सुखं न याचिषत् न याचेत। सर्वोपि त्वामेव याचते। अतस्त्वामेवाहं ययाचे।

अनेन कृतं अनादिकालतः क्लृप्तं सर्वयाचनीयत्वादिलक्षणमस्यास्तीति कृतलक्षण इति निरुक्तेः क ईशानं न याचिषदित्यादिना सूचनाद् **कृतलक्षणमूर्तिरत्र**॥ ४९३॥

॥ ॐ गभस्तिनेमये नमः ॥

**उग्रमुग्रेण शवसा। विश्वेषां तरुतारं मदच्युतं मदे**
**हि ष्मा ददाति नः। शेवारे वार्या पुरु देवः॥ ४९४॥**

अयमिन्द्रः उग्रेण उद्गीर्णेन शवसा कीर्त्या उग्रमुद्गीर्णं विश्वेषां जनानां तरुतारमतिक्रान्तं मदच्युतम्, मत् वलं तेनाच्युतम्, वियोगरहितं सुखं नः अस्मभ्यमुत्साहाय ददाति स्म हि। ऋ गतावित्यतः कर्तरि इकारप्रत्यये गुणे च अरिरिति रूपम्, शेवं सुखं ऋच्छति गच्छतीति शेवारिः तत्सम्बुद्धिः हे शेवारे सुखिन् इन्द्र देवस्त्वं वीर्या वीर्याणि वरणीयानि पुरु पुरूणि धनानि, रासते ददातीत्युत्तरेण सम्बन्धः।

अनेन भस भर्त्सने इत्यतस्तिप्रत्ययः, धातोः पूर्वस्य गागमः, पृषोदरादित्वात्, तथा च भर्त्सयति

दुःखमिति गभस्तिः सुखम्, तं नयति प्रापयतीति गभस्तिनेमीति[1] निरुक्तेः उग्रमुग्रेणेत्यादिना सूचनाद् **गभस्तिनेमिमूर्तिरत्र** ॥ ४९४ ॥

॥ ॐ सत्वस्थाय नमः ॥

**मर्ताय दाशुषे । स सुन्वते च स्तुवते च रासते विश्वगूर्तो**
**अरिष्टुतः । एन्द्र याहि मत्स्व चित्रेण देव ॥ ४९५ ॥**

हे इन्द्र विश्वगूर्तः विश्वं प्रत्युद्गीर्णः विश्वार्चितो वा, अरिस्तुतः अरिभिर्नृभिर्ज्ञानिभिर्वा स्तुतः स भवान् स्तुवते मर्ताय मर्त्याय दाशुषे यजमानाय धनानि रासते ददाति । हे इन्द्र देव आ याहि मन्मनः । चित्रेण विचित्रेण हविषा मत्स्व मदं प्राप्नुहि ।

अनेन सत्वं द्रव्ये पिशाचादावित्यभिधानात् सत्वं धनं तद् भक्तेषु स्थापयति ददातीति सत्वस्थः । अथवा गुणप्राणवलस्वान्तसत्तास्वस्त्री तु जन्तुष्वित्यभिधानात् सत्वं स्वांतं मनः, तस्मिन् तिष्ठतीति सत्वस्थः भक्तमनोगोचरः, तद्ध्यानविषय इति यावत्, इति निरुक्तेः सुन्वते च स्तुवते च रासत इत्यनेन एन्द्र याहीत्यनेन च सूचनात् **सत्वस्थमूर्तिरत्र** ॥ ४९६ ॥

॥ ॐ सिंहाय नमः ॥

**राधसा । सरो न प्रास्युदरं सपीतिभिरा सोमेभिरुरु स्फिरम् ।**
**आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ॥ ४९६ ॥**

हे इन्द्र स्फिरं व्यक्तं उरु विस्तीर्णं उदरं सपीतिभिः पानेन सहितैः, सह पातव्यैरिति यावत्, सोमेभिः सोमैः सरो न सर इव प्रासि, प्रपूर्वस्यास्तेर्लुङि कर्मणि रूपमेतत्, प्रास्थापि । तैः सोमैस्ते उदरं पूर्णमभूत् । आ शतं शतसंख्याकाः आ सहस्रं सहस्रसंख्याकाश्चाश्वाः हिरण्यये हिरण्मये रथे युक्ता योगिनः सन्तः त्वा त्वां वहन् ।

अनेन सृ गतावित्यतः कर्मणि इः, सिः संगतः । हः शंकरे हरौ हंसे रणरोमाश्ववाजिष्वित्युक्तेः हः हयः । तथा च रथे संयुक्ताः शतं सहस्रं च हया यस्य सः सिंहः, नुमागमः पृषोदरादित्वात्, इति निरुक्तेः आ त्वा सहस्रमाशतं युक्ता रथे इत्यनेन सूचनात् **सिंहमूर्तिरत्र** ॥ ४९६ ॥

---

१. गभस्तिनेमिरिति इत्यपि पाठः ।

॥ ॐ भूतमहेश्वराय नमः ॥

**'ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ।**
**आ त्वा रथे हिरण्यये हरी मयूरशेप्या ॥ ४९७ ॥**

हे इन्द्र केशिनः केशवन्तः हिरण्यये रथे ब्रह्मयुजो मन्त्रेण योजिताः हरयोऽश्वाः सोमपीतये त्वा त्वामावहन्तु । हे इन्द्र मयूरशेप्या मयूरचिह्नितौ हरी रथे त्वाम् आ वहेताम् ।

अनेन ''भूतं न्याये समे प्राप्ते यथार्थातीतयोरपि। क्लीबे त्वयं पिशाचादौ भूम्यादौ जन्तुसत्ययोः'' इति रत्नमालोक्तेः भूतानि जन्तवो हयाः तैर्मह उत्सवो यस्य स भूतमहो रथः, तस्येश्वरः स्वामी अधिष्ठाता, अश्वैरलंकृतरथस्थो भूतमहेश्वरः, इति निरुक्तेरात्वा रथे हिरण्यये इत्यादिना सूचनाद् **भूतमहेश्वरमूर्तिरत्र** ॥ ४९७ ॥

॥ ॐ आदिदेवाय नमः ॥

**शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये ।**
**पिवा त्वस्य गिर्वणः सुतस्य पूर्वपा इव ॥ ४९८ ॥**

हे इन्द्र शितिपृष्ठा शितिपृष्ठौ शुभ्रपृष्ठौ हरी विवक्षणस्य उदकमाश्रितस्य मध्वः मधोः अन्धस्य अन्नरूपस्य सोमस्य पीतये त्वा त्वाम् आ वहताम् । हे गिर्वणः इन्द्र अस्य सोमस्य पूर्वपा इव पूर्वं पिव । पूर्वमेव (प्रथममेव) पिवेत्यर्थः ।

अनेन व्यवहारार्थाद् दीव्यतेः कर्तरि घञ् । व्यवहरति पिवतीति देवः । आदौ सोमं पिवतीत्यादिदेव इति निरुक्तेः पूर्वपा इत्यनेन सूचनाद् आदिदेवमूर्तिरत्र ॥ ४९८ ॥

॥ ॐ महादेवाय नमः ॥

**परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ।**
**य एको अस्ति दंसना महाँ उग्रो अभि व्रतैः ॥ ४९९ ॥**

परिष्कृतस्य सोमस्य चारुः समीचीना इयमासुतिः अभिषवः पत्यते पात्यते क्रियते । अस्य सोमस्य पानार्थं य एको मुख्यः दंसना दंसनावान् बहुकर्मकर्ता अत एव महान् उग्रश्च यः पुरुषोऽस्ति स व्रतैः कर्मभिः सह अभिमदाय अस्मान् सन्तोषयितुमायातु ।

१. इतश्चतस्रो बृहत्याऽविहृताः ।

अनेन बहुकर्मकर्तृत्वान्महान्, सोमपानार्थं दीव्यति गच्छतीति देवः, महांश्चासौ देवश्च महादेव इति निरुक्तः महाँ उग्रो अभिव्रतैरित्यादिना सूचनात् **महादेवमूर्तिरत्र** ॥ ४९९ ॥

**॥ ॐ देवेशाय नमः ॥**

**गमत् स शिप्री न स योषदा गमद्धवं न परि वर्जति ।**
**त्वं पुरं चरिष्ण्वं वधैः शुष्णस्य सं पिणक् ॥ ५०० ॥**

यः शिप्री सुखी स पुरुषः योषत् न जोषत् न प्रीतिं कुर्वन्निव गमत् आगमत् । किञ्च स पुरुषः हवं स्तुतिमस्मदीयमाह्वानं प्रति आगमत् आगच्छत् । न परिवर्जति न परिवर्जयत् । हे इन्द्र त्वं शुष्णस्य शोषकस्यासुरजनस्य वधैः वधेन चरिष्ण्वं सञ्चरन्तं देशान्तरगमनशीलं पुरं शत्रूणां नगरं सं पिणक् सम्यङ् नाशितवानसि ।

अनेन शत्रूणां पुरं विजिगीषत इति देवः, ईः वाणी स्तुतिः, तस्याः शः, भूपः, स्तुत राजा स्वामी ईशः । ''ईकारोऽब्जदले लक्ष्म्यां वाण्यां कमलकेसरे । शो वल्मीके शिवे कूर्मे भूपे शिष्ये तनूकृतौ'' इत्यभिधानम् । तथा च देवश्चासावीशश्च देवेश इति निरुक्तः त्वं पुरं चरिष्ण्वं सं पिणगित्यनेन सूचनाद् **देवेशमूर्तिरत्र** ॥ ५०० ॥

**॥ इति श्रीबृहतीसहस्रपारावारे पञ्चमः खण्डः समाप्तः ॥**

**॥ ॐ देवभृते नमः ॥**

**त्वं भा अनु चरो अध द्विता यदिन्द्र हव्यो भुवः ।**
**मम त्वा सूर उदिते मम मध्यन्दिने दिवः । मम ॥ ५०१ ॥**

हे इन्द्र त्वं भाः, ''भा भुव्यलंकृतौ दीप्तौ स्त्रियां भः किरणे द्युतौ'' इति रत्नमालोक्तेः यज्ञभूमिं अलंकृतिं दीप्तिं च अनु चरः । यस्माच्च द्वौ लोकौ प्राप्नोतीति द्विता द्यावापृथिव्यौ व्याप्नोषि अध तस्मात् सूरे, सूरसूर्यार्यमादित्येत्यभिधानात् सूरः सूर्यः तस्मिन्नुदिते सति, प्रातरिति यावत्, मम मया हव्यः आहूतव्यश्च भुवः अभवः । सूरे सूर्ये दिवो मध्यंदिने अन्तरिक्षस्य मध्यं गते सति, मध्याह्नेऽपि, मया हव्यो भुवः । शेष उत्तरेण सम्बध्यते ।

अनेन द्युत्याद्यर्थाद् दीव्यतेर्घञ्, देवं द्युत्यादि बिभर्तीति देवभृत्, भृञः किप् तुक् चेति निरुक्तेः त्वं भा अनुचर इत्यनेन सूचनाद् देवभृन्मूर्तिरत्र ॥ ५०१ ॥

॥ ॐ गुरवे नमः ॥

**प्रपित्वे अपिशर्वरे वसवा स्तोमासो अवृत्सत ।[१] पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः । आपिः ॥ ५०२ ॥**

हे वसो सर्वजगन्निवास इन्द्र प्रपित्वे सूरे अपिहिते सायंकाले मम हव्यो भुवः । अपि शर्वरे शर्वर्या अन्ते प्रभातसमये मम हव्यो भुवः । किञ्च मम स्तोमासः मदीयस्तोत्रविशेषाः प्रातः मध्यंदिने सायंकाले प्रभाते वा त्वाम् आ सम्यक् अवृत्सत, वृतु वर्तने, प्रवर्तन्तु । त्वां प्रति प्रवर्तन्तु । हे इन्द्र आपिः सर्वजनैः प्राप्यस्त्वं गोमतः गोपयसा मिश्रितस्य सुतस्य रसिनः रसवतः सोमस्य रसान् पिब । पीत्वा च आ मत्स्व ।

अनेन भक्तकृतान् स्तोत्रविशेषान् शिष्यजनान् वा गृणातीति गुरुः, गृशब्दे इत्यतः कृग्रोरुच्चेति कुप्रत्ययः उकारोऽन्तादेशश्च रपरः, इति निरुक्तेः स्तोमासो अवृत्सतेत्यनेन सूचनाद् गुरुमूर्तिरत्र ॥ ५०२ ॥

॥ ॐ उत्तराय नमः ॥

**नो वोधि सधमाद्यो वृधेऽस्माँ अवन्तु ते धियः ।
भूयाम ते सुमतौ वाजिनो वयं मा नः स्तरभिमातये ॥ ५०३ ॥**

हे इन्द्र सधमाद्यः सुखसहितः सुखपूर्णस्त्वं नः अस्मान् बोधि तत्वं बोधय । किंच ते धियः कर्माणि वृधे अभिवृध्यर्थं अस्मान् अवन्तु । वयं ते सुमतौ त्वद्विषयकप्रज्ञायां भूयाम भवेम । ब्रह्मज्ञानिनो भवेम । तेन च संसारादुत्तीर्णाः वाजिनो भोगवन्तः भूयाम भवेम । किञ्च नोऽस्मान् अभिमातये इह संसारबन्धनरूपहिंसायै मा नैव स्तः, अस्तेर्लुङि सिपि रूपमेतत्, अभूः । अस्माकं हिंसको मा भूः । संसारादुत्तारयेति यावत् ।

---

१. ऋग्वेद ८-३. मेध्यातिथिः काण्वः ।

अनेन उत्पूर्वात् तॄ प्लवनतरणयोरित्यतोऽन्तर्णीतण्यर्थादप्रत्ययो गुणश्च। संसारादुत्तारयतीत्युत्तर इति निरुक्तेः मा नः स्तरभिमातय इत्यनेन सूचनाद् **उत्तरमूर्तिरत्र** ॥ ५०३ ॥

॥ ॐ गोपतये नमः ॥

**अस्मान् चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय ।**
**इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ॥ ५०४ ॥**

हे पुरुवसो इन्द्र अस्मान् चित्राभिरभिष्टिभिः इच्छाविषयैः अवतात्। किञ्च नोऽस्मान् सुम्नेषु सुखेषु आ सम्यक् यमय नियमय। या मम गिरो वेदरूपा वाचः ता इमा गिरः त्वा त्वां वर्धन्तु उ एव।

अनेन गावो वेदरूपा गिरः, तेषां पतिः स्वामीति निरुक्तेः गिरो वर्धन्तु या ममेत्यनेन सूचनाद् **गोपतिमूर्तिरत्र** ॥ ५०४ ॥

॥ ॐ गोप्त्रे नमः ॥

**पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत ।**
**अयं सहस्रमृषिभिः सहस्कृतः समुद्र इव ॥ ५०५ ॥**

पावकवर्णा अग्निवत् प्रकाशमानाः शुचयः परिशुध्दाः विपश्चितो व्याप्तज्ञाना ऋत्विजः स्तोमैः स्तोत्रविशेषैः यमिन्द्रम् अभ्यनूषत सम्यगस्तुवन् सोयमिन्द्रः सहस्रं सहस्रसंख्यैः ऋषिभिः ज्ञानिभिः सहस्कृतः सहसे रक्षणाय कृतः रक्षणार्थं प्रार्थितः समुद्र इव, पप्रथे प्रथितोऽभूदित्युत्तरेण सम्बन्धः।

अनेन गुप् रक्षणे इत्यतस्तृच्, ऋषिणां गोप्ता रक्षक इति निरुक्तेः **गोप्तृमूर्तिरत्र** ॥ ५०५ ॥

॥ ॐ ज्ञानगम्याय नमः ॥

**पप्रथे। सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु**
**विप्रराज्ये। इन्द्रमिद् देवतातय इन्द्रं प्रयत्यध्वरे ॥ ५०६ ॥**

अस्येन्द्रस्य ऋषिपूज्यत्व समुद्र इव वृध्दत्वादिः स महिमा पप्रथे व्याप्तोऽभूत्। सः सत्यः अबाधितश्च न मृषा। अत एवाहं विप्रराज्ये विप्रप्रधानकेषु यज्ञेषु शवः सुखमुद्दिश्य इन्द्रं गृणे स्तौमि। देवतातये देवलोकप्राप्तये अध्वरे यज्ञे प्रयति प्रवर्तति सति इन्द्रमित् इन्द्रमेव हुवे च।

अनेन ज्ञानं ज्ञानिनः, मतुपो लुक्, तै गम्यते स्तूयत इति ज्ञानगम्य इति निरुक्तेः गृणे शव इत्यादिना सूचनात्, यद्वा ज्ञानं ज्ञानादिमाहात्म्यं तेन गम्यो युक्तः, अबाधितमाहात्म्य इति यावत्, इति निरुक्तेः सत्यः सो अस्य महिमेत्यादिना सूचनात् **ज्ञानगम्यमूर्तिरत्र** ॥ ५०६ ॥

**॥ ॐ पुरातनाय नमः ॥**

**इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ।**
**इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः ॥ ५०७ ॥**

वनिनो वनवासिनः, विविक्तशरणा इति यावत्, समीके समीपे अस्मत्समीपं प्रति इन्द्रं हवामहे, धनस्य सातये इन्द्रं हवामहे, इति प्रत्येकं क्रियानुवृत्त्या योज्यम् । किञ्चायमिन्द्रः मह्ना महिम्ना रोदसी द्यावापृथिव्यौ पप्रथत् विस्तारयामास ।

अनेन पुर अग्रगमने इति धातोः इगुपधलक्षणः कः, कित्त्वाद् गुणाभावः । पुरं अग्रगम्यं पुरुषार्थेष्वग्रगण्यं सुखं तत् आतनोति विस्तारयतीत्यातनः । आङ् पूर्वात्तनोतेः ल्युट् ङिच्च । तथाच पुरं शवः सुखं आतनोति विस्तारयतीति पुरातन इति निरुक्तेः पप्रथच्छव इन्द्र इत्यनेन सूचनात् **पुरातनमूर्तिरत्र** ॥ ५०७ ॥

**॥ ॐ शरीरिणे नमः ॥**

**सूर्यमरोचयत् । इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे**
**सुवानास इन्दवः । तत् त्वा यामि सुवीर्यं तद् ब्रह्म ॥ ५०८ ॥**

अयमिन्द्रः सूर्यमरोचयत् प्राकाशयत् । किञ्चास्मिन्निन्द्रे विश्वा विश्वानि भुवनानि येमिरे उपरता वर्तन्ते । तस्मिन्नेव सुखेन तिष्ठन्तीत्यर्थः । किञ्चास्मिन्निन्द्रे सुवानासः अभिषूयमाणाः इन्दवः सोमा येमिरे । ह प्रसिध्दम् । हे इन्द्र यत् सुवीर्यं सामर्थ्यं अज्ञाननिर्हरणादौ तदुद्दिश्य, त्यजितनिभ्योऽदिरिति तनु विस्तारे इत्यतः अदिप्रत्ययः स च ङित् टिलोपः, तत् व्याप्तं ब्रह्म गुणपूर्णं त्वां शरणं यामि ।

अनेन शृ हिंसायामित्यत ईप्रत्ययो गुणश्च । शीर्यते नित्यमेवास्माद् विष्णोस्तु जगदीदृशमित्युक्तेः भुवनानि शरीशब्देनोच्यन्ते । रमुक्रीडायामित्यतः रमन्त इति रः । शर्यः भुवनानि रमन्तं अस्मिन्निति

शरीरम् । शरीरमेव शरीरी, स्वार्थे इनिः । अथवा शर्यश्च ते राश्च शरीराः भुवनानि । तान्यस्य सन्तीति शरीरीति निरुक्तेः विश्वा भुवनानि येमिरे इत्यनेन सूचनात् **शरीरिमूर्तिरत्र** ॥

शरीरभूतभृदिति केचित् पठन्ति । अस्मिन् पक्षे शरीरशब्दोऽविभक्तिको निर्दिष्टः । मत्वर्थस्य इनेः लोपश्च ॥ ५०८ ॥

॥ ॐ भूतकृते नमः ॥

**पूर्वचित्तये । येना यतिभ्यो भृगवे धने हिते येन**
**प्रस्कण्वमाविथ । येना समुद्रमसृजो महीरपः ॥ ५०९ ॥**

हे इन्द्र येन मन्त्रेण यतिभ्यः प्रयत्नवद्भ्यः भृगवे भृगुप्रभृतिभ्यः हिते धने प्रज्ञारूपधनप्राप्त्यर्थं स्तुतः । येन च मन्त्रेण प्रस्कण्वं प्रस्कण्वनामानं मामाविथ रक्षितवानसि तद् ब्रह्म स मन्त्रः पूर्वचित्तये, चिती संज्ञाने ततः क्विप्, तस्मिन् क्विबन्ते उपपदे तनोतेर्भावे डिः, चित्तिर्ज्ञानविस्तृतिः, पूर्वचित्तिः अनादिस्वरूपभूतज्ञानाभिव्यक्तिः, तस्यै भूयात् । हे इन्द्र येन कारणेन समुद्रमपां खातं प्रति महीः महतीः बह्वीरपः जलानि असृजः सृष्टवानसि इत्युत्तरेण सम्बन्धः । येन मन्त्रेणापः सृष्टवानसि तद् ब्रह्म पूर्वचित्तये इति पूर्वेण वा संबन्धः ।

अनेन भूतं न्याये समे प्राप्ते यथार्थातीतयोरपीत्युक्तेः भूतमतीतमनादिज्ञानादि तत् करोति अभिव्यक्तिं जनयतीति कृत् । अनादिज्ञानाद्यभिव्यक्तिकृद् भूतकृदिति निरुक्तेः पूर्वचित्तये भूयादित्यनेन सूचनाद् **भूतकृन्मूर्तिरत्र** ॥ ५०९ ॥

॥ ॐ भोक्त्रे नमः ॥

**तदिन्द्र वृष्णि ते शवः । सद्यः सो अस्य महिमा न**
**संनशे यं क्षोणीरनुचक्रदे । शग्धी न इन्द्र यत् त्वा ॥ ५१० ॥**

हे इन्द्र येन कारणेन समुद्रपूरणादि कृतवानसि तेन कारणेन वृष्णि वृष्णः वर्षणशीलस्य ते शवः कीर्तिः दिक्षु विस्तृतमासीत् । वृष्णि वर्षणशीलं शव इति वा योज्यम् । यमेवंविधं महिमानं क्षोणीः सर्वा अपि भूमी अनु व्याप्य चक्रदे कृतवान् अस्य ते महिमा सद्यः इदानीमपि न संनशे नैव

नश्यति। हे इन्द्र यत् यस्मात् नः अस्मान् शग्धि, शक्लृ शक्तौ इत्यस्यान्तर्णीतण्यर्थस्येदं रूपम्, शक्तिमतः कुरु (करोषि), तत् तस्मात् त्वां यामीति सम्बन्धः।

अनेन समुद्रपूरकत्वादिस्वमहिमानं भोजयति पालयति न विनाशयतीति वा भुङ्क्ते इतिवा भोक्ता, भुज पालनाभ्यवहारयोरित्यतस्तृच्, इति निरुक्तेः सद्यः सो अस्य महिमा न संनशे इत्यनेन सूचनाद् **भोक्तृमूर्तिरत्र** ॥ ५१० ॥

॥ ॐ कपीन्द्राय नमः ॥

**रयिं यामि सुवीर्यम्। शग्धि वाजाय प्रथमं सिषासते**
**शग्धि स्तोमाय पूर्व्य। शग्धी नो अस्य यध्द पौरम्॥ ५११ ॥**

सुवीर्यं रयिमुद्दिश्य त्वां शरणं यामि। प्रथमं पूर्वं सिषासते सिषासतः सिसासतो लब्धुमिच्छतः नः अस्मान् वाजाय भोगाय शग्धि शक्तान् कुरु। हे पूर्व्य पुरातन इन्द्र स्तोमाय स्तुतये नः शग्धि। नः अस्माकम् अस्य यजमानस्य यजमानं च शग्धि: शक्तं कुरु। शिष्टमुत्तरेण संबध्यते।

अनेन कं शिरोम्बुसुखेत्युक्तेः कं सुखम्। अथ पं क्लोबे हेम्नीत्युक्तेः पं द्रविणं, कं च पं च कपे। ते अस्य स्त इति कपी। इदं स्तुत्यनुकूलशक्तिशब्दितं सामर्थ्यं राति ददातीतीन्द्रः। इदंशब्दे उपपदे रातेः कप्रत्ययः पृषोदरादित्वाद् वर्णव्यत्ययोऽकारलोपश्च। कपी चासाविन्द्रश्चेति निरुक्तेः रयिं यामि सुवीर्यं शग्धि वाजायेत्यादिना सूचनात् **कपीन्द्रमूर्तिरत्र** ॥ ५११ ॥

॥ ॐ भूरिदक्षिणाय नमः ॥

**आविथ धिय इन्द्र सिषासतः। शग्धि यथा रुशमं**
**श्यावकं कृपमिन्द्र प्रावः स्वर्णरम्। कन्नव्यो अतसीनाम्॥ ५१२ ॥**

हे इन्द्र यथा पौरं राजानम् आविथ रक्षितवानसि। यथा वा रुशमं श्यावकं कृपं तन्नाम्नो राज्ञः शग्धि त्वस्तुतौ शक्तानकरोः तथा धियो ज्ञानानि कर्माणि सिषासतः लब्धुमिच्छतः अस्मान् स्वर्णरं स्वर्नरः सुखिनः कृत्वा, स्वर्णरं यथा भवति तथेति क्रियाविशेषणं वा, प्रावः स्तुत्यादौ शक्तिदानेन रुशमश्यावकादीनिव अस्मानपि रक्षेत्यर्थः। अन्यथा नव्यो नवीनो जनः अतसीनां व्याप्तानां ते महिम्नां कत् कः कथं च अन्तं प्राप्नुयात्। न कथमपि कश्चिदपि। न ऋते त्वत् क्रियते किञ्चनारे इत्यादेः त्वत्प्रेरणाभावे कथं स्तुत्यादौ शक्नुवन्ति, अतस्त्वमेव स्वतन्त्र इति भावः।

अनेन भूरि बहुलमत्यन्तं दक्षिण: स्वतन्त्र:, दक्षिण: सरले याम्यदिक्स्थे छन्दोनुवर्तिनीत्युक्तेः, इति निरुक्तेः कन्नव्यो अतसीनामित्यादिना सूचनाद् **भूरिदक्षिणमूर्तिरत्र** ॥ ५१२ ॥

॥ ॐ सोमपाय नमः ॥

**तुरो गृणीत मर्त्यः । नही न्वस्य महिमानमिन्द्रियं स्वर्गृणन्त आनशुः । कदु स्तुवन्त ऋतयन्त देवतः ॥ ५१३ ॥**

अस्येन्द्रस्य महिमानं महिम्नः तुरः अग्रं कत् कः मर्त्यः गृणीत गृण्हीयात् । न कोपि । स्वः समीचीनाः ऋषयः गृणन्तः स्तुवन्तः नु इदानीमपि इन्द्रियं इन्द्रियगोचरं (इन्द्रगोचरम्?) महिमानं न ह्यानशुः न प्राप्नुवन् । हे इन्द्र त्वां स्तुवन्तो जनाः कत् के । न केपि साकल्येन स्तुवन्तीत्यर्थः । कत् के ऋतयन्तः त्वत्स्वरूपं निर्णीतवन्तः । किं बहुना । देवतः देवोपि कत् कः गृणीत ।

अनेन सः पुंस्युमासुते वायावित्युक्तेः सः वायुः, उकारः क्षत्रिये नेत्रे इत्युक्तेः उः क्षत्रियो राजर्षिः । मृञ् प्राणत्यागे इत्यतो डः, मः मरणशीलो मनुष्यः । तथाच सश्च उश्च मश्च सोमाः, ते पाः आर्ताः साकल्येन तन्महिमावगतावशक्ता यस्मिन् सः सोमपः । पस्त्रिष्वार्ते प्रसन्ने चेत्यक्तेः । वाय्वादिदेवैर्मन्वादिक्षत्रियै राजर्षिभिरितरैर्मनुष्यैश्च साकल्येनानवगतमाहात्म्यः सोमप इति निरुक्तेः कदु स्तुवन्त ऋतयन्त देवतः तुरो गृणीत मर्त्य इत्यादिना सूचनात् **सोमपमूर्तिरत्र** ॥ ५१३ ॥

॥ ॐ अमृतपाय नमः ॥

**ऋषिः को विप्र ओहते । कदा हवं मघवन्निन्द्र सुन्वतः कदु स्तुवत आ गमः । उदु त्ये मधुमत्तमाः ॥ ५१४ ॥**

हे इन्द्र विप्रः प्रकृष्टः ऋषिः ज्ञान्यपि कः ओहते त्वां धारयति । हे मघवन् सुन्वतो यजमाजस्य हवमाह्वानं कदा शृणोषि । स्तुवतो यजमानस्य गृहं प्रति कदु कदैव आगमः आगच्छसि । त्ये ते प्रसिद्धा अपि मधुमत्तमाः त्वज्ज्ञानरूपमधुमत्तमाः क उ के, अतिदुर्लभा इति यावत् ।

अनेन मृतो न भवतीत्यमृतं स्तोत्रं तत् पिबति श्रोत्रेन्द्रियेणेत्यमृतप इति निरुक्तेः कदा हवं मघवन्निन्द्र इत्यनेन सूचनाद् **अमृतपमूर्तिरत्र** ॥ ५१४ ॥

॥ ॐ सोमाय नमः ॥

**गिरः स्तोमास ईरते । सत्राजितो धनसा अक्षितोतयो**
**वाजयन्तो रथा इव । कण्वा इव भृगवः ॥ ५१५ ॥**

हे इन्द्र त्वां वाजयन्तः युध्दे प्रेरयन्तो रथा इव सत्राजितः सुखप्रापकाः धनसाः धनप्रापकाः अक्षितोतयः अक्षीणरक्षाः स्तोमासः स्तुतिरूपाः गिरो वाचः ईरते प्रेरयन्ति । कण्वा इव भृगवोऽपि भृगुप्रभृतिसज्जना अपि ईरते ।

अनेन हरेहरावित्युक्तेः[१] उः हरिः मा लक्ष्मीः, उश्च माच आसां प्रतिपाद्यतया अभिमानितया च स्त इति वा, उ उत्कृष्टाः माः मानरूपा इति वा उमा गिरः, ताभिः प्रेरकाभिः सह वर्तत इति सोम इति निरुक्तेः गिरः स्तोमास ईरते इति सूचनात् **सोममूर्तिरत्र** ॥ ५१५ ॥

॥ ॐ पुरुजिते नमः ॥

**सूर्या इव विश्वमिद् धीतमानशुः । इन्द्रं स्तोमेभिर्महयन्त**
**आयवः प्रियमेधासो अस्वरन् । युक्ष्वा हि ॥ ५१६ ॥**

हे इन्द्र प्रियमेधासः त्वदीययज्ञप्रिया आयवः आयुराजप्रभृतयः ज्ञानिनो वा धीतं धियमितं प्रमितं विश्वं सूर्य इव सूर्यरश्मय इव आनशुः व्याप्तवन्तः । अथवा धीतं पूर्णं विश्वं, विशः प्रजाः शत्रुजनान् वारयति जयतीति विश्वः, वयः अन्तर्णीतण्यर्थात् डः, तं शत्रुजितं वा इन्द्रं स्तोमेभिः स्तोत्रविशेषैः महयन्तः पूजयन्तः अस्वरन् ध्वनिमकुर्वन् । इत् एव । शिष्टमुत्तरेण संबध्यते ।

अनेन पृ पालनपूरणयोरित्यस्मात् पृभिदिव्यधिगृधिदृशिभ्य इति सूत्रेण कप्रत्यये उदोष्ठ्यपूर्वस्येति रपर उकारः । पूर्यते आयुराजादिभिर्ज्ञानिभिर्वा आप्यते इति पुरुः । शत्रून् जयतीति जित् । पुरुश्चासौ जिच्चेति पुरुजिदिति निरुक्तेः आयव आनशुरित्यनेन सूचनात् **पुरुजिन्मूर्तिरत्र** ॥ ५१६ ॥

॥ ॐ पुरुसत्तमाय नमः ॥

**वृत्रहन्तम हरी इन्द्र परावतः । अर्वाचीनो मघवन्**
**स्तोमपीतय उग्र ऋष्वेभिरा गहि । इमे हि ते ॥ ५१७ ॥**

---

१. हरं हरावुविति पाठः सम्यक् स्यात् ।

हे वृत्रहन्तम इन्द्र हि प्रसिद्धौ हरी अश्वौ परावतोऽधस्ताद् गन्तुं युक्ष्व युङ्क्ष्व। युङ्क्त्वा च हे मघवन् तेन रथेन अर्वाचीनः दिवोऽर्वाङ्मुखः उग्रः उद्गीर्णः त्वं ऋष्वेभिर्बृहद्भिः स्वपरिवारैः सह सोमपीतये आ गहि। ते त्वदीया इमे जनाः त्वां काङ्क्षन्ते हि।

अनेन पृ पालनपूरणयोरित्यस्मात् कुः। पृणाति बह्ववकाशं पूरयतीति पुरुः बृहत्कायो वृत्रः। स इषुमात्रमवर्धतेति (भागवत) वचनात्। विदारणार्थात् सदेः क्विप्। पुरुं वृत्रं सादयति विनाशयतीति पुरुसत्, अतिशयेन पुरुसत् पुरुसत्तम सति निरुक्तेः, वृत्रहन्तमेत्यनेन सूचनात् **पुरुसत्तममूर्तिरत्र** ॥ ५१७॥

॥ ॐ विनियोज्याय नमः ॥

**कारवो वावशुर्धिया विप्रासो मेधसातये। स त्वं नो**
**मघवन्निन्द्र गिर्वणो वेनो न शृणुधी हवम्॥ ५१८॥**

हे मघवन् गिर्वणः इन्द्र विप्रासः प्रकृष्टाः कारवो ऋत्विजः मेधसातये यज्ञसिध्द्यर्थं धिया बुध्या वावशुः त्वां कांक्षन्ते। स सर्वैः कांक्षितस्त्वं नः अस्माकं वेनो हिंसको न भव। किञ्च नः अस्मदीयं हवमाह्वानं शृणुधि शृणु।

अनेन निपूर्वाद् युजेः शकिलिटि चेत्यत्र चकारात् कृत्यर्थेत्युक्तेः यत् प्रत्ययः, नियोज्यः परप्रेर्यः, विशब्दो विप्रिय इत्यादाविव निषेधार्थः। अस्मद्धिंसादौ परप्रयोज्यो न भवतीति विनियोज्य इति निरुक्तेरिन्द्र गिर्वणः वेनो नेत्यनेन सूचनाद् **विनियोज्यमूर्तिरत्र**।

अत्र केचिद् विनियो जय इति पाठेन विनियं दण्डं प्रजानां करोतीति विनियः, समस्तानि भूतानि जयतीति जय सति नामद्वयं व्याचख्युः॥ ५१८॥

॥ ॐ सत्यसन्धाय नमः ॥

**[1]निरिन्द्र बृहतीभ्यो वृत्रं धनुभ्यो अस्फुरः। निरर्बुदस्य**
**मृगयस्य मायिनो निः पर्वतस्य गा आजः॥ ५१९॥**

---

१. इयमुत्तरा चाविहता।

हे इन्द्र बृहतीभ्यो बृहद्भ्यः धनुभ्यः, धन धान्ये इत्यस्मात् तनिधनिमिमस्जिभ्य उरिति उप्रत्ययः, धनतीति धनुः अस्त्रं वज्रादीन्यायुधानि तेभ्यः वृत्रमसुरं निरस्फुरः, स्फुर संचरणे, नितरां ञायसि। मृगयस्य मार्गमाणस्य मायिनो वृत्राद्यसुरजातस्य अर्बुदस्य अर्बुदसंख्यस्य, द्वितीयार्थे षष्ठी, वृत्राद्यसुरं निरस्फुरः। किञ्च पर्वतस्य सकाशात् वलपिहिता गाः निराजः निरगमयो निष्कासितवानसि। मृगयस्यार्बुदस्य मायिनः सकाशाद् गा निराज इति वा योज्यम्।

अनेन गत्यर्थस्य सदेर्भावे क्विप्, सद् गमनं यातीति सत्यं गोव्रजम्, छन्दसि उभयसंज्ञा अपि दृश्यन्त इत्युक्तेः भत्वाज्ज्ञत्वाभावः। सत्यं गोव्रजं सन्दधति वलान्मोचयित्वा पोषयतीति सत्यसन्धः, पोषणार्थाद् धात्रः कः, इति निरुक्तेः निः पर्वतस्य गा आज इत्यनेन सूचनात् **सत्यसन्धमूर्तिरत्र** ॥ ५१९ ॥

॥ ॐ दाशार्हाय नमः ॥

**निरग्रयो रुरुचुर्निरु सूर्यो निः सोम इन्द्रियो रसः।**
**निरन्तरिक्षादधमो महामहिं कृषे तदिन्द्र पौंस्यम्॥ ५२०॥**

हे इन्द्र अन्तरिक्षाल्लोकात् महां महान्तमतिस्थूलम् अहिं निरधमः अधातयः। तस्मात् अग्रयो निः नितरां रुरुचुः कान्तिमन्तो बभूवुः। सूर्यश्च निरुरुचे सोमश्च निरुरुचे। इन्द्रियः इन्द्रियविषयः रसश्च निरुरुचे। ततश्च त्वमेव पौंस्यं सामर्थ्यं कुषे करोषि।

अनेन दाशृ दाने, सूर्यादीनां प्रकाशवत्त्वादिधर्मजातं ददातीति दाशं पौंस्यं सामर्थ्यं, तदर्हतीति दाशार्ह इति निरुक्तेः निरग्रयो रुरुचुरित्यादिना सूचनाद् दाशार्हमूर्तिरत्र॥ ५२०॥

॥ ॐ सात्वतां पतये नमः ॥

**[१]यदिन्द्र प्रागपागुदङ् न्यग्वा हूयसे नृभिः।**
**सिमा पुरु नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे यद् वा॥ ५२१॥**

हे सिम सम इन्द्र प्राक् प्राग्भागात् अपाक् पश्चिमभागात् उदक् उत्तरभागात् न्यग्वा दक्षिणभागाद्वा

१. ऋग्वेद ८-४. देवातिथिः काण्वः।

यत् यदा नृभिः हूयसे तदा पुरु अधिकं नृषूतः मनुष्येषु सु सम्यग् ऊतः प्रविष्टोसि। किञ्च अस्य अस्मै आनवे अनुपुत्राय तुर्वशे एतन्नामकराज्ञे प्रशर्ध प्रशर्धः प्रकर्षेण सुखकृदसि।

अनेन गुणप्राणबलाः सत्वमित्यादेः सत्वं बलं सत्वगुणो वा, तदस्यास्तीति मत्वर्थे तः, पर्वमरुद्भ्यां तः इत्यत्र योगविभागाश्रयणात्, ततः प्रज्ञादित्वात् स्वार्थेकोऽण्, सात्वता यादवाः अनुतुर्वशप्रभृतयो यादवप्रभेदाः, पृषोदरादित्वादन्त्यलोपः, सात्वतां यादवानां पतिः पालकः सात्वतां पतिः, षष्ठ्या अलुक्, इति निरुक्तेः अस्यानवे प्रशर्ध तुर्वशे इत्यनेन सूचनात् **सात्वतां पतिमूर्तिरत्र** ॥ ५२१ ॥

॥ ॐ जीवाय नमः ॥

**रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा। कण्वासस्त्वा**
**ब्रह्मभिः स्तोमवाहस इन्द्रा यच्छन्त्या गहि ॥ ५२२ ॥**

हे इन्द्र रुमे एतन्नाम्नि सचा सह युगपत् मादयसे। तेषु स्थित्वा तदीयप्राणधारणादिना तान् सुखयसि। यत एवं तस्मात् कण्वासः कण्वप्रभृतयो ज्ञानिनः ब्रह्मभिर्वेदैः स्तोमवाहसः स्तोमं स्तोत्रं वहन्तः कुर्वन्तः त्वां तुभ्यं आयच्छन्ति, हविरादिकमिति शेषः। तस्मात् हे इन्द्र आ गहि।

अनेन जीव प्राणधारणे इत्यतः कप्रत्ययः, तुर्वशरुमरुशमश्यावकादिषु स्थित्वा तदीयप्राणान् धारयतीति जीवः। यद्वा जीवो बृहस्पतिप्राणजीवनात्मखगेषु नेत्युक्तेः जीवो बृहस्पतिः, तेन तदभिमन्यमानस्तोत्रात्मकशब्दः, ततो मत्वर्थीयः अर्श आद्यच्, जीवः स्तोमः विषयतया अस्यास्तीति जीवः, कण्वादिकृतस्तोत्रविषय इति यावत्, इति निरुक्तेः यद् वा रुम इत्यादिना कण्वासः स्तोमवाहस इत्यादिना च सूचनात् **जीवमूर्तिरत्र** ॥ ५२२ ॥

॥ ॐ विनयित्रे नमः ॥

**यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम्। आपित्वे नः**
**प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ ५२३ ॥**

हे इन्द्र अपा अपां कृतं पूर्णं जलाशयं तृष्यन् तृषितः गौरो मृगः प्रपित्वे पानार्थं तूयं तूर्णं यथा एति गच्छति तथा त्वमपि कण्वेषु कण्वगृहेषु ईरिणं सोमं पातुमागहि। आगत्य च पिब। पीत्वा च सचा सुखेन नः अस्मान् आपित्वे प्राप्तत्वे अवगमय। अस्माकं प्राप्यो भव।

अनेन विपूर्वात् नीञ् प्रापणे इत्यस्माण्णिजर्थात् तृच् इडागमः । भक्तान् स्वप्राप्तत्वं नयति, भक्तान् स्वात्मानं प्रापयतीति यावत्, इति निरुक्तेः आपित्वे न अव इत्यनेन सूचनाद् **विनयितृमूर्तिरत्र** ॥ ५२३ ॥

**॥ ॐ साक्षिणे नमः ॥**

**[1]मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते ।**
**आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद् दधिषे सहः ॥ ५२४ ॥**

हे इन्द्र सुन्वते यजमानाय राधोदेयाय राधसो दानाय आमुष्या अमुष्य यजमानस्य सुतं सोममपिबः। तत् तस्मात् ज्येष्ठं अभिवृद्धं च चमू चम्वाः द्यावापृथिव्योर्धारणसमर्थं सहो बलं दधिषे धत्से । एवं-भूतं त्वामिन्दवः अस्मदीयाः सोमाः मन्दन्तु सुखयन्तु ।

अनेन अश भोजने इत्यतो वा अशू व्याप्तावित्यतो वा अशेर्देवन इति सप्रत्ययः षत्वकत्वादि पूर्ववत् । अश्नाति अश्नोति वा अर्थानेनेनेत्यक्षं बलं, अक्षेण सहितं साक्षं पानं, तदस्यास्तीति मत्वर्थे इनिः, बलसहितपानवान्, बलाभिवृद्धिकर सोमपानवानित्यर्थः, इति निरुक्तेः अपिबश्चमू सुतं ज्येष्ठ तद् दधिषे सहेत्यनेन सूचनात् **साक्षिमूर्तिरत्र** ।

अत्र विनयितासाक्षीत्येकमेव नाम विधाय विनयिता विनयित्वं तस्य साक्षीत्यपि योजयन्ति ॥ ५२४ ॥

**॥ ॐ मुकुन्दाय नमः ॥**

**प्रचक्रे सहसा सहो बभञ्ज मन्युमोजसा ।**
**विश्वे त इन्द्र पृतनायवो यहो नि वृक्षा इव येमिरे ॥ ५२५ ॥**

सहसा, अत्र तृतीया षष्ठ्यर्थे, सहसः वायोः सहो पुत्र, महात्मन् वा, वायुनाऽभिव्यक्त इन्द्रः पृतनायवः अज्ञानादिशत्रुभिर्युद्धं कांक्षमाणाः विश्वे समस्तास्त्वद्भक्ता ते प्रसिद्धा वृक्षा देववृक्षा इव स्थिराः, दुर्वादिवचोभिः संशयमनापन्नाः श्रवणमननाभ्यां दृढप्रज्ञाः नियेमिरे बभूविरे । ततस्तेषु स्थित्वा, उब्ज आर्जवे इत्यतः सर्वेभ्यो धातुभ्यो असुन् स्यादित्यसुनप्रत्ययः, उब्जेर्बले बलोपश्चेति

---

१. इयं न विहृता । उत्तराऽपि तथा ।

बलोपः, गुणः, उब्जते अनेनेति ओजः, तेन परोक्षज्ञानेनापरोक्षज्ञानमुत्पाद्य मृत्युमनाद्यविद्याकाम-कर्मादिबलं हतवान्। अथ बलं परिहृत्य यहः स्वरूपानन्दानुभववृद्धिं प्रचक्रे कृतवान्। स्वभक्तान् मुक्तान् करोतीति यावत्।

अनेन मुच्लृ मोक्षणे इत्यतो भावे क्तिन्, मुक्तिं ददातीति मुक्तिदः, मुक्तिद एव मुकुन्दः, पृषोदरादित्वात् तकारलोपः इकारस्योकारः नुमागमश्चेति निरुक्तेः प्रचक्रे यह इत्यादिना सूचनात् **मुकुन्दमूर्तिरत्र** ॥ ५२५ ॥

**॥ ॐ अमितविक्रमाय नमः ॥**

**सहस्रेणेव सचते यवीयुधा यस्त आनळुपस्तुतिम्।**
**पुत्रं प्रावर्गं कृणुते सुवीर्ये दाश्नोति ॥ ५२६ ॥**

हे इन्द्र यो जनः ते उपस्तुतिं सम्यक्स्तुतिं आनट् व्याप्नोति करोति सः त्वद्भक्तो जनः यवीयुधा यवीयुधां अत्यन्तयोद्धॄणां सहस्रेण सहस्रेणापि सचते संगतो भवति। त्वद्भक्त एवं पराक्रमी भवति। किञ्च भवान् तस्मै भक्तजनाय प्रावर्गं बहुपरिवारसहितं पुत्रं दाश्नोति ददाति। किञ्च भक्तजनं सुवीर्ये बहुपराक्रमे कृणुते बहुपराक्रमवन्तं करोति। अतस्त्वममितपराक्रमीति किमु वक्तव्यमिति भावः।

अनेन अमिता विक्रमा यस्य स इति निरुक्तेः यवीयुधा सचते सुवीर्ये कृणुते इत्यादिना सूचनाद् **अमितविक्रममूर्तिरत्र** ॥ ५२६ ॥

**॥ ॐ अम्भोनिधये नमः ॥**

**नमउक्तिभिः। मा भेम मा श्रमिष्मोग्रस्य सख्ये तव।**
**महत् ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥ ५२७ ॥**

हे इन्द्र उग्रस्य उद्गीर्णस्य तव नमउक्तिभिः नमस्कारादिभिः सख्ये सति मा भेम शत्रुतो न भयमाप्नुमः। मा श्रमिष्म श्रममपि न प्राप्नुमः। वृष्णः वर्षणशीलस्य ते त्वया यदुं तुर्वशं च प्रति महत् कृतं रक्षणादिरूपं कर्म अभिचक्ष्यं चक्षुर्गोचरं यथा भवति तथा पश्येम।

अनेन आप्लृ व्याप्तावित्यतः आप्नोतेर्नुम्भौ ह्रस्वश्चेत्यसुनप्रत्यये[1] आप्नुवन्ति परमेश्वरमिति अंभांसि यदुतुर्वशादिभक्तजातानि, निधीयन्ते अत्रेति निधिः, निपूर्वस्य धाञः उपसर्गे घोः किरिति किप्रत्ययः, इति निरुक्तेः पश्येम तुर्वशं यदुमित्यादिना सूचनाद् **अम्भोनिधिमूर्तिरत्र** ॥ ५२७ ॥

॥ ॐ अनन्तात्मने नमः ॥

**सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति ।**
**मध्वा सम्पृक्ताः सारघेण धेनवस्तूयमेहि ॥ ५२८ ॥**

हे इन्द्र युद्धकाले सव्यां स्फिग्यं सव्यबाहुमनु सम्यग् ववसे चालयसि । किञ्च वृषा श्रेष्ठः भवान् अस्य यजमानस्य दानः दाता सन् न रोषति नकुप्यति । सारघेण मधुमक्षिकानिर्मितेन मध्वा मधुवहत्वादुद्भूतेन(?) सोमरसेन धेनवः धेनुविकाराः पयांसि सम्पृक्ताः सन्ति । तस्मात् त्वं तूयं तूर्णमेहि ।

अनेन अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेऽन्तरे इत्युक्तेःनाशहेतुत्वादन्तो रोषः । यद्वा अति अदि बन्धने इत्युक्तेर्बन्धनकर्मणः अतेः अच्प्रत्ययः, इदित्वान्नुमागमः, अंतति बध्नातीति बन्धकत्वादन्तो रोषः, न विद्यते भक्तेषु अन्तो रोषो यस्य सः अनन्तः । आङ् पूर्वाद् ददातेर्मनिन् प्रत्ययः, आत्मा दाता, अनन्तश्चासावात्मा चेत्यनन्तात्मा इति निरुक्तेः न दानो अस्य रोषतीत्यनेन सूचनाद् **अनन्तात्ममूर्तिरत्र** ॥ ५२८ ॥

॥ ॐ महोदधिशयाय नमः ॥

**द्रवा पिब । अश्वी रथी सुरूप इद् गोमाँ इदिन्द्र ते सखा ।**
**श्वात्रभाजा वयसा सचते सदा चन्द्रो याति ॥ ५२९ ॥**

हे इन्द्र सोमपानार्थं भक्तगृहं प्रति द्रव आद्रुत्य च पिब । यतस्ते सखा पूजको जनः अश्वी अश्ववान् रथी रथवान् गोमान् गवादिपशुमान् सुरूपश्च भवत्येव । किञ्च श्वात्रभाजा, श्वात्रं धनं तन्नामसु पाठात्, तद्युक्तेन वयसा आयुषा सदा सचते समवेतो भवति । किञ्च चन्द्रः आह्लादकः स्वजनान् याति गच्छति ।

---

१. उदके नुं भश्चेत्युणादिसूत्रम् ।

अनेन उत् उत्कर्षेण अधि अधिकं शं सुखसाधनत्वाद् द्रविणं, उदधिशं यापयतीति प्रापयतीति उदधिशयः, यातेरन्तर्णीतण्यर्थात् कः, महांश्चासावुदधिशयश्च महोदधिशय इति निरुक्तेः श्वात्रभाजा वयसा सचते इत्यादिना सूचनात् **महोदधिशयमूर्तिरत्र** ॥ ५२९ ॥

॥ ॐ अन्तकाय नमः ॥

**सभामुप । ऋश्यो न तृष्यन्नवपानमा गहि पिवा सोमं**
**वशाँ अनु । निमेघमानो मघवन् दिवेदिवे ॥ ५३० ॥**

हे मघवन् तृष्यन् तृषितः ऋष्यो न मृग इव नवपानं नूत्नपानं प्रति आ गहि । आगत्य च वशान् अनु यथेच्छं सोमं पिव । दिवेदिवे प्रतिदिनं निमेघमानः नितरां मेघ इवाचरन् भक्तानामभीष्टं वर्षन् सभामुप सभायामभीष्टवर्षकत्वेन निश्चित इति यावत् ।

अनेन अन्तो निर्णयनाशयोरित्युक्तेः अन्तो निर्णयः अभीष्टवर्षणादिविषयः तं करोतीत्यन्तकः, करोतेर्डः, इति निरुक्तेः निमेघमान इत्यनेन सूचनाद् **अन्तकमूर्तिरत्र** ॥ ५३० ॥

॥ ॐ अजाय नमः ॥

**ओजिष्ठं दधिषे सहः । अध्वर्यो द्रावया त्वं सोममिन्द्रः**
**पिपासति । उप नूनं युयुजे वृषणा हरी ॥ ५३१ ॥**

हे इन्द्र ओजिष्ठमोजस्वितमं सहो वलं दधिषे धत्से । अस्य पूर्वेणान्वयः । हे अध्वर्यो ऋत्विग्विशेष त्वं द्रावय सोमं शीघ्रं सुनु । इन्द्रस्तु पिपासति पातुमिच्छति । उप किञ्च वृषणा वृषणौ युवानौ हरी अश्वौ स्वरथे युयुजे बध्दवान् । नूनं निश्चितम् ।

अनेन स्वरथे अश्वौ अजति गमयति योजयतीत्यजः, अज गतिक्षेपणयोरित्यस्मादन्तर्णीत-ण्यर्थादप्रत्ययः, इति निरुक्तेः युयुजे वृषणा हरी इत्यनेन सूचनाद् **अजमूर्तिरत्र** ॥ ५३१ ॥

॥ ॐ महार्हाय नमः ॥

**आ च जगाम वृत्रहा । स्वयं चित् स मन्यते दाशुरिर्जनो**
**यत्रा सोमस्य तृम्पसि । इदं ते अन्नं युज्यं समुक्षितम् ॥ ५३२ ॥**

वृत्रहा इन्द्रः आजगाम च। अतस्त्वं त्वरयेति सम्बन्धः। हे इन्द्र यत्र अस्य यजमानस्य गृहे सोमस्य सोमं पीत्वा तृम्पसि तृप्तोऽभवः, तृप्तो भवितुमिच्छसि, स दाशुरिः हविरादेर्दाता जनः स्वयं चित् स्वयमेव मन्यते त्वां तदर्थं मन्यते। स्वयमेव तुभ्यं दातुमिच्छति। यतो युज्यं योग्यं तव पातुमर्हं समुक्षितं पयआदिना संसिक्तं इदमन्नं सोमाख्यं ते तुभ्यं तद्गृहे सिद्धमस्ति।

अनेन महत् पयआदिना संसिक्तत्वादुत्तमं अर्हं सोमाख्यमन्नं यस्य स महार्ह इति निरुक्तेः अन्नं युज्यं समुक्षितमित्यनेन सूचनात् **महार्हमूर्तिरत्र** ॥ ५३२ ॥

**॥ ॐ स्वाभाव्याय नमः ॥**

**तस्येहि प्र द्रवा पिब। रथेष्ठायाध्वर्यवः सोममिन्द्राय**
**सोतन। अधि ब्रध्नस्याद्रयो वि चक्षते ॥ ५३३ ॥**

हे इन्द्र तस्य यजमानस्य गृहं प्रति तस्य तं सोममिति वा द्रव आद्रव द्रुतमेहि, आद्रुत्य च पिबेति सम्बन्धः। हे अध्वर्यवः रथेष्ठाय, सप्तम्या अलुक्, इन्द्राय इन्द्रस्य पानार्थं सोमं सोतन सुनुत। ब्रध्नस्य अधि सूर्यस्योपरि अद्रयो मेघाः, मेघाश्रिता देवाः विचक्षते पश्यन्ति।

अनेन स्वेन भाव्यः प्रवर्तनीयो रथः स्वभाव्यः, ततस्तस्येदमित्यण्, स्वभाव्यरथसंबन्धी स्वाभाव्यः रथे स्थितः, इति निरुक्तेः, रथेष्ठायेत्यनेन सूचनात् **स्वाभाव्यमूर्तिरत्र** ॥ ५३३ ॥

**॥ ॐ जितामित्राय नमः ॥**

**सुन्वन्तो दाश्वध्वरम्। उप ब्रध्नं वावाता वृषणा हरी**
**इन्द्रमप सु वक्षतः। अर्वाञ्चं त्वा सप्तयोऽध्वरश्रियः ॥ ५३४ ॥**

पूर्वोक्तमर्थं कर्मादिप्रदर्शनेन विवृण्वन् प्रार्थयते। सुन्वतः दाश्वध्वरं दाशुषो यजमानस्याध्वरं यज्ञं, सामर्थ्यात् सुन्वन्तः सुन्वतः इत्येतत् एकदेशेनाप्यन्वेति। (सुन्वतो दाशोः अध्वरमिति)। विचक्षत इति पूर्वेण संबन्धः। यद्वा दाश्वध्वरं प्रति वृषणा युवानौ ब्रध्नं सूर्यम् उप अपाकृत्य तदूर्ध्वमपि वावाता ववाता ववातौ गमनशीलौ हरी अग्रगौ अश्वौ इन्द्रम् अपसुवक्षतः सम्यग् वहतः। इन्द्रमस्मद्यज्ञं प्रति सम्यग् वहताम्। हे इन्द्र अध्वरश्रियः अध्वरभूषणाः सप्तयः अन्ये अश्वाः अर्वाञ्चं दिवोऽर्वाक् स्थितं भूलोकं प्रति त्वां, वहन्त्वित्युत्तरेण संबन्धः।

अनेन जितः आ सम्यक् मित्रः सूर्यः याभ्यां तौ जितामित्रौ, तावस्य स्त इति जितामित्रः। मतुपो लुप्। सूर्यमप्युल्लंघ्य गच्छन्तावस्याश्वाविति यावत्, इति निरुक्तेः उपब्रध्नमित्यादिना सूचनात् **जितामित्रमूर्तिरत्र** ॥ ५३४ ॥

॥ ॐ प्रमोदनाय नमः ॥

**वहन्तु सवनेदुप।[१] वयं घ त्वा सुतावन्त आपो न**
**वृक्तबर्हिषः। पवित्रस्य प्रस्रवणेषु वृत्रहन्॥ ५३५ ॥**

सवना सवनानि सवनत्रयं प्रति अश्वा इन्द्रमुप वहन्तु इत् एव इति संबन्धः। वृत्रहन्, वृतु वर्तन इत्यस्माद् रिवतिवृत्यजिपरिमरीत्यादिना रक् प्रत्ययः, कित्त्वाद् गुणाभावः, वर्तत इति वृत्रं सुखम्, तस्मिन्नुपपदे गत्यर्थाद् हन्तेरन्तर्णीतण्यर्थात् ब्रह्मभ्रूणवृत्रेषु क्विप्, वृत्रं सुखं प्राणिनः गमयतीति वृत्रहा, तस्य संबुद्धिः, हे वृत्रहन् प्राणिनां सुखप्रापक, त्वा त्वामुद्दिश्य इदानीं ये वृक्तबर्हिषो वयं सुतवन्तः सोमाभिषवं कृतवन्तः स्म प्रस्रवणेषु निम्नप्रदेशं प्रति आपो न आप इव, स्तोतारः अस्मदीया ऋत्विजः पवित्रस्य समीपे पर्यासते इति (उत्तरेण) संबन्धः।

अनेन प्रकर्षेण मोदः सुखं प्रमोदः, तं नयतीति प्रमोदन इति निरुक्तेर्वृत्रहशब्देन सूचनात् **प्रमोदनमूर्तिरत्र** ॥ ५३५ ॥

॥ ॐ आनन्दाय नमः ॥

**परि स्तोतार आसते। स्वरन्ति त्वा सुते नरो वसो निरेक**
**उक्थिनः। कदा सुतं तृषाण ओक आ गमः॥ ५३६ ॥**

हे वसो उक्थिनः उक्थस्तोत्रपाठकाः नरः नेतार ऋत्विजः सोमे सुते सति निरेके अत्यन्तं त्वां स्वरन्ति स्तुवन्ति। त्वं च तृषाणः पिपासायुक्तः अस्मदीयं ओकः ओकःस्थितसोमं प्रति कदा आगमः आगच्छसि।

अनेन नन्दयतीति नन्दः स्तोत्रम्। आ समन्ताद् ऋत्विग्भिः क्रियमाणः नन्दः उक्थादिस्तोत्रं यस्मिन् स आनन्द इति निरुक्तेः स्वरन्ति निरेके उक्थिन इत्यनेन सूचनाद् **आनन्दमूर्तिरत्र**॥५३६॥

---

१. ऋग्वेद ८-३३. मेध्यातिथिः काण्वः।

॥ ॐ नन्दनाय नमः ॥

**इन्द्र स्वब्दीव वंसगः । कण्वेभिर्धृष्णवा धृषद् वाजं दर्षि**
**सहस्रिणम् । पिशङ्गरूपं मघवन् विचर्षणे ॥ ५३७ ॥**

हे विचर्षणे विशिष्टप्रजानाथ प्रगल्भ मघवन् इन्द्र वंसगः अप्रतिद्वन्द्वः स्वब्दीव वृषभ इव आ सम्यक् धृषत् शत्रूणां धर्षकस्त्वं कण्वेभिः कण्वप्रभृतिभ्यो मेधाविभ्यः सहस्रिणं सहस्रसंख्याकं, यद्वा हस हासशब्दयोरित्यस्मात् पूर्ववद् रक्, हस्रः हासः, तेन सहितः सहस्रः आनन्दः, सः अस्यास्तीति सहस्री तं पिशङ्गरूपं पिशङ्गसरूपं वाजमन्नं दर्शि ददासि ।

अनेन टु नदी समृद्धावित्यतो भावे घञ्, इदित्वान्नुमागमः, नन्दः सुखं तन्नयति प्रापयतीति नन्दनः सुखप्रापक इति वा, नन्दयतीति नन्दनः, नन्दिग्रहपचादिभ्यो ल्युणिन्यचः इति ल्युः, तस्यानादेश इति वा निरुक्तेः सहस्रिणं दर्शीत्यनेन सूचनात् नन्दनमूर्तिरत्र ॥ ५३७ ॥

॥ ॐ नन्दाय नमः ॥

**मक्षू गोमन्तमीमहे । पाहि गायान्धसो मद इन्द्राय**
**मेध्यातिथे । यः संमिश्लो हर्योर्यः सुते सचा ॥ ५३८ ॥**

हे इन्द्र यस्मात् कण्वादिभ्यो वाजादिकं ददासि तस्माद् वयमपि गोमन्तं गवादियुक्तमन्नं मक्षू शीघ्रम् ईमहे प्राप्नुम इति संबन्धः । हे मेध्यातिथे हर्योः हरिभ्यां संमिश्लः यो रथः तस्मिन् रथे स्थितो य इन्द्रः तमिन्द्रं सचा सुखेन इन्द्राय सोमे सुते सति अन्धसः अन्धांसि सोमरसान् पाहि पायय । तदर्थं मदे प्रीत्यर्थं गाय स्तुतिम् । स्तुत्या प्रीत एव सोमं पिबेन्नान्यथेति भावः ।

अनेन स्तुत्या नन्दतीति नन्द इति निरुक्तेः मदे गायेत्यनेन सूचनात् नन्दमूर्तिरत्र ॥ ५३८ ॥

॥ ॐ सत्यधर्मणे नमः ॥

**वज्री रथो हिरण्ययः । यः सुषव्यः सुदक्षिण इनो**
**यः सुक्रतुर्गृणे । य आकरः सहस्रा यः शतामघः ॥ ५३९ ॥**

यो वज्री वज्रधारी यस्य च हिरण्ययो रथोऽस्ति यः सुसव्यः सर्वेषां सव्यभागेऽस्ति यश्च सुदक्षिणः

दक्षिणभागेप्यस्ति यश्च इनः **सर्वस्वामी** यश्च सुक्रतुः सुज्ञानः सुकर्मा वा यश्च आकरः आखणः यश्च सहस्रा सहस्ररूपी यश्च शतमघः वहुयज्ञपूज्यः वहुयशस्वी वा तमिन्द्रं गृणे स्तौमि ।

अनेन धृ धारणे इत्यतः अर्तिस्तुसुहुसृधृक्षीत्यादिना मन्प्रत्ययः, ध्रियते जगदेभिरिति धर्मा अवतार- विशेषाः, सत्याः समीचीना बहवः धर्मा अवतारविशेषा अस्य सन्तीति सत्यधर्मा, धर्मादनिच् केवलादित्यनिच्, इति निरुक्तेः **सत्यधर्ममूर्तिरत्र** ॥ ५३९ ॥

॥ ॐ त्रिविक्रमाय नमः ॥

**इन्द्रो यः पूर्भिदारितः । यो धृषितो योऽवृतो यो अस्ति**
**श्मश्रुषु श्रितः । विभूतद्युम्नश्च्यवनः पुरुष्टुतः क्रत्वा ॥ ५४० ॥**

यः पूर्भित् शम्बराद्यरिपुराणां भेत्ता, यश्च आ अरितः सम्यक् सर्वैः प्राप्तः, य इन्द्रः धृषितः शत्रूणां धर्षकः, यश्च अवृतः आच्छाद्यो न भवति, यश्चाविकारेणैव अस्ति, यश्च श्मश्रुषु देहेषु श्रित आश्रितः यश्च विभूतद्युम्नः अभिव्यक्तसुखः, यश्च च्यवनो बलवान्, यश्च पुरुष्टुतः पुरुभिः स्तुतः यश्च क्रत्वा सर्वेषां सुखकर्ता तमिन्द्रं गृणे इति पूर्वेण संबन्धः ।

अनेन त्रिषु लोकेषु अध्यात्माधिभूताधिदैवाख्येषु त्रिषु स्थानेषु विक्रमः, देहे स्थितस्यापि विकाराद्यभावादिरूपः सर्वभूतैरनावृतत्वादिरूपः शत्रुषु भेदकत्वादिरूपश्च शौर्यविशेषो यस्य सः त्रिविक्रमः, विक्रमः क्रमणे शौर्ये इति रत्नमाला, इति निरुक्तेः इन्द्रो यः पूर्भिदित्यादिना सूचनात् **त्रिविक्रममूर्तिरत्र** ॥ ५४० ॥

॥ ॐ महर्षये नमः ॥

**गौरिव शाकिनः । क ईं वेद सुते सचा पिबन्तं कद् वयो**
**दधे । अयं यः पुरो वि भिनत्त्योजसा मन्दानः ॥ ५४१ ॥**

शाकिनः शक्तिमतः चन्द्रादेर्गौरिव रश्मय इव क्रत्वा सर्वेषां सुखकर्ता यस्तमिन्द्रं सचा सुखेन सुते सोमे सुते सति पिबन्तं तदन्यः क ईं क एव पुरुष वेद ज्ञास्यति । स्वात्मानं स्वयमेव जानाति नान्यः कश्चिदित्यर्थः । य इन्द्रः ओजसा शत्रूणां पुरः पुराणि विभिनत्ति विभेद अयमिन्द्रः मन्दानः प्रीयमाणः कत् कदा वयः सुखं दधे धत्ते धारयेत् ।

अनेन महान् निरुपचरितः ज्ञानी ऋषिः महर्षिरिति निरुक्तेः क ईं वेदेत्यनेन सूचनात् **महर्षिमूर्तिरत्र** ॥ ५४१ ॥

**॥ ॐ कपिलाचार्याय नमः ॥**

**शिप्रन्धसः । दाना मृगो न वारणः पुरुत्रा चरथं दधे ।**
**नकिष्ट्वा नि यमदा सुते गमो महांश्चरसि ॥ ५४२ ॥**

शिप्री सुमुखः इन्द्रः दाना दानः मदयुक्तः वारणो मृगो न मत्तगज इव पुरुत्रा बहुस्थलेषु स्थितः सन् चरथं सुखम् अन्धसः अन्धांसि च दधे धत्ते । किञ्च हे इन्द्र सोमे सुते सति त्वं आगमः आगच्छसि । आगत्य च महान् पूज्यः चरसि आचरितुं योग्यो भवसि । मन्त्राद्युपदेष्टा आचार्यो भवसि । तत्र हि तेषामभिव्यक्तिः पूर्वमिति कर्मनिर्णयवचनात् । किंचैवंभूतं त्वां नकिः न कोपि नि यमत् नियमयति । कश्चिदपि त्वन्नियामको नास्ति । उपदेष्टा नास्तीति यावत् ।

अनेन कं सुखं पिबतीति कपिः, कशब्दे उपपदे पातेः किः, लाति शिष्याननुगृण्हातीति लः, आङ्पूर्वकात् चरेराङि चागुराविति यतो निषेधाद् ऋहलोर्ण्यदिति ण्यदत्र, वृद्धिः, आचरणीयत्वादाचार्यः, कपिश्चासौ लश्चासावाचार्यश्च कपिलाचार्य इति निरुक्तेः चरथं दधे महांश्चरसीत्यादिना सूचनात् **कपिलाचार्यमूर्तिरत्र** ॥ ५४२ ॥

**॥ ॐ कृतज्ञाय नमः ॥**

**ओजसा । य उग्रः सन्ननिष्टृतः स्थिरो रणाय संस्कृतः ।**
**यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥ ५४३ ॥**

यदि कश्चिदिन्द्रभक्तः रणाय स्थिरः संस्कृतः दंशितः कवचादिना सन्नद्धश्च अनिस्तृतः अपलायितश्च तमिन्द्रं स्तौति तदाऽसौ मघवा इन्द्रः स्तोतुस्तस्य हवमाह्वानं शृणवत् शृणोति । श्रुत्वा च ओजसा शत्रूणामुग्रः क्रूरः सन् आ गमत् आगच्छति । आगत्य च न योषति, यु मिश्रणामिश्रणयोः, अमिश्रितो न भवति । तस्मिन् प्रविष्टो भवतीत्यर्थः ।

अनेन कृतं हवं शृणोति जानातीति कृतज्ञ इति निरुक्तेः शृणवद् हवमित्यनेन सूचनात् कृतज्ञमूर्तिरत्र ॥ ५४३ ॥

 

॥ ॐ मेदिनीपतये नमः ॥

**सत्यमित्था वृषेदसि वृषजूतिर्नोऽवृतः । वृषा ह्युग्र**
**शृण्विषे परावति वृषो अर्वावति श्रुतः ॥ ५४४ ॥**

हे इन्द्र इत्था इत्थं पूर्वोक्तप्रकारेण त्वं वृषा श्रेष्ठोऽसि इत् एव सत्यमेतत् । वृषजूतिः अभीष्टवर्षणशीलाभिप्रायवान् नः अस्मान् प्रति अवृतः आवृतो न भवसि । हे उग्र परावति परलोके वृषा श्रेष्ठत्वेन शृण्विषे श्रूयसे हि । हे वृष वर्षणशील इन्द्र अर्वावति इहलोकेपि वृषः श्रेष्ठत्वेन श्रुतः प्रसिद्धोसि ।

अनेन ञि मिदा स्नेहने इत्यतो भावे घञ्, मेदः स्नेहनम् अभीष्टवर्षणं तदस्या अस्तीति मेदिनी जूतिः भक्ताभीष्टवर्षणाभिप्रायः, तस्याः पतिः पालक आश्रयः, भक्ताभीष्टवर्षणशीलाभिप्रायवान् मेदिनीपतिरिति निरुक्तेः वृषजूतिरित्यनेन सूचनात् मेदिनीपतिमूर्तिरत्र ॥ ५४४ ॥

॥ ॐ त्रिपदाय नमः ॥

**वृषणस्ते अभीशवो वृषा कशा हिरण्ययी । वृषा रथो**
**मघवन् वृषणा हरी वृषा त्वं शतक्रतो ॥ ५४५ ॥**

हे इन्द्र ते तव अभीषवः अश्वप्रग्रहविशेषाः वृषणः वृषाणः श्रेष्ठाः । ते हिरण्ययी हिरण्मयी कशा च वृषा श्रेष्ठा । हे मघवन् ते रथोपि वृषा । ते हरी अश्वौ च वृषणा वृषाणौ श्रेष्ठौ । हे शतक्रतो त्वमपि वृषा श्रेष्ठः ।

अनेन त्रीणि अश्वरथकशादीनि पदानि लक्षणानि चिन्हानि यस्य सः त्रिपदः, पदं व्यवसितस्थान-प्राणलक्ष्मांघ्रिवस्तुष्वित्यभिधानम्, इति निरुक्तेः त्रिपदमूर्तिरत्र ॥ ५४५ ॥

॥ ॐ त्रिदशाध्यक्षाय नमः ॥

**वृषा सोता सुनोतु ते वृषन्नृजीपिन्ना भर । वृषा**
**दधन्वे वृषणं नदीष्वा तुभ्यं स्थातर्हरीणाम् । एन्द्र ॥ ५४६ ॥**

हे इन्द्र यः सोता यज्ञकर्मण्यधिकृतः ते त्वामुद्दिश्य सुनोतु सुनोति सोममभिषुणोति । सोपि वृषा

श्रेष्ठ एव। हे ऋजीषिन् ऋजुगमन वृषन् श्रेष्ठ वृषणं श्रेष्ठं पुमर्थं अस्मान् आ भर। हे आस्थातः निर्विकार यस्तुभ्यं त्वदीयानां हरीणामश्वानां नदीषु नदीजलप्रवृद्धधानादिषु धानादिकं दधन्वे दद्यात् सोपि वृषा श्रेष्ठः।

अनेन तिस्रो दशाः श्रेष्ठाः यष्टृत्वाधिकार यागकर्तृत्वाश्वधानादानाख्या अवस्था येषां ते त्रिदशा यागाधिकारिणः, तेषामध्यक्षः, अक्षू व्याप्तौ पचादिः, स्वामीति निरुक्तेः यः सोतेत्यादिना सूचनात् त्रिदशाध्यक्षमूर्तिरत्र॥ ५४६॥

॥ ॐ महाशृङ्गाय नमः ॥

**याहि पीतये मधु शविष्ठ सोम्यम्। नायमच्छा मघवा**
**शृणवद् गिरो ब्रह्मोक्था च सुक्रतुः। वहन्तु त्वा रथेष्ठाम्॥ ५४७॥**

हे इन्द्र शविष्ठ सुखवत्तम सोम्यमक्रूरं मधु स्वादुरसं सोमं पीतये पातुं आ याहि। आगत्य च नः अस्मदीया गिरो वचनानि ब्रह्म वेदरूपाणि उक्था उक्थानि उक्थस्तोत्राणि च सुक्रतुः मघवा अच्छ अच्छः, त्रिष्वच्छे विमले ना तु तल्लोके स्फटिकेप्ययमिति रत्नमाला, विमलः प्रधानः। अद भक्षणे इत्यतः क्विप्, अदुपपदे छो छेदने इत्यतः डः, अतिशयेन छिनत्तीत्यच्छः अयमिन्द्रः शृणवत् शृणुयात्। यद्वा ब्रह्मा उक्थानि चन इव अस्मदीया गिरः शृणवदिति योज्यम्। हे इन्द्र रथेष्ठां रथस्थितं त्वां वहन्तु, हरय इति संबन्धः।

अनेन शॄ हिंसायामित्यतः शॄणातेर्ह्रस्वश्चेत्यनेन गन् प्रत्ययः, स किच्च, कित्त्वाद् गुणाभावः, धातोर्ह्रस्वः प्रत्ययस्य नुडागमश्च। 'शृङ्गं विषाणे प्राधान्ये सानौ क्रीडाम्बुयन्त्रके। पर्वताग्रे च' इति रत्नमालोक्तेः शृङ्गं प्राधान्यम्। महदुत्तमं शृङ्गं प्राधान्यं यस्य सः महाशृङ्ग इति निरुक्तेः अच्छशब्देन सूचनात् महाशृङ्गमूर्तिरत्र॥ ५४७॥

॥ ॐ कृतान्तकृते नमः ॥

**आ हरयो रथयुजः। तिरश्चिदर्यं सवनानि वृत्रहन्**
**अन्येषां या शतक्रतो। अस्माकमद्यान्तमम्॥ ५४८॥**

हे वृत्रहन् शतक्रतो रथयुजो रथे संयोजिताः हरयः अस्माकमर्यं स्वामिनम् अन्तममन्ते मेयं सत्सिद्धान्ते सर्वोत्तमत्वेन ज्ञातं त्वां सवनानि प्रतिरः तिर्यङ्मुखाः अद्य आवहन्तु। एवमन्येषामधिकारिणां या यानि सवनानि तानि प्रत्यपि आवहन्तु।

अनेन अम गत्यादिषु इत्यस्मात् तन् प्रत्ययः, अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेऽन्तरे इत्यभिधानादन्तो निर्णयः, कृतः अन्तो येन सः कृतान्तः सिद्धान्तः, तस्मिन् क्रियते निर्णीयते इति कृत्, इति निरुक्तेः अन्तमशब्देन सूचनात् **कृतान्तकृन्मूर्तिरत्र**॥ ५४८॥

**॥ ॐ महावराहाय नमः ॥**

**स्तोमं धिष्व महामह। अस्माकं ते सवना सन्तु शंतमा**

**मदाय द्युक्ष सोमपाः। [1]मो पु त्वा वाघतश्चन॥ ५४९॥**

हे महामह महामाहात्म्य अत्युत्तम स्तोमं स्तोत्रं धिष्व हृदये धत्स्व। स्तोत्रविषयो भव। हे द्युक्ष द्यौः स्वर्गः क्षः निवासस्थानं यस्य तस्य संबुद्धिः, स्वर्गस्थ सोमपाः इन्द्र अस्माकं सवना सवनानि शंतमा शंतमानि सुखकराणि ते मदाय उत्साहाय सन्तु। हे इन्द्र त्वा त्वां वाघतश्चन स्तुवन्तोऽपि जनाः सु अस्मदधिकं मा निरीरमन् न रमेयुरित्युत्तरेण संबन्धः।

अनेन (वरं) क्लीबे तु कुंकुमे श्रेष्ठे त्रिष्वित्युक्तेः वरं माहात्म्यं महदुत्कृष्टं वरं माहात्म्यं यस्य स महावरः। आङ्पूर्वाद् ओ हाक् गतावित्यत आतश्चोपसर्गे इति कः, सम्यक् स्तोत्राणि गच्छति हृदये गमयतीत्याहः, महावरश्चासावाहश्च महावराहः, इति निरुक्तेः महामह स्तोमं धित्स्वेत्यनेन सूचनात् **महावराहमूर्तिरत्र**॥ ५४९॥

**॥ ॐ गोविन्दाय नमः ॥**

**आरे अस्मन्निरीरमन्। आरात्ताचित् सधमादं न आ**

**गहीह वा सन्नुप श्रुधि। इमे हि ते ब्रह्मकृतः सुते॥ ५५०॥**

हे इन्द्र आरात्ताचित् दूरे वर्तमानोपि अस्मदारे अस्मत्समीपे नः सधमादं यज्ञं प्रति आ गहि

१. ऋग्वेद ७-३२, मैत्रावरुणिर्वसिष्ठः।

श्रेष्ठ एव । हे ऋजीषिन् ऋजुगमन वृषन् श्रेष्ठ वृषणं श्रेष्ठं पुमर्थं अस्मान् आ भर । हे आस्थातः निर्विकार यस्तुभ्यं त्वदीयानां हरीणामश्वानां नदीषु नदीजलप्रवृद्धधानादिषु धानादिकं दधन्वे दद्यात् सोपि वृषा श्रेष्ठः ।

अनेन तिस्रो दशाः श्रेष्ठाः यष्टृत्वाधिकार यागकर्तृत्वाश्वधानादानाख्या अवस्था येषां ते त्रिदशा यागाधिकारिणः, तेषामध्यक्षः, अक्षू व्याप्तौ पचादिः, स्वामीति निरुक्तेः यः सोतेत्यादिना सूचनात् **त्रिदशाध्यक्षमूर्तिरत्र** ॥ ५४६ ॥

॥ ॐ महाशृङ्गाय नमः ॥

**याहि पीतये मधु शविष्ठ सोम्यम् । नायमच्छा मघवा**
**शृणवद् गिरो ब्रह्मोक्था च सुक्रतुः । वहन्तु त्वा रथेष्ठाम् ॥ ५४७ ॥**

हे इन्द्र शविष्ठ सुखवत्तम सोम्यमक्रूरं मधु स्वादुरसं सोमं पीतये पातुं आ याहि । आगत्य च नः अस्मदीया गिरो वचनानि ब्रह्म वेदरूपाणि उक्था उक्थानि उक्थस्तोत्राणि च सुक्रतुः मघवा अच्छ अच्छः, त्रिष्वच्छे विमले ना तु तल्लोके स्फटिकेप्ययमिति रत्नमाला, विमलः प्रधानः । अद भक्षणे इत्यतः क्विप्, अदुपपदे छो छेदने इत्यतः डः, अतिशयेन छिनत्तीत्यच्छः अयमिन्द्रः शृणवत् शृणुयात् । यद्वा ब्रह्मा उक्थानि चन इव अस्मदीया गिरः शृणवदिति योज्यम् । हे इन्द्र रथेष्ठां रथस्थितं त्वां वहन्तु, हरय इति संवन्धः ।

अनेन शॄ हिंसायामित्यतः शॄणातेर्हस्वश्चेत्यनेन गन् प्रत्ययः, स किच्च, कित्त्वाद् गुणाभावः, धातोर्हस्वः प्रत्ययस्य नुडागमश्च । 'शृङ्गं विषाणे प्राधान्ये सानौ क्रीडाम्बुयन्त्रके । पर्वताग्रे च' इति रत्नमालोक्तेः शृङ्गं प्राधान्यम् । महदुत्तमं शृङ्गं प्राधान्यं यस्य सः महाशृङ्ग इति निरुक्तेः अच्छशब्देन सूचनात् **महाशृङ्गमूर्तिरत्र** ॥ ५४७ ॥

॥ ॐ कृतान्तकृते नमः ॥

**आ हरयो रथयुजः । तिरश्चिदर्य सवनानि वृत्रहन्**
**अन्येषां या शतक्रतो । अस्माकमद्यान्तमम् ॥ ५४८ ॥**

हे वृत्रहन् शतक्रतो रथयुजो रथे संयोजिताः हरयः अस्माकमर्यं स्वामिनम् अन्तममन्ते मेयं सत्सिद्धान्ते सर्वोत्तमत्वेन ज्ञातं त्वां सवनानि प्रतिरः तिर्यङ्मुखाः अद्य आवहन्तु । एवमन्येषामधिकारिणां या यानि सवनानि तानि प्रत्यपि आवहन्तु ।

अनेन अम गत्यादिषु इत्यस्मात् तन् प्रत्ययः, अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेऽन्तरे इत्यभिधानादन्तो निर्णयः, कृतः अन्तो येन सः कृतान्तः सिद्धान्तः, तस्मिन् क्रियते निर्णीयते इति कृत्, इति निरुक्तेः अन्तमशब्देन सूचनात् **कृतान्तकृन्मूर्तिरत्र** ॥ ५४८ ॥

॥ ॐ महावराहाय नमः ॥

**स्तोमं धिष्व महामह । अस्माकं ते सवना सन्तु शंतमा**

**मदाय द्युक्ष सोमपाः । [१]मो षु त्वा वाघतश्चन ॥ ५४९ ॥**

हे महामह महामाहात्म्य अत्युत्तम स्तोमं स्तोत्रं धिष्व हृदये धत्स्व । स्तोत्रविषयो भव । हे द्युक्ष द्यौः स्वर्गः क्षः निवासस्थानं यस्य तस्य संबुद्धिः, स्वर्गस्थ सोमपाः इन्द्र अस्माकं सवना सवनानि शंतमा शंतमानि सुखकराणि ते मदाय उत्साहाय सन्तु । हे इन्द्र त्वा त्वां वाघतश्चन स्तुवन्तोऽपि जनाः सु अस्मदधिकं मा निरीरमन् न रमेयुरित्युत्तरेण संबन्धः ।

अनेन (वरं) क्लीवे तु कुंकुमे श्रेष्ठे त्रिष्वित्युक्तेः वरं माहात्म्यं महदुत्कृष्टं वरं माहात्म्यं यस्य स महावरः । आङ्पूर्वाद् ओं हाक् गतावित्यत आतश्चोपसर्गे इति कः, सम्यक् स्तोत्राणि गच्छति हृदये गमयतीत्याहः, महावरश्चासावाहश्च महावराहः, इति निरुक्तेः महामह स्तोमं धित्स्वेत्यनेन सूचनात् **महावराहमूर्तिरत्र** ॥ ५४९ ॥

॥ ॐ गोविन्दाय नमः ॥

**आरे अस्मन्निरीरमन् । आरात्ताचित् सधमादं न आ**

**गहीह वा सन्नुप श्रुधि । इमे हि ते ब्रह्मकृतः सुते ॥ ५५० ॥**

हे इन्द्र आरात्ताचित् दूरे वर्तमानोपि अस्मदारे अस्मत्समीपे नः सधमादं यज्ञं प्रति आ गहि

१. ऋग्वेद ७-३२. मैत्रावरुणिर्वसिष्ठः ।

आगच्छ । आगत्य च इह सन् तिष्ठन् अस्मदीयं श्रवम् उपश्रुधि शृणु । हे इन्द्र इमे ब्रह्मकृतः स्तोतारः ते त्वदर्थं सोमे सुते सति आसते त्वामुपासते । निरीरमन् रमेयुश्च ।

अनेन गमेर्डोः, गच्छति अवगमयतीति गो वाक् स्तोत्रम्, तस्मिन्नुपपदे विद्लृ लाभे इत्यतः गवादिषु विन्देः संज्ञायामिति शप्रत्ययः, शे मुचादीनामिति नुम्, गां विन्दतीति गोविन्द इति निरुक्तेः इह वा सन्नुपश्रुधीत्यनेन सूचनाद् **गोविन्दमूर्तिरत्र** ॥ ५५० ॥

॥ ॐ सुषेणाय नमः ॥

**सचा मधौ न मक्ष आसते । इन्द्रे कामं जरितारो**
**वसूयवो रथे न पादमा दधुः । इम इन्द्राय सुन्विरे ॥ ५५१ ॥**

जरितारः स्तोतारः इमे मधौ मधुनि मक्षो न मक्षिका इव सचा सुखेन आसते उपविशन्ति । किञ्च वसूयवो धनकामाः काममिष्टम् इन्द्रे रथे न रथे इव पादमादधुः स्थानं चक्रुः, संबद्धा भवन्ति । इमे च सोमा इन्द्राय सुन्विरे, कर्मणि रूपमेतत्, सुताः सन्ति ।

अनेन षीङ् बन्धने इत्यतः कृपॄवृञ्जॄसिद्रुपन्यनिस्वपिभ्यो निदिति नप्रत्ययो निच्च । सिनोति बध्नातीति सेनः । सु सम्यक् स्वात्मनि भक्तान् सिनोति बध्नाति स्थापयतीति सुषेण इति निरुक्तेः रथे न पादमादधुरित्यनेन सूचनात् **सुषेणमूर्तिरत्र** ॥ ५५१ ॥

॥ ॐ कनकाङ्गदिने नमः ॥

**सोमासो दध्याशिरः । ताँ आ मदाय वज्रहस्त पीतये**
**हरिभ्यां याह्योक आ । श्रवच्छुत्कर्ण ईयते ॥ ५५२ ॥**

व्रज गतावित्यतः क्विप्, रीङ् क्षये इत्यतो डः, गमनशीलं शत्रूणां क्षयकरं वज्रं हस्ते यस्य तस्य संबुद्धिः हे वज्रहस्त इन्द्र दध्याशिरो दधिमिश्रिता ये सोमासः सोमाः तान् सोमान् मदाय मदार्थं पीतये पानाय ओको यज्ञसदनं प्रति हरिभ्यामश्वाभ्याम् आयाहि । श्रुत्कर्णः याच्ञादिश्रवणकर्णः इन्द्रः श्रवत् श्रोता ईयते ज्ञायते ।

अनेन कन दीप्तिकान्तिगतिष्वित्यतो गत्यर्थात् कनतेः कर्तर्यक्रन् प्रत्ययः । कनकं गमनशीलं

वेगवत्। अङ्गानि शत्रूणां विदारयतीत्यङ्गदम्। दृ विदारणे इत्यतो डः। कनकं वेगवद् अङ्गदं शत्रुशरीरभेदकं वज्रं हस्ते अस्यास्तीति कनकाङ्गदी इति निरुक्तेः वज्रहस्तशब्देन सूचनात् **कनकाङ्गदिमूर्तिरत्र** ॥ ५५२ ॥

॥ ॐ गुह्याय नमः ॥

**वसूनां नू चिन्नो मर्धिषद् गिरः। सद्यश्चिद् यः सहस्राणि**
**शता ददन्नकिर्दित्सन्तमा मिनत्। स वीरो अप्रतिष्कुतः ॥ ५५३ ॥**

य इन्द्रो वसूनां दाता शतानि सहस्राणि वा ददद् दद्यात् तमिन्द्रं दित्सन्तमस्मभ्यं दातुमिच्छन्तं नकिः न कोपि अमिनत् हिंस्यात्। कश्चिदपि न प्रकाशयेत्, अयोग्याय नोपदिशेदित्यर्थः। स वीर इन्द्रः अप्रतिष्कुतः अप्रतिद्वन्द्वः सद्यश्चिदिदानीमेव नो गिरः स्तुतीः नूचित् नैव मर्धिषत्, फलहीनाः न कुर्यात्।

अनेन गुहू संवरणे इत्यतः शंसिमहिगुहिभ्यो वेति वक्तव्यमिति क्यबिति धातुवृत्तिकारोक्तेः गुहेः क्यप्, कित्त्वाद् गुणाभावः, संवरणीय आच्छादनीयोऽप्रकाश्यो गुह्य इति निरुक्ते-र्नकिर्दित्सन्तमामिनदित्यनेन सूचनाद् गुह्यमूर्तिरत्र ॥ ५५३ ॥

॥ ॐ गभीराय नमः ॥

**इन्द्रेण शूशुवे नृभिः। यस्ते गभीरा सवनानि वृत्रहन्**
**त्सुनोत्या च धावति। भवा वरूथम् ॥ ५५४ ॥**

हे वृत्रहन् यः अधिकारी ते त्वज्ज्ञानार्थं गमीरा गभीराणि, गाधृ प्रतिष्ठालिप्सयोरित्यतो गभीरगम्भीरौ ईरन्प्रत्ययान्तावेतौ निपात्येते धातोर्हस्वः धस्य च भः, लिप्साविषयाणि सवनानि सोमान् सुनोति अभिषुणोति आधावति च त्वां स्तुतिभिरुपतिष्ठते च स पुरुषः इन्द्रेण प्रसन्नेन त्वया नृभिः परिचारकैर्जनैः शुशुवे, गत्यर्थस्य श्वयते रूपमेतत्, उपगम्यते सेव्यो भवति। वरुथम्, वृञ् वरणे इत्यतः कर्मणि जॄवृञ्भ्यामूथन्नित्यूथन्प्रत्ययः, व्रियत इति वरूथं वेश्म। वरूथो रथगुप्तौ ना क्लीबे सुकृतवेश्मनोरिति रत्नमाला। तस्य पुरुषस्य त्वं वेश्म भव सुखकरो भव सत्पान्थजनगेहायेत्युक्तेः।

अनेन गभीरा अभिलाषविषया सोमरसा अस्यास्तीति गभीरः, अर्शआदिभ्योऽच्, इति निरुक्तेः यस्ते गभीरा सवनानीत्यनेन सूचनाद् **गभीरमूर्तिरत्र** ॥ ५५४ ॥

**॥ ॐ गहनाय नमः ॥**

**मघवन् मघोनां यत् समजासि शर्धतः । वि त्वाहतस्य**
**वेदनं भजेमह्या दूणाशो भरा गयम् । सुनोता ॥ ५५५ ॥**

हे मघवन् इन्द्र मधोनाम् (मखवतां यजमानानां) भविष्यतां वरूथं भवेति संबन्धः । यद् यस्मात् त्वं शर्धतः उत्सहमानान् शत्रून् समजासि संप्रेरयः तस्मात् त्वाहतस्य अस्मासु स्थितेन त्वया हतस्य शत्रोः वेदनं धनं विभजेमहि विशेषेण लभेमहि । किञ्च दूणाशः दुर्नशः नाशयितुमशक्यः अत एव गहनस्तं गयं गृहं धनं वा आभर अस्मभ्यमाहर ।

अनेन गाहू विलोडने इत्यतो गाहेर्गहश्चेति क्यप्प्रत्ययो[१] गहादेशश्च, योरनादेशः? न विलोडनीयो गहन इति निरुक्तेः दूणाश इत्यनेन सूचनाद्, यद्वा गाहू विलोडने इत्यतः कप्रत्ययः, उपधाया[२] गहः, गहं तं नयतीति गहन इति निरुक्तेः भरा गयमित्यनेन सूचनाद् **गहनमूर्तिरत्र** ॥ ५५५ ॥

**॥ ॐ गुप्ताय नमः ॥**

**सोमपाव्ने सोममिन्द्राय वज्रिणे । पचता पक्तीरवसे कृणुध्वमित्**
**पृणन्नित् पृणते मयः । मा स्रेधत सोमिनः ॥ ५५६ ॥**

हे मदीयाः पुरुषाः वज्रिणे सोमपाव्ने सोमस्य पात्रे इन्द्राय सोमं सुनोत अभिषुत । अवसे रक्षणाय पक्तीः पक्तव्यान् पुरोडाशादीन् पचत । कृणुध्वमित् एव । इन्द्रप्रियाणि कर्माणि कुरुतैव । इन्द्रो हि मयः सुखं रक्षणं वा पृणन्नित् प्रयच्छन्नेव पृणते गच्छति, हवींषि प्रतीति शेषः । सोमिनः सोमवतो यागान् मा स्रेधत मा हिंसिष्ठ । नोत्सृजत ।

---

१. युचप्रत्ययः इति स्याद्वा ? तथात्वे योरनादेशः इति सङ्गतं स्यात् ।

२. 'उपधायाः ह्रस्वः गहः' इति पाठः स्याद्वा ?

अनेन गुपू रक्षणे इत्यतः कर्तरि क्तः, रक्षको गुप्त इति निरुक्तेः अवसे पचता पृणन्नित् पृणते इत्यादिना सूचनाद् गुप्तमूर्तिरत्र ॥ ५५६ ॥

॥ ॐ चक्रगदाधराय नमः ॥

**दक्षता महे कृणुध्वं राय आतुजे । तरणिरिज्जयति**
**क्षेति पुष्यति न देवासः कवत्नवे ॥ ५५७ ॥**

हे जनाः दक्षत, दक्षवक्षौ शीघ्रार्थे इति धातोः यागादिकं कर्तुमुत्सहध्वम् । महे महते आतुजे, तुजिर्हिंसाकर्मा दानकर्मा वा, शत्रूणामभिहिंसकाय धनानां प्रदात्रे वा इन्द्राय राये धनलाभार्थं कृणुध्वं कर्माणि कुरुत च । तॄ प्लवनतरणयोरित्यस्मादनिप्रत्ययः । तरणिरित् कर्मसु त्वरित एव जयति शत्रून् । क्षेति गृहे निवसति निवासयति च । यद्वा टुक्षु शब्दे इत्यस्य छन्दसि रूपमेतत् । साध्वनेन कृतमिति भक्तान् प्रति शब्दं करोतीति वा । सर्वाधार इति यावत् । कवत्नवे कुत्सितक्रियायै (अपि) पुष्यति पुष्टो भवति, प्रजया पशुभिश्च पोषयतीति वा । कवोपसृष्टस्य अतेः सातत्यगमनकर्मणो रूपमेतत् । देवासो न देवा न भवन्ति दुःखप्रधाना भवन्तीत्यर्थः ।

अनेन ढुव्यडुं (?) करणे इत्यस्मात् करोतेर्ढे चेति क्नुप्रत्ययः । द्वित्वमभ्यासकार्यं यणादेशश्च । करोति शत्रुजयादिकं धनदानादिकं चेति चक्रः । गद व्यक्तायां वाचीत्यतः खनो घचेति घित्करणादन्यत्रापि घः । गदति भक्तान् प्रति वदतीति गदः । आ सम्यग् धाति[१] प्रजाः पोषयतीत्याधरः । चक्रश्चासौ गदश्चासावाधरश्चेति चक्रगदाधर इति निरुक्तेः आतुजे तरणिरिज्जयति क्षेति पुष्यतीत्यादिना सूचनात् चक्रगदाधरमूर्तिरत्र ॥ ५५७ ॥

॥ ॐ वेधसे नमः ॥

**[२]त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः । स इन्द्र**
**स्तोमवाहसामिह श्रुध्युप स्वसरमा गहि । मत्स्वा सुशिप्र ॥ ५५८ ॥**

हे सुशिप्र वज्रिन् ह्यः प्रसिद्धाः भूर्णयो बहवो ये नरः जनाः त्वामित् त्वामेव आ अपीप्यन्

१. 'धरति' इति पाठः स्याद्वा ?

२. ऋग्वेद ८-९९-१, नकिः सुदासः(७-३२-१०) इति प्रगाथस्थानेऽयं प्रगाथः प्रक्षिप्त आरण्यकवाक्यानुरोधेन।

अपाययन् अपूजयन् । स त्वं तेषां स्तोमवाहसां स्तुवतां जनानां स्वसरं गृहम् उप आ गहि । आगत्य च हवं शृणु । श्रुत्वा च मत्स्व प्रीतो भव ।

अनेन विध विधाने इत्यस्मादसुन्प्रत्यये वा, विधाञो वेध चेति विपूर्वाद् डु धाञ् धारणपोषणयोरित्यस्मादसिप्रत्यये धातोर्वेधादेशे च वा, भक्तगृहं प्रति गमनं विदधातीति वा, भक्तकृतमाह्वानं शृणोति जानातीति वा, वेधाः, अत्वसन्तस्य चाधातोरिति दीर्घः, इति निरुक्तेः स्वसरमागहि श्रुधि हवमित्यनेन सूचनाद् **वेधोमूर्तिरत्र** ॥ ५५८ ॥

॥ ॐ स्वाङ्गाय नमः ॥

**हरिवस्तदीमहे त्वे आ भूषन्ति वेधसः । तव श्रवांस्युपमा-**
**न्युक्थ्या सुतेष्विन्द्र गिर्वणः । उदिन्वस्य रिच्यते ॥ ५५९ ॥**

हे हरिवः तव वेधसः त्वत्पूजारूपकर्मकर्तारः त्वे त्वयि श्रवांसि कीर्तिजातानि उपमानि सदृशानि उक्था उक्थस्तोत्राणि उक्थस्तोत्रैः आ समन्तात् भूषन्ति भूषयन्ति । तत् तस्मात् हे गिर्वणः सोमेषु सुतेषु सत्सु त्वाम् ईमहे स्तुमः । अस्य इन्द्रस्य अंशः यज्ञेषु दीयमानो भागः उद् रिच्यते उद्रिक्तो भवति अधिको भवतीत्यर्थः ।

अनेन स्वशब्दो धनवाची, कीर्तिरिव महतां धनम् । स्वकीर्तिरूपं धनं गमयति स्वात्मानं प्रापयति भूषयतीति स्वाङ्गः । स्वशब्दे उपपदे अगि गतावित्यस्मात् पचाद्यच्, इदित्वान्नुमागम इति निरुक्तेः तव श्रवांसि आभूषन्तीत्यनेन सूचनात् **स्वाङ्गमूर्तिरत्र** ॥ ५५९ ॥

॥ ॐ अजिताय नमः ॥

**अंशो धनं न जिग्युषः । य इन्द्रो हरिवान् न दभन्ति**
**तं रिपो दक्षं दधाति सोमिनि । मन्त्रमखर्वं सुधितम् ॥ ५६० ॥**

जिग्युषः शत्रून् जितवतः धनं न धनमिव, शत्रुजयशीलस्य धनं यथाऽभिवर्धते तथा इन्द्रस्य अंशो यज्ञियो भागः उद्रिच्यते । इन्द्रस्य त्रिष्वपि सवनेषु सोमपानमस्ति न तथेतरेषाम् । माध्यंदिनं सर्वमैन्द्रमेव । अपि च ये हरिवानिन्द्रः सोमिनि यजमाने दक्षं बलं दधाति । किञ्च रिपः रिपवः न दभन्ति तमिन्द्रं न हिंसन्ति । केनाप्ययमजितः । किञ्च अखर्वमनल्पं सुधितं सुविहितं मन्त्रं स्तोत्रं दधाति आत्मनि सन्दधाति ।

अनेन केनापि जितो नेत्यजित इति निरुक्तेः न दभन्ति तं रिप इत्यनेन सूचनाद् **अजितमूर्तिरत्र** ॥ ५६० ॥

॥ ॐ कृष्णाय नमः ॥

**सुपेशसं दधात यज्ञियेष्वा । पूर्वीश्चन प्रसितय-**
**स्तरन्ति तं य इन्द्रे कर्मणा भुवत् । कस्तमिन्द्र ॥ ५६१ ॥**

यो जनः सुपेशसं निर्दोषं मन्त्रं यज्ञियेषु यजनीयेषु देवेषु मध्ये इन्द्रे दधात दधाति, इन्द्रं स्तौति, किञ्च कर्मणा यागादिना इन्द्रे भुवत् इन्द्रस्य चित्तविषयो भवेत्, इन्द्रेणाकृष्टो भवेत्, तं जनं पूर्वीरनादयः प्रसिद्धा अविद्याकामकर्मादिबन्धनानि, चनेति नञर्थे निपातः, तरन्ति चन नैनमतिक्रामन्ते, बाधकानि न भवन्तीत्यर्थः । (शिष्टमुत्तरान्वयि) ।

अनेन कृष विलेखने इत्यस्मात् कृषेर्नगिति नक्, कित्त्वाद् गुणाभावः, कर्षति सज्जनानां मनः स्वात्मनीति कृष्ण इति निरुक्तेरिन्द्रे कर्मणा भुवदित्यनेन सूचनात् **कृष्णमूर्तिरत्र** ॥ ५६१ ॥

॥ ॐ दृढाय नमः ॥

**त्वावसुमा मर्त्यो दधर्षति । श्रद्धा इत् ते मघवन्**
**पार्ये दिवि वाजी वाजं सिषासति । मघोनः स्म वृत्रहत्येषु ॥ ५६२ ॥**

हे इन्द्र तव चित्ते यो भवेत्, त्वावसुं त्वं वसुर्व्यापको यस्य सः त्वावसुः, तं जनं को मर्त्यः आ दधर्षति आधर्षेत् । स एव दृढो भवेत् । हे मघवन् ते त्वदर्थं यः श्रद्धा श्रद्धया युक्तः सन् वाजी हविष्मान् भवेत् पार्येदिवि सौत्येऽहनि इत् एव सः वाजमन्नं बलं वा सिषासति सेवते । (शिष्टमुत्तरान्वयि)।

अनेन दृढा बलिस्थूलगाढा इति रत्नमालोक्तेः स्वभक्तं स्थूलं बलिनं वा करोतीति दृढः, तत्करोति तदाचष्टे इति णिच् तल्लोपश्चेति निरुक्तेः **दृढमूर्तिरत्र** ॥ ५६२ ॥

॥ ॐ सङ्कर्षणाय नमः ॥

**चोदय ये ददति प्रिया वसु । तव प्रणीती हर्यश्व**
**सूरिभिर्विश्वा तरेम दुरिता । तवेदिन्द्र ॥ ५६३ ॥**

हे इन्द्र मघोनो धनवतः तव त्वदर्थं प्रिया प्रियाणि वसु वसूनि ये जनाः ददति तान् वृत्रहत्येषु ज्ञानमार्गेषु ज्ञानयुद्धेषु चोदय प्रेरय। हे हर्यश्व तव प्रणीती प्रणीत्या प्रेरणया सूरिभिः स्तोतृभिः सह विश्वा विश्वानि दुरिता दुरतानि तरेम स्म। इत् एव।

अनेन दुरितानि भक्तेभ्यः संकर्षति अपकर्षतीति सङ्कर्षणः, संपूर्वात् कृषेर्नन्दिग्रहपचादिभ्यो ल्युणिन्यच इति नन्द्यादित्वात् ल्युः, योरनादेशो गुणश्च, इति निरुक्तेः विश्वा तरेम दुरितेत्यनेन सूचनात् **सङ्कर्षणमूर्तिरत्र** ॥ ५६३ ॥

॥ ॐ अच्युताय नमः ॥

**अवमं वसु त्वं पुष्यसि मध्यमम्। सत्रा विश्वस्य परमस्य**
**राजसि नकिष्ट्वा गोषु वृण्वते। त्वं विश्वस्य ॥ ५६४ ॥**

हे इन्द्र अवममधमं त्रपुसीसादिकं धनं यद्वा [illegible]मं वसु अवमं मध्यमं वसु रजतहिरण्यादिकमान्तरिक्षं वा पुष्यसि। विश्वस्य सर्वस्य परमस्योत्तमस्यापि रत्नादेर्दिव्यस्य वा वसुनः राजसि ईशिषे। न केवलं धनस्य (अपि तु) विश्वस्य जगतोपि ईशिषे इत्येतत् सत्रा अबाधितम् अप्रच्युतजगदैश्वर्यवानित्यर्थः। अपि च त्वा त्वां गोषु निमित्तेषु नकिः वृण्वते केपि न वारयन्ति।

अनेन न च्यवते जगदैश्वर्यादिभ्य इत्यच्युत इति निरुक्तेः त्वं विश्वस्येशिषे सत्रा इत्यनेन सूचनाद् **अच्युतमूर्तिरत्र** ॥ ५६४ ॥

॥ ॐ वरुणाय नमः ॥

**धनदा असि श्रुतो य ईं भवन्त्याजयः। तवायं विश्वः**
**पुरुहूत पार्थिवोऽवस्युर्नाम भिक्षते। यदिन्द्र ॥ ५६५ ॥**

हे इन्द्र ये आजयो युद्धानि तेषु तस्य विश्वस्य भक्तजनस्य त्वमीं त्वमेव धनदाः श्रुतः प्रसिद्धः असि। यद् यस्मादेवं तस्माद् हे पुरुहूत विश्वः सर्वोप्ययं पार्थिवो जनः तव त्वत्तः अवस्युः रक्षामिच्छन्। नामनुसामनुसोमन्नित्यादिना नमु प्रह्वत्वे शब्दे चेत्यतो मनिन् प्रत्ययो धातुमकारलोपो दीर्घश्च नाम अन्नमुदकं वा। वर्हिर्नामित्युदकनामसु पाठात्। भिक्षते याचते, त्वामेवेति शेषः। भक्तवरणीयस्त्वमेवेति भावः।

अनेन वृञ् वरणे इत्यस्मात् कृवृत्दारिभ्य उनन्निति सूत्रेण कर्मण्युनन् प्रत्ययो गुणो णत्वं च, वरुणः । ''वरं वृणोत्यमुं देवा वरदाश्च वरार्थिनाम् । धातुर्विट् वरणे प्रोक्तस्तस्मात् स वरुणः स्मृतः ।'' इति स्कान्दोक्तेः भक्तैः व्रियते इति वरुण इति निरुक्तेः अवस्युर्नाम भिक्षते इत्यनेन सूचनाद् वरुणमूर्तिरत्र ॥ ५६५ ॥

॥ ॐ वारुणाय नमः ॥

**यावतस्त्वमेतावदहमीशीय । स्तोतारमिद् दिधिषेय**
**रदावसो न पापत्वाय रासीय । शिक्षेयमित् ॥ ५६६ ॥**

हे इन्द्र त्वं यावतो धनस्य ईशिषे यावद् धनं दातुमिच्छसि एतावत्, षष्ठ्या लुक्, एतावतो धनस्याहम् ईशीय ईश्वरो भवेयम् । रदति ददाति वसूनीति रदवसुः । हे रदवसो स्तोतारमस्मदीयस्तोतारमित् दिधिषेय धनप्रदानेन धास्येयमेव । पापत्वाय क्षीणत्वाय अल्पं न रासीय न दद्याम् । (शिष्टमुत्तरान्वयि) ।

अनेन पूर्ववद् वृञ उननप्रत्ययः, वरणीयं वरुणं तस्यायं दाता (इत्यर्थे) वरुणशब्दादण् । वरुणस्य वसुनो दाता वारुण इति निरुक्तेः रदवसो इत्यनेन सूचनाद् **वारुणमूर्तिरत्र** ॥ ५६६ ॥

॥ ॐ वृक्षाय नमः ॥

**महयते दिवेदिवे राय आ कुहचिद्विदे । नहि त्वदन्यन्**
**मघवन् न आप्यं वस्यो अस्ति पिता चन ॥ ५६७ ॥**

इन्द्रवाक्यमेतद् । कुहचिद्विदे कुत्रचिद् विद्यमानः वुहचिद्विद् तस्मै, यत्र कापि विद्यमानाय महयते मां पूजयते भक्तजनाय दिवेदिवे प्रतिदिनं रायः आ अनुमृग्य शिक्षेयमित् दद्यामेवेति इन्द्र उवाच । ''पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्य दाशुषे'' इत्युक्तेः । एवमिन्द्रस्य वाक्यं श्रुत्वा सन्तुष्टो ऋषिर्वदति । हे मघवन् त्वदन्यत् त्वत्तोऽन्यत् अस्माकम् आप्यं प्राप्यं नह्यस्ति । वस्यः, वस आच्छादने इत्यस्मात् कर्तरि यच्प्रत्ययः, छादकः आपन्निवारकः पिता चन पालयिता च त्वत्तोऽन्यो नास्ति ।

अनेन वृक्ष वरणे इत्यतः पचाद्यच् । वृक्षते अहं धनं दास्यामीत्येवमुक्तप्रकारेण भक्तान् वृणोतीति

वृक्षः। यद्वा ओ व्रश्चू छेदने इत्यतो सुव्रश्चिकृत्यृषिभ्यः किदिति सूत्रेण सप्रत्ययः किच्च। ग्रहिज्येत्यादिना संप्रसारणं ऋकारः। स्कोः संयोगाद्योरन्ते चेति सलोपः। व्रश्चेत्यादिना षत्वम्। षढोः कः सीति कः। आदेशप्रत्यययोरिति प्रत्ययस्य षः। व्रश्चति भक्तानामापदश्छिनत्तीति वृक्ष इति वा निरुक्तेः शिक्षेयमित् महयते दिवेदिवे इत्यनेन न वस्योस्ति पिता चनेत्यनेन च सूचनाद् **वृक्षमूर्तिरत्र** ॥ ५६७॥

॥ ॐ पुष्कराक्षाय नमः ॥

**तरणिरित् सिषासति वाजं पुरन्ध्या युजा। आ व इन्द्रं**
**पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम्। न दुष्टुती ॥ ५६८ ॥**

हे इन्द्र तरणिरित् त्वत्स्तुत्यादौ त्वरावान् भक्तः युजा सहायभूतया पुरन्ध्या महसा(?) धिया त्वद्विषयस्तुत्या वाजमन्नं सिषासति संभजते। पुरुहूतं वः, व्यत्ययेन त्वां प्रति, गिरा स्तुत्या अहं मदीयं मनः आनमे आनमयामि संबध्नामि। नेमिं चक्रस्य वलयं सुद्रुवं शोभनदारुं तष्टेव यथा बर्धकिः दारुनेमिमानमयते तथाहमपि त्वां प्रति मन आनमयामि। (शिष्टमुत्तरान्वयि)

अनेन पुष पुष्टावित्यतः पुषः किदिति सूत्रेण करन्प्रत्ययः स किच्च। कित्त्वविधानसामर्थ्यात् प्रत्ययाकारस्य लोपाभावः। पूर्णत्वात् पुष्करः। अशू व्याप्तावित्यतो अशेर्देवने इति सप्रत्ययः। शान्तत्वाद् व्रश्चेति षः। षढोः कः सीति कः। प्रत्ययसकारस्य षः। अश्यते मनसेत्यक्षः। पुष्करश्चासावक्षश्च पुष्कराक्षः। यद्वा अक्षू व्याप्तावित्यतः कर्मण्यकारप्रत्ययः। भक्तमनसा अक्ष्यते व्याप्यते इत्यक्षः। पूर्ववद् विग्रहः। यद्वा पुष्करं श्रवणादिपरिपुष्टं मनः, तेन व्याप्यत इति वा, तत् स्वयं व्याप्नोतीति वा पुष्कराक्ष इति निरुक्तेः आ व इन्द्रं पुरुहूतं नमे गिरेत्यनेन सूचनात् **पुष्कराक्षमूर्तिरत्र** ॥ ५६८ ॥

॥ ॐ महामनसे नमः ॥

**मर्त्यो विन्दते वसु न स्रेधन्तं रयिर्नशत्। सुशक्तिरिन्**
**मघवन् तुभ्यं मावते देष्णं यत् पार्ये दिवि ॥ ५६९ ॥**

मर्त्यो मनुष्यः दुस्तुती दुस्तुत्या वसु धनं न विन्दते। इन्द्रं स्तुवन्नेव वसु लभत इत्यर्थः। स्रेधन्तं हिंसन्तमिन्द्रविषयस्तुत्याद्यकुर्वन्तमित्यर्थः। रयिर्धनं न नशत् न व्याप्नोति। हे मघवन् पार्ये दिवि

सौत्ये दिवसे मावते मादृशाय तुभ्यं त्वत्तः देष्णं दातव्यं यद् धनमस्ति, एवं महामनास्त्वमिति भावः, तद् धनं सुशक्तिरित् सुकर्मैव विन्दते।

अनेन महदुदारं मनो यस्य स महामना इति निरुक्तेः देष्णं यत् पार्ये दिवीत्यनेन सूचनात् **महामनोमूर्तिरत्र** ॥ ५६९ ॥

॥ ॐ भगवते नमः ॥

**[१]अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः।**

**पुरूवसुर्हि मघवन् त्सनादसि भरेभरे च हव्यः ॥ ५७० ॥**

हे ज्यायः ज्यायन्निन्द्र। आमन्त्रितं पूर्वमविद्यमानवदिति इन्द्रपदस्याविद्यमानत्ववद्भावात् ज्याय इत्यस्य सर्वानुदात्तत्वाभावः।[२] नकारस्य नुत्वं (रुत्वं?) नुमभावो वा। कनीयसः सतो मम तत् प्रसिद्धं धनमभ्याभर अभ्याहर। हे मघवन् सनात् चिरकालमारभ्य पुरुवसुर्हि बहुधनी बहुज्ञान-श्चासि। भरेभरे संग्रामेषु यज्ञेषु वा हव्यः स्तुत्यश्चासि।

अनेन ''ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा'' इत्युक्तेः ज्ञानविज्ञानादिषड्गुणा अस्येति निरुक्तेः पुरुवसुर्हि मघवन् त्सनादसीत्यादिना सूचनाद् **भगवन्मूर्तिरत्र** ॥ ५७० ॥

॥ ॐ भगघ्ने नमः ॥

**[३]परा णुदस्व मघवन्नमित्रान् त्सुवेदा नो वसू कृधि।**

**अस्माकं बोध्यविता महाधने भवा वृधः सखीनाम् ॥ ५७१ ॥**

हे मघवन् परा पराधीनान् अमित्रान् शत्रून् नुदस्व पलायने प्रेरय, जहीति यावत्। नः अस्माकं वसू वसूनि सुवेदा सुवेदानि सुलभानि कृधि कुरु। महाधने संग्रामे, वाजसातौ महाधन इति

---

१. अविहृतोऽयं मन्त्रः।

२. प्रायः स्वरविचारो व्याख्याने न कृतः। अत्रैवैकस्मिन् स्थले कृतो दृश्यते।

३. समग्रोऽयं प्रगाथः संहितायामपि (७-३२-२५)। इत आरभ्य षण्मन्त्रेषु विहरणं नास्ति।

संग्रामनामसु पाठात्, सखीनां स्तोतॄणामस्माकं वसिष्ठानां अविता रक्षिता बोधि बोधयिता वृधः वर्धयिता च भव।

अनेन भगः श्रीकाममाहात्म्यवीर्यरत्नार्ककीर्तिष्वित्युक्तेः शत्रूणां श्रीकाममाहात्म्ययोरयोगात् तान् हन्तीति भगहेति निरुक्तेः परा णुदस्व मघवन्नमित्रानित्यनेन सूचनाद् **भगहमूर्तिरत्र** ॥ ५७१॥

॥ ॐ आनन्दिने नमः ॥

**इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा। शिक्षा णो**
**अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ ५७२ ॥**

हे इन्द्र अस्मभ्यं क्रतुं कर्म प्रज्ञानं वा आभर। अपि च यथा पिता पुत्रेभ्यो धनं प्रयच्छति तथा नः अस्मभ्यं शिक्ष धनं देहि। हे पुरुहूत अस्मिन् यामनि यज्ञे जीवाः प्राणिनो वयं ज्योतिः सूर्यमशीमहि प्रतिदिनं पाप्नुमः। दीर्घायुष्मन्तो भवेम। एवमस्मानानन्दयतीति तात्पर्यम्।

अनेन आङ् पूर्वकात् टुनदी समृद्धावित्यतो भावे घञ्। आनन्दो ज्ञानधनायुरादीनां समृद्धिः प्रदातव्यतया अस्यास्तीत्यानन्दी, मत्वर्थे इनिरिति निरुक्तेरिन्द्र क्रतुं न आ भरेत्यादिना सूचनाद् **आनन्दिमूर्तिरत्र** ॥ ५७२ ॥

॥ ॐ वनमालिने नमः ॥

**मानो अज्ञाता वृजना दुराध्यो माऽशिवासो अवक्रमुः।**
**त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि ॥ ५७३ ॥**

हे इन्द्र अज्ञाता अप्रसिद्धाः वृजना हिंसकाः नः अस्मान् मा अवक्रमुः न च क्रमेयुः। दुराध्यो दुष्टबुद्धयः अशिवासोऽमङ्गलाश्च नावक्रमुः। हे शूर त्वया वयं वासिष्ठाः प्रवतः प्रवणाः सन्तः अतिशाश्वतीः अविच्छिन्नपरम्पराः आपः कर्माणि अतितरामसि अतितराम।

अनेन वन संभक्तावित्यतो घञ्(?), वनानि सेव्यानि दुष्टसंसर्गपरिहरणापारकर्मतारकत्वादीनि कर्माणि, तेषां माला पंक्तिः, माला पंक्तिपुष्पादिदामस्वित्युक्तेः। माङ् माने इत्यतः ऋज्रेन्द्रेत्यादिना

निपातनाल्लप्रत्ययः। यद्वा मल मल्लधारणे इति धातुप्रदीपः(?)। तथा च वनानां सद्भिर्भजनीयानां उक्तभक्तरक्षकत्वादिकर्मणां माला पङ्क्तिरस्यास्तीति वनमालीति निरुक्तेः मा नो अज्ञाता इत्यादिना सूचनाद् **वनमालिमूर्तिरत्र** ॥ ५७३ ॥

**॥ ॐ हलायुधाय नमः ॥**

**[१]अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे।**
**यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ ५७४ ॥**

हे मदीया जनाः यो मघवा पुरूवसुः वहुवित्तवान् जरितृभ्यः स्तोतृभ्यः सहस्रेणेव सहस्रेण वाहुनेव शिक्षति अभीष्टं ददाति तमिन्द्रं वो युष्माकं सुराधसं सम्यक् सिद्धिप्रदं यथा यथायोग्यं विदे ज्ञानाय अभि प्र अर्च अभिप्रार्चत सम्यक् पूजयत।

अनेन ओ हाक् गतावित्यतः कर्मणि कलप्रत्ययः, आतो लोपः। यद्वा हल विलेखने इत्यतः पचाद्यच् हलं सुराधः सर्वैरभिगम्यत्वात्। आङ्पूर्वकाद् युजिर्योगे इत्यतः कर्मणि धक् प्रत्ययो धातोरन्त्यलोपश्च। युज्यते इति युधः। हलेन राधसा आ सम्यग् युज्यत इति हलायुधः, भक्तानामभीष्टप्रदातेति यावत्, इति निरुक्तेः अभि प्र वः सुराधसमित्यनेन सूचनाद् **हलायुधमूर्तिरत्र** ॥ ५७४ ॥

**॥ ॐ आदित्याय नमः ॥**

**शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे।**
**गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥ ५७५ ॥**

अयमिन्द्रः शतानीकेव वहुसेनेव शत्रून् जिगाति जयति। किञ्च धृष्णुया, भावप्रधानः तृतीयाया यादेशः, धृष्णुत्वेन वृत्राणि आवरकाणि प्र सम्यग् हन्ति हतवान्। दाशुषे यजमानाय पुरुभोजसः वहुभोक्तुः अस्येन्द्रस्य सकाशात् दत्राणि दानानि रसाः सारभूता जलादयः गिरेरिव गिरेः सकाशादिव प्रपिन्विरे हरन्ति(?)।

---

१. ऋग्वेद ८-४९. प्रस्कण्वः काण्वः, वालखिल्यसूक्तत्वेन प्रसिद्धमेतदादिसूक्तषट्कम्। तिस्रोऽविहृताः।

अनेन आङ् पूर्वाद् दृ विदारणे इत्यतो डित्यप्रत्ययः टिलोपः । बहुविदारकत्वादादित्यः । अथवा आङ्पूर्वकाद् अद भक्षणे इत्यतो डित्यप्रत्ययः । बहुभोक्तृत्वादादित्यः । इति निरुक्तेः जिगाति धृष्णुया हन्ति वृत्राणि पुरुभोजस इत्यनेन सूचनाद् **आदित्यमूर्तिरत्र** ॥ ५७५ ॥

॥ ॐ ज्योतिरादित्याय नमः ॥

**आ त्वा सुतास इन्दवो मदा य इन्द्र गिर्वणः ।**
**आपो न वज्रिन्नन्वोक्यं सरः पृणन्ति शूर राधसे ॥ ५७६ ॥**

हे शूर गिर्वणः वज्रिन् इन्द्र अन्वोक्यमुदकाश्रयं सरः प्रति आपो न जलानीव त्वा त्वां प्रति ये सुतासः अभिषुताः मदाः सुखहेतवः इन्दवः सोमाः राधसे श्रेयसे, श्रेयःसाधनभूताः, आ पृणन्ति गच्छन्ति । उत्तरेण संबन्धः ।

अनेन द्युत दीप्तावित्यस्मात् द्युतेरिसिन्नादेशश्च ज इतीसिन् प्रत्ययः, दकारस्य जकारः, गुणः, दीप्यमानत्वात् ज्योतिः साम । आदौ स्थितत्वादादित्यः । अव्ययात् त्यबिति योगविभागात् त्यप् । ज्योतिषः सोमस्य आदौ उद्देश्यतया स्थितत्वात् ज्योतिरादित्य इति निरुक्तेः इन्दवस्त्वां पृणन्तीत्यनेन सूचनाद् **ज्योतिरादित्यमूर्तिरत्र** ॥ ५७६ ॥

॥ ॐ सहिष्णवे नमः ॥

**अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।**
**आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव ॥ ५७७ ॥**

हे इन्द्र अनेहसमिन्द्रियाणां तर्पकम् । यद्वा हन हिंसागत्योरित्यस्मात् नञ्पूर्वात् नञ्याहन एह चेति सूत्रेणासिप्रत्ययो धातोरेहादेशश्च । नञ्समासो नलोपो नुडागमश्च । न हन्यते नोपाद्यते (नापोद्यते?) इत्यनेहाः । तम् । प्रतरणं वेगशालिनं विवक्षणं नदीजलसम्मिश्रं स्वादिष्ठं स्वादुतमम्, अत्र सर्वत्रैकवचनं वहुत्वे, मध्वः मधून् सोमान् आ पिब । ईम् एव । मन्दसानो सुखलाभयुक्तस्त्वं यथा येन प्रकारेण क्षुद्रेव मधुमक्षिकेव नः अस्मभ्यं सुखं प्रकिरासि प्रकरोषि तथा पिबेत्यर्थः ।

अनेन षह मर्षणे इत्यतः अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्र पवृतुवृधुसहचर इष्णुजिति सूत्रेणेष्णुच्प्रत्ययः । सहते सोमरसानिति सहिष्णुः । सोमरसान् पिबतीति यावत्, इति निरुक्तेः मध्वः पिबेत्यनेन सूचनात् **सहिष्णुमूर्तिरत्र** ॥ ५७७ ॥

॥ ॐ गतिसत्तमाय नमः ॥

**त्मना धृषत् । आ नः स्तोममुपद्रवद्धियानो अश्वो न सोतृभिः । यं ते स्वधावन् त्स्वदयन्ति धेनव इन्द्र ॥ ५७८ ॥**

हे इन्द्र ये त्वां ते ताः धेनवः अग्निहोत्रधेनवः स्वदयन्ति स्वादयन्ति । हे स्वधावन् सुखिन् इन्द्र धृषत् शत्रूणां धर्षकः स त्वं त्मना आत्मना सोतृभिः ऋत्विग्भिः कृतं स्तोमं स्तोत्रं प्रहियानः, हि गतौ वृद्धौ च, अत्यन्तं गमनशीलः प्रवृद्धो वा अश्वो न अश्व इव उप द्रवत् उपद्रवेत् वेगेन आयातु ।

अनेन गतिशब्दे उपपदे अवसादनार्थात् सदेः अधिकरणे कर्तरि वा क्विप् । गतिर्गमनं सीदत्यत्रेति गतिसत् गतिमान्, तत अतिशायने तमप्, सोमादिग्रहणाय अतिशयेन गतिमान् गतिसत्तम इति निरुक्तेः हियानो अश्वो न उपद्रवदित्यादिना सूचनाद् **गतिसत्तममूर्तिरत्र** ॥ ५७८ ॥

॥ ॐ सुधन्वने नमः ॥

**कण्वेषु रातयः । उग्रं न वीरं नमसोप सेदिम विभूति-मक्षितावसुम् । उद्रीव वज्रिन्नवतो न सिञ्चते ॥ ५७९ ॥**

हे इन्द्र अक्षितवसुं क्षयरहितद्रविणवन्तं विभूतिं बहुरूपं त्वां उग्रं क्रूरं विक्रान्तं राजानं न राजानमिव नमसा नमस्कारेण कण्वपुत्रप्रस्कण्वगृहेषु उपसेदिम उपसन्नाः प्रसन्नाः स्म । हे वज्रिन् अवतः रक्षतस्ते रायो दानानि उद्रीव मेघमालेव, नशब्दो नुपर्यायः, न नु इदानीं सिञ्चते, अभीष्टानीति शेषः ।

अनेन सुपूर्वात् सौत्राद् धन्वधातोः कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः इति सूत्रेण कनिन् प्रत्ययः । धन्वति शत्रून् प्रति क्रूरो वर्तते इति सुधन्वेति निरुक्तेः उग्रं न वीरमित्यनेन सूचनात् **सुधन्वमूर्तिरत्र** ॥ ५७९ ॥

॥ ॐ खण्डपरशवे नमः ॥

**क्षरन्तीन्द्र धीतयः । यध्द नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि । अतो नो यज्ञमाशुभिर्महेमते ॥ ५८० ॥**

हे महेमते महामते इन्द्र यद् यदि वा नूनं समीपे दूरे वा यद्वा यदि वा यज्ञे यज्ञवाटे तदन्यत्र वा यद्वा यदिवा पृथिव्यां पृथिवीलोके अधि स्वर्गे वा ये स्थिता यज्ञघातका:, अत:, सप्तम्यर्थे तसि:, अत्रागतान् न: यज्ञं प्रत्यागतान् आशुभि:, अशू व्याप्तौ इत्यत उण्, शत्रुविदारणक्रियायां व्याप्तैरायुधविशेषै: इन्द्रस्य ते धीतय: कर्माणि क्षरन्ति, क्षर विनाशसन्ततदानयो:, विनाशयन्ति।

अनेन खनु अवदारणे इत्यत: ञमन्ताड्डः इत्यनेन ड:। बहुलग्रहणादस्येत्संज्ञाभाव:। खण्डयतीति खण्डो वज्रायुधविशेष:। परशब्दे उपपदे शृ हिंसायामित्यत: आङ्परयो: खनिशॄभ्यां डिच्चेति सूत्रेण परशब्दात्परस्य शृणाते: कुप्रत्ययो टिलोपश्च, परमत्यन्तं परान् शत्रून् शृणाति हिनस्तीति परशु:। खण्डै: वज्राद्यायुधै: शत्रुविदारणशीलै: शत्रून् विदार्य हिनस्तीति खण्डपरशुरिति निरुक्ते: आशुभि: धीतय: क्षरन्तीत्यनेन सूचनात् **खण्डपरशुमूर्तिरत्र** ॥ ५८० ॥

**॥ ॐ दारुणाय नम: ॥**

**उग्र उग्रेभिरा गहि। अजिरासो हरय ये त आशवो**
**वाता इव प्रसक्षिण:। येभिरपत्यं मनुष: परीयसे॥ ५८१ ॥**

हरयो वाता इव वायव इव आशवो वेगशालिन: प्रसक्षिण: सर्वसम्बन्धिन: अजिरास: अजराश्च। येभि: यैरश्वै: त्वम् अपत्यं तोकान् मनुष: मनुष्यान् परीयसे परित: प्राप्नोषि। उग्रेभिस्तैरश्वै: उग्र:, उग्रो घोरे त्वयं त्रिष्वित्युक्ते: घोर:, घोर: सन् आ गहि।

अनेन दृ विदारणे इत्यत: कृवॄदृदारिभ्य उनन्निति ण्यन्तादुनन्प्रत्यये शत्रून् विदारयतीति दारुण:, दारुणो धारुणो घोर इत्युक्ते:, इति निरुक्ते: उग्रशब्देन सूचनाद् **दारुणमूर्तिरत्र** ॥ ५८१ ॥

**॥ ॐ द्रविणप्रदाय नम: ॥**

**येभिर्विश्वं स्वर्दृशे। एतावतस्त ईमह इन्द्र सुम्नस्य**
**गोमत:। यथा प्रावो मघवन् मेध्यातिथिम्॥ ५८२ ॥**

येभिरश्वै: विश्वं स्वर्दृशे स्वर्लोकं च द्रष्टुं परीयसे गच्छसि तैरिहागहीति संबन्ध:। हे मघवन् इन्द्र ते तव सकाशात् एतावत: एतादृशस्य गोमतो ज्ञानादिमत: सुम्नस्य सुखस्य प्राप्तये त्वां शरणम् ईमहे। त्वं मेध्यातिथिं ममेव (?) धने धनविषये यथा पुरा तथेदानीमपि प्राव:।

अनेन द्रु गतावित्यस्माद् द्रुदक्षिभ्यामिनन्निति सूत्रेण इनन् प्रत्ययः, गुणावादेशौ णत्वं च, द्रविणं हिरण्यं तत् प्रददातीति द्रविणप्रद इति निरुक्तेः धने मेध्यातिथिं प्राव इत्यनेन सूचनाद् द्रविणप्रद-मूर्तिरत्र ।। ५८२ ।।

।। ॐ दिवःस्पृशे नमः ।।

**यथा नीपातिथिं धने । यथा कण्वे मघवन् त्रसदस्यवि**
**यथा पक्थे दशव्रजे । यथा गोशर्ये असनोः ।। ५८३ ।।**

हे मघवन् इन्द्र धने धनविषये नीपातिथिं तन्नामानं यथा तथा मां प्राव इति संबन्धः । कण्वे कण्वपुत्रे मयि यथा त्रसदस्यवि, सर्वे विधयः छन्दसि विकल्प्यन्त इति अच्च घेरित्येतन्न प्रवर्तते, गुणावादेशौ, विष्णवीति यथा, त्रसदस्युनाम्नि पक्थे तन्नाम्नि च यथा दशव्रजे तन्नाम्नि च यथा, सुम्नपदमत्र द्वितीयान्तमनुवर्तते, विपरिणामेन सुखं असनोः अदाः, तथेदानीमपि मह्यं देहीति भावः।

अनेन मोदार्थाद् दीव्यतेर्भावे दिवेर्डिविरिति डिविप्रत्ययः, टिलोपः, दिव् शब्देन मोदः तं स्पृशति ददातीति स्पृक्, स्पृश संस्पर्शने संस्पर्शनं दानम्, स्पर्शनं प्रतिपादनमित्युक्तेः । तथा च स्पृशोऽनुदके किन्निति किन्प्रत्यये तस्य सर्वापहारी लोपः । दिवो मोदस्य स्पृक् । अलुक् समासः, इति निरुक्तेः सुम्नमसनोरित्यनेन सूचनाद् दिवःस्पृङ्मूर्तिरत्र ।। ५८३ ।।

।। ॐ सर्वदृशे नमः ।।

**ऋजिश्विनीन्द्र गोमद्धिरण्यवत् । [१]प्र सु श्रुतं सुराधसमर्चा**
**शक्रमभिष्टये । यः सुन्वते स्तुवते काम्यम् ।। ५८४ ।।**

हे इन्द्र ऋजिष्वनि तन्नाम्नि यथा गोमद् गवादियुक्तं हिरण्यवद् हिरण्यादियुक्तं सुम्नमसनोः तथेदानीमप्यसनोरिति संबन्धः । हे जनाः य इन्द्रः सुन्वते यज्वने स्तुवते स्तोत्रे जनाय काम्यं वसु ददाति तं सुश्रुतं प्रसिद्धम् । राध संसिध्दौ, संसिद्धिर्ज्ञानम्, अस्माद् भावे असुन्, राधो ज्ञानम्, सु सर्वविषयकं राधो ज्ञानं यस्य तं सुराधसं सुखिनं शक्रमिन्द्रम् अभिष्टये अभीष्टसिद्धयर्थं प्रार्च पूजयत ।

१. ऋग्वेद ८-५०, इदं द्वितीयं वालखिल्यसूक्तम् । पुष्टिगुः काण्वः ।

अनेन सृ गतावित्यस्मात् सर्वनिधृष्वर्ष्वेत्यादिना वन् प्रत्ययः, गुणः, सृतमनेनेति सर्वम्, दृशिर् प्रेक्षणे इत्यतः क्विप्, सर्वस्य दृक् ज्ञाता सर्वदृगिति निरुक्तेः सुराधसमित्यनेन सूचनात् **सर्वदृङ्मूर्तिरत्र** ॥ ५८४ ॥

॥ ॐ व्यासाय नमः ॥

**वसु सहस्रेणेव मंहते । शतानीका हेतयो अस्य**
**दुष्टरा इन्द्रस्य समिषो महीः । गिरिर्न भुज्मा ॥ ५८५ ॥**

य इन्द्रः सहस्रेणेव सहस्रबाहुनेव वसु द्रव्यं द्रविणं भक्तेभ्यो मंहते ददाति अस्येन्द्रस्य शतानीकाः बह्वयः सेनाः हेतय आयुधानि च दुस्तरा दुर्धर्षाः महीः महतीः समिषः समीचीनान्नानि भुज्मा स्थूलः गिरिर्न पर्वत इव, पिन्वते विस्तारयन्तीति संबन्धः ।

अनेन विपूर्वादास उपवेशने इत्यस्मात् ण्यन्तादकारप्रत्ययः, भक्ताभीष्टानि विस्तारयतीति व्यास इति निरुक्तेः अस्येन्द्रस्य हेतयः समिषः पिन्वते इत्यनेन सूचनाद् **व्यासमूर्तिरत्र** ॥ ५८५ ॥

॥ ॐ वाचस्पतये नमः ॥

**मघवत्सु पिन्वते यदीं सुता अमन्दिषुः । यदीं सुतास**
**इन्दवोऽभिप्रियममन्दिषुः । आपो न धायि सवनं मे ॥ ५८६ ॥**

यद् यं मघवत्सु यज्वसु सुताः सोमा अमन्दिषुः सन्तोषयन्ति ईम् एव, अस्येति पूर्वेण संबन्धः । यद् यस्मादेवं सुतासः इन्दवः अभिप्रियमतिप्रियमिन्द्रममन्दिषुः तस्मात् सवनं यज्ञः आपो न उदकानि निम्नप्रदेश इव मे मया धायि अधायि । तस्मिन् समर्पितमेवासीत् ।

अनेन वच परिभाषणे इत्यतः क्विप् वचिप्रच्छिश्रिद्रुस्रुकटप्रज्वां दीर्घोऽसंप्रासरणं चेति सूत्रेण क्विप् उपधादीर्घः संप्रसारणाभावश्च । उच्यते वेदैर्विधीयत इति वाग् यज्ञः । पद पद्लृ गतावित्यस्मादधिकरणे इकारप्रत्ययः, पत्यते अत्रेति पतिर्निधानस्थानम्, वाचो यज्ञस्य पतिर्निधानस्थानं वाचस्पतिः । तत्पुरुषे कृति वहुलमिति षष्ठ्या अलुक् । षष्ठ्याः पतिपुत्रपृष्ठ-पारपदपयस्पोषेषु इति सूत्रेण विसर्गस्य सः, इति निरुक्तेः आपो न धायि सवनमित्यनेन सूचनाद् **वाचस्पतिमूर्तिरत्र** ॥ ५८६ ॥

॥ ॐ अयोनिजाय नमः ॥

**आ वसो दुघाइवोप दाशुषे । अनेहसं वो**
**हवमानमूतये मध्वः क्षरन्ति धीतयः । आ त्वा ॥ ५८७ ॥**

हे आवसो बहुवित्त इन्द्र ते धीतयो दाशुषे यजमानाय दुघा इव सुदुघा धेनव इव उप समीपे भवन्ति। हे प्रजाः वो युष्मदीयाः धीतयः कर्माणि अनेहसमहिंस्यम् ऊतये रक्षार्थं हवमानमाहूयमानमिन्द्रं प्रति मध्वो मधूनि क्षरन्ति क्षरन्तु। (शिष्टमुत्तरान्वयि)

अनेन योनिजो न भवतीत्ययोनिजः, योनिसंवन्धादिना न हिंस्यते इति यावत्, इति निरुक्तेरनेहसमित्यनेन सूचनाद् **अयोनिजमूर्तिरत्र** ॥ ५८७ ॥

॥ ॐ त्रिसाम्ने नमः ॥

**वसो हवमानास इन्दव उप स्तोत्रेषु दधिरे ।**
**आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ॥ ५८८ ॥**

हे वसो जगन्निवास इन्द्र स्तोत्रेषु स्तोत्रैः हवमानासः हूयमाना इन्दवः सोमरसाः त्वां प्रति मया उपादाधिरे सम्यक् संभृताः सन्ति। नः अस्मदीये सोमे सोमवति स्वध्वरे समीचीनयज्ञे आ इयानः आगन्ता अत्यः त्वामतिक्रामयिता कश्चित् न तोशते न दृश्यते। त्वामतिक्रम्यास्मद्यज्ञं प्रति गन्ता अन्यो नास्ति, अतस्त्वमेवैहीति भावः।

अनेन षो अन्तकर्मणीत्यस्मात् सातिभ्यां मनिन्मनिणाविति सूत्रेण मनिन् प्रत्ययः, आदेच उपदेशेऽशितीत्यात्वम्, स्यतीति साम। त्रिषु सोमस्तोत्रयज्ञेषु स्यति गच्छतीति त्रिसामेति निरुक्तेः उप स्तोत्रेषु इन्दवः स्वध्वर इयान इत्यादिना सूचनात् **त्रिसाममूर्तिरत्र** ॥ ५८८ ॥

॥ ॐ सामगाय नमः ॥

**[१]यं ते स्वदावन् त्स्वदन्ति गूर्तयः पौरे छन्दयसे हवम् ।**
**प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ॥ ५८९ ॥**

१. पूर्वमन्त्रस्योत्तरार्धं उत्तरमन्त्रस्य पूर्वार्धं च संयोज्य सम्पादितेयं बृहती। परं द्वादशाक्षरपादद्वयोपेततया अष्टाक्षरपादद्वयोपेततया च चत्वारिंशाक्षरा भवति। उत्तरा बृहत्यपि तथा।

हे पौरे परिपूर्ण स्वदावन् स्वधावन् सुखिन् इन्द्र प्रवीरमत्युत्तमम् उग्रं शत्रूणां धोरं विविचिं विविक्तं धनस्पृतं धनदातारं महो महतः राधसः सिद्धेः विभूतिं समुदायरूपं यं त्वां ते त्वद्विषयाः गूर्तयः स्तुतयः स्वदयन्ति अभिलाषायुक्तं कुर्वन्ति, स त्वमस्मदीयं हवमाह्वानं छन्दयसे अङ्गीकरोषि ।

अनेन स्यतीति साम स्तुतिः, तद् गच्छति अङ्गीकरोतीति सामग इति निरुक्तेः छन्दयसे हवमित्यनेन सूचनात् **सामगमूर्तिरत्र** ॥ ५८९ ॥

**॥ ॐ साम्ने नमः ॥**

**उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषे ।**
**यद्ध नूनं परावति यद् वा पृथिव्यां दिवि ॥ ५९० ॥**

हे वज्रिन् यत् यदि परावति लोके तिष्ठसि यद् यदि वा पृथिव्यां तिष्ठसि तथापि वसुत्वना सर्वव्यापित्वेन सदा अवतः, व्यत्ययेन अवन् जगद्रक्षां कुर्वन्, उद्रीव मेघमालेव दाशुषे यजमानाय प्र पीपेथ अभीष्टानि सम्यग् ददासि । नूनं निश्चितम् ।

अनेन अभीष्टानि स्यति ददातीति सामेवि निरुक्तेः दाशुषे सदा पीपेथेत्यनेन सूचनात् **साममूर्तिरत्र** ॥ ५९० ॥

**॥ ॐ निर्वाणाय नमः ॥**

**युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहि ।**
**रथिरासो हरयो ये ते अस्रिध ओजो वातस्य ॥ ५९१ ॥**

इकारः फणिरत्नार्चिष्विति रत्नमालोक्तेः इः रत्नम् । रमु क्रीडायामित्यतः क्तप्रत्ययः, रत्नं सुखम् । माङ् माने इत्यतो भावे क्तिन् ह्रस्वश्च, मतिर्ज्ञानम् । महत्यौ इमती यस्य सः महेमतिः महासुखज्ञानवान्, तस्य संबुद्धिः हे महेमते इन्द्र ते त्वदीयाः ये हरयः रथिरासो रथिनः सुखकराः अस्रिधः अहिंस्याश्च वातस्य ओजो वेगं पिप्रति[1] बिभ्रति च तैः ऋष्वेभिर्बृहद्भिः हरिभिरश्वैः युजानो युक्तः ऋष्वो महांस्त्वं आ गहि ।

१. पिप्रतीत्युत्तरमन्त्रादनुकृष्य व्याख्यायते ।

अनेन निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने इत्युक्तेः सुखरूपत्वान्निर्वाणमिति निरुक्तेर्महेमते इत्यनेन सूचनात् **निर्वाणमूर्तिरत्र** ॥ ५९१ ॥

**॥ ॐ भेषजाय नमः ॥**

**पिप्रति । येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः**
**परीयसे । एतावतस्ते वसो विद्याम शूर ॥ ५९२ ॥**

हे इन्द्रः येभिर्यैरश्वैः दस्युं दस्यून् मनुषो मनुष्यान् निघोषयो न्यघोषयो न्यवारयः तेषां प्रतीकारमकरोः, दस्यूनां चिकित्सक इति यावत्। येभिरश्वैः स्वः स्वर्गं परीयसे गच्छसि तैरश्वैरागहीति संबन्धः। हे वसो ते तव सकाशात् एतावतः ईदृशस्य सुखस्य वयं विद्याम लब्धारो भवेम।

अनेन भिषक् चिकित्सायामित्यस्मादन्येभ्योपीति क्विप्, भिषक् चिकित्सकः, ततः स्वार्थे अण्, पृषोदरादित्वादेकारादेशः भिषगेव भेषजं संसाररोगपरिहारक इति निरुक्तेः दस्युं मनुषो निघोषय इत्यनेन सूचनाद् **भेषजमूर्तिरत्र** ॥ ५९२ ॥

**॥ ॐ भिषजे नमः ॥**

**नव्यसः । यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजे ।**
**यथा कण्वे मघवन् मेधे अध्वरे दीर्घनीथे ॥ ५९३ ॥**

हे मघवन् इन्द्र कृत्व्ये स्थलविशेषे नव्यसः नव्यसि स्तुत्ये धने धनविषये एतशं तन्नामकं यथा प्रावः, यथा वा दशव्रजे तन्नामके देशे वशं तन्नामकं प्रावः, यथा वा कण्वे कण्वसंबन्धिनि अध्वरे विध्यनुसारिणि मेधे यज्ञे दीर्घनीथे एतन्नाम्नि (देशे) समवेतः तथा मामपि समवेहि।

अनेन भः शम्भौ भ्रमरे भावे शुक्रेऽशौ जलदे पुमानित्युक्तेः भं शुद्धं परिशुद्धं सोमादिद्रव्यं तदस्यास्तीति भी अध्वरः। षच समवाये इत्यस्मात् क्विप्, भिनि यज्ञे कण्वादिकृते सचति समवैतीति भिषगिति निरुक्तेः, कण्वे अध्वरे इत्यादिना सूचनाद् **भिषङ्मूर्तिरत्र** ॥ ५९३ ॥

॥ ॐ संन्यासकृच्छमाय नमः ॥

**दमूनसि। यथा गोशर्ये असिषासो अद्रिवो मयि**
**गोत्रं हरिश्रियम्। [1]यथा मनौ सांवरणौ सोमम्॥ ५९४॥**

हे अद्रिवः इन्द्र यथा वा दमूनसि अग्नौ यथावा गोशर्ये, एतन्नाम्नि यथा मनौ, यथा सांवरणौ संवरणस्यापत्यं पुमान् सांवरणिस्तस्मिन्, यथा सोमं षूञ् अभिषवे इत्यतः कर्मणि मप्रत्ययो गुणः, भगवत्यर्पितयज्ञादिकर्मणा अन्तःकरणशुद्धिद्वारा सूयते इति सोमः शमो भगवन्निष्ठा, गुङ् अव्यक्ते शब्दे इत्यस्माद् गुधृवीपचीत्यादिना त्रन्प्रत्ययः गुणः, गवते व्यवहरत्यनेनेति गोत्रम्, हरति भक्तपापानीति हरिः, तं श्रयते विषयतया आश्रयत इति हरिश्रीर्भक्तिः। तान् सोमगोत्रहरि-श्रीशब्दितान् शमज्ञानभक्त्यादीन् असिषासः दत्तवानसि। तथा मयि शमं ज्ञानं भक्तिं च देहीत्यर्थः।

अनेन नाहं कर्ता हरिः कर्तेत्यादिना कर्मन्यासं कृतवतां दमूनोगोशर्यमनुसांवरणिप्रभृतीनां शमः तदुपलक्षितज्ञानभक्त्यादयो यस्मात् सः संन्यासकृच्छम इति निरुक्तेर्दमूनसि यथेत्यादिना सूचनात् **संन्यासकृच्छममूर्तिरत्र**॥ ५९४॥

॥ ॐ शान्ताय नमः॥

**इन्द्रापिवः सुतम्। नीपातिथौ मघवन् मेध्यातिथौ**
**पुष्टिगौ श्रुष्टिगौ सचा। पार्षद्वाणः प्रस्कण्वं समसादयत्॥ ५९५॥**

हे मघवन् इन्द्र नीपातिथौ एतन्नामके यथा वा मेध्यातिथौ एतन्नामके यथा वा पुष्टिगौ पुष्टिगुनामके यथा वा श्रुष्टिगौ श्रुष्टिगुनामके ऋषौ सुतं सोमं शमं सचा सुखेन पूर्वमपिवः शमं प्रति विषयो भवसि तथेदानीमपि श्रुष्टिगोर्मम सोमं शमं पिव, तथा मम बुद्धिगोचरो भव। मद्बुद्धिस्त्वन्निष्ठाऽस्तु। किञ्चायमिन्द्रः पार्षद्वाणः परिपुष्टशरीरः सन् भक्त्यादिना सन्तुष्टः सन् प्रस्कण्वम् एतन्नामानमृषिं सोमं शमं समसादयत् प्रापयामास।

अनेन नीपातिथिमेध्यातिथिपुष्टिगुश्रुष्टिगुप्रभृतिशमगोचरः शान्तः, शम उपशमे इत्यस्मात् कर्मणि क्तः उपधादीर्घः अनुस्वारश्चेति निरुक्तेः सोमं समसादयदित्यनेन सूचनात् **शान्तमूर्तिरत्र**॥ ५९५॥

१. ऋग्वेद ८-५१, श्रुष्टिगुः काण्वः। तृतीयं वालखिल्यसूक्तम्।

॥ ॐ निष्ठायै नमः ॥

**शयानं जिव्रिमुद्धितम् । सहस्राण्यसिपासद् गवामृषि-**
**स्त्वोतो दस्यवे वृकः । य उक्थेभिर्न विन्धते ॥ ५९६ ॥**

य इन्द्रः उक्थेभिरुक्थस्तोत्रैः न विन्धते न विन्दते साकल्येन न प्राप्यते स इन्द्रः जिव्रिं एतन्नामानं शयानं अपि साधनानुष्ठानरहितं गवां सहस्राणि उद्धितमुत्कृष्टं हितं च असिषासत्, षण दाने, दत्तवान् । किञ्च त्वोतः त्वया प्रेरितः ऋषिर्ज्ञानी दस्यवे दस्यूनां मिथ्याज्ञानादिप्रवर्तकानां वृकः हिंसको भवेत् । किमु भवानिति भावः ।

अनेन निष्ठा निष्पत्तिनाशान्ता इत्यमरोक्तेः निष्ठा नाशः तेन तत्कर्ता उपलक्ष्यते । तथा च विनाशको निष्ठेति निरुक्तेः दस्यवे वृक इत्यनेन सूचनात् **निष्ठामूर्तिरत्र** ॥ ५९६ ॥

॥ ॐ शान्त्यै नमः ॥

**चिकिद्य ऋषिचोदनः । इन्द्रं तमच्छा वद नव्यस्या मत्य-**
**रिष्यन्तं न भोजसे । यस्मा अर्कं सप्तशीर्षाणमानृचुः ॥ ५९७ ॥**

य इन्द्रः चिकित् सर्वकर्ता यश्च ऋषिचोदनः ऋषेर्ज्ञानस्य वा प्रेरकः यश्च अच्छा अच्छः निर्मलः कल्याणरूपः नव्यस्या स्तुत्यया मती मत्या अरिष्यन्तं नाशरहितं तमिन्द्रं वद स्तुहि । एवं सति त्वं दुःखानि न भोजसे नानुभवसि । यस्मै यस्येन्द्रस्याज्ञया सप्तशीर्षाणं सप्ताश्वयुक्तम् अर्कं सूर्यम् आनृचुः स्थापयमासुः देवाः ।

अनेन शान्तिः कल्याणशमयोरित्युक्तेः कल्याणरूपः शान्तिरिति निरुक्तेरच्छपदेन सूचनात् **शान्तिमूर्तिरत्र** । ५९७ ॥

॥ ॐ परायणाय नमः ॥

**त्रिधातुमुत्तमे पदे । स त्विमा विश्वा भुवनानि चिक्रद-**
**दादिज्जनिष्ट पौंस्यम् । यो नो दाता वसूनाम् ॥ ५९८ ॥**

य इन्द्रः त्रिधातुं भूतभविष्यद्वर्तमानकालेषु त्रीन् भूर्भुवःस्वराख्यान् लोकान् धातुम्, धात्रः कर्तरि

कर्तरि तुप्रत्ययः, विधातारं चतुर्मुखब्रह्माणम् उत्तमे पदे सत्यलोकाधिपत्ये चिक्रदत् अकरोत्। किं बहुना। विश्वानि इमा इमानि भूतानि चिक्रदत् कृतवान्। स इन्द्रः आदित् तस्मादेव पौंस्यं स्ववीर्यं जनिष्ट व्यञ्जयामास। य इन्द्रः नो वसूनां दाता। उत्तरेण सम्बन्धः।

अनेन परमुत्तमं सत्याख्यं पदमयते प्राप्नोत्यनेनेति वा अयते अत्रेति (?) वा परायणमिति निरुक्तेः त्रिधातुमुत्तमे पदे चिक्रददित्यनेन सूचनात् **परायणमूर्तिरत्र** ॥ ५९८ ॥

॥ ॐ शुभाङ्गाय नमः ॥

**इन्द्रं तं हूमहे वयम्। विद्मा ह्यस्य सुमतिं नवीयसीं**
**गमेम गोमति व्रजे। यस्मै त्वं वसो दानाय॥ ५९९ ॥**

तमिन्द्रं वयं हूमहे। अस्येन्द्रस्य नवीयसीं स्तुत्यां सुमतिं शोभनमतिं विद्म वयं जानीमः। हि यस्मादेवं तस्मात् गोमति ज्ञानादिमति व्रजे समुदाये गमेम वयं गच्छेम। हे वसो इन्द्र त्वं यस्मै यं जनं दानाय दानार्थं शिक्षसि उपदिशसि। उत्तरेणान्वयः।

अनेन अङ्गं गात्रान्तिकोपायप्रतीकेष्वप्रधानके इत्युक्तेः अङ्गमुपायः । मोक्षोपायत्वान्मतिरुच्यते। शुभा अङ्गं मतिर्यस्य सः शुभाङ्ग इति निरुक्तेः विद्मा ह्यस्य सुमतिं नवीयसीमित्यनेन सूचनात् शुभाङ्गमूर्तिरत्र ॥ ५९९ ॥

॥ ॐ शान्तिदाय नमः ॥

**शिक्षसि स रायस्पोषमश्नुते। तं त्वा वयं मघवन्निन्द्र**
**गिर्वणः सुतावन्तो हवामहे। कदा चन॥ ६०० ॥**

स जनः रायः द्रविणस्य, उपलक्षणमेतत्, शान्त्यादेः पोषं पुष्टिमश्नुते प्राप्नोति। हे गिर्वणः इन्द्र मघवन् तमेवं भक्तवत्सलं त्वां सुतवन्तो यजमाना वयं हवामहे।

अनेन शान्तिं द्रव्यपोषणरूपां ददातीति शान्तिद इति निरुक्तेः स रायस्पोषमित्यनेन सूचनात् **शान्तिदमूर्तिरत्र** ॥ ६०० ॥

॥ इति श्रीवृहतीसहस्रपारावारे षष्ठः खण्डः ॥

॥ ॐ स्रष्ट्रे नमः ॥

**स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन्**
**भूय इन्नु ते दानं देवस्य पृच्यते। प्र यो न नक्षे ॥ ६०१ ॥**

हे इन्द्र स्तरीः अभीष्टानां दाता कदा चन असि भविष्यसि। नः अभीष्टदाता कदा भविष्यसीति आदरात् प्रश्नः। किञ्च दाशुषे यजमानाय नु इदानीम् उपोपेत् अतिसमीप एव कुतो नु सश्चसि कस्मान्न संयुक्तो भवसि। न च दानाशक्ततयेति मन्तव्यम्। हे मघवन् ते तव बहु दानं दातव्यं द्रविणादिकमस्ति। अस्मभ्यं दत्तं द्रविणं नात्मभोगाय कल्पयामः किन्तु देवस्य देवतापूजार्थं तत् त्वद्दत्तं पृच्यते संसृज्यते उपयोक्ष्यते नु निश्चितम्। शिष्टमुत्तरान्वयि।

अनेन सृ विसर्गे इत्यतः कर्तरि तृच्, गुणः, व्रश्चेत्यादिना षः, ष्टुत्वम्। भक्तेभ्यो द्रविणं सृजति ददातीति स्रष्टा इति निरुक्तेः स्तरीरसीत्यादिना सूचनात् **स्रष्टृमूर्तिरत्र** ॥ ६०१ ॥

॥ ॐ कुमुदाय नमः ॥

**अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन्।**
**यदेदस्तंभीत् प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवः ॥ ६०२ ॥**

य इन्द्रः न नक्षे, नक्ष गतौ, न गच्छति स्वपदान्न चलति यश्च वधैर्वधसाधनैरायुधैः क्रिविं लोकोपद्रवकर्तारम्, अत एव शुष्णं शोषकमसुरं निघोषयन् नितरां शब्दयन्, यदा यस्मादमूं दिवं स्वर्गलोकमिमं पृथिवीलोकं च प्रथयन् विस्तारयन्, ओजसा अभ्यस्तंभीत् स्तंभयामास धृतवान्। आत् तस्मात् स पार्थिवः पृथिवीसम्बन्धी अजनिष्ट जातः। पृथिव्यामपि प्रसिद्धो जात इति यावत्।

अनेन कुः पृथिवी, मुद हर्षे इत्यतो मूलविभुजादित्वात् कः, गुणाभावः। कौ प्रसिद्ध्या मोदते, प्रसिद्ध्या युक्तः, इति कुमुद इति निरुक्तेः जनिष्ट पार्थिव इत्यनेन सचनात् **कुमुदमूर्तिरत्र** ॥ ६०२ ॥

॥ ॐ कूवलेशयाय नमः ॥

**[1]यस्यायं विश्व आर्यो दासः शेवधिपा अरिः।**
**तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत् सो अज्यते रयिः ॥ ६०३ ॥**

१. इत आरभ्य मन्त्रसप्तकं विहरणेन विना पठितम्।

यस्य इन्द्रस्य अयं विश्वः एतज्जगत् अधिष्ठानं यस्य च आर्योपि ब्रह्मादिः दासः भृत्यो भवति, हे इन्द्र, अरिः शत्रुवर्गोपि शेवधिपाः निक्षेपपालकः अर्ये श्रेष्ठे तस्मिन्, स्वामिनि वा, रुशमे एतन्नामके पवीरवि तन्नामके च तिरश्चित् अधस्तात् स्थापितो यो रयिः द्रविणराशिः स सर्वोपि तुभ्येत् त्वद्दत्त एव अज्यते त्वया संबध्यते । त्वयैव[१] युज्यते ।

अनेन कुः पृथिवी । वल वल्ल संवरणे इत्यतः[२] । का पृथिव्या संवलितं सहितं समस्तं जगत् कुवलम्, तस्मिन् शेते अधितिष्ठतीति शयः, शीङ् स्वप्ने इत्यत अच्, सप्तम्या अलुक्, इति निरुक्तेः **कुवलेशयमूर्तिरत्र** ॥ ६०३ ॥

॥ ॐ गोहिताय नमः ॥

**तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।**
**अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवः ॥ ६०४ ॥**

विप्रासः प्रकृष्टा जनाः तुरण्यवः त्वरिताः सन्तः मधुमन्तं स्वादुमन्तं घृतश्चुतं घृताभिषिक्तम् अर्कं अतिसुखप्रदमन्नमानृचुः समर्पितवन्तः । अतो वयमपि तथा समर्पयामः । तथा च अस्मे अस्मासु रयिः पप्रथे विस्तृतो भवेत् । निहितो भवेत् । किञ्च वृष्ण्यं श्रेष्ठं शवः सुखं पप्रथे निहितं भूयात् । किञ्च सुवानासः अभिषूयमाणाः इन्दवः अस्मद्गृहे सन्तु ।

अनेन गमेर्डोः । गम्यत इति गौः सोमो द्रविणं सुखं च । तत् हितं धृतं यत्रेति वा, तद् धार्यते अनेनेति वा गोहितः । हितं तु ध्रुवपथ्ययोरिति रत्नमाला । इति निरुक्तेर्मधुमन्तं घृतश्चुतमित्यादिना सूचनाद् **गोहितमूर्तिरत्र** ॥ ६०४ ॥

॥ ॐ गोपतये नमः ॥

**[३]यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।**
**यथा त्रिते छन्द इन्द्र जुजोपस्यायौ मादयसे सचा ॥ ६०५ ॥**

१. अत्र सर्वेष्वपि कोशेषु ग्रन्थपातः । त्वयैव दत्तं तव पूजार्थमेवाणयुज्यते चेति समस्तवाक्यपाठः स्वरसो भवति ।

२. अत्रापि ग्रन्थपातः । वल वल्ल संवरणे इत्यतः वलिमलितनिभ्यः कयन् इति सूत्रेण कयन्प्रत्यये वलयमिति रूपं निष्पद्यते । अत्र तु कर्मणि अप्रत्ययं कृत्वा वलमिति रूपं प्राप्तम् ।

३. ऋग्वेद ८-५२, आयुः काण्वः । चतुर्थं वालखिल्यसूक्तमिदम्

हे इन्द्र यथा मनौ मनोर्गृहे यथा वा विवस्वति विवस्वतः सूर्यस्य गृहे सुतं सोममपिबः। यथा त्रिते एतन्नामकस्य गृहे छन्दः स्तोत्रं जुजोषसि सेवितवानसि। तथा आयौ आयोर्मम गृहे सचा सुखेन मादयस्व। मदीयं छन्दः श्रुत्वा पीत्वा प्रीतो भवेति यावत्।

अनेन गौर्वाक् स्तोत्रं छन्दः। पा पाने इत्यतो डतिः। गोः छन्दसः पतिः पाता उपभोक्ता श्रोतेति यावत्, इति निरुक्तेः छन्द इन्द्र जुजोषसीत्यनेन सूचनाद् **गोपतिमूर्तिरत्र** ॥ ६०५ ॥

॥ ॐ गोप्त्रे नमः ॥

**पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः।**
**यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसि ॥ ६०६ ॥**

हे इन्द्र पृषध्रे तन्नाम्नो गृहे स्यूमरश्मौ तन्नाम्नो गृहे ऋजूनसि तन्नाम्नो गृहे मेध्ये तन्नाम्नो गृहे मातरिश्वनि तन्नाम्नो गृहे दशोण्ये तन्नाम्नो गृहे सुवाने तन्नाम्नो गृहे यथा तान् सोमं पीत्वा अमन्दथाः सुखयसि रक्षकश्चासि, तथा मामपि रक्षेति शेषः।

अनेन पृषध्रादीन् गोपायतीति गोप्ता, गुपेस्तृच्, इति निरुक्तेः अमन्दथा इत्यनेन सूचनाद् **गोप्तृमूर्तिरत्र** ॥ ६०६ ॥

॥ ॐ वृषभाक्षाय नमः ॥

**य उक्था केवला दधे यः सोमं धृषितापिबत्।**
**यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभिः ॥ ६०७ ॥**

य इन्द्रः केवला केवलानि उक्था उक्थानि स्तोत्राणि दधे धारयति, स्वात्मप्रकाशकतया अस्मत्कृतानि स्तोत्राण्यंगीकरोति, यश्च धृषिता शत्रूणां धर्षकः सोममपिबत्, यस्मै च विष्णुर्वामनरूपी मित्रस्य स्वभक्तस्य तदन्तर्गतस्य हरेर्वा सकाशाद् धर्मभिः तत्स्तुतियाश्चादिरूपानुनयात्मकधर्मैरेव त्रीणि पदा पदानि त्रिपादसम्मितस्थानानि विचक्रमे विशेषेणाक्रान्तवान्। स इन्द्रो मद्गृहे मादयत्विति संबन्धः।

अनेन वृष सेचने इत्यस्मात् इगुपधलक्षणः कः, वर्षति वाञ्छितमिति वृषः। वृषो धर्मोक्षपुंभेदे रेतःशक्राखुवाजिष्वित्युक्तेः वृषो धर्मः। भः शम्भौ भ्रमरे भावे इत्युक्तेः भः भावः अभिप्रायः।

अक्षू व्याप्तौ, अक्ष्णोति व्याप्नोति स्थानमित्यक्षः । वृषे धर्मे भः अभिप्रायो यस्य स वृषभः । वृषभश्चासावक्षश्चेति वृषभाक्ष इति निरुक्तेः उप मित्रस्य धर्मभिः त्रीणि पदा विचक्रम इत्यनेन सूचनाद् **वृषभाक्षमूर्तिरत्र** ॥ ६०७ ॥

**॥ ॐ वृषप्रियाय नमः ॥**

**यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।**
**तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवः ॥ ६०८ ॥**

हे इन्द्र यस्य येषामस्माकं स्तोमेषु स्तोत्रेषु त्वं चाकनः चकन् तृप्तोऽभूः हे वाजिन् युद्धशील अन्नवन् वा शतक्रतो वाजे अन्ने चाकनः तृप्तोऽभवः, ते वयं गोदुहः गोदोहनकर्तारः सुदुघां गामिव श्रवस्यवः श्रवः कीर्तिरवनं वा तदुद्दिश्य जुहूमसि आह्वयामः ।

अनेन वर्षन्ति वाञ्छितमिति वृषाः स्तोमाः । प्रीञ् प्रीणने इत्यतः इगुपधलक्षणः कः, इयङा-देशः । अभीष्टोऽभीप्सितं हृद्यं दयितं वल्लभं प्रियमित्युक्तेः प्रियमभीष्टम् । वृषाः स्तोमाः प्रिया अभीष्टा यस्य स वृषप्रिय इति निरुक्तेः स्तोमेषु चाकन इत्यनेन सूचनाद् **वृषप्रियमूर्तिरत्र** ॥ ६०८॥

**॥ ॐ अनिवृत्तिने नमः ॥**

**यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।**
**अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नः ॥ ६०९ ॥**

य इन्द्रः नः अस्माकं दाता पिता महान् उत्तमः उग्रः उद्गमयिता । ईशानकृत् ईशस्य रुद्रस्य अनं चेष्टां करोतीतीशानकृत् यद्वा ईशानेति भावप्रधानो निर्देशः, देहगेहादीन् प्रति ईशानत्वं स्वामित्वं करोति ददातीतीशानकृत् । मघवा धनवान् पुरूवसुः जगन्निवासः, पुरूणि नित्यानि वसूनि यस्येति वा । स इन्द्रः अस्मान् अयामन् अयामनि सर्वदा उग्रः उद्गमयिता । उत्पूर्वादन्तर्णीतण्यर्थाद् गमेः ड्रः, उपपदान्त्यलोपः । सर्वदा सम्यक् स्वरूपाभिव्यञ्जकः सन् गोः गाम् अश्वस्य अश्वं च नः अस्मभ्यं प्रदातु, समाने लोपः, प्रददातु ।

अनेन वृतु वर्तने इत्यस्मात् कर्तरि क्तः, वृत्तं विद्यमानम् । निर्निषेधार्थः । विद्यमानं न भवतीति

निवृत्तमनित्यम् । तत्र भवतीत्यानिवृत्तं स्वभृत्यस्वरूपाभिव्यञ्जकत्वगवाश्वादिदानादिनित्यधर्म-जातम् । तदस्यास्तीत्यनिवृत्तीति निरुक्तेः अयामन्तुग्रः गोरश्वस्य प्र दातु न इत्यनेन सूचनाद् **अनिवृत्तिमूर्तिरत्र** ॥ ६०९ ॥

**॥ ॐ निवृत्तात्मने नमः ॥**

**यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति ।**
**वसूयवो वसुपतिं शतक्रतुं स्तोमैः ॥ ६१० ॥**

हे वसो इन्द्र यस्मै जनाय दानाय दातुं मंहसे इच्छसि मनः करोषि स जनो रायस्पोषं द्रविणस्य पुष्टिं इन्वति प्राप्नोति । तमेनममोघसंकल्पं शतक्रतुं बहुकर्माणं वसुपतिं द्रविणपतिमिन्द्रं वसूयवो द्रविणकांक्षिणो वयं स्तोमैः स्तोत्रैः हवामहे । (इत्युत्तरेणान्वयः) ।

अनेन नितरां वृत्तो निवृत्तः अमोघः आत्मा मनो यस्य सः निवृत्तात्मा अमोघसङ्कल्प इति निरुक्तेः यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वतीत्यनेन सूचनात् **निवृत्तात्ममूर्तिरत्र** ॥ ६१० ॥

**॥ ॐ संक्षेप्त्रे नमः ॥**

**इन्द्रं हवामहे । कदा चन प्र युच्छस्युभे नि पासि**
**जन्मनी । तुरीयादित्य हवनं त इन्द्रियमातस्थौ ॥ ६११ ॥**

हे इन्द्र अस्मदिष्टं कदा प्रयुच्छसि । चन किञ्च उभे जन्मनी पितुः शरीरान्मातुः शरीरप्रवेशः प्रथमं जन्म मातुः शरीराच्चाधःपतनं द्वितीयं जन्म, एवंविधे उभे अपि जन्मनी कदा निपासि रक्षसि । विशिष्टमातापितृभ्यां कदा अस्मान् संगमयसीति यावत् । हे आदित्य आदौ प्रलयकाले स्थित ते तव हवनं स्तुत्यम् इन्द्रियमिन्द्रादिदेवताप्रवर्तकं मुक्तानामिन्द्रियानन्दकरं वा द्रविणरूपं वा अमृतं नित्यमुक्तं तुरीय तुरीयं चतुर्थं वासुदेवाख्यं रूपमातस्थौ सम्यग् वर्तते, दिवि श्वेतद्वीपादाविति (उत्तरेण) संबन्धः ।

अनेनोत्पत्स्यमानजीवजातं पितुः शरीरादुत्कृष्य मातृशरीरे संक्षिपति, मातृशरीराच्च भुवि

संक्षिपतीति संक्षेप्ता । संपूर्वात् क्षिप निरसने इत्यतस्तृच्, इति निरुक्तेः उभे निपासि जन्मनीत्यनेन सूचनात् **संक्षेप्तृमूर्तिरत्र** ॥ ६११ ॥

॥ ॐ क्षेमकृते नमः ॥

**अमृतं दिवि । यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो**
**शिक्षसि दाशुषे । अस्माकं गिर उत सुष्टुतिं वसो ॥ ६१२ ॥**

हे गिर्वणः मघवन् वसो इन्द्र यस्मै त्वं शिक्षो शिक्षसि शिक्षितुमुपदेष्टुमिच्छसि तं शिक्षस्येव उपदिशस्येव । यत एवं भक्तानुग्रहकातरः तस्मात् अस्माकं गिरः अस्मदीयवचनानि उत सुष्टुतिं समीचीनस्तुतिं च हवमाह्वानं च, कण्ववत् कण्वस्येव शृणुधीति (उत्तरेण) संबन्धः ।

अनेन क्षि निवासगत्योरित्यस्मात् अतिस्तुसुहुसृधृक्षीन्यादिना मन् प्रत्ययः । ''त्रिष्वथ क्षेमम-स्त्रियाम् । मङ्गलेऽलं भवेक्षणे'' इति रत्नमालोक्तेः क्षिणोति सुखं निवसत्यनेनेति तदेवोपदेशरूपं मङ्गलं क्षेमं करोतीति क्षेमकृदिति निरुक्तेः शिक्षो शिक्षसि दाशुषे इत्यनेन सूचनात् **क्षेमकृन्मूर्तिरत्र** ॥ ६१२ ॥

॥ ॐ शिवाय नमः ॥

**कण्ववच्छृणुधी हवम् । अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय**
**वोचत । पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुः ॥ ६१३ ॥**

हे जनाः मन्म, मनु अवबोधने इत्यतो मनिन् प्रत्ययः, मनुते जानातीति मन्म, पूर्व्यं पुरातनं ब्रह्म मया अस्तावि स्तुतमासीत् । यूयमपि ऋतस्य वेदस्य पूर्वीरनादिनित्या बृहतीः गिरः इन्द्राय इन्द्रमुद्दिश्य वोचत ब्रूत अनूषत स्तुत च ।

अनेन स्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभमित्यमरोक्तेः कल्याणरूपं ज्ञानं शिवं, तदस्यास्तीति अर्शआदिभ्योऽच्, शिवो ज्ञानवानिति निरुक्तेः मन्मेत्यनेन सूचनात् **शिवमूर्तिरत्र** ॥ ६१३ ॥

॥ ॐ श्रीवत्सवक्षसे नमः ॥

**मेधा असृक्षत । समिन्द्रो रायो बृहतीरधूनुत सं**
**क्षोणी समु सूर्यम् । सं शुक्रासः शुचयः सं गवाशिरः ॥ ६१४ ॥**

स इन्द्रः स्तोतुः स्तुतवतां युष्माकं मेधाः प्रज्ञाः असृक्षत, सृज विसर्गे, दास्यतीति यावत् । अयमिन्द्रो बृहतीः पूज्याः रायो द्रविणानि समधूनुत शत्रुभ्यश्चालयामास । किञ्च क्षोणी क्षोणीं भूमिं सूर्यं सूर्यमपि समधूनुत । तमेवंभूतमिन्द्रं सं शुक्रासः सम्यक् शुभ्राः शुचयः पवित्रिताः गवाशिरः गोपयसा मिश्रिताः सोमाः भवद्वृहेषु अमन्दिषुः प्रीणयेयुः । (इत्युत्तरेण संबन्धः) ।

अनेन श्रीङ् श्रयणे इत्यतः क्विप्, दीर्घः सम्प्रसारणाभावश्च । श्रयत इति श्रीः कान्तिः । श्रीर्वेषरचनाशोभेत्यादेः । वद व्यक्तायां वाचीत्यतो वृतृवदीत्यादिना सप्रत्ययः, धातोरनेकार्थत्वाद् वदति वहतीति वत्सः, वक्ष रोषे इत्यतोऽसुन्प्रत्ययः, वक्षतिरिह कम्पनार्थः । श्रियं कान्तिं वहतीति श्रीवत्सः सूर्यः, तं वक्षति चालयतीति श्रीवत्सवक्षाः । श्रयन्तेऽत्र जना इति श्रीः क्षोणी, तेजो वहतीति वत्सः सूर्यः, तौ वक्षति कम्पयतीति वा । इति निरुक्तेः धूनुत सं क्षोणी समु सूर्यमित्यनेन सूचनात् **श्रीवत्सवक्षोमूर्तिरत्र** ॥ ६१४ ॥

॥ ॐ श्रीवासाय नमः ॥

**सोमा इन्द्रममन्दिषुः । [१]उपमं त्वा मघोनां ज्येष्ठं च**
**वृषभाणाम् । पूर्भित्तमं मघवन्निन्द्र गोविदम् ॥ ६१५ ॥**

एवं भूताः सोमा इन्द्रममन्दिषुः इति पूर्वेण संबन्धः । हे मघवन् इन्द्र मघोनां यज्वनां वृषभाणां चोपमं सदृशं ज्येष्ठं प्रशस्यं पूर्भित्तमं शत्रु पुराणामतिशयेन भेत्तारं गोविदं गोविन्दं वेदवेद्यं त्वामीमहे ।

अनेन श्रीः वेदवाणी वसति प्रतिपादकतया अत्रेति श्रीवास इति निरुक्तेः गोविदमित्यनेन सूचनात् **श्रीवासमूर्तिरत्र** ॥ ६१५ ॥

१. ऋग्वेद ८-५३. मेध्यः काण्वः । पञ्चममिदं वालखिल्यसूक्तम् ।

॥ ॐ श्रीपतये नमः ॥

**ईशानं राय ईमहे । य आयुं कुत्समतिथिग्वमर्दयो**
**वावृधानो दिवेदिवे । तं त्वा वयं हर्यश्वं शतक्रतुम् ॥ ६१६ ॥**

य इन्द्रस्त्वम् आयुं कुत्समतिथिग्वम् एतन्नामकान् त्रीन् ऋषीन् अर्दयः, अर्द गतौ याचने च, रक्षितुं गतवान् । दिवेदिवे प्रतिदिनं वावृधानश्च । तमेवंभूतमिन्द्रं हर्यश्वं शतक्रतुं रायो द्रविणस्य ईशानं त्वा त्वाम् ईमहे ।

अनेन भगवन्तं श्रयन्त इति श्रियः आयुकुत्सातिथिग्वादयः,तान् पाति रक्षतीति श्रीपतिरिति निरुक्तेः य आयुं कुत्समतिथिग्वमर्दय इत्यनेन सूचनात् **श्रीपतिमूर्तिरत्र** ॥ ६१६ ॥

॥ ॐ श्रीमतांवराय नमः ॥

**वाजयन्तो हवामहे ।** आ नो **विश्वेषां रसं मध्वः**
**सिश्चन्त्वद्रयः । ये परावति सुन्विरे जनेष्वा ॥ ६१७ ॥**

ये इन्दवः परावति ऊर्ध्वलोके जनेषु जनैः आसुन्विरे सम्यक् सुताः नो विश्वेषां समस्तानामस्माकं संबन्धिनां तेषां मध्वः मधूनामिन्दूनां सम्प्रति अद्रयो नद्यः आसिश्चन्तु संमिश्रिता भवन्तु । तैश्च रसैर्वाजयन्तः अन्नमभीप्समाना वयं नः स्वामिनमिन्द्रं हवामहे ।

अनेन ''श्रीर्वेषरचनाशोभासंपत्सरलशाखिषु । वाणीलक्ष्मीलवङ्गेषु विषे बिल्वेऽप्यथ त्रिषु'' इत्यादेः श्रीशब्दो विषशब्दितजलवाची, जीवनीयं कुशं विषमित्युक्तेः । तदेषामस्तीति श्रीगन्तो जलमिश्रितसोमरसाः, तेषां वरो वरेण्यः, वृञः कर्मण्यकारप्रत्ययः, इति निरुक्तेः रसं मध्वः सिश्चन्त्वद्रय इत्यनेन सूचनात् **श्रीमतांवरमूर्तिरत्र** ॥ ६१७ ॥

॥ ॐ श्रीदाय नमः ॥

**ये अर्वावतीन्दवः । विश्वा द्वेषांसि जहि चाव चा कृधि**
**विश्वे सन्वन्त्वा वसु । शीष्टेषु चित्ते मदिरासो अंशवः ॥ ६१८ ॥**

हे इन्द्रः अर्वावति भूलोके स्थितान् विश्वा विश्वानि समस्तानि द्वेषांसि अस्मद्द्वेषिजनान् आ

जहि अव च अधश्च कृधि अधः पातय । शीष्टेषु अस्मद्द्वेहेषु मदिरासो मदहेतवः अंशवो वेगवन्तः ये इन्दवः ते वसु द्रविणानि आ समन्तात् चित् अपि सन्वन्तु, षण दाने, दद्युः ।

अनेन श्रीर्विषं तद्वन्तो द्वेषिणः श्रियः, मतुपो लुक्. दो अवखण्डने इत्यतो डः, श्रियो द्वेषिजनान् द्यति खण्डयतीति श्रीदः । अथवा श्रीः सम्पत्, तां ददातीति श्रीद इति निरुक्तेः द्वेषांसि जहि वसु सन्वन्तु इत्यनेन सूचनात् **श्रीदमूर्तिरत्र** ॥ ६१८ ॥

**॥ ॐ श्रीशाय नमः ॥**

**यत्रा सोमस्य तृम्पसि । इन्द्र नेदीय एदिहि मितमेधा-**
**भिरूतिभिः । आ शन्तम शन्तमाभिरभिष्टिभिः ॥ ६१९ ॥**

हे इन्द्र यत्र यस्मिन् गृहे सोमस्य सोमेन तृम्पसि तृप्तो भवसि तद्गृहे इन्दवः सन्वन्त्विति (पूर्वेण) संबन्धः । शन्तमाभिः सुखहेतुभिः ऊतिभिः रक्षाभिः शन्तम सर्वलोकसुखकर नेदीयः सर्वजनसमीपस्थित मितमेधाभिः प्रमितप्रज्ञाभिः अभिष्टिभिः अभीष्टैः सह, अभीष्टानि दातुम्, एहि सम्यगागच्छ इत् एव ।

अनेन श्रयत इति श्रीर्मेधा, तस्या ईशो दाता श्रीश इति निरुक्तेः मितमेधाभिरेहीत्यनेन सूचनात् **श्रीशमूर्तिरत्र** ॥ ६१९ ॥

**॥ ॐ श्रीनिवासाय नमः ॥**

**आ स्वापे स्वापिभिः । आजितुरं सत्पतिं विश्वचर्षणिं**
**कृधि प्रजास्वाभगम् । प्र सू तिरा शचीभिर्ये त उक्थिनः ॥ ६२० ॥**

हे स्वापे भक्तैः सम्यक् प्राप्य इन्द्र ते प्रसिद्धाः उक्थिनः स्तोत्रपाठकाः शचीभिर्वाग्भिः क्रतुं यज्ञं पुनते पवित्रयन्ति तासु प्रजासु तेषु जनेषु आ समन्तात् भगं षड्गुणजातं प्रसुतिर सम्यग् देहि । किञ्च तं जनम् आजितुरं युद्धे त्वरमाणं सत्पतिं सज्जनानां पतिं पालयितारं विश्वचर्षणिं समस्तप्रजानाथं स्वापिभिः प्राप्यैः सहितं कृधि कुरु ।

अनेन श्रयते इति श्रीः सम्पत् ज्ञानैश्वर्यादिषड्गुणजातं निवसत्यत्रेति श्रीनिवास इति निरुक्तेः कृधि प्रजास्वाभगमित्यनेन सूचनात् **श्रीनिवासमूर्तिरत्र** ॥ ६२० ॥

॥ ॐ श्रीनिधये नमः ॥

**क्रतुं पुनत आनुषक् । यस्ते साधिष्ठोऽवसे ते स्याम**
**भरेषु ते । वयं होत्राभिरुत देवहूतिभिः ॥ ६२१॥**

यः ये वयम् आनुषक् सर्वतः साधिष्ठः साधनानुष्ठानपराः ते वयं ते तव अवसे रक्षणाय स्याम त्वद्रक्षणगोचरा भवेम । किञ्च भरेषु युद्धेषु ते होत्राभिः त्वदाह्वानैः देवहूतिभिर्देवाह्वानैश्च स्याम ।

अनेन श्रयत इति श्रीरवनं तन्निधापयति भक्तेषु स्थापयतीति श्रीनिधिः, नि पूर्वाद् धात्रः कर्मण्यधिकरणे चेति किः, इति निरुक्तेः अवसे ते स्यामेत्यनेन सूचनात् श्रीनिधिमूर्तिरत्र ॥ ६२१॥

॥ ॐ श्रीविभावनाय नमः ॥

**ससवांसो मनामहे । अहं हि ते हरिवो ब्रह्म वाजयुराजिं**
**यामि सदोतिभिः । त्वामिदेव ममे[२] समश्वयुः ॥ ६२२ ॥**

हे हरिवः इन्द्र वयं ससवांसः, सच समवाये लिटि क्वसि च रूपमेतत्, त्वद्भवत्यादिभिः संयुक्ताः सन्तः त्वदीयं नाम मनामहे आवर्तयामः । किञ्चाहं ते ऊतिभिः प्रेरणाभिः वाजयुः धनाद्यपेक्षमाणः समम्रे सम्यग् जानामि प्रार्थयामि ।

अनेन श्रयत इति श्रीः ब्रह्म स्तोत्रं तद् विभावयति प्रेरयतीति श्रीविभावनः, विपूर्वाद् भवतेःणिजन्तात् ल्युः, इति निरुक्तेः श्रीविभावनमूर्तिरत्र ॥ ६२२ ॥

॥ ॐ श्रीधराय नमः ॥

**गव्युरग्रे मथीनाम् ।[१] एतत् त इन्द्र वीर्यं गीर्भिर्गृणन्ति**
**कारवः । ते स्तोभन्त ऊर्जमावन् घृतश्चुतम् ॥ ६२३ ॥**

हे इन्द्र मथीनां मतीनां मतिमतां जनानाम् अग्रे गव्युः ज्ञानवान् अहं भूयासम् । हे इन्द्र कारवः ऋत्विजः ते तव एतत् भक्तवात्सल्यादिकं वीर्यं सामर्थ्यं गीर्भिः वेदवाग्भिः गृणन्ति स्तुवन्ति । किञ्च ते ऊर्जं देवेभ्यो दीयमानमन्नं घृतश्चुतं घृतप्लुतम् स्तोभन्तः सम्पादयन्तः आवन् सम्यग् ददुः ।

१. ऋग्वेद ८-५४, मातरिश्वः काण्वः । षष्ठं वालखिल्यसूक्तमिदम् । अवशिष्टानि पञ्च वालखिल्यसूक्तानि बृहतीसहस्रशंसने नोपयुज्यन्ते । २. 'तममे' इति मुद्रितपुस्तकपाठः ।

अनेन श्रयते इति श्रीः वीर्यं तद् धरतीति श्रीधर इति निरुक्तेः एतत्त इन्द्र वीर्यमित्यनेन सूचनात् **श्रीधरमूर्तिरत्र** ॥ ६२३ ॥

॥ ॐ श्रीकराय नमः ॥

**पौरासो नक्षन् धीतिभिः । नक्षन्त इन्द्रमवसे सुकृत्यया**
**येषां सुतेषु मन्दसे । यथा संवर्ते अमदः ॥ ६२४ ॥**

हे इन्द्र पौरासः समस्ता अपि जनाः धीतिभिस्त्वत्पूजनैः नक्षन्, नक्ष गतौ, अनक्षन् त्वामेव प्राप्नुवन् । येषां जननां गृहे सोमेषु सुतेषु मन्दसे प्रीतो भवसि ते जनाः सुकृत्यया त्वत्प्रसादहेतुभूतकर्मणा जातेन अवसे अवसा ज्ञानेन इन्द्रं त्वां नक्षन्ते गच्छन्ति । किञ्च संवर्ते उत्कृष्टे जने यथा अमदः प्रीतोऽभवः, अस्योत्तरेण संबन्धः ।

अनेन श्रयते इति श्रीः सुकृत्या तया ज्ञानं करोति ददातीति श्रीकरः, इति निरुक्तेः सुकृत्यया अवसे इत्यनेन सूचनात् **श्रीकरमूर्तिरत्र** ॥ ६२४ ॥

॥ ॐ श्रेयसे नमः ॥

**यथा कृश एवास्मे इन्द्र मत्स्व । आ नो विश्वे सजोषसो**
**देवासो गन्तनोप नः । वसवो रुद्र अवसे नः ॥ ६२५ ॥**

''इदमुद्दिश्य च द्रुतः'' इत्युक्तेः इदंशब्दे उपपदे द्रु गतावित्यस्मात् डः उपपदशब्दलोपः । इदं प्रशंसनं प्रति द्रुतेर्गमनात्, प्रशंसाविषयत्वादिन्द्रः तस्य संबुद्धिः हे इन्द्र । एव एवमुत्कृष्टे जने यथा अमदः (तथा) कृशेऽपि अस्मे मयि यथा यथायोग्यं मत्स्व प्रीतो भव । किञ्च विश्वे समस्ताः देवासः देवा अपि सजोषसः सेव्यमानाः प्रीयमाणा वा नः उप समीपं अस्मदीयं गृहं प्रति नः अवसे रक्षणाय आ गन्तन आगच्छन्तु । तानेव देवान् किञ्चिद् विवृणोति । वसवोऽष्टौ रुद्रा एकादशेति ।

अनेन प्रशस्यं ब्रह्मादिदेवजातं परं ब्रह्म च । अनयोरिदं प्रशस्यमित्यर्थे द्विवचनविभज्योपपदे तरबीयसुनाविति सूत्रेणेयसुन् प्रत्ययः । प्रशस्यस्य श्र इति श्रादेशे गुणे च श्रेयः प्रशस्यतरमिति निरुक्तेः इन्द्रशब्देन सूचनात् **श्रेयोमूर्तिरत्र** ॥ ६२५ ॥

॥ ॐ श्रीमते नमः ॥

**आ गमच्छृण्वन्तु मरुतो हवम् । पूषा विष्णुर्हवनं मे**
**सरस्वत्यवन्तु सप्त सिन्धवः । आपो वातः पर्वतासः ॥ ६२६ ॥**

हे इन्द्र त्वदाज्ञया मरुतः पश्चाशात् पूषा सूर्यः विष्णुर्यज्ञाभिमानी देवः सरस्वती वेदाभिमानिदेवता सप्त सिन्धवः आपः वातो वायुः पर्वतासः पर्वताः एतदभिमानिनो देवाः सर्वेपि मदीयं यज्ञम् आगमन् आगच्छन्तु । आगत्य च सर्वे देवा नो हवं शृण्वन्तु । श्रुत्वा च हवनं यज्ञमवन्तु ।

अनेन श्रयन्ते इत्ति श्रियो ब्रह्मादिदेवाः, सर्वेऽपि ते अस्याज्ञायां सन्तीति श्रीमानिति निरुक्तः श्रीमन्मूर्तिरत्र ॥ ६२६ ॥

॥ ॐ लोकत्रयाश्रयाय नमः ॥

**वनस्पतिः शृणोतु पृथिवी हवम् । यदिन्द्र राधो अस्ति**
**ते माघोनं मघवत्तम । तेन नो वोधि ॥ ६२७ ॥**

मघवत्तम हे इन्द्र ते आज्ञया वनस्पतिः पृथिवी तद्देवता च मदीयं हवं स्तोत्रं शृणोतु । किञ्च माघोनं यज्ञसम्बन्धि राधः प्रीतिः अस्ति यद् यस्मादेवं तस्मात् नः अस्मान् बोधि बोधय, यज्ञकर्मणि प्रेरय ।

अनेन लोक दर्शने इत्यतो हलश्चेति सूत्रेणाधिकरणे घञ्, लोकते आश्चर्यमत्रेति लोकः । त्रैङ् पालने इत्यतः कर्तरि अयप्रत्ययः, त्रायते जनानिति त्रयम् । लोकश्चासौ त्रयं च लोकत्रयम् । राधः प्रसादः, भगवत्प्रसादे हि सर्वाण्यप्याश्चर्याणि दृश्यन्ते, रक्षकत्वं च । तथा च लोकत्रयस्य राधस आश्रय इति वा, लोकं भुवनं त्रायत इति लोकत्रयं राधः, तदाश्रयत्वादिति वा लोकत्रयाश्रय इति निरुक्तः यदिन्द्र राधो अस्ति ते इत्यनेन सूचनात् लोकत्रयाश्रयमूर्तिरत्र ॥ ६२७ ॥

॥ ॐ स्वक्षाय नमः ॥

**सधमाद्यो वृधे भगो दानाय वृत्रहन् । आजिपते नृपते**
**त्वमिद्धि नो वाज आ वक्षि सुक्रतो । वीती होत्राभिः ॥ ६२८ ॥**

हे वृत्रहन् सुक्रतो तव भग ऐश्वर्यम् अस्ति । तेन नः अस्मभ्यं दानाय सधमाद्यो यज्ञे प्रीयमाणो भवान् वृधे ववृधे अभिवृध्दो भवतु । हे आजिपते युध्दपते नृपते राजन् त्वं नो वाजे भोगविषये वीती वीतीः गमनानि होत्राभिर्मन्त्रैः सन्तुष्ट आ वक्षि आवहसि वहेः । मद्गृहं प्राप्नुया इत्यर्थः ।

अनेन सु सम्यग् अक्षति प्राप्नोति यज्ञगृहमिति स्वक्ष इति निरुक्तेः वीती होत्राभिरावक्षीत्यनेन सूचनात् स्वक्षमूर्तिरत्र ॥ ६२८ ॥

॥ ॐ स्वङ्गाय नमः ॥

**उत देववीतिभिः ससवांसो वि शृण्विरे । सन्ति ह्यर्य**
**आशिष इन्द्र आयुर्जनानाम् । अस्मान् नक्षस्व ॥ ६२९ ॥**

हे इन्द्र ये देवाः ससवांसः सहगच्छन्तः परिवारभूताः सन्तो नो हवं शृण्विरे तेषां देवानां देववीतिभिः देवतागमनैः सह आशिषः आशास्यमानानि ज्ञानधनछलतेजोधान्यानि जनानामायुश्च अर्ये स्वामिनि इन्द्रे त्वयि सन्ति हि यस्मात् तस्मात् अस्मान् नक्षस्व प्राप्नुहि ।

अनेन अगि लगि गत्यर्थावित्युक्तेः पचाद्यच् नुमागमश्च । अङ्गानि अनुसृत्य गच्छन्तीत्यङ्गाः परिवारभृता देवाः । सु समीचीना अङ्गाः देवा अस्य सन्तीति स्वङ्ग इति निरुक्तेः ससवांस उत देववीतिभिरित्यनेन सूचनात् स्वङ्गमूर्तिरत्र ॥ ६२९ ॥

॥ ॐ शतानन्दाय नमः ॥

**मघवन्नुपावसे धुक्षस्व पिप्युषीमिषम् । वयं त इन्द्र**
**स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ॥ ६३० ॥**

हे मघवन् इन्द्र पिप्युषीं पुष्टिकरीमीषमन्नं अवसे रक्षणाय उप धुक्षस्व, दुहप्रपूरणे देहि । डु कृञ् करणे इत्यस्मादतुप्रत्ययः । करोति जगद्व्यापारमनेनेति क्रतुः आनन्दः । आनन्दोद्रेकादेव हि विश्वं करोति भगवान्, इतरेषां दुःखनिवृत्त्यादिकारणानामसंभवात् । शतशब्दो वहुवाची, शतशब्दो बहुवचन इत्युक्तेः। शता बहवःक्रतव आनन्दा यस्य सः शतक्रतुः ।हे शतक्रतो इन्द्र स्तोमेभिःस्तोत्रैःते तव विधेम,विधेया दासाः स्मः त्वं चास्माकं स्वाम्यसि ।

अनेन शता अपरिमिता आनन्दा यस्य सः शतानन्द इति निरुक्तेः शतक्रतुशब्देन सूचनात् **शतानन्दमूर्तिरत्र** ॥ ६३०॥

**॥ ॐ नन्दये नमः ॥**

**महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशय।**
**[१]यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयं ॥ ६३१ ॥**

हे इन्द्र महि महत् स्थूरं स्थूलं अह्रयमहेयं शशयं सुखपूर्णं राधः श्रेयः प्रस्कण्वाय कण्वपुत्राय मह्यं नि नितरां तोशय देहि। य इन्द्रः सत्राहा सत्रा शत्रूणां समूहः तां हन्तीति सत्राहा। विचर्षणिः विशिष्टज्ञानवान्। तमिन्द्रं वयं हूमहे स्तुतिपदैराह्वयामः।

अनेन टु नदी समृध्दावित्यतोऽन्तर्णीतण्यर्थात् कि प्रत्ययः,नन्दयति प्रस्कण्वादिभक्तानिति नन्दिरिति निरुक्तेः शशयं नि तोशयेत्यनेन सूचनात् **नन्दिमूर्तिरत्र** ॥ ६३१ ॥

**॥ ॐ ज्योतिर्गणेश्वराय नमः ॥**

**सहस्रमुष्क तुविनृम्ण सत्पते भवा समत्सु नो वृधे।**
**वाधसे जनान् वृषभेव मन्युना घृषौ मीळ्ह ऋचीषम ॥ ६३२ ॥**

प्रत्यक्षीकृतः स्तूयते। हे सहस्रमुष्क सहस्रदोष यां कांचन स्त्रियं समभिभवन्निन्द्रः भोगलोलुपतया स्वशरीरे पर्वणि पर्वणि दोषान् ससर्जेति कौशीतकिभिराम्नातम्। तदभिप्रायेणेदं सम्बोधनम्। हे तुविनृम्ण बहुधनसम्पन्न। सन्नक्षत्रपथे साधावित्युक्तेः सन्तो नक्षत्रमार्गाः, तेषां पालयिता। यद्वा षद्लृ विशरणेत्यादेर्गत्यर्थात् सदेः कर्तरि किप्। असाधारण्येन व्यपदेशा भवन्तीति न्यायेन प्रकाशमाना गच्छन्तीति सन्तः सूर्यादिज्योतिर्गणाः, तेषां पतिः पालकः सत्पतिः। हे सत्पते इन्द्र समत्सु संग्रामेषु नोऽस्माकं वृधे वर्धनाय भव। हे ऋचीषम वेदप्रतिपादनानुकूलगुणशालिन् इन्द्र घृषौ शत्रूणां धर्षके बाधके मीळ्हे संग्रामे जानन् अस्मदीयान् शत्रून् वृषभेव वृषभेणेव बलवता मन्युना क्रोधेनैव बाधते बाधस्व।

---

१ ऋग्वेद ६-४६-३, शंयुर्बार्हस्पत्यः। इत आरभ्यैकादशबृहत्यः पूर्वमन्त्रस्योत्तरार्धमुत्तरमन्त्रस्य पूर्वार्धं तत उत्तरमन्त्रस्योत्तरार्धं तदुत्तरमन्त्रस्य पूर्वार्धं च विहृत्य सम्पादिताः।

अनेन सन्तो ज्योतिषां गणाः समूहाः तेषामीश्वरः स्वामी ज्योतिर्गणेश्वर इति निरुक्तेः सत्पते इत्यनेन सूचनात् **ज्योतिर्गणेश्वरमूर्तिरत्र** ॥ ६३२ ॥

**॥ ॐ विजितात्मने नमः ॥**

**अस्माकं बोध्यविता महाधने तनूष्वप्सु सूर्ये ।**
**इन्द्र ज्येष्ठं न आ भरँ ओजिष्ठं पपुरि श्रवः ॥ ६३३ ॥**

हे इन्द्र महाधने युद्धे अस्माकमविता दाता सन् बोधि बोधस्व । रक्षितृत्वेनात्मानं जानीहि, प्रयत्नवान् भवेति यावत् । किमर्थम् । तनूषु तनयेषु अप्सु उदकेषु कर्मसु वा सूर्ये एषु लब्धव्येषु सत्सु । एतेषां तनयादीनां लाभार्थं । सूर्यस्य लाभः सन्दर्शनम् । ज्येष्ठं प्रशस्यतमम् ओजिष्ठमोजस्वितमम् अतिशयेन बलकरं पपुरि पूरकं श्रवः अन्नं यशो वा अस्मभ्यमाभर ।

अनेन विपूर्वाज्जेर्भावे क्तः, विजितं विजयः, तनयादीनां विजिते विजये प्राप्तौ आत्मा यत्नधृतिस्वान्तेत्यादेरात्मा प्रयत्नः यस्य स विजितात्मा, भक्तस्य तनयाद्यभीष्टदाने प्रयत्नवानिति यावत्, इति निरुक्तेरविता बोधि तनूष्वप्सु सूर्ये इत्यनेन सूचनाद् **विजितात्ममूर्तिरत्र** ॥ ६३३ ॥

**॥ ॐ विधेयात्मने नमः ॥**

**येनेमे चित्र वज्रहस्त रोदसी ओभे सुशिप्र प्राः ।**
**त्वामुग्रमवसे चर्षणीसहं राजन् देवेषु हूमहे ॥ ६३४ ॥**

हे चित्र विभो तत[1] वज्रहस्त सुशिप्र सुन्दर येन अन्नेन यशसा वा इमे परिदृश्यमाने उभे रोदसी द्यावापृथिव्यौ आप्राः पूरयसि । उपलक्षणमेतत् । सर्वानपि जीवसंघान् बिभर्षि । हे राजन् राजमान देवेषु उग्रं उद्गीर्णबलं चर्षणीसहं शत्रुसंमर्दसहं त्वाम् अवसे रक्षणाय हूमहे आह्वयामः ।

अनेन विधेया नियम्या आत्मानो द्यावापृथिव्यादय जीवसंघा यस्य स विधेयात्मेति निरुक्तेः उभे रोदसी आप्रा इत्यनेन सूचनाद् **विधेयात्ममूर्तिरत्र** । केनाप्यविधेयः अनियम्यः आत्मा स्वरूपं यस्य स अविधेयात्मा इत्यकारप्रश्लेषेण छेदोऽपि युक्त एव । अर्थात् ऋगर्थोपि भविष्यति ॥ ६३४ ॥

---

१. ''चित्र विभो तत'' इत्येव सर्वकोशेषु । अर्थस्तु न स्फुटः । चित्र चितृतर अतिशयितज्ञानरूप इत्यपि व्याख्यानमस्ति चित्रं देवानामित्यत्र प्राचाम् ।

॥ ॐ सत्कीर्तये नमः ॥

**विश्वा सु नो विथुरा पिब्दना वसोऽमित्रान् त्सुषहान् कृधि ।**
**यदिन्द्र नाहुषीष्वाँ ओजो नृम्णं च कृष्टिषु ॥ ६३५ ॥**

हे वसो इन्द्र विश्वा विश्वानि पिब्दना पिब्दनानि, पिहितं अव्यक्तशब्दत (?) इति रक्षांसि विथुरा सुविधुराणि सम्यग् बाधितानि कृधि कुरु । किञ्च नः अस्मदीयान् अमित्रान् शत्रून् सुसहान् सुखेन अभिभवितुं शक्यान् कृधि । किञ्च नाहुषीषु, नहुष इति मनुष्यनाम, मनुष्यरूपासु कृष्टिषु प्रजासु, चकारः समुच्चये, नृम्णं यशः सुखं वा यच्च ओजः, ओजःशब्द गुणे ज्ञाने बले कीर्तिप्रकाशयोरित्युक्तेः, कीर्तिज्ञानादिगुणजातं च कृधि कुरु ।

अनेन कृत संशब्दने इत्येतस्मात् टपिशिरुहीत्यादिना क्तिन् प्रत्ययः । उपधायाश्चेतीत्वं, वेरुपधाया दीर्घ इक इति दीर्घः, कीर्तिः शब्दः, यश इति यावत् । सती निर्दुष्टा कीर्तिर्यस्य सः सत्कीर्तिरिति निरुक्तेः ओजो नृम्णं च कृष्टिषु इत्यनेन सूचनात् **सत्कीर्तिमूर्तिरत्र** ॥ ६३५ ॥

॥ ॐ छिन्नसंशयाय नमः ॥

**यद् वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ।**
**यद् वा तृक्षौ मघवन् द्रुह्यावा जने यत् पूरौ कच्च वृष्ण्यम् ॥ ६३६ ॥**

हे इन्द्र निषादपञ्चमा ब्राह्मणादयः पञ्चक्षितयः, तेषां पञ्चक्षितीनाम् । यद् वा यच्च स्वभूतं द्युम्नं सुखं तत् सर्वमस्मभ्यमाभर । तथा सत्रा महन्ति विश्वानि समस्तानि पौंस्या पौंस्यानि सामर्थ्यानि शत्रुसंहर्तृत्वादीनि आभर । हे मघवन् इन्द्र तृक्षौ एतन्नाम्नि राजनि यद् वा यच्च बलं विद्यते द्रुह्यौ जने एतन्नाम्नि राज्ञि यद् बलमस्ति पूरौ एतत्संज्ञके कच्च यत्किंचिद् वीर्यं विद्यते तत् सर्वमस्मभ्यमाभरेति संबन्धः ।

अनेन संपूर्वात् शीङ् स्वप्ने इत्यत एरच् (?)। शेते युध्दभूमाविति संशयः शत्रुः । छिन्नः संशयः शत्रुर्यस्मात् सः छिन्नसंशय इति निरुक्तेः सत्रा विश्वानि पौंस्येत्यनेन सूचनात् **छिन्नसंशयमूर्तिरत्र** ॥ ६३६ ॥

॥ ॐ उदीर्णाय नमः ॥

**अस्मभ्यं तद् रिरीहि सं नृषाह्येऽमित्रान् पृत्सु तुर्वणे ।**
**इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ॥ ६३७ ॥**

हे इन्द्र नृसह्ये नृभिर्योद्धृभिः सोढव्ये युध्दे प्रवृत्ते पृत्सु पृतनासु अमित्रान् शत्रून् तुर्वणे तुर्वितुं हिंसितुं अस्मभ्यं तद् बलं सं रिरीहि सम्यक् प्रयच्छ । त्रिधातु उपर्युपरि त्रेधा बध्दम्, धर्मार्थकामानां त्रयाणां धारकं वा । त्रिवरूथं त्रयाणां शीतातपवर्षणां सकाशात्[1] अन्तर्णीतण्यर्थाद् ऋ गतावित्यतः कर्तरि क्तः, ऋत इद्धातोरिति रपर इकारः, हलि चेति दीर्घः, रदाभ्यामिति निष्ठातकारस्य नः, तस्य जश्त्वेन दः । उत् उत्कृष्टस्य शरणादेः ईर्णः गमयितेत्युदीर्णः । यद्वा उत्पूर्वाद् दृ विदारणे इति धातोः कर्तरि क्तः शेषं पूर्ववत् । उ सम्यक् शत्रून् दृणाति हिनस्तीत्युदीर्ण इति निरुक्तेः त्रिधातु शरणं रिरीहीत्यनेन सूचनात् **उदीर्णमूर्तिरत्र** ॥ ६३७ ॥

॥ ॐ सर्वतश्चक्षुषे नमः ॥

**छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ।**
**ये गव्यता मनसा शत्रुमादभुरभि प्रघ्नन्ति धृष्णुया ॥ ६३८ ॥**

हे इन्द्र छर्दिः छर्दिष्मत् आच्छादनयुक्तं शरणं गृहं मघवद्भ्यः त्वत्पूजकेभ्य अस्मदीयेभ्यः मह्यं च शंयुनामकाय यच्छ देहि । ये जनाः गव्यता अस्मदीया गा इच्छता मनसा शत्रुं वैरिणम् आ दभुः अहिंसिषुः ये च धृष्णुया धृष्णुत्वेन धैर्येण अस्मान् प्रघ्नन्ति एभ्यः तेभ्यो विसृष्टं दिद्युं द्योतमानमायुधं यवय अस्मत्तः पृथक्कुरु । नास्मान् स्पृशतु तत् ।

अनेन चक्षिङ् व्यक्तायां वाचीत्यस्मात् चक्षेः शिच्चेति उसिप्रत्ययः, शित्त्वेन सार्वधातुकत्वात् चक्षिङः ख्याञिति न प्रवर्तते । चक्षिरत्र निवारणार्थः । शत्रूणामायुधानि चष्टे निराचष्टे निराकरोतीति चक्षुः । सर्वतः सर्वेभ्योपि प्रयुक्तान्यायुधानि चष्टे निराचष्टे इति सर्वतश्चक्षुरिति निरुक्तेः यावय दिद्युमेभ्य इत्यनेन सूचनात् **सर्वतश्चक्षुर्मूर्तिरत्र** ॥ ६३८ ॥

---

१ अत्र ग्रन्थपातः सर्वेषु कोशेषु । रक्षकमिति पदं सम्भावितं शरणमित्यस्य विशेषणम् ।

॥ ॐ अनीशाय नमः ॥

**अध स्मा नो मघवन्निन्द्र गिर्वणस्तनूपा अन्तमो भव ।**
**अध स्मा नो वृधे भवेन्द्र नायमवा युधि ॥ ६३९ ॥**

हे मघवन् गिर्वणः इन्द्र अध अथ तेभ्यः सकाशात् नोऽस्माकं तनूपाः शरीररक्षकः सन् अन्तमः अन्तिकतमो भव। अध किञ्च युध्दे नोऽस्माकं वृधेऽभिवृध्यर्थं भव। अपि च नायम् अस्मदीयसेना-नायकं चाव।

अनेन अन चेष्टयामित्यतः कर्तरि क्विप् , अनति चेष्टयति सेनामिति सेनानायकः अनी, तस्य ईष्टे रक्षक इत्यनीश इति निरुक्तेः नायमवा युधीत्यनेन सूचनाद् **अनीशमूर्तिरत्र** ॥६३९॥

॥ ॐ शाश्वताय नमः ॥

**यदन्तरिक्षे पतयन्ति पर्णिनो दिद्यवस्तिग्ममूर्धानः ।**
**यत्र शूरासस्तन्वो वितन्वते प्रिया शर्म पितॄणाम् ॥६४० ॥**

हे इन्द्र यद् यदा पर्णिनः पक्षवन्तः तिग्ममूर्धानस्तीक्ष्णमुखाः दिद्यवो दीप्ताः बाणा अन्तरिक्षे व्योम्नि पतयन्ति शत्रुभिर्विसृष्टाः पतन्ति, तदा अस्मानवेति सम्बन्धः । यत्र यस्मिन् काले शूरासःविक्रमिणो योद्धारः तन्वःस्वकीयानि शरीराणि वितन्वते विस्तारयन्ति । स्वामिनो जयाय शत्रूणां पुरतो दर्शयन्ति । तदा तस्मिन् काले प्रिया प्रियाणि शर्म शर्माणि स्थानानि पितॄणां जनकानां सम्बन्धीनि, तैरार्जितानीति यावत् , एतानि च वितन्वते परित्यजन्तीति यावत्[१]। उत्तरेणास्य सम्बन्धः ।

अनेन श्वस प्राणने इत्यस्माद् यञ्,तस्य शत्रादेशः,धातोश्शप्,तस्य श्लुः,द्विर्वचनम्,तस्य हलादिशेषः, धात्वन्तसकारस्य लोपः ,अतो गुणः, शश्वत् प्राणनम् । तद् ददातीत्यस्मिन्नर्थे तस्येदमित्यण् । शत्रुमुक्तान्यायुधानि परिहृत्य भक्तानां प्राणान् ददातीति शाश्वत इति निरुक्तेः यदन्तरिक्षे पतयन्ति पर्णिन इत्यनेन सूचनात् **शाश्वतमूर्तिरत्र** ॥ ६४० ॥

---

१. विरत्र निषेधार्थ इत्यभिप्रेत्य परित्यजन्तीति व्याख्यातम् ।

॥ ॐ स्थिराय नमः ॥

**अध स्मा यच्छ तन्वे तने च छर्दिरचित्तं यावय द्वेषः ।**
**यदिन्द्र सर्गे अर्वतश्चोदयासे महाधने ॥ ६४१॥**

अध तदा तन्वे शरीराय शरीररक्षणाय तने तनयाय च छर्दिः छदनमायुधानां निवारकं कवचं अचित्तं शत्रुभिरज्ञातं यथा भवति तथा यच्छ प्रयच्छ । शत्रुज्ञानात् पूर्वमेव देहीत्यर्थः । अपि च द्वेषःद्वेष्टॄन् शत्रुजनान् यावय यवय तेभ्यः कवचेभ्यः विमोचयित्वा अपगमयेत्यर्थः । हे इन्द्र महाधने युद्धे सर्गे उद्योगे सति अर्वतः अश्वान् चोदयसि प्रेरयसि ।

अनेन ष्ठा गतिनिवृत्ताविव्यतः अजिरशिशिरेत्यादिना किरच् ,आतो लोपः । शत्रूणां गतिं निवर्तयति इति स्थिर इति निरुक्ते : यावय द्वेष इत्यनेन सूचनात् **स्थिरमूर्तिरत्र** ॥६४१॥

॥ ॐ भूशयाय नमः ॥

**असमने अध्वनि वृजिने पथि श्येनाँ इव श्रवस्यतः ।**
**सिन्धूँरिव प्रवण आशुया यतो यदि ॥ ६४२॥**

हे इन्द्र असमने विषमे भूमिलक्षणे अध्वनि वृजिने कुटिले अन्तरिक्षलक्षणे पथि मार्गे च श्रवस्यतः श्रवस्यून्, श्रवोऽन्नमामिषरूपं तदिच्छून्, श्येनानिव प्रवणे निम्नदेशे आशुया आशु सिन्धूरिव स्यन्दमाना नदीरिव यतः यातः गच्छतोऽश्वान् यदि यदा चोदयसे तदा छर्दिर्यच्छेति संबन्धः ।

अनेन भुवि अश्वान् शाययति प्रेरयतीति भूशयः, भूशब्दे उपपदे शीङ अच्, इति निरुक्तः असमने अध्वनीत्यनेन सूचनाद् **भूशयमूर्तिरत्र** ॥ ६४२ ॥

॥ ॐ भूषणाय नमः ॥

**क्रोशमनु ष्वणि । आ ये वयो न वर्वृतत्यामिषि गृभीता**
**वाह्वोर्गवि ।[१] अयं ते अस्तु हर्यतः सोम आ हरिभिः ॥ ६४३ ॥**

ये अश्वाः वाह्वोः वाहुमूले गृभीताः कक्षया बध्दाः गवि गोनिमित्तं परकीयगवाद्याहरणार्थं आमिषि

१. ऋग्वेद ३-४४, गाथिनो विश्वामित्रः ।

अमिषे विषये वयो न श्येनादिपाक्षिण इव आववृतति पुनः पुनरावर्तते तानश्वान् क्रोशमनु, क्रोश इति भयनाम, भयमनु स्वनि स्वने शब्दे जाते सति चोदयसे पुनः पुनरावर्तयसीति (पूर्वतरेण) संबन्धः। हे इन्द्र हरिभिरद्रिभिः सुतः संस्कृतः अयं सोमः हर्यतः अश्ववतः ते तुभ्यमस्तु।

अनेन युद्धमण्डले अश्वान् विचित्रमावर्तयति, भूषयतीति यावत् अश्वानां युद्धभूमावावर्तनमेव हि भूषणम्। भूष अलंकारे इत्यतो नन्द्यादित्वात् ल्युः, इति निरुक्तेः आववृततीत्यनेन सूचनाद् **भूषणमूर्तिरत्र** ॥ ६४३ ॥

**॥ ॐ भूतये नमः ॥**

**सुतः। जुषाण इन्द्र हरिभिर्न आ गह्या तिष्ठ**
**हरितं रथम्। हर्यन्नुषसमर्चयः सूर्यं हर्यन्नरोचयः ॥ ६४४ ॥**

हे इन्द्र नः अस्मदीयं सोमं जुषाणः प्रीयमाणः हरितं हरिद्वर्णोपेतं रथमातिष्ठ आरोह। आरुह्य च हरिभिरश्वैर्न आगहि। हर्यन् इत्थं करोमीति कामयमानः सन् उषसं सूर्यपुत्रीम् अर्चयः प्रकाशयः। हर्यन् इत्थं करोमीति कामयमानः सन् सूर्यं चारोचयः दीपयसि।

अनेन सूर्यमुषसं च भावयति प्रकाशं प्रापयतीति भूतिः। अन्तर्णीतण्यर्थाद् भवतेः प्राप्त्यर्थात् क्तिन् इति निरुक्तेः सूर्यमरोचय इत्यनेन सूचनाद् **भूतिमूर्तिरत्र** ॥ ६४४ ॥

**॥ ॐ विशोकाय नमः ॥**

**विद्वांश्चिकित्वान् हर्यश्व वर्धस इन्द्र विश्वा अभि श्रियः।**
**द्यामिन्द्रो हरिधायसं पृथिवीं हरिवर्पसम् ॥ ६४५ ॥**

हे हर्यश्व हरिद्वर्णाश्वयुक्त इन्द्र विद्वान् यजमानकृतसाधनाभिज्ञः स्वयं च तदन्तर्यामितया चिकित्वान् तदीयकर्मणां कर्ता सन् विश्वाः समस्ता अपि तदीयाः श्रियः अभिवर्धसे अभिवर्धयसे। स्वयं क्लेशितस्य परश्रीवृद्धिहेतुत्वानुपपत्तेर्विशोक इति सेत्स्यति। किञ्च अयमिन्द्रः द्यां द्युलोकं हरिधायसं हरेः सूर्यस्य धायसं धारकं पृथिवीं हरिवर्पसं सस्याभिवृद्ध्या हरिद्वर्णोपेतं कृतवान्।

अनेन विगतः शोको यस्मात् स विशोकः शुच शोके इत्यस्मात् भावे घञ् (?) इति निरुक्तेः वर्धसे अभि श्रिय इत्यनेन सूचनाद् **विशोकमूर्तिरत्र** ॥ ६४५ ॥

॥ ॐ शोकनाशनाय नमः ॥

**अधारयद् हरितोर्भूरि भोजनं ययोरन्तर्हरिश्चरत् ।**
**जज्ञानो हरितो वृषा विश्वमा भाति रोचनम् ॥ ६४६ ॥**

किञ्चायमिन्द्रः ययोर्हरितोर्द्यावापृथिव्योः अन्तः विद्यमानानां जनानां भूरि भोजनम्, भुजिरत्र पालनार्थः, अभ्यवहारार्थश्च, तत्कालप्राप्तशोकादिपरिहारेण रक्षणं भोगं च अधारयत् करोति , तयोः स्वयं द्यावापृथिव्योरन्तः संचरत् संचरति। किञ्च वृषा भक्ताभीष्टवर्षिता सन् हरितो हरिद्वर्णपितः जज्ञानो यज्ञेऽभिव्यज्यमानः रोचनं प्रकाशनम् आभाति संयोजयति , यज्ञवाटं प्रकाशयतीति यावत् । यद्वा रोचनं प्रकाशकमादित्यचन्द्राग्न्यादिज्योतिश्चक्रं समस्तम् आ भाति आभासयति ।

अनेन पूर्ववत् शुचेर्यत्र् । नश अदर्शने इत्यतो ण्यन्तात् नन्द्यादित्वाल्लयुः, शोकं नाशयतीति शोकनाशन इति निरुक्तेः भूरि भोजनमित्यनेन सूचनात् **शोकनाशनमूर्तिरत्र** ॥ ६४६ ॥

॥ ॐ अर्चिष्मते नमः ॥

**हर्यश्वो हरितं धत्त आयुधमा वज्रं बाह्वोर्हरिम् ।**
**इन्द्रो हर्यन्तमर्जुनं वज्रं शुक्रै रभीवृतम् ॥ ६४७ ॥**

हर्यश्वो हरिद्वर्णाश्वयुक्त इन्द्रः हरितं हरिद्वर्णपितं हरिं शत्रुनिर्हरणशीलं वज्रं शत्रुभिर्वर्जितं हर्यन्तमिन्द्रधारणयोग्यम् अर्जुनमर्जुनवर्णं शुक्रैः अपां धनैः अभिवृतं संसिक्तं वज्रमायुधं बाह्वोः आ धत्ते धृतवान् ।

अनेन अर्च पूजायामित्यतः अर्चिशुचीत्यादिना कर्मणि इसिप्रत्ययः । अर्च्यत इत्यर्चिः वज्रं, तदस्यास्तीति अर्चिःशब्दान्मतुप्, इति निरुक्तेः बाह्वोर्वज्रमादधे इत्यनेन सूचनाद् **अर्चिष्मन्मूर्तिरत्र** ॥ ६४७ ॥

॥ ॐ अर्चिताय नमः ॥

**अपावृणोद्धरिभिरद्रिभिः सुतमुद् गा हरिभिराजत ।**
**[1]आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ॥ ६४८ ॥**

---

१. ऋग्वेद ३-४५ , गाथिनो विश्वामित्रः ।

किञ्चायमिन्द्रः हरिभिरसाधारणहरणशीलैः अद्रिभिर्ग्रावशैलादिभिः सुतं सोममपावृणोत् अपगतावरणमकरोत्, अपिहितद्वारं द्रोणकलशस्थं सोमं पातुमपिधानं स्वयमुत्सृष्टवानिति यावत्। ततः सोममपिबच्च। पीत्वा च पणिनो जिगाय। जित्वा च हरिभिः परस्वहरणशीलैः पणिभिः अवरुद्धा गाः उदाजत उद्गमयामास। पर्वतगुहाभ्यो बहिर्निष्कासयामास। हे इन्द्र मन्द्रैः सुखसान्द्रैः मयूररोमभिः मयूररोमालंकृतैरश्वैः आ याहि।

अनेन अर्च पूजायामित्यतः अर्चिशुचीत्यादिना इप्रत्ययः, अयमिकारान्तोऽप्यस्तीत्युणादि-वृत्त्युक्तेः। अर्च्यन्ते पूज्यन्ते इत्यर्चयो गावः। अर्चिशब्दे उपपदे तरतेस्तनोतेर्वा डप्रत्ययः। अर्चीः गाः गुहाभ्यः तारयति विस्तारयतीति वा अर्चित इति निरुक्तेः उद् गा हरिभिराजतेत्यनेन सूचनाद् **अर्चितमूर्तिरत्र** ॥ ६४८ ॥

॥ ॐ कुम्भाय नमः ॥

**मा त्वा के चिन्नि यमन् विं न पाशिनोऽति धन्वेव ताँ**
**इहि। वृत्रखादो वलंरुजः पुरां दर्मो अपामजः ॥ ६४९ ॥**

हे इन्द्र त्वां मद्गृहं प्रत्यायान्तं केचिद् वैरिजनाः पाशिनो वागुरहस्ताः विं न पक्षिणमिव त्वां बद्धुं मा नियमन् शक्ता नाभूवन्। त्वं च वृत्रखादो वृत्रभक्षक वलंरुजो बलनाम्नोऽसुरस्य भञ्जकः पुरां शत्रुपुराणां दर्मो विदारकः अत एवापां नदीनाम् अजो गमकः स्थापकश्चासि।

अनेन कुवि आच्छादने इत्यतः कर्तरि डुः। गवाद्याच्छादकत्वात् कुः वलासुरः। भिद्र विदारणे इत्यतो डः। कुं गोपिहितारं वलं भिनत्तीति कुम्भः, पृषोदरादित्वान्नुम्, इति निरुक्तेः वलंरुजःपुरां दर्म इत्यनेन सूचनात् **कुम्भमूर्तिरत्र** ॥ ६४९ ॥

॥ ॐ विशुद्धात्मने नमः ॥

**स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृळ्हा चिदारुजः।**
**गम्भीराँ उदधीँरिव क्रतुं पुष्यसि गा इव ॥ ६५० ॥**

किञ्च रथस्य रथे स्थाता उपविष्टो भव। रथे उपविश्य च हर्योरश्वयोः अभिस्वरे ध्वनिविशेषे ज्ञापके सति दृळ्हाचित् दृढानपि शत्रून् आरुजः सम्यग् भञ्जको भव। हे इन्द्र उदकैः गम्भीरान् महावकाशान् उदधीनिव उदकाश्रययोग्यनिम्नप्रदेशानिव यवसेन गा इव त्वं क्रतुं पुष्यसि पोषयसि।

अनेन विपूर्वात् शुध शौचे इत्यस्मात् कर्मणि क्तः । विशुद्धः क्रतुः । आङ् पूर्वात् तनु विस्तारे इत्यस्मात् मनुप्रत्ययो डिच्च । विशुद्धं क्रतुं फलदानेन विस्तारयति पोषयति चेति विशुद्धात्मेति निरुक्ते: क्रतुं पुष्यति गा इवेत्यनेन सूचनाद् **विशुद्धात्ममूर्तिरत्र** ॥ ६५० ॥

**॥ ॐ विशोधनाय नमः ॥**

**प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्या इवाशत ।**
**आ नस्तुजं रयिं भरांशं न प्रतिजानते । वृक्षम् ॥ ६५१ ॥**

एवं भूतं त्वां धेनवो यवसं तृणं यथा ह्रदं च कुल्या इव सुगोपाः सुगोप्याः सोमरसाः प्र आशत , अशूव्याप्तौ , व्याप्नुवन्ति । हे इन्द्र प्रतिजानते पुत्राय पिता अंशं भागं यथा दद्यात् तथा त्वं नोऽस्मभ्यं रयिं धनं तुजं क्षिप्रं आभर ।

अनेन विपूर्वात् शुध शौचे इत्यस्मात् घञ् । तस्मात् सुवर्णं हिरण्यं भार्यमित्युक्तेः विशोधो रयिः, तं नयति प्रापयतीति विशोधनः । नयतेर्डः । इति निरुक्ते रयिं न आ भरेत्यनेन सूचनाद् **विशोधनमूर्तिरत्र** ॥ ६५१ ॥

**॥ ॐ अनिरुद्धाय नमः ॥**

**पक्वं फलमङ्कीव धूनुहीन्द्र संपारणं वसु । स्वयुरिन्द्र**
**स्वराळसि स्मद्दिष्टिः स्वयशस्तरः । स वावृधानः ॥ ६५२ ॥**

पक्वं पक्वफलं वृक्षं फलं तद्गतफलानि अङ्कीव चालयन् पुरुषो यथा तथा त्वमपि कर्मणां फलं संपारणं वसु संपूर्णं वसु च धूनुहि चालय । किञ्च त्वं स्वयुः भक्तानां सुखेच्छुः स्वराट् स्वतन्त्रः स्मद्दिष्टिः, स्मच्छब्दः सम्यक्पर्यायः, दिष्टिरुपदेशः, स्मद् दिष्टिर्यस्य सः, सम्यग् हितोपदेशकः । यद्वा अस्मद्दिष्टिः अस्मद्भागधेयरूपः । स्वयशस्तरः सुकीर्तिरूपश्च असि । तस्मात् त्वमोजसा वावृधानश्चासि ।

अनेन अन चेष्टायामित्यत इनुप्रत्ययः , अनिः चेष्टकः फलानां प्रापकः । रुधिर् आवरणे इत्यस्मात् कर्तरि क्तः, रुद्धः सर्वेषां निरोधकः, स्वराडिंति यावत् । अनिश्चासौ रुध्दश्चेत्यनिरुध्द इति निरुक्तेः फलमङ्कीव धूनुहि स्वराळसीत्यनेन सूचनाद् **अनिरुध्दमूर्तिरत्र** ॥ ६५२ ॥

॥ ॐ अप्रतिरथाय नमः ॥

**ओजसा पुरुष्टुत भवा नः सुश्रवस्तमः । [1]उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः । सत्राच्या मघवा ॥ ६५३ ॥**

हे पुरुष्टुत इन्द्र सुश्रवस्तमः श्रवोऽत्रं सुश्रवो मोक्षयोग्यानन्दादिकं तद् दातव्यत्वेनास्यास्तीति सुश्रवाः, तत्रातिशयितः सुश्रवस्तमः नः अस्मान् प्रति अतिशयितमोक्षदाता भव । अयमिन्द्रः इदं वचो वेदरुपं वाक्यं अर्वाक् अर्वाचीनं लौकिकं वच इति वैदिकलौकिकभेदेन उभयं द्विविधं वचः सत्राच्या , सत्राशब्दो महच्छब्दपर्यायः धिया महाबुध्या शृणवत् शृणुयात् ।

अनेन प्रतिः प्रतिनिधिप्रतिपादनयोरित्युक्तेः प्रतिः प्रतिनिधिः. न विद्यते प्रतिः प्रतिनिधिः यस्य सः अप्रतिः । रमु क्रीडायामित्यतो हनिकुषीत्यादिना क्थप्रत्ययः, रथः आनन्दः । अप्रतिः रथः आनन्दःयस्मादिति अप्रतिरथ इति निरुक्तःभवा नः सुश्रवस्तम इत्यनेन सूचनात् **अप्रतिरथमूर्तिरत्र** ॥६५३॥

॥ ॐ प्रद्युम्नाय नमः ॥

**सोमपीतये धिया शविष्ठ आ गमत् ।**
**तं हि स्वराजं वृषभं तमोजसे धिषणे निष्टतक्षतुः ॥ ६५४ ॥**

मघवा अयमिन्द्रः शविष्ठ : सुखवत्तमः धिया अस्मत्कर्मणा प्रसन्नस्सन् सोमपीतये आगमत् । अधिकारिणां तावदिन्द्रे सम्यक्त्वविषयिणी बुद्धिरेका अन्या च वृषत्वविषयिणी । एवमधिकारिणि द्वे धिषणे स्तः । तयोराद्या धिषणा तमिन्द्रं स्वराजं स्वयमेव राजानं द्युतिमन्तं ततक्ष निर्मितवती । अन्या तु तमिन्द्रमोजसे ओजसा बलेन वृषभं श्रेष्ठं ततक्ष । एवमुभे ते धिषणे सम्राजं वृषभं च निष्टतक्षतुः ।

अनेन द्युम्नं द्युतिर्वलं , प्रकर्षेण द्युम्नं द्युतिर्वलं वा अस्यास्तीति प्रद्युम्न इति निरुक्तेः स्वराजं वृषभं निष्टतक्षतुरित्यनेन सूचनात् **प्रद्युम्नमूर्तिरत्र** ॥ ६५४ ॥

---

१. ऋग्वेद ८-६१, भर्गः प्रागाथः ।

॥ ॐ अमितविक्रमाय नमः ॥

**उतोपमानां प्रथमो नि षीदसि सोमकामं हि ते मनः ।**
**आ वृषस्व पुरूवसो सुतस्येन्द्रान्धसः । विद्मा हि त्वा ॥ ६५५ ॥**

किञ्च हे इन्द्र त्वं उपमानां चेतनत्वेन समानानां देवानां मध्ये प्रथमःउत्तम आदिमः निसीदसि । तेन ते मनः सोमकामं हि निश्चितम् । वस निवास इत्यतः सृस्वृष्णुहीत्यादिना (?) उप्रत्ययः । वसन्ति प्राणिनः सुखमाभिरिति वसवो जगद्रक्षादिगोचरशक्तयः, पुर्व्यः बह्वचः अमिता वसवः शक्तयो यस्य सः पुरूवसुः , तस्य सम्बुद्धिः हे पुरूवसो इन्द्र आ समन्तात् भक्तेभ्यो वृषस्व अभीष्टानि वर्षस्व । त्वा त्वां सुतस्य अन्धसः सोमस्य पातारं विद्म । हि निश्चितम् ।

अनेन क्रमु पादविक्षेपे इत्यतः कप्रत्ययः । शक्तौ चरणविक्षेपे परिमित्यामपि क्रम इत्युक्तेः क्रमश्शक्तिः । वि विशेषेण क्रमो विक्रमः । अमिता विक्रमाः शक्तयो यस्य सः अमितविक्रम इति निरुक्तेः पुरूवसुशब्देन सूचनात् **अमितविक्रममूर्तिरत्र** ॥ ६५५ ॥

॥ ॐ कालनेमिनिघ्ने नमः ॥

**हरिवः पृत्सु सासहिमधृष्टं चित् दधृष्वणिम् ।**
**अप्रामिसत्य मघवन् तथेदसदिन्द्र क्रत्वा यथा वशः ॥ ६५६ ॥**

हे हरिवः इन्द्र पृत्सु युद्धेषु ससहिं कालनेम्यादिशत्रुवेगसहम् अधृष्टं शत्रुभिरप्रधृष्यं चित् अपि दधृष्वणिं कंसादिशत्रुद्रव्याणां धर्षितारं च विद्म। मीङ् हिंसायां ततो भावे किः । ततः प्राङ्भ्यां समासः । प्रकर्षेण आ समन्तात् मिः हिंसा विनाशो यस्य तत् प्रामि, अनित्यत्वदेहहान्यादि-चतुर्विधनाश युक्तं जगत् । तत् न भवतीत्यप्रामिः । उत्तमानन्दज्ञानस्वरूपत्वात् सत्यः । अप्रामिश्चासौ सत्यश्चेति कर्मधारयः । हे अप्रामिसत्य मघवन् यज्ञपूज्य इन्द्र क्रत्वा क्रतुं यथावशः यथेच्छा भवति तथेत् तथैव असत् कर्ता असत् अभवत् भवसि ।

अनेन कालनेमिनं हत्वा तदंशभूतं कंसं च हत्वा तदीयराज्यमपहरतीति कालनेमिनिहा, हन्तिरत्र हिंसार्थो गत्यर्थश्च, इति निरुक्तेः पृत्सु सासहिं दधृष्वणिमित्यनेन सूचनात् **कालनेमिनिहमूर्तिरत्र** ॥ ६५६ ॥

॥ ॐ वीराय नमः ॥

**सनेम वाजं तव शिप्रिन्नवसा मक्षू चियन्तो अद्रिवः ।**
**शग्ध्यूषु शचीपत इन्द्र विश्वाभिरूतिभिः ॥६५७॥**

हे यन्त : नियन्तः अद्रिवः शचीपते शिप्रिन् इन्द्र तव अवसा त्वया कृतेन रक्षणेन वाजमत्रं युद्धं च मक्षु मंक्षु (क्षिप्रं) सनेम लभेम। विश्वाभिरूतिभिः समस्तैरैश्वर्यैः त्वं सु शग्धि शक्तोऽसि।

अनेन अज गतिक्षेपणयोरित्यतः स्फायितश्चीत्यादिना रक् प्रत्ययः । अजेर्व्यघञपोरिति धातोर्वीत्यादेशः । सुभटोत्तमयोर्वीर इत्युक्तेः युद्धादावतिशक्तिमान् वीर इति निरुक्तेः इन्द्र विश्वभिरूतिभिः शग्धीत्यनेन सूचनाद् वीरमूर्तिरत्र ॥ ६५७॥

॥ ॐ शूराय नमः ॥

**भगं नहि त्वा यशसं वसुविदमनु शूर चरामसि ।**
**पौरो अश्वस्य पुरुकृद् गवामस्युत्सो देव हिरण्ययः ॥ ६५८ ॥**

शु गतावित्यस्मात् शुषिचिमीनां दीर्घश्चेति सूत्रेण क्रन् प्रत्ययः , ककारलोपो धातोः दीर्घश्च, कित्त्वाद् गुणाभावः, शवति संग्रामं गच्छतीति वा शूयते गम्यते वा भक्त्याद्यैरिति शूरः । हे शूर इन्द्र भगं न भगवन्तमिव ऐश्वर्यवतामिव वसुविदं प्राप्तवित्तं यशसं यशोरूपं त्वा त्वां सु सम्यक् अनुचरामसि अनुचरेम। दासा भवेम। हे देव इन्द्र त्वं पौरः स्वर्गपुरस्सरो ब्रह्मपुरस्सरो वा हिरण्ययो हिरण्मयः, सुखमयशरीरः, अश्वस्य पुरुकृत् बहुदाताऽसि । गवामुत्सः दाता । उत्पूर्वस्य सर्ते रूपमेतत् ।

अनेन स्वयं भयरहितः संग्रामान् अर्च्छति (ऋच्छति?) भयार्तेभ्योऽभयं ददाति चेति निरुक्तेः शूरशब्देन सूचनात् शूरमूर्तिरत्र ॥ केचित् शौरीत्यन्यथा पठन्ति ॥ ६५८ ॥

॥ ॐ सूरिजनेश्वराय नमः ॥

**नकिर्हि दानं परिमर्धिषत् त्वे यद्यामि तदा भर ।**
**अविप्रो वा यदविधद्विप्रो वेन्द्र ते वचः ॥ ६५९ ॥**

हे इन्द्र ते दानं त्वया दीयमानं नकिः न कोपि परिमर्धिषत् हिंसितुं समर्थोऽस्ति। ते त्वयि यद्यदभीष्टमुद्दिश्य यामि प्राप्नोमि, त्वत्तो यद्यदभीष्टमिच्छामीति यावत्, तत्तदाभर। किञ्च ते वचः त्वत्स्तोत्ररूपं वचः अविप्रो वा मूर्खो वा विप्रो वा पण्डितो वा। अथवा अधमो वा उत्तमो वा। अविधत् यत् अविधारयत् यत् यदि धारयेत्। उत्तरेणास्य संबन्धः।

अनेन षूङ् प्राणिगर्भविमोचने इत्यतः षूङः क्रिरित्यनेन क्रिप्रत्ययः। कित्त्वाद् गुणाभावः। सूयत इति सूरिः विद्वान्, जनो मूर्खः। सूरिश्च जनश्च सूरिजनौ, तौ स्वात्मनः स्तावकौ चेत् ईश्वरयति सुखिनौ करोतीति सूरिजनेश्वर इति निरुक्तेः अविप्रो वा ते वचः अविधत् स प्र ममन्ददित्यादिना सूचनात् **सूरिजनेश्वरमूर्तिरत्र** ॥ ६५९ ॥

**॥ ॐ त्रिलोकात्मने नमः ॥**

**स प्र ममन्दत् त्वाया शतक्रतो प्राचामन्यो अहंसन।**
**उग्रबाहुर्म्रक्षकृत्वा पुरंदरो यदि मे शृणवद्धवम् ॥ ६६० ॥**

हिसि हिंसायामित्यस्य व्यत्ययेन कर्मणि ल्युटि हिंसनः। हिंसकः, कर्तरि वा। स न भवतीत्य-हिंसनः। अहिंसन एव व्यत्ययेनाहंसनः। यद्वा ओ हाक् त्यागे इत्यतः कर्मणि डप्रत्यये हं हेयम्, तत्र भवतीत्यहमहेयं ज्ञानम् तस्य सनो लाभो यस्मात् स अहंसनः, तस्य सम्बुद्धिः हे अहंसन। प्राच्यः पूज्यः मन्युर्बोधो यस्य सः प्राच्यमन्युः, स एव व्यत्ययेन प्राचामन्युः। हे प्राचामन्यो शतक्रतो स त्वदीयस्तोत्रधारी जनः त्वाया त्वद्भक्त्या प्रममन्दत् प्रामन्दत् सुखी भवेत्। उग्रबाहुः उद्गीर्णबाहुबलशालिन् म्रक्षकृत्वा म्रक्षकर्ता, मृजूष् शुद्धौ, शुद्धिकर्ता पुरन्दरः मे हवं यदि शृणवत् शृणुयात् तदा वसूयवः द्रविणदाता भवेदेव।

अनेन तनु विस्तार इत्यतः तनोतीति त्रि विस्तृतम्। लोकृ दर्शने, भावे घञ्, लोको ज्ञानम्। तद् ददातीत्यात्मा। आङ् पूर्वाद् ददातेर्मनिन्, धात्वाकारलोपः दस्य च तः। यद्वा त्रिलोको विस्तृतं ज्ञानम्, आत्मा यत्नधृतिग्लान्तस्वभावपरमात्मनीत्युक्तेः आत्मा स्वभावः। त्रिलोको विस्तृतं ज्ञानमात्मा स्वभावो यस्य स त्रिलोकात्मेति निरुक्तेः अहंसन प्राचामन्यो इत्यनेन सूचनात् **त्रिलोकात्ममूर्तिरत्र** ॥ ६६० ॥

॥ ॐ त्रिलोकेशाय नमः ॥

**वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहे ।**
**न पापासो मनामहे नारायासो न जल्हवः ॥ ६६१ ॥**

यस्माद् वसुदाता तस्माद् वयं वसुपतिं शतक्रतुमिन्द्रं त्वां स्तौमैः हवामहे। पापासः पापात्मानो जनाः इन्द्रं न मनामहे , व्यत्ययेन न मनन्ति न जानन्ति। अरायसः अरयोऽपि न जानन्ति। जल्हवो नित्यनैमित्तिककर्मणां हातारोऽपि न जानन्ति। (यमिन्द्रं) तमिन्द्रं स्तौमैर्हवामह इति संवन्धः।

अनेन पापा अरयः कर्मभ्रष्टाश्चेति त्रयो लोकाः, तान् त्रीन् लोकान् ईजयति कुत्सयतीति त्रिलोकेशः। ईज गतिकुत्सनयोरित्यतोऽच्, धातुजकारस्य शकारादेश इति निरुक्तेः न पापासो नारायासो न जळ्हव इत्यनेन सूचनात् त्रिलोकेशमूर्तिरत्र ॥ ६६१ ॥

॥ ॐ के[illegible]ाय नमः ॥

**यदिन्विन्द्रं वृषणं सचा सुते सखायं कृणवामहे ।**
**उग्रं युयुज्म पृतनासु सासहिम् ॥ ६६२ ॥**

यद् यस्मादेवं पापिनः कुत्सयति तद् वयं वृषणं त्वां नु इदानीं सोमे सुते सति सचा सहैव सखायं मित्रं कृणवामहै कुर्मः। किञ्च उग्रं उद्दीर्णबलं पृतनासु युद्धेषु ससहिं शत्रुवेगसहं वयं युयुज्म आत्मनि योजयामः।

अनेन'कं शिरोऽम्बु सुखे क्लीबे'इत्युक्तेःकं सुखं, ईर्लक्ष्मीः,'शं शास्त्रे श्रेयसि मङ्गले' इत्युक्तेः शं श्रेयः। कश्च ईश्च शश्च केशानि सुखलक्ष्मीश्रेयांसि। तानि वाति गमयतीति वा वर्तयतीति वा वहतीति वा वः। वातेर्वर्ततेर्वहतेर्वा डः इति निरुक्तेः वृषणमुग्रं ससहिमित्यादिना सूचनात् केशवमूर्तिरत्र ॥ ६६२ ॥

॥ ॐ केशिघ्ने नमः ॥

ऋणकाति मदाभ्यम्। वेदा भृमं चित् सनिता रथीतमो
वाजिनं यमिद् नशत्। यत इन्द्र भयामहे ततः ॥ ६६३ ॥

ऋणकातिं ऋणं रणः रणं करोतीति ऋणको योद्धा, तमतिक्रान्तः ऋणकातिः अतिशयेन शत्रुहन्ता, तं ऋणकातिम्, अदाभ्यं शत्रुभिरस्तम्भनीयम् इन्द्रं युयुज्मेति सम्बन्धः । अयमिन्द्रो रथीतमो रथिकश्रेष्ठः सनिता दाता । यं आयुधजातं प्राप्य उ इदं शत्रुजातं नशत् इत् एव, नष्टं भवत्येव, तं वाजिनं युद्धसाधनं भृमं भ्रमन्तं आयुधसमूहं वेद चित् लब्धवांश्च । हे इन्द्र यतः शत्रोर्वयं भयावहे विभिम तत इत्युत्तरेण सम्बन्धः ।

अनेन कं शिरः । 'ईकारोऽब्जदले लक्ष्म्यां वाण्यां कमलकेसरे । रसनायां शक्रचापे वाणे फणिनि कन्धरे' इत्युक्तेः ईः कन्धरः । कश्च ईश्च के शिरःकन्धरौ । शॄ हिंसायामित्यतो डिनिप्रत्ययः, टिलोपश्च । शॄणातीति शी । के शिरःकन्धरौ शॄणातीति केशी वज्रः । तं हन्ति गच्छति बिभर्तीति यावत्, इति केशिहा वज्रधारकः । केशिना वज्रेण शत्रून् हन्तीति वा केशिहा । इति निरुक्तेः यमिदू नशद् भृमं वेदेत्यनेन सूचनात् केशिहमूर्तिरत्र ॥ ६६३ ॥

॥ ॐ हरये नमः ॥

**नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्वि**
**द्विषो वि मृधो जहि । त्वं हि राधस्पते राधसो महः ॥६६४॥**

हे मघवन् यतः शत्रोः भयामहे तस्माच्छत्रोरभयं कृधि । त्वं च शग्धि शक्तोऽसि ।तव त्वदीयाभिः ऊतिभिःतत् तान् नः विद्विषःअस्मद्द्वेषिणः विमृध । हिंसकान् शत्रून् जहि हन । हे राधस्पते सिद्धीनां दातःत्वं महःमहतो राधसः दाता भवेति शेषः। हि निश्चितम् ।

अनेन हरति शत्रूनिति हरिः, हृञ् हरणे इत्यत इसि प्रत्ययः,इति निरुक्तेः विद्विषो विमृधो जहीत्यनेन सूचनात् हरिमूर्तिरत्र ॥ ६६४ ॥

॥ ॐ कामदेवाय नमः ॥

**क्षयस्यासि विधतः । तं त्वा वयं मघवन्निन्द्र गिर्वणः**
**सुतावन्तो हवामहे । इन्द्रः स्पळुत वृत्रहा ॥ ६६५ ॥**

हे मघवन् गिर्वणःइन्द्र विधतो बहुजनान् धारयतः क्षयस्य गृहस्य असि दाता भव । सुतवन्तः सोमवन्तो वयं तम् एवंगुणविशिष्टं त्वा त्वां हवामहे । उत किञ्च वृत्रहा इन्द्रः स्पट् स्फुटविकसने, विकसितः प्रसन्नः ।

अनेन कामान् कामितान् गृहादीन् गमयति प्रापयतीति कामदेवः । कमु कान्तावित्यतः कर्मणि अकार[1]प्रत्ययः, गत्यर्थाद्दीव्यतेरन्तर्णीतण्यर्थाद् घञ्,इति निरुक्तेः विधतःक्षयस्येत्यनेन सूचनात् **कामदेवमूर्तिरत्र** ॥ ६६५ ॥

॥ ॐ कामपालाय नमः ॥

**परस्पा नो वरेण्यः । स नो रक्षिषच्चरमं स मध्यमं स**
**पश्चात् पातु नः पुरः । त्वं नः पश्चादधरादुत्तरात् ॥ ६६६ ॥**

हे इन्द्र परः पाः अत्यन्तं रक्षकः नः अस्माभिः वरेण्यः वरणीयश्च भव । स एवंविध इन्द्रः चरमं वयः मध्यमं वयश्च , पूर्वमिति च ग्राह्यम् , बाल्ययौवनवार्धकेष्वपि नः अस्मान् रक्षिषत् पालयेत् । स एव नः पश्चात् पृष्ठभागे पुरश्च पूर्वभागे , दक्षिणत उत्तरतश्चेति ग्राह्यम् , एवं सर्वास्वपि दिक्षु नः पातु । त्वं नः पश्चाद् अनन्तरम् अधरात् अधस्तात् उत्तराद् उपरि च पाहि ।

अनेन काम्यत इति कामः । काम्येषु सर्वेष्वपि दिग्विशेषेषु भक्तान् पालयतीति कामपालः । पृ पालनपूरणयोरित्यत अण् रेफस्य लकारादेशः । यद्यपि कर्मण्यण् श्रूयते तथापि बहुलग्रहणात् सप्तम्यन्ते उपपदेपि भवतीति कामपाल इति निरुक्तेः रक्षिषच्चरमं स मध्यममित्यादिना सूचनात् **कामपालमूर्तिरत्र** ॥ ६६६ ॥

॥ ॐ कामिने नमः ॥

**पुर इन्द्र नि पाहि विश्वतः । आरे अस्मत् कृणुहि दैव्यं**
**भयमारे हेतीरदेवीः । अद्याद्या श्वःश्व इन्द्र त्रास्व ॥ ६६७ ॥**

हे इन्द्र नः पुरः अग्रतः विश्वतः सर्वस्मिन् देशे काले च नि पाहि सम्यक् पाहि । दैवं देवतासंबन्ध्यायुधजातम् अस्मदारे अस्मत्समीपे रक्षकत्वेन कृणुहि कुरु । अदेवीः असुरसंबन्धिनीः भयं भयसाधनभूता हेतीः आयुधानि अस्मदारे अस्मत्तो दूरे कृणुहि । नः अस्मान् अद्याद्य सर्वस्मिन् वर्तमानकाले श्वः श्वः सर्वस्मिन् भविष्यति काले च त्रास्व त्रायस्व ।

१. यञ्प्रत्यय इति स्यात्

अनेन को ब्रह्मेत्यादिरत्नमालोक्तेः कः अग्निः, तत्सदृशत्वादायुधं कशब्देनोच्यते । तस्य अमो गमनमपगमनं च । अम गत्यादिष्वित्यस्माद् भावे अकारप्रत्ययः । कानां देवानामसुराणां चायुधानां अमः संगमनमपगमनं च कामः । सोस्यास्तीति कामीति निरुक्तेः आरे अस्मत् कृणुहि दैवं भयमारे हेतीरदेवीरित्यनेन सूचनात् **कामिमूर्तिरत्र** ॥ ६६७ ॥

॥ ॐ कान्ताय नमः ॥

**परे च नः । विश्वा च नो जरितॄन् त्सत्पते अहा दिवा**
**नक्तं च रक्षिपः । प्रभङ्गी शूरो मघवा तुवीमघः ॥ ६६८ ॥**

हे इन्द्र नः अस्मदीयान् विश्वा विश्वान् समस्तानपि जरितॄन् स्तोतॄन् दिवा नक्तं च दिवारात्रम् अहा सर्वदापि रक्षिषः अरक्षिषः त्रायस्व । अयमिन्द्रः प्रभङ्गी शत्रूणां भङ्गकृत्, शूरो विक्रान्तः, मघवा यशस्वी, तुविमघः वहुयज्ञकृद् वहुयज्ञपूज्यो वा भवति ।

अनेन कं सुखं तस्य अम् प्राप्तिः, अम गत्यादिष्वित्यस्मात् भावे क्विप् । काम् सुखप्राप्तिं तनोतीति कान्तः । तनोतेर्डः । सर्वकालेष्वपि भक्तानां सुखकृद् रक्षक इति निरुक्तेः विश्वा चनेत्यादिना सूचनात् **कान्तमूर्तिरत्र** ॥ ६६८ ॥

॥ ॐ कृतागमाय नमः ॥

**संमिश्लो वीर्याय कम् । उभा ते वाहू वृषणा शतक्रतो**
**नि या वज्रं मिमिक्षतुः । [१]तरोभिर्नो विदद्वसुम् ॥ ६६९ ॥**

अयमिन्द्रो वीर्याय पराक्रमं कर्तुं कं केन सुखेन संमिश्लोभूत् । शत्रुहननायोत्साहयुक्तो भवत् । हे शतक्रतो ते तव वृषणा वृषणौ भक्ताभीष्टसेचकौ या यौ वाहू उभा उभावपि वज्रमायुधं नि मिमिक्षतुः संग्रह्णीतः, जगृहतुरिति यावत् । हे जनाः वः ऊतये तरोभिः शक्तिभिः विदद्वसुं प्राप्तद्रविणमिन्द्रं, स्तुतेति शेषः ।

अनेन न गच्छतीत्यगः पर्वतः, तं हिनस्तीत्यगमो वज्रम् , मीङ् हिंसायामित्यतो डः । हस्ते

१. ऋग्वेद ८ - ६६. कलिः प्रागाथः ।

कृतः अगमो वज्रं येन सः कृतागम इति निरुक्तेः नि या वज्रमित्यनेन सूचनात् **कृतागममूर्तिरत्र** ॥ ६६९ ॥

॥ ॐ अनिर्देश्यवपुषे नमः ॥

**इन्द्रं सबाध ऊतये । बृहद् गायन्तः सुतसोमे अध्वरे**
**हुवे भरं न कारिणम् । न यं दुध्रा वरन्ते ॥ ६७० ॥**

हे जनाः सबाधः बाधादिसहिता यूयं ऊतये रक्षणार्थं भरं न अभ्रमिव मेघमण्डलमिव कारिणं भक्ताभीष्टवर्षणशीलं तमिन्द्रं सुतसोमे अभिषवसोमवति अध्वरे यज्ञे बृहत् उच्चैः गायन्तः हुवे , व्यत्ययेन आह्वयत । दुध्राः दुर्धियो जनाः यमिन्द्रं न वरन्ते न वृण्वते ।

अनेन क्षणमप्येकप्रकारं न तिष्ठति, अत एव निर्देष्टुमशक्यमनिर्देश्यं मेघमण्डलम् । टु वपृ बीजसन्ताने इत्यस्मात् अर्तिपॄवपीत्यादिना उसिः । मेघमण्डलमिव वपतीत्यनिर्देश्यवपुरिति निरुक्तेः भरं न कारिणमित्यनेन सूचनाद् **अनिर्देश्यवपुर्मूर्तिरत्र** ॥ ६७० ॥

॥ ॐ विष्णवे नमः ॥

**न स्थिरा मुरो मदे सुशिप्रमन्धसः । य आदृत्या शशमानाय**
**सुन्वते दाता जरित्र उक्थ्यम् । यः शक्रो मृक्षः ॥ ६७१ ॥**

स्थिराः स्थावराः मुरो मर्त्याश्च यं न वरन्ते । यः शशमानाय सुखमनुभावेतुं योग्याय अन्धसः अन्नानि मदे हर्षाय आदृत्य दाता च । तमिन्द्रं हुवे इति पूर्वेण सबन्धः । यश्च शक्रो मृक्षः शोधकः परिशुद्धश्च ।

अनेन विपूर्वात् षण दाने इत्यस्मात् उप्रत्यय उपधालोपश्च । विशेषेण भक्तानामन्धांसि ददातीति विष्णुरिति निरुक्तेः आदृत्य अन्धसो दातेत्यनेन सूचनाद् **विष्णुमूर्तिरत्र** ॥ ६७१ ॥

॥ ॐ वीराय नमः ॥

**अश्व्यो यो वा कीजो हिरण्ययः । स ऊर्वस्य रेजयत्यपावृतिमिन्द्रो**
**गव्यस्य वृत्रहा । निखातं चिद् यः पुरुसंभृतम् ॥ ६७२ ॥**

यश्चेन्द्रः अश्व्यः अश्ववान् इन्द्रियप्रेरको वा , यो वा कीजः सर्वसुखसाधनत्वात् की वाणी ततो जातोऽभिव्यक्तः, यो वा हिरण्ययः स इन्द्रः ऊर्वस्य उरोर्वहोः गव्यस्य असुरपिहितगोसमुदायस्य अपावृतिमावरणं रेजयति चालयति निराकृतवान् । स इन्द्रो निखातं यथा तथा पुरुसंभृतं चित् वहुसंपादितं वसु । (अस्योत्तरेणान्वयः) ।

अनेन विशिष्टवेदवाण्या ईर्यत गम्यते इति वीर इति निरुक्तेः कीज इत्यनेन सुचनाद् **वीरमूर्तिरत्र** ॥ ६७२ ॥

॥ ॐ अनन्ताय नमः ॥

**वसूदिद्धपति दाशुषे । वज्री सुशिप्रो हर्यश्व इत् करदिन्द्रः**
**क्रत्वा यथा वशत् । यद् वावन्थ ॥ ६७३ ॥**

वज्री सुशिप्रो हर्यश्व इन्द्रः दाशुषे यजमानाय वसु द्रव्यं उद्धपति इत् ददात्येव । स इन्द्रः यत्-किंचिद्रक्षणादिकं वा कर्तुं यथा वशत् इच्छति तथा करत् करोत्येव । अव्याहतसंकल्प इत्यर्थः । (शिष्टमुत्तरान्वयि ) ।

अनेनान्तो विनाशो नास्त्यस्य संकल्पस्येत्यनन्त इति निरुक्तेः इन्द्र क्रत्वेत्यादिना सूचनाद् **अनन्तमूर्तिरत्र** ॥ ६७३ ॥

॥ ॐ धनञ्जयाय नमः ॥

**पुरुष्टुत पुरा चिच्छूर नृणाम् । वयं तत् त इन्द्र**
**सं भरामसि यज्ञमुक्थं तुरं वचः । सचा सोमेषु पुरुहूत ॥ ६७४ ॥**

हे पुरुस्तुत पुरुहूत शूर इन्द्र नृणां यज्ञनेतॄणामस्माकं गृहे सोमेषु सुतेषु सत्सु सचा सुखेन पुराचित् पूर्वमेव यद् यज्ञादिकं ववन्थ वाञ्छसि तत् ते तव प्रीत्यर्थं वयं संभरामसि संपादयामः । तत् किम् उच्यते । यज्ञमुक्थं तुरं त्वरितं वच इत्येतद् भरामसि ।

अनेन धन धान्ये इत्यतोऽकारप्रत्ययः । धनं यज्ञस्तोत्रादि । तस्मिन् कर्मण्युपपदे जि जये इत्यत संज्ञायां भृतृवृजिधरिसहितपिदम इत्यनेन खच् (खश्) अनुबन्धलोपः , गुणावादेशौ । धनं यज्ञादिकं जयति प्राप्नोतीति स्थिते कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञायां सुपो

धातुप्रातिपदिकयोरिति सुपो लुकि अरुर्द्विषदजन्तस्येत्यादिना मुमागमे अनुस्वारे च धनञ्जय इति निरुक्तेः यद् वावन्थ इत्यादिना सूचनाद् **धनञ्जयमूर्तिरत्र** ॥ ६७४ ॥

॥ ॐ ब्रह्मण्याय नमः ॥

**वाज्रिवो मदाय युक्ष सोमपाः । त्वमिद्धि ब्रह्मकृते काम्यं**
**वसु देष्ठः सुन्वते भुवः । वयमेनमिदा ह्यः ॥ ६७५ ॥**

हे वज्रिवः इन्द्र सोमपाः त्वं मदाय हर्षाय युक्ष युत दीप्तौ, दीप्यस्व । त्वं ब्रह्मकृते स्तोत्रे सुन्वते यजमानाय काम्यं कमनीयं वसु देष्ठः दाता भुवः अभवः । हि निश्चितम् ।

अनेन वेदस्तत्वं तपो ब्रह्मेत्युक्तेः ब्रह्म स्तोत्रं ,तेन तत्कर्ता उपलक्ष्यते । ब्रह्मणि स्तोत्रकृति साधुःअभीष्टदातेति ब्रह्मण्यः । तत्र साधुरित्यर्थे ब्रह्मन् शब्दात् यप्रत्ययः, इति निरुक्तेः त्वमिद्धि ब्रह्मकृते काम्यं वसु देष्ठ इत्यनेन सूचनात् ब्रह्मण्यमूर्तिरत्र ॥ ६७५ ॥

॥ ॐ ब्रह्मकृद्ब्रह्मणे नमः ॥

**अपीपेमेह वज्रिणं । तस्मा उ अद्य समना सुतं भराऽऽ-**
**नूनं भूषत श्रुते । वृकश्चिदस्य वारणः ॥ ६७६ ॥**

इदा इदानीं ह्यः प्रसिद्धाः वयं वज्रिणमेनमिन्द्रम् इह यज्ञे अपीपेम सोमं पाययामः । उ तस्मात् अद्येदानीं श्रुते स्तोत्रश्रवणशीलाय समना सवना सवनानि सवनेषु सुतं सोममाभर आहरत भूषत च । स्वयमलंकुरुत तं च स्तोत्रैर्भूषयतेति वा । अयमिन्द्रः यः कश्चिद् वृकः क्रूरः (वर्तते) अस्य वारणो निवारको भवति ।

अनेन ब्रह्मकृतं स्तोत्रकारिणं यजमानं बृंहयति भूषयतीति ब्रह्मकृद्ब्रह्मेति निरुक्तेः भूषत श्रुते इत्यादिना सूचनाद् **ब्रह्मकृद्ब्रह्ममूर्तिरत्र** । अत्र केचिद् ब्रह्मकृद् ब्रह्मेति नामद्वयं विधाय द्वितीयं पुल्लिङ्गं पठन्ति ॥ ६७६ ॥

॥ ॐ ब्रह्मणे नमः ॥

**उरामथिरा वयुनेषु भूपति । सेमं नः स्तोमं जुजुषाण आ**
**गहीन्द्र प्र चित्रया धिया । कदू न्वस्य ॥ ६७७ ॥**

उत्कृष्टः रामः सुखं येषां ते उरामाः ऋष्यादिजनाः । त एव थम् अन्नं भक्ष्यं यस्य उरामथिः राक्षसः । यस्तस्य आ वारणो निवारको भवति स उरामथिरा । किञ्च सज्जनान् वयुनेषु ज्ञातव्येषु प्रमेयेषु भूषति भूषयति । स्वयं सज्जनज्ञानेषु भूषति अलंकृतो भवति ज्ञानविषयो भवतीति वा । हे इन्द्र स एवंभूतस्त्वं न इमं स्तोमं जुजुषाणः सेवमानः चित्रया धिया विचित्रया बुद्धया महांस्त्वम् आगहि अस्माकं बुद्धिं दातुमागच्छेत्यर्थः । (शिष्टमुत्तरान्वयि) ।

अनेन विचित्रबुद्धया बृंहति बृंहयति चेति ब्रह्मेति निरुक्तेः चित्रया धिया प्र आगहीत्यनेन सूचनाद् **ब्रह्ममूर्तिरत्र** ॥ ६७७ ॥

॥ ॐ ब्रह्मविवर्धनाय नमः ॥

**अकृतमिन्द्रस्यास्ति पौंस्यम् । केनो नु कं श्रोमतेन न**
**शुश्रुवे जनुषः परिवृत्रहा । कदू महीरधृष्टा अस्य ॥ ६७८ ॥**

अस्येन्द्रस्य नु इदानीमकृतं कर्म कदू किमस्ति । पौंस्यं च पुरुषसामर्थ्यं च किमस्ति । किञ्च जनुषो जन्मवतो मनुष्यस्य मध्ये वृत्रहा इन्द्रः श्रोमतेन श्रोत्रमता केनो केन पुरुषेण न परिशुश्रुवे न श्रुत इत्याक्षेपः । सर्वं कर्म सर्वं पौंस्यं चास्त्येव सर्वैरपि श्रुतमिति भावः । अस्येन्द्रस्य महीः महतीः अधृष्टाः शत्रुभिर्धर्षयितुमशक्याः तविषीः कान्तीः कत् कः वेद न कोऽपि ।

अनेन बृहेर्भावे मनिन्, पौंस्यदिकं ब्रह्म, तस्य विशेषेण वर्धनं यस्मिन् सः ब्रह्मविवर्धन इति निरुक्तेः इन्द्रस्यास्ति पौंस्यमित्यनेन सूचनात् **ब्रह्मविवर्धनमूर्तिरत्र** ॥६७८॥

॥ ॐ ब्रह्मविदे नमः ॥

**तविषीः कदु वृत्रघ्नो अस्तृतम् । इन्द्रो विश्वान् वेकनाटाँ**
**अहर्दृश उत क्रत्वा पणीँरभि । वयं घा ते ॥६७९॥**

किञ्च वृत्रघ्नः अस्तृतमनाच्छादितं कत् किमस्ति । सर्वमिन्द्रेण व्याप्तमिति यावत् । उत किञ्च अयमिन्द्रः बेकनाटान् एतत्संज्ञकान् पणीन् असुरविशेषान् विश्वान् समस्तानपि अहर्दृशः ..... क्रत्वा कर्तुं अभितःपरिवर्तते ।(शिष्टमुत्तरान्वयि )।

अनेन बृहेःपूर्ववत् भावे मनिन् ब्रह्म बृंहणं व्याप्तिः । तद् विन्दते लभत इति ब्रह्मविद् इति निरुक्तेः कदु वृत्रघ्नो अस्तृतमित्यनेन सूचनात् ब्रह्मविन्मूर्तिरत्र ॥६७९॥

॥ ॐ ब्राह्मणाय नमः ॥

**अपूर्व्येन्द्र ब्रह्माणि वृत्रहन् । पुरूतमासः पुरुहूत**
**वज्रिवो भृतिं न प्र भरामसि । पूर्वीश्चिद्धि त्वे ॥६८०॥**

हे पुरुहूत वज्रिवः वृत्रहन् इन्द्र पुरुतमासः बहवो वयम् अपूर्व्या अपूर्वाणि ब्रह्माणि स्तोत्राणि भृतिं न राज्ञे करमिव ते तुभ्यमिदानीं प्रभरामसि आहरामः । ( शिष्टमुत्तरान्वयि ) ।

अनेन भक्तकृतानि ब्रह्माणि स्तोत्राणि अणति प्राप्नोतीति ब्रह्माणः , दीर्घव्यत्ययः ब्राह्मण इति निरुक्तेः ब्रह्माणि प्रभरामसीत्यनेन सूचनाद् ब्राह्मणमर्तिरत्र ॥ ६८० ॥

॥ ॐ ब्राह्मणे नमः ॥

**तुविकूर्मिन्नाशसो हवन्त इन्द्रोतयः । तिरश्चिदर्यः**
**सवना वसो गहि शविष्ठ श्रुधि मे हवम् । वयं घा ॥ ६८१ ॥**

हे तुविकूर्मिन् बहुकर्मन् इन्द्र पूर्वीः बहुकालमनुवर्तमानाः आशसः आशासनीयाः ऊतयः अभिप्रायाः चिदपि त्वे त्वयि त्वामुद्दिश्य अस्माकं सन्ति हि । अत एव मदीया जनास्त्वां हवन्ते । हे शविष्ठ सुखितम सवना सवनान्युद्दिश्य तिरश्चित् तिर्यक्स्थितं मद्गृहमागहि । हे वसो जगन्निवास अर्यः स्वामी त्वं मे हवं श्रुधि । ( शिष्टमुत्तरान्वयि ) ।

अनेन '' परमात्मा तपो वेदो ब्रह्मा ब्रह्माज्जजे द्विजे । ऋत्विज्यथ कुजे '' इत्युक्तेः 'ब्रह्माणः ऋत्विजः , ते आह्वानकर्तृत्वेनास्य सन्तीति ब्रह्मीति निरुक्तेः हवन्त इन्द्रेत्यनेन सूचनाद् ब्रह्मिमूर्तिरत्र ॥ ६८१ ॥

॥ ॐ ब्रह्मज्ञाय नमः ॥

**ते त्वे इद्विन्द्र विप्रा अपि ष्मसि । न हि त्वदन्यः पुरुहूत**
**कश्चन मघवन्नस्ति मर्डिता । त्वं नो अस्याः ॥ ६८२ ॥**

हे पुरुहूत इन्द्र विप्रा अपि श्रेष्ठा अपि वयं घ इदानीं त्वे इत् त्वय्येव स्मसि स्मः मनोयुक्ता भवेम। तव दासाश्च स्मः। हे मघवन् त्वदन्यः कश्चन मर्डिता, मृड सुखने, सुखयिता ज्ञाता च न ह्यस्ति। उ तस्मात्। (शिष्टमुत्तरान्वयि)

अनेन ब्रह्म स्तोत्रादिसाधनजातं जानातीति ब्रह्मज्ञ इति निरुक्तेः नहि त्वदन्यो मघवन्नस्ति मर्डितेत्यनेन सूचनाद् **ब्रह्मज्ञमूर्तिरत्र** ॥ ६८२ ॥

**॥ ॐ ब्राह्मणप्रियाय नमः ॥**

**अमतेरुत क्षुधोऽभिशस्तेरव स्पृधि। त्वं न ऊती तव**
**चित्रया धिया शिक्षा शचिष्ठ गातुवित्।[१] यो राजा ॥ ६८३ ॥**

हे शचिष्ठ वेदप्रतिपाद्य त्वं नः अस्मान् अस्याः प्रसिद्धाया अमतेः अनाद्यविद्यायाः क्षुधः क्षुत्तृडादिदुःखततेः अभिशस्तेः अपवादाच्च अवस्पृधि अपगमय। उत किञ्च गातुवित् स्तुतिप्रवेत्ता त्वं नोऽस्मभ्यम् ऊती ऊतीः रक्षाः तव त्वदीयया चित्रया धिया विचित्रया बुध्या शिक्ष देहि। (शिष्टमुत्तरान्वयि)

अनेन ब्रह्म स्तोत्रं, तत्कर्तारो ब्राह्मणा ऋत्विजः, तान् अनाद्यविद्यानिर्हरणेन प्रीणयतीति ब्राह्मणप्रिय इति निरुक्तेः अमतेरुत क्षुध इत्यनेन सूचनाद् **ब्राह्मणप्रियमूर्तिरत्र** ॥ ६८३ ॥

**॥ ॐ महाक्रमाय नमः ॥**

**चर्षणीनां याता रथेभिरध्रिगुः। विश्वासां तरुता**
**पृतनानां ज्येष्ठो यो वृत्रहा गृणे। इन्द्रं तं शुम्भ पुरुहन्मन् ॥ ६८४ ॥**

य इन्द्रश्चर्षणीनां प्रजानां राजा, यश्च रथेभिः रथैः युद्धं प्रति याता च, यश्चाध्रिगुः अधर्षणीयकान्तिमान्, विश्वासां समस्तानां पृतनानां सेनानां तरुता संहर्ता, अत एव यो ज्येष्ठः प्रशस्यः, यश्च वृत्रहा वृत्रं हन्ति तमहं गृणे स्तौमि। (शिष्टमुत्तरान्वयि)।

अनेन शक्तौ चरणविक्षेपे परिपाट्यामपि क्रम इत्युक्तेः सर्वराजत्वयुद्धगन्तृत्वोत्कृष्टकान्तिमत्त्व-

१. ऋग्वेद ८-७०, पुरुहन्मा आङ्गिरसः।

शत्रुसेनासंहर्तृत्वज्येष्ठत्वादिप्रयुक्तशक्तिः क्रमः । महान् क्रमो यस्य स महाक्रम इति निरुक्तेः यो राजेत्यादिना सूचनात् **महाक्रममूर्तिरत्र** ॥ ६८४ ॥

॥ ॐ महाकर्मणे नमः ॥

**अवसे यस्य द्विता विधर्तरि । हस्ताय वज्रः प्रति धायि**
**दर्शतो महो दिवे न सूर्यः । नकिष्टम्** ॥ ६८५ ॥

एतन्मन्त्रद्रष्टा पुरुहन्मा नाम ऋषिः स्वात्मानमेव संबोध्याह । हे पुरुहन्मन् यस्य विधर्तरि विधातुरिन्द्रस्य हस्ताय हस्ते द्विता शत्रुद्वैधीभावकरणसमर्थः वज्रः एतन्नामानमायुधं महः महान् सूर्यः दिवे न दिवीव प्रतिधायि प्रत्यधायि, हस्ते धृतमासीत्, तमिन्द्रम् अवसे शुम्भ शोभय । तमिन्द्रं नकिः न कोपि नशत् नाशयितुं समर्थः (इत्युत्तरेणान्वयः) ।

अनेन स्वर्गादौ सूर्यादिस्थापकत्वादीनि महान्ति कर्माण्यस्येति निरुक्तेः दिवे न सूर्य इत्यादिना सूचनात् **महाकर्ममूर्तिरत्र** ॥ ६८५ ॥

॥ ॐ महातेजसे नमः ॥

**कर्मणा नशद् यश्चकार सदावृधम् । इन्द्रं न यज्ञैर्विश्वगूर्त-**
**मृभ्वसमधृष्टं धृष्ण्वोजसम् । अषाळ्हमुग्रम्** ॥ ६८६ ॥

य इन्द्रः सदावृधं सतां सज्जनानामा समन्ताद् वृद्धिं चकार, तमिन्द्रं कर्मणा यज्ञादिरूपेण शुम्भ शेभय । किञ्चाधृष्टं सर्वैर्धर्षयितुमशक्यं धृष्ण्वोजसं पराभवकृद्बलविशेषवन्तम्, ''ओजः शब्दे गुणे ज्ञाने बले गर्वप्रकाशयोः'' इत्युक्तेः । तं च सज्ज्ञानव्याप्तिमन्तम् अषाळ्हं शत्रुभिः सोढुमशक्यम् उग्रं क्रूरं विश्वगूर्तं विश्वोद्गीर्णमिन्द्रं यज्ञैर्न यज्ञैरिव स्तुतिभिः शुम्भेत्यन्वयः ।

अनेन तेजो बले प्रतापे चेत्युक्तेः महत् तेजो बलं यस्य स महातेजा इति निरुक्तेः धृष्ण्वोजसमित्यनेन सूचनात् **महातेजोमूर्तिरत्र** ॥ ६८६ ॥

॥ ॐ महोरगाय नमः ॥

**पृतनासु सासहिं यस्मिन् महीरुरुज्रयः । सं धेनवो**
**जायमाने अनोनवुर्द्यावः क्षामो अनोनवुः** ॥ ६८७ ॥

यस्मिन्निन्द्रे जायमाने अभिव्यज्यमाने सति महीः महत्यः उरुज्रयः भगवत्प्रतिपादकाः धेनवः अभीष्टदोहका वेदवाचः अनोनवुः अस्तुवन् । द्यावः द्युलोकाभिमानिदेवाः क्षामः क्षमा भूम्यभिमानिदेवताश्च अनोनवुः । ससहिं वैरिवेगसहं तमिन्द्रं शुम्भेति (पूर्वतरेण) संबन्धः ।

अनेन ''उकारः क्षत्रिये नेत्रे हरमौलौ हरौ हरे'' इत्युक्तेः उः हरिः तस्मिन् रमन्ते प्रतिपादकतयेति उरा वेदवाग्विशेषाः । महान्तश्च ते उराश्च महोराः । तैर्गीयते स्तूयत इति महोरगः । गै शब्दे इत्यतः कः । इति निरुक्तंः महीरुरुज्रयः अनोनवुरित्यनेन सूचनात् **महोरगमूर्तिरत्र** ॥ ६८७ ॥

**॥ ॐ महाक्रतवे नमः ॥**

**[१]यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।**
**न त्वा वज्रिन् त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥ ६८८ ॥**

हे वज्रिन् इन्द्र यत् यदि द्यावः शतं स्युः भूमीः शतं यदि स्युः सूर्याश्च यदि सहस्रं स्युः तथापि ते सर्वे त्वामनु त्वां प्रति न अष्ट, अशू व्याप्तौ, नाप्नुवन्ति न समर्थाः । ''सब्रह्मकाः सुरगणाः सह दैत्यमर्त्याः'', ''यस्याज्ञया रहितमिन्दिरया समेतं ब्रह्मेशपूर्वकमिदं नतु कस्य चेशम्'', ''विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा । पुनश्चानन्तधा तस्य पुनश्चानन्तधा तथा । नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः '' इत्यादेः ।

अनेन डु कृञ् करणे इत्यतः करणे ऋतुप्रत्ययः । क्रियते अनेनेति क्रतुः माहात्म्यम् । महान् क्रतुर्माहात्म्यं यस्य स महाक्रतुः । इति निरुक्तेः यद् द्याव इन्द्र ते शतमित्यदिना सूचनात् **महाक्रतुमूर्तिरत्र** ॥ ६८८ ॥

**॥ ॐ महायज्वने नमः ॥**

**आ पप्राथ महिना वृष्ण्या वृषन् विश्वा शविष्ठ शवसा ।**
**अस्माँ अव मघवन् गोमति व्रजे वज्रिन् चित्राभिरूतिभिः ॥ ६८९ ॥**

हे वृषन् शविष्ठ मघवन् वज्रिन् इन्द्र वृष्ण्या वृष्णेन महिना महिम्ना शवसा सुखेन विश्वा विश्वानि

१. अविहतोऽयं मन्त्रः । उत्तरं मन्त्रद्वयं च तथा ।

आपप्राथ आ सम्यक् प्रथितो भूत् । तस्मात् अस्मान् गोमति व्रजे गवाद्यभीष्टसमूहे चित्राभिरूतिभिः विचित्ररक्षणैः सह अव , विचित्राण्यभीष्टानि देहीति यावत् ।

अनेन यजेर्दानार्थात् सुयजोङ्वनिप् इति ङ्वनिप् प्रत्ययः । यज्वा अभीष्टानां दाता । महांश्चासौ यज्वा च महायज्वेति निरुक्तेः चित्राभिरूतिभिरित्यनेन सूचनात् **महायज्वमूर्तिरत्र** ॥ ६८९ ॥

॥ ॐ महायज्ञाय नमः ॥

**न सीमदेव आपदिषं दीर्घायो मर्त्यः ।**
**एतग्वा चिद्य एतशा युयोजते हरी इन्द्रो युयोजते ॥ ६९० ॥**

हे दीर्घायो पूर्णायुष्य इन्द्र अदेवः असुरो जनः त्वत्तः इषमन्नादिभोगजं सुखं सीम् एव न आपत् नाप्नुयादेव । किन्तु एतग्वा ज्ञानवान् मर्त्यः चिदपि , मनुष्योपि , इषं प्राप्नुयात् । अयमिन्द्रः यो जनः एतशा ज्ञानेन युयोजते युक्तो भवति तस्य गृहं प्राप्तुं हरी रथे युयोजते संबध्नाति ।

अनेन संगतिकरणार्थाद् यजेः यजयाचयतविच्छप्रच्छरक्षो नङ् इति सूत्रेण नङ्प्रत्ययः । अश्वयो रथे संगतिं करोतीति यज्ञः । मह उत्सवतेजसोरित्युक्तेः महयोस्तेजस्विनोरश्वयोरग्रगामिनोः आ सम्यग् यज्ञः रथे नियोक्ता महायज्ञ इति निरुक्तेः हरी इन्द्रो युयोजते इत्यनेन सूचनात् **महायज्ञमूर्तिरत्र** ॥ ६९० ॥

॥ ॐ महाहविषे नमः ॥

**तं वो महो महाय्यमिन्द्रं दानाय सक्षणिम् । यो गाधेषु य**
**आरणेषु हव्यो वाजेष्वस्ति हव्यः । उदू षु णो वसो ॥ ६९१ ॥**

हे जनाः वो युष्मदीयः गाधेषु प्रगाधेषु यो हव्यः आरणेषु च यो हव्यः । वाजेषु, निमित्तसप्तमीयम्,वाजनिमित्तं हव्यः स्तोत्रविशेषो योऽस्ति प्रवर्तयितुं योग्यः तं स्तोत्रविशेषं वः युष्मभ्यं दानाय अभीष्टदानार्थं सक्षणिं आगन्तारं महय्यं पूज्यं महः महान्तमिन्द्रं प्रति कुरुत ।

अनेन हु दानादनयोरित्यस्मात् करणे इसिप्रत्ययः । हूयते अनेनेति प्रगाधारणादिगतमन्त्रो हविः । महत् हविः प्रवर्तनीयो यस्मिन् स महाहविरिति निरुक्तेः यो गाधेषु य आरणेष्वित्यादिना सूचनात् **महाहविर्मूर्तिरत्र** ॥ ६९१ ॥

॥ ॐ स्तव्याय नमः ॥

**महे मृशस्व शूर राधसे । उदू षु मह्यै मघवन्**
**मघत्तय उदिन्द्र श्रवसे महे । त्वं न इन्द्र ऋतयुः ॥ ६९२ ॥**

हे वसो सूरिन् महे महते सुराधसे सुखाय नः अस्मान् उ एव उत् सम्यक् मृशस्व स्पृशस्व, देहीति यावत् । हे मघवन् उ किञ्च मह्यं सु मह्यै मघत्तये, मघो धनं तद्वाचिन्युपपदे तनातेस्तिङ्-प्रत्ययः (?), मघत्तिः धनप्राप्तिः, तस्यै नः मृशस्व । उ किञ्च हे इन्द्र महे महते श्रवसे अन्नाय नः उन्मृषस्व । हे इन्द्र त्वं नः अस्माकं ऋतयुः ज्ञानप्रदो भव ।

अनेन स्तृञ् आच्छादने इत्यतः अव्यप्रत्ययः डिच्च । राधसा द्रविणेन अन्नेन ज्ञानादिना च स्तृणाति आच्छादयति अभिमृशति भक्तानिति स्तव्य इति निरुक्तेः मृशस्व शूर राधस इत्यादिना सूचनात् **स्तव्यमूर्तिरत्र** ॥ ६९२ ॥

॥ ॐ स्तवप्रियाय नमः ॥

**त्वानिदो नि तृम्पसि । मध्ये वसिष्व तुविनृम्णोर्वोर्नि**
**दासं शिश्नथो हथैः । अन्यव्रतममानुषम् ॥ ६९३ ॥**

हे इन्द्र त्वानिदः त्वत्समीपवर्तिनः अस्मान् ऊर्वोर्मध्ये वसिष्व ।अस्मान् वा आश्रय । पुत्रं पिता यथा ऊर्वोः शावयित्वा लालयति एवमस्मान् लालय । अत एव भक्तप्रियः तृम्पसि तर्पयसि तर्पय । किञ्च हे तुविनृम्ण बहुसुख दासं भक्तजनं हथैः प्रसिद्धैरन्नैः निशिश्नथः आप्याययसि । यद्वा अन्यव्रतमन्यदेवतापूजकमत एवामानुषं पशुप्रायं दासं, दसु विभेदने, शत्रुजनं हथैः हतिसाधनैरायुधैः निशिश्नथः, श्नथिर्वधकर्मा, अवधीः ।

अनेन ष्टुञ् स्तुतावित्यस्मात् पचाद्यच्, स्तौतीति स्तवो भक्तः । प्रीणातीति प्रियः । प्रीङ् प्रीणने इत्यतः इगुपधज्ञाप्रीकिरः कः, कित्त्वाद् गुणाभावः, इयङादेशः । स्तवान् भक्तान् प्रीणयतीति स्तवप्रिय इति निरुक्तेः ऊर्वोर्मध्ये वसिष्व त्वानिदो नितृम्पसीत्यनेन सूचनात् **स्तवप्रियमूर्तिरत्र** ॥ ६९३ ॥

॥ ॐ स्तोत्राय नमः ॥

**अयज्वानमदेवयुम् । अव स्वः सखा दुधुवीत पर्वतः**
**सुघ्राय दस्युं पर्वतः । [१]तं वो दस्ममृतीषहं वसो ॥ ६९४ ॥**

पर्वतः पर्ववत्त्वात् पर्व वज्रं तदस्यास्तीति मत्वर्थे तः, वज्रवान् सखा अयमिन्द्रः अयज्वानमपूजकमत एव अदेवयुं देवप्राप्त्ययोग्यं जनं स्वः स्वर्गाद् अव दुधुवीत अधस्तात् पातयेत् । किञ्च दस्युं हिंसकं जनं पर्वतः वज्रतः वज्रायुधेन सुघ्राय सम्यक् हतवान् । हे जनाः वः शत्रूणां दस्मं भेदकं ऋतिसहम् , ऋतिः शूराणां गतिः आगमनं तां सहत इति ऋतिसहः, तम् वसोर्दातारम् तं हवाम इति संबन्धः ।

अनेन असुक्षेपणे इत्यतः कर्मणि क्तप्रत्ययः , अस्तः निरसनीयोऽयज्वादिः, अवर्णलोपः स्तः । तप सन्तापे इत्यत उप्रत्ययः (ड्र प्रत्ययः ?) उ विशेषेण संतापयतीति उत्रम् । स्तं अयज्वत्वादिना निरसनीयं पापिजनमत्यन्तं तापयति स्वर्गादधः पातयतीति स्तोत्रमिति निरुक्तेः अयज्वानमव स्वः दुधुवीतेत्यनेन सूचनात् **स्तोत्रमूर्तिरत्र** ॥ ६९४ ॥

॥ ॐ स्तुतिस्तोत्रे नमः ॥

**मन्दानमन्धसः । अभि वत्सं न स्वसरेषु धेनव इन्द्रं**
**गीर्भिर्नवामहे । द्युक्षं सुदानुं तविषीभिरावृतम् ॥ ६९५ ॥**

अन्धसः तृप्तिसाधनत्वादन्नरूपस्य स्तोत्रस्य । स हान्नमित्यभिव्याहृत्य बृहतीसहस्रमेव शशंसेति श्रुतेः । मन्दानमनुमन्तारम्, अस्मदीयस्तोत्रं स्तवन्तमिति यावत्, द्युक्षं द्युनिवासिनम्, सुदानुं दानशीलं तविषीभिः तेजोभिः आवृतं परिवृतं तमिन्द्रं वयं धेनवो गावो वत्सं न स्वापत्यमिव स्वसरेषु गृहेषु गीर्भिः स्तुतिभिः अभिनवामहे । अत एवास्मदीयस्तुतेः श्रोता भवेति भावः ।

अनेन स्तुतेर्भक्तगिरः स्तोता स्तुतिस्तोतेति निरुक्तेः वत्सं न धेनवः मन्दानमिन्द्रं गीर्भिर्हवामहे इत्यनेन सूचनात् **स्तुतिस्तोतृमूर्तिरत्र** ॥ ६९५ ॥ स्तुतिः स्तोतेति पदद्वयं विच्छिद्य केचिन्नामद्वयं कुर्वन्ति ।

---

१. ऋग्वेद ८ - ८८ नोधाः गौतमः ।

॥ ॐ रणप्रियाय नमः ॥

**गिर्रिं न पुरुभोजसम् । क्षुमन्तं वाजं शतिनं सहस्रिणं**
**मक्षू गोमन्तमीमहे । न त्वा वृहन्तः ॥ ६९६ ॥**

हे इन्द्र गिर्रिं न पर्वतमिव पुरुभोजसं पुरूणां ज्ञानानन्दादीनां भोजसं भोजकं स्वयं ज्ञानान्दादिभुजं वा, पुरूणां शत्रूणां भोजसं संहर्तारं वा , शतिनं शतसंख्याकं सहस्रिणं सहस्रसंख्याकं वाजं भोग्यं क्षुमन्तं ददन्तं गोमन्तं वज्रधारिणम् । यद्वा गोमन्तं गा अपहृतवन्तं वलासुरं क्षुमन्तं, क्षु शब्दे, शब्दयन्तं संहर्तारमिति यावत् । तं च मक्षु मंक्षु क्षिप्रम् ईमहे, शरणमिति शेषः । (शिष्टमुत्तरान्वयि)

अनेन रणो युद्धं प्रियो यस्य स रणप्रिय इति निरुक्तेः पुरुभोजसं गोमन्तं क्षुमन्तमित्यनेन सूचनाद् **रणप्रियमूर्तिरत्र** ॥ ६९७ ॥

॥ ॐ पूर्णाय नमः ॥

**अद्रयो वरन्त इन्द्र वीळवः । यद् दित्ससि स्तुवते**
**मावते वसु नकिष्टदा मिनाति ते । योद्धासि क्रत्वा ॥ ६९७ ॥**

हे इन्द्र वीळवो दृढाः बृहन्तो महान्तः अद्रयः गिरयोपि त्वा त्वां न वरन्ते गच्छन्तं न वारयन्ति, सर्वव्यापित्वादिति भावः । किञ्च मावते ज्ञानवते स्तुवते स्तोत्रे जनाय यदभीष्टं वसु दित्ससि दातुमिच्छसि तद् ददास्येव । यच्च ते त्वया दत्तं वसु तत् नकिः न कोपि आ मिनाति हिंसति हिंसेत्, अपहरेदिति यावत् । किञ्च क्रत्वा भक्तानामभीष्टं कर्तुं तदीयशत्रून् प्रति योद्धासि ।

अनेन पृ पालनपूरणयोरित्यतः कर्तरि क्तः । उदोष्ठ्यपूर्वस्येति ऋकारस्य रपर उकारः, हलि चेति दीर्घः, रदाभ्यामिति निष्ठातकारस्य नः, णत्वं च । पूरयतीति पूर्ण इति निरुक्तेः अद्रयो वरन्ते इत्यादिना सूचनात् **पूर्णमूर्तिरत्र** ॥ ६९७ ॥

॥ ॐ पूरयित्रे नमः ॥

**शवसोत दंसना विश्वा जाताभि मज्मना । आ त्वाय-**
**मर्क ऊतये ववर्तति यं गोतमा अजीजनन् ॥ ६९८ ॥**

हे इन्द्र विश्वा विश्वान् जाता जातान् शत्रून् प्रति मज्मना महिम्ना योद्धासि । उत किञ्च विश्वा समस्तानि दंसना दंसनानि कर्माणि क्रत्वा कर्तुं शवसा सुखेन वर्तसे । यद्वा विश्वानि दंसनानि प्राणिभिरधिकारिभिः क्रत्वा कारयितुं तत्परिपन्थितया जातान् सर्वान् शत्रून् योद्धासि । युध संप्रहारे । तत्तद्योग्यविधिपर्याप्तसाधनपरिपूर्त्यर्थं तद्विरोधिजनान् परिहृत्य प्राणिभिः साधनान्यनुष्ठापयसीति यावत् । किञ्च गोतमाः गौः स्तोत्ररूपा वाक् सा एषामस्तीति स्तोतारः यं त्वा त्वां अजीजनन् अभिव्यञ्जयामासुः तं त्वामयमर्कः सूर्योपि ऊतये ऊतिं त्वदभिप्रायम् आ सम्यग् ववर्तति अनुवर्तते । बहुकालमेनं जीवयसीति यावत् ।

अनेन भक्तानां साधनानि पूरयतीति पूरयिता । पृ पालनपूरणयोरित्यस्माण्णिच्, उदोष्ठ्यपूर्वस्येति उः दीर्घश्च, ततो धातुसंज्ञायां कर्तरि तृच् गुणायादेशौ, इति निरुक्तेः शवसोत दंसनेत्यादिना सूचनात् **पूरयितृमूर्तिरत्र** ॥ ६९८ ॥

॥ ॐ पुण्याय नमः ॥

**[1]प्र हि रिरिक्ष ओजसा दिवो अन्तेभ्यस्परि ।**
**न त्वा विव्याच रज इन्द्र पार्थिवमनु स्वधां ववक्षिथ ॥ ६९९ ॥**

हे इन्द्र भवान् ओजसा बलेन दिवो द्युलोकात् अन्तेभ्यः ततोप्युपरितनलोकेभ्यः प्र रिरिक्षे अतिरिच्यते । हि किञ्च पार्थिवं रजः त्वां न परिविव्याच न समगच्छत । असंगो ह्ययं पुरुष इति श्रुतेः । तस्मादेव स्वधां सुखमेव अनुववक्षिथ अनुवहसि ॥

अनेन पूञ् पवने इत्यतः यत्प्रत्ययः णुक् च, धातोर्ह्रस्वः, पुनाति रजउपलक्षितदोषादिभिरसंस्पृष्टः, अत एव परिशुद्धः पुण्य इति निरुक्तेः न त्वा विव्याच रज इत्यनेन सूचनात् **पुण्यमूर्तिरत्र** ॥ ६९९॥

॥ ॐ पुण्यकीर्तये नमः ॥

**नकिः परिष्टिर्मघवन् मघस्य ते यद् दाशुषे दशस्यसि ।**
**अस्माकं बोध्युचथस्य चोदिता मंहिष्ठो वाजसातये ॥ ७०० ॥**

---

१. अविहृतोयं मन्त्रः । इतः परं पञ्च वृहत्योपि तथा ।

हे मघवन् त्वदीयस्य मघस्य ज्ञानस्य यशसो वित्तस्य वा परिष्टिः परिक्षयः नकिः नैव । किञ्च यद् दाशुषे यजमानाय दशस्यसि,दशदाने,दास्यसि तदस्माकं चोदिता दाता भव । उचथस्य उत्कृष्टस्यापि मंहिष्ठो महत्तमः त्वं वाजसातये भोग्यलाभाय बोधि बोधय ।

अनेन कृत संशब्दने इत्यतो इन् प्रत्ययः,उपधायाश्चेति ऋकारस्य रपर इकारः, र्वोरुपधाया दीर्घ इक इति दीर्घः। कीर्त्यते सर्वदा शब्द्यते न विनश्यतीति कीर्तिः । धर्माम्बुपुण्यस्वर्णेषु पुण्यमित्युक्तेः पुण्यं हिरण्यं वित्तादि ।कीर्तिः अविनश्वरं पुण्यं वित्तादि यस्य सः पुण्यकीर्तिः । आहिताग्न्यादिवत् परनिपातः ।यद्वा कीर्तनं कीर्तिःअविनाशः, पुण्यस्य वित्तादेः कीर्तिरविनाशो यस्य सः पुण्यकीर्तिः इति निरुक्तेः नकिः परिष्टिर्मघवन् मघस्येत्यनेन सूचनात् **पुण्यकीर्तिमूर्तिरत्र** ॥७००॥

**॥ इति श्रीवृहतीसहस्रपारावारे सप्तमः खण्डः समाप्तः ॥**

**॥ ॐ अनामयाय नमः ॥**

**[१]आ नो विश्वासु हव्य इन्द्रः समत्सु भूषतु ।**
**उप ब्रह्माणि सवनानि वृत्रहा परमज्या ऋचीषमः ॥ ७०१ ॥**

अयमिन्द्रः विश्वासु समस्तासु समत्सु युद्धेषु नः अस्माभिः हव्यः स्तुत्यः । किञ्च नः ब्रह्माणि स्तोत्राणि सवनानि सवनेषु उप प्रति आभूषतु आभूषयतु, स्तुतिगोचरो भवतु। अयं वृत्रहा परमज्याः परमज्यायान् ऋचीषमश्च ऋक्प्रतिपाद्यगुणः ।

अनेन नमु प्रह्वत्वे शब्दे चेत्यतः नामन्सामन्नित्यादिना मनिन् प्रत्ययः, धातुमकारलोपः, दीर्घश्च, नाम शब्दः । अः इति ब्रह्मेति श्रुतेः अः ब्रह्म, तस्य नामानि स्तोत्राणि, तानि यातीत्यनामयः । यातेः कः । ब्रह्मप्रतिपादकस्तोत्राणि याति, स्तुतिगोचर इति यावत् इति निरुक्तेः उप ब्रह्माणि भूषत्वित्यनेन सूचनाद् **अनामयमूर्तिरत्र** ॥ ७०१ ॥

१. ऋग्वेद ८-९०, नृमेधपुरुमेधावाङ्गीरसौ ।

॥ ॐ मनोजवाय नमः ॥

**त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् ।**
**तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥ ७०२ ॥**

हे इन्द्र त्वं राधसां संसिद्धीनां प्रथमो मुख्यः असि दातासि । किञ्च सत्यः साधुगुणात्मकः, ईशानकृत् ईशो रुद्रः तमनति चेष्टयतीतीशानो मन्मथः, तं सौन्दर्यादिना अधरीकरोति तिरस्करोतीतीशानकृत् साक्षान्मन्मथमन्मथ इति तदुक्तेः, अतिसुन्दर इति यावत्, असि । अतस्त्वां तुविद्युम्नस्य बहुसुखस्य युज्या योगेन योगार्थं वृणीमहे । महो महतः शवसः सुखस्यार्थे पुत्रस्य अपत्यस्य चार्थे वृणीमहे ।

अनेन मनसा जातत्वात् मनोजो मन्मथः, तं वाति गन्धयति कुत्सयतीति मनोजव इति निरुक्तेः ईशानकृदित्यनेन सूचनाद् **मनोजवमूर्तिरत्र** ॥ ७०२ ॥

॥ ॐ तीर्थकराय नमः ॥

**ब्रह्मा त इन्द्र गिर्वणः क्रियन्ते अनतिद्भुता ।**
**इमा जुषस्व हर्यश्व योजनेन्द्र या ते अमन्महि ॥ ७०३ ॥**

हे इन्द्र ब्रह्मा ब्रह्माणि स्तोत्राणि ते तुभ्यं क्रियन्ते । हे हर्यश्व गिर्वणः ते त्वयि या यानि योजना योजनानि स्तोत्राणि अमन्महि जानीमः तानि इमा इमानि अनतिद्भुता अत्यद्भुतानि स्तोत्राणि जुषस्व सेवस्व ।

अनेन तॄ प्लवनतरणयोरित्यस्मात् क्थप्रत्ययः, ऋत इद्धातोरितीकारः रपरः, हलि चेति दीर्घः । निदानागमयोस्तीर्थमित्युक्तेः तीर्थमागमः स्तोत्राणि, तानि सेवते आत्मनि करोतीति तीर्थकरः । कृञः पचाद्यच् । इति निरुक्तेः इमा जुषस्वेत्यनेन सूचनात् **तीर्थकरमूर्तिरत्र** ॥ ७०३ ॥

॥ ॐ वसुरेतसे नमः ॥

**त्वं हि सत्यो मघवन्ननानतो वृत्रा भूरिन्यृञ्जसे ।**
**स त्वं शविष्ठ वज्रहस्त दाशुषेऽर्वाञ्चं रयिमा कृधि ॥ ७०४ ॥**

हे मघवन् त्वं सत्यः सद्गुणपूर्णोसि । अनानतः निकृष्टो न । भूरि भूरीणि वृत्रा वृत्राणि अज्ञानादीन्यावरणानि नि ऋञ्जसे विनाशयसि । हे शविष्ठ वज्रहस्त स त्वं दाशुषे यजमानाय अर्वाञ्चं भूलोकस्थितं रयिम् आ कृधि सम्यग् देहि ।

अनेन वस आच्छादने इत्यत उः । आच्छाद्यते जगदेभिरिति वसूनि वृत्राणि । रीङ् स्रवणे इत्यतः रीङ् क्षये इत्यतो वा सुती तुग्वेति सूत्रात् (?) असुन् प्रत्ययः तस्य तुडागमो गुणश्च । स्रावयति क्षपयतीति वा रेताः । वसूनामज्ञानादीनां स्रावयिता क्षपयिता वा वसुरेता इति निरुक्तेः वृत्रा भूरि न्यृञ्जसे इत्यनेन सूचनाद् **वसुरेतोमूर्तिरत्र** ॥ ७०४ ॥

**॥ ॐ वसुप्रदाय नमः ॥**

**त्वमिन्द्र यशा अस्यृजीषी शवसस्पते । त्वं वृत्राणि**
**हंस्यप्रतीन्येक इदनुत्ता चर्षणीधृता तमु त्वा ॥ ७०५ ॥**

हे इन्द्र त्वं यशाः कीर्तिरूपः ज्ञानसुखरूपो वा ऋजीषी ऋजीषवद् दृढश्चासि । हे शवसस्पते त्वं चर्षणीधृता प्रजाधारकेण अनुत्ता आयुधेन वज्रेण वृत्राण्यसुरजातानि निहंसि । अतः त्वम् एक इत् एक एव अप्रति अनुपमः । (शिष्टमुत्तरान्वयि) ।

अनेन वसन्ति प्राणिनः सुखेन रक्षिता अनेनेति वसुर्वज्रः । प्रपूर्वात् दृ विदारणे इत्यतो ण्यन्तादुप्रत्ययः (?) प्रकर्षेण दारयतीति प्रदः । वसुना वज्रेण शत्रून् प्रदारयतीति वसुप्रद इति निरुक्तेः अनुत्ता चर्षणीधृता निहंसीत्यनेन सूचनाद् वसुप्रदमूर्तिरत्र ॥ ७०५ ॥

**॥ ॐ वसुप्रदाय नमः ॥**

**नूनमसुर प्रचेतसं राधो भागमिवेमहे । महीव कृत्तिः**
**शरणा त इन्द्र प्रते सुम्ना नो अश्नवन् ॥ ७०६ ॥**

असुर असौ मुख्यप्राणे रत हे इन्द्र प्रचेतसं प्रकृष्टज्ञानवन्तं तं त्वा त्वां राधः सुखाख्यं भागं भागधेयमिव ईमहे प्राप्नुमः । हे इन्द्र शरणा शरणागतिः महीव महतीव कृत्तिः कृता अस्ति । तस्मात् ते त्वदीया सुम्ना सुखानि नः अस्मान् प्र अश्नवन् प्राप्नुवन्तु । उ एव । नूनं निश्चितम् ।

अनेन वसन्ति एभिरिति वसूनि सुखानि, तानि प्रददातीति वसुप्रद इति निरुक्तेः सुम्रा नो अश्नवन् इत्यनेन सूचनाद् **वसुप्रदमूर्तिरत्र** ॥ ७०६ ॥

॥ ॐ वासुदेवाय नमः ॥

**[1]या इन्द्र भुज आ भरः स्वर्वाँ असुरेभ्यः ।**
**स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥ ७०७ ॥**

हे इन्द्र असुरेभ्यः असुरेषु या भुजो भोगाः ता भुजो भोगान् त्वां स्तोतारं मां प्रति स्वर्वाँ सुखवान् त्वम् आ भर समन्तादाहृतवानसि । किञ्च हे मघवन् अस्य मां वर्धय भोगैः । ये च मदन्ये वृक्तबर्हिषो यज्वानः तांश्च वर्धय । इत् एव । यद्वा ये त्वे केचिदिति योज्यम् ।

अनेन वसु सुखं तेन दीव्यते द्योतत इति वसुदेवः, प्रज्ञादित्वादण् । यद्वा वसवो भोगाः तान् दीव्यते प्रापयतीति वसुदेवः, प्रज्ञादित्वादण् । इति निरुक्तेः स्वर्वानित्यनेन इन्द्र भुज इत्यनेन च सूचनाद् **वासुदेवमूर्तिरत्र** ॥ ७०७ ॥

॥ ॐ वसवे नमः ॥

**यमिन्द्र दधिषे त्वमश्वं गां भागमव्ययम् ।**
**यजमाने सुन्वति दक्षिणावति तस्मिन् तं धेहि मा पणौ ॥ ७०८ ॥**

हे इन्द्र त्वं गामश्वं वा अव्ययं नाशरहितं यं भागं वा दक्षिणावति दक्षिणादातरि सुन्वति यजमाने दधिषे दातुमिच्छसि तं भागं तस्मिन्नेव धेहि देहि । पणावसुरे मा धेहि ।

अनेन वसेरन्तर्णीतण्यर्थादुप्रत्ययः । दक्षिणावति यजमान एव भागं वासयति नान्यत्रासुरादाविति वसु इति निरुक्तेः दक्षिणावति भागं धेहीत्यादिना सूचनाद् **वसुमूर्तिरत्र** ॥ ७०८ ॥

॥ ॐ वसुमनसे नमः ॥

**य इन्द्र सस्त्यव्रतोऽनुष्वापमदेवयुः । स्वैः ष एवैर्मुमुरत्**
**[2]पौस्यं रयिं सनुतर्धेहि तं ततः । यच्छक्रासि परावति ॥ ७०९ ॥**

---

१. ऋग्वेद ८-९७. रेभः काश्यपः । अयमुत्तरश्च मन्त्रो न विहृतः । २. 'पोष्यम्' इति मुद्रितग्रन्थपाठः ।

यः असुरो जनः अव्रतः भगवत्पूजात्मककर्मनियमरहितः सस्ति, षस स्वप्ने लुग्विकरणोऽयम्, स्वपिति अनुस्वापं प्रतिस्वापं प्रतिदिनम् अदेवयुः देवताभजनरहितश्च स असुरो जनः एवैः, इकार उच्यते काम इति वचनाद् इषु इच्छायामित्यतो भावे डिः इः इच्छा, इच्छया वाति गच्छतीति इवाः, वातेः कर्तरि डः; आ समन्ताद् विधिनिषेधावतिक्रम्य स्वेच्छयैव प्रवर्तमाना एवाः, तथाविधैः स्वैः जनैः मुमुरत्........[१] सः पौंस्यं सामर्थ्यं रयिं च ततः अपहृत्य तं सनुतो यज्वनस्त्वद्भक्तस्य धेहि देहि।(शिष्टमुत्तरत्र)

अनेन वसु पौंस्यं रयिं चासुरेभ्योऽपहर्तुं मनुते इति वसुमना इति निरुक्तेः य इन्द्र सस्त्यव्रत इत्यादिना सूचनाद् **वसुमनोमूर्तिरत्र** ॥ ७०९ ॥

॥ ॐ हविषे नमः ॥

**यदर्वावति वृत्रहन्। अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः**
**सुतावाँ आ विवासति। यद् वाऽसि रोचने दिवः ॥ ७१० ॥**

हे वृत्रहन् इन्द्र यद् यस्मिन् परावति उपरितनलोके असि वर्तसे यद् यस्मिन् अर्वावति अधस्तनलोके असि यद्वा यदि वा रोचने प्रकाशमाने दिवः दिवि वैकुण्ठादौ असि अतस्तेभ्यो लोकेभ्यः त्वा त्वां, दिवं गच्छतीति द्युगत् स्वर्गं जिगमिषुः सुतवान् यजमानः गीर्भिः स्तोत्रैः केशिभिरश्वैश्च, परिवारोपलक्षणमेतत्, सपरिवारं त्वाम् आविवासति स्वगृहे वासयितुमिच्छति, त्वामेवोपजीवतीति यावत्।

अनेन हु दानादनयोरित्यस्माददनकर्मणो जुहोतेः कर्मणीसिप्रत्ययः। हूयते अद्यते उपजीव्यते इति हविः उपजीव्यत्वमेवाद्यत्वमित्युक्तेः। इति निरुक्तेः आ विवासतीत्यनेन सूचनाद् हविर्मूर्तिरत्र ॥ ७१० ॥

॥ ॐ सद्गतये नमः ॥

**समुद्रस्याधि विष्टपि। यत् पार्थिवे सदने वृत्रहन्तम**
**यदन्तरिक्ष आ गहि। स नः सोमेषु सोमपाः ॥ ७११ ॥**

---

१. अत्र ग्रन्थपातः सर्वत्र कोशेषु। म्रियतामिति पदं लुप्तं स्यात्।

हे वृत्रहन्तम यदि वा समुद्रस्य विष्टपि अधि मध्ये असि.... यत् यदि वा अन्तरिक्षे असि, तेभ्यः स्थानेभ्योपि नः अस्मदीयेषु सोमेषु सुतेषु सत्सु सोमपाः स त्वमिह आ गहि।

अनेन सीदन्त्यस्मिन्निति सत् स्थानम्, तेभ्यः स्थानेभ्यो मेर्वादिभ्यो गतिरागमनं यस्य स सद्गतिरिति निरुक्तेः यदन्तरिक्ष आगहीत्यनेन सूचनात् **सद्गतिमूर्तिरत्र** ॥ ७११ ॥

**॥ ॐ सत्कृतये नमः ॥**

**सुतेषु शवसस्पते । मादयस्व राधसा सूनृतावतेन्द्र**
**राया परीणसा । मा न इन्द्र परा वृणक् ॥ ७१२ ॥**

हे शवसस्पते इन्द्र सोमेषु सुतेषु सत्सु सूनृतावता सूनृता वेदवाणी तदुक्तेन राधसा संसिद्ध्या परीणसा परिणाह्युक्तेन राया धनेन च नः अस्मान् मादयस्व संसिद्ध्यादि दत्वा सुखयेति यावत्। किञ्च नः परावृणक् पराग्गन्ता पराङ्मुखो मा भव।

अनेन सती संसिद्ध्यादिदानरूपा कृतिः क्रिया यस्य स सत्कृतिरिति निरुक्तेः सुराधसा मादयस्वेत्यनेन सूचनात् **सत्कृतिमूर्तिरत्र** ॥ ७१२ ॥

**॥ ॐ सत्तायै नमः ॥**

**भवा नः सधमाद्यः । त्वं न ऊती त्वमिन्न आप्यं मा न**
**इन्द्र परावृणक् । अस्मे इन्द्र सचा सुते नि षदा पीतये ॥ ७१३ ॥**

हे इन्द्र नोऽस्माकं सधमाद्यः यज्ञे प्रमोदयुक्तो भव। किञ्च त्वं नः ऊती रक्षकः। किञ्च त्वमेव नः आप्यमाप्यः। मा न इन्द्र परा वृणगिति पुनर्वचनमादरार्थम्। रक्षकत्वांशे पराङ्मुखो मा भवेति वा। हे इन्द्र अस्मे अस्मासु अस्मदीयगृहेषु सोमे सुते सति सचा सुखेन पीतये पानार्थं निषदा निषीद उपविश।

अनेन आसादनार्थात् सदेः कर्तरि तृच्, यज्ञगृहे निषीदति उपविशतीति सत्ता। यद्वा सीदतीति सत्, कर्तरि क्विप्, सतो भावो रक्षकत्वादिः तद्रूपः सत्ता, धर्मधर्मिणोरभेदात्, इति निरुक्तेः सचा सुते निषदा पीतये इत्यनेन सूचनात् **सत्तामूर्तिरत्र** ॥ ७१३ ॥

॥ ॐ सद्भूतये नमः ॥

**मधु । कृधी जरित्रे मघवन्नवो महदस्मे इन्द्र सचा**
**सुते । न त्वा देवास आशत न मर्त्यासो अद्रिवः ॥ ७१४ ॥**

हे मघवन् त्वमस्मे अस्मासु सचा सुते सोमे मधुपीतये मधुपानार्थमागहि । आगत्य च जरित्रे स्तोत्रे यजमानाय महत् समीचीनम् अवो रक्षणं कृधि । त्वा त्वाम् । (ऐश्वर्यविषये) देवासो देवा अपि न आशत न प्राप्नुवन्ति, मर्त्यासो मर्त्या अपि नाशत । एवं महैश्वर्यसम्पन्नोपि त्वं मद्गृहं प्रत्येहीति तात्पर्यम् ।

अनेन समीचीना भूतिर्यस्य सः सद्भूतिः । यद्वा देवाद्यगम्यत्वादगम्यत्वाद्यात्मकमहदैश्वर्यं भूतिः, सती भूतिरैश्वर्यं यस्य स सद्भूतिरिति निरुक्तेः अवो महत् कृधीत्यनेन न देवास इत्यनेन च सूचनात् **सद्भूतिमूर्तिरत्र** ॥ ७१४ ॥

॥ ॐ सत्परायणाय नमः ॥

**अद्रिवः । विश्वा जातानि शवसाऽभिभूरसि न त्वा देवास**
**आशत । ता अस्य सूददोहसः सोमं श्रीणन्ति ॥ ७१५ ॥**

हे अद्रिवः विश्वा विश्वानि जातानि समस्तप्राणिजातानि शवसा सुखेन त्वम् अभिभूरसि अभिभवकर्तासि । सर्वप्राण्याधिकपूर्णानन्दोऽसि । अत एव देवासः त्वा नाशत न त्वत्समा इति यावत् । अस्य सूददोहसो ज्ञानकर्मप्रवर्तकस्य सोमपानार्थं पृश्नयो वेदवाच आपो गावश्च सोमं श्रीणन्ति गृह्णन्ति ।

अनेन सन्तो देवासः, तेभ्यः पर उत्तम आनन्दः, तस्यायनमाश्रयः सत्परायण इति निरुक्तेः शवसाभिभूरसीत्यनेन सूचनात् **सत्परायणमूर्तिरत्र** ॥ ७१५ ॥

॥ इति बार्हती तृचाशीतिः समाप्ता ॥

## ॥ अथ औष्णिही तृचाशीतिः ॥

॥ ॐ शूरसेनाय नमः ॥

**पृश्नयः । जन्मन् देवानां विशस्त्रिष्वारोचने दिवः । [1]य इन्द्र**
**सोमपातमो मदः शविष्ठ चेतति । येना हंसि ॥ ७१६ ॥**

हे इन्द्र शविष्ठ सुखवत्तम त्रिषु रोचमानेषु आदित्यचन्द्रविद्युल्लोकेषु स्थितानां दिवः स्वर्गलोकपतीनां देवानां जन्मनि यज्ञे सन्तुष्टस्त्वं येन रूपेण अत्रिणं लोकत्रयप्राप्तिपरिघं पापं हंसि । यश्च ते रूपविशेषः सोमपातमः सोमपानप्रियः मदः सुखात्मकः चेतति सर्वजनान् जानाति च तथाविधं ते रूपं शरणमीमहे इति (उत्तरेण) सम्बन्धः ।

अनेन शुषिचिमीनां दीर्घश्चेति सूत्रेण क्रन् दीर्घश्च । शुवन्ति ज्ञानयुद्धं प्रति गच्छन्तीति शूरा भगवद्रूपविशेषाः । षिञ् बन्धने इत्यतः कृपृवृञ्जूसिद्रुपन्यनिस्वपिभ्यां नित् इति सूत्रेण नित्प्रत्ययः गुणः, सिन्वन्ति बध्नन्ति शत्रूनिति सेनाः रूपवि[illegible] । शूराः सेना यस्य सः शूरसेन इति निरुक्तेः य इन्द्र सोमपातमो येना हंसीत्यनेन सूचनात् **शूरसेनमूर्तिरत्र** ॥ ७१६ ॥

॥ ॐ यदुश्रेष्ठाय नमः ॥

**न्यत्रिणं तमीमहे । येना दशग्वमध्रिगुं वेपयन्तं**
**स्वर्णरम् । येना समुद्रमाविथा तमीमहे ॥ ७१७ ॥**

येन रूपविशेषेण दशग्वमध्रिगुं वेपयन्तं स्वर्णरं चेत्येतत्संज्ञान् चतुरो राज्ञः आविथा । येन च रूपविशेषेण समुद्रमेतन्नामानम् आविथा तद्रूपं शरणमीमहे ।

अनेन त्यजियजितनिभ्यो डित् इति सूत्रेण यजेः पूजार्थात् कर्तरि अदिप्रत्ययः स डिच्च । डित्वात् टिलोपः । यजन्ति पूजयन्तीति यदः दशग्वादिपञ्चराजादयः, तैः उ अत्यन्तं श्रेष्ठः प्रशस्यः रक्षक इति यदुश्रेष्ठ इति निरुक्तेः येना दशग्वमित्यादिना सूचनाद् **यदुश्रेष्ठमूर्तिरत्र** ॥ ७१७ ॥

॥ ॐ सन्निवासाय नमः ॥

**ये न सिन्धुं महीरपो रथाँ इव प्रचोदयः । पन्थामृतस्य**
**यातवे तमीमहे । इमं स्तोममभिष्टये ॥ ७१८ ॥**

१. ऋग्वेद ८.१२, पर्वतः काण्वः ।

हे इन्द्र येन रूपेण सिन्धुं रत्नाकरं महीः भूप्रदेशविशेषान् अपः कर्माणि च रथानिव रथसमूहानिव प्रचोदयः प्राचोदयः प्रेरयसि। किञ्च ऋतस्य वेदस्य पन्थां पन्थानम् ऋतस्य अविकारिणो भगवतः यातवे प्राप्त्यर्थं प्रचोदयः, सर्वेषां भक्तानां भगवत्प्राप्त्यर्थं वेदमार्गं प्रावर्तयः तं रूपविशेषमीमहे।

अनेन सन् पन्थाः वेदमार्गः। निपूर्वाद् वसतेः ण्यन्तादण् प्रत्ययः। सन्तं वेदमार्गं नितरां वासयति प्रवर्तयतीति सन्निवास इति निरुक्तेः पन्थामृतस्य यातवे इत्यनेन सूचनात् **सन्निवासमूर्तिरत्र** ॥ ७१८ ॥

**॥ ॐ सुयामुनाय नमः ॥**

**घृतं न पूतमद्रिवः। येना नु सद्य ओजसा ववक्षिथ।**
**इमं जुषस्व गिर्वणः समुद्र इव पिन्वते ॥ ७१९ ॥**

हे अद्रिवः येन रूपविशेषेण मत्कृतं स्तोमं स्तोत्रं पूतं पवित्रं घृतं न घृतमिव अभिष्टये अभीष्टप्राप्त्यर्थम् ओजसा अवष्टम्भकशक्त्या सद्यः अद्य नु इदानीं ववक्षिथ वहसि, अस्मत्स्तोत्रविषयो भवसि। तं रूपविशेषमीमहे। हे गिर्वणः पिन्वते ददते यजमानाय तत्सम्बन्धिनमिमं स्तोमं समुद्र इव जुषस्व स्वीकुरु।

अनेन यम उपरमे इत्यतः अजियमिशीङ्भ्यश्चेत्युनन् प्रत्ययः, यच्छति सर्वाभीष्टमिति यमुनः सोमः, तस्येदमित्यण्, यमुनस्य स्वीकर्ता यामुनः, सु सम्यग् यामुनः सुयामुनः इति निरुक्तेः इमं स्तोममभिष्टये ववक्षिथेत्यनेन सूचनात् **सुयामुनमूर्तिरत्र** ॥ ७१९ ॥

**॥ ॐ भूतावासाय नमः ॥**

**इन्द्र विश्वाभिरूतिभिर्ववक्षिथ। यो नो देवः परावतः**
**सखित्वनाय मामहे। दिवो न वृष्टिं प्रथयन् ॥ ७२० ॥**

यो देवो दिवः सकाशाद् वृष्टिं न वृष्टिमिव अभीष्टं प्रथयन् परावतो निकृष्टानामपि नोऽस्माकं सखित्वनाय सखित्वार्थं ममहे इच्छति। हे इन्द्र स त्वं विश्वाभिरूतिभिः समस्तैरवनैः ववक्षिथ अस्मद्योगक्षेमं वहसि।

अनेन भूतानि रक्षणादिना आवासयतीति भूतावास इति निरुक्तेः विश्वाभिरूतिभिरित्यनेन सूचनाद् **भूतावासमूर्तिरत्र** ॥ ७२० ॥

॥ ॐ वासुदेवाय नमः॥

**ववक्षिथ । ववक्षुरस्य केतव उत वज्रो गभस्त्योः । यत्**
**सूर्यो न रोदसी अवर्धयत् । यदि प्रवृद्ध सत्पते ॥ ७२१ ॥**

हे इन्द्र यद् यस्मात् स भवान् सूर्यः गभस्त्योः गभस्तीः रश्मीन् न इव रोदसी द्यावापृथिव्यौ अवर्धयत् स्वकान्त्या परिपूरितवान् तस्मात् हे प्रवृद्ध सत्पते इन्द्र त्वं यदि यदा अस्मद्योगक्षेमं ववक्षिथ तदा अस्य ते केतवो वितानानि ववक्षुः अस्मदभीष्टजातं निर्वहेयुः । उत वज्रश्चास्मदभीष्टं निर्वहेत् ।

अनेन स्वकान्त्या रोदसी द्यावापृथिव्यौ वासयति आच्छादयतीति वासुः, देवयति भक्तानामभीष्टं गमयतीति देवः, वासुश्चासौ देवश्च वासुदेवः । छादयामि जगद् विश्वं भूत्वा सूर्य इवांशुभिरिति हि भगवद्वचनम् । इति निरुक्तेः सूर्यो न रोदसी अवर्धयदित्यनेन ववक्षिथेत्यनेन च सूचनाद् **वासुदेवमूर्ति**रत्र ॥ ७२१ ॥

॥ ॐ सर्वासुनिलयाय नमः॥

**सहस्रं महिषाँ अघः । आदित् त इन्द्रियं महि प्र**
**वावृधे । इन्द्रः सूर्यस्य रश्मिभिर्न्यर्शसानमोषति ॥ ७२२ ॥**

हे इन्द्र ते इन्द्रियं चक्षुरादि महिषान् श्रेष्ठान् सहस्रं सहस्रमपि सहस्रसङ्ख्याकान् ब्रह्मादिचेतनान् तदीयप्राणादींश्च अघः अधः निरुक्तत्वाद् धस्य घः, करोति स्वान्तर्गमयति । आत् इत् तस्मादेव ते महि महित्वं प्रवावृधे प्रववृधे सम्यग् व्यक्तमभूत् । किञ्च भवानिन्द्रः सूर्यस्य रश्मिभिः सूर्यरश्मिषु स्थितैः रूपैः अर्शसानम्, अर्शः अन्नम् अर्शसा अन्नेन अनः चेष्टा यस्य सः तं, भोगार्थमेव प्रयत्नवन्तम् । यद्वा अर्तेर्गुणः शुट् चेति सूत्रेण ऋ गतावित्यस्मात् असानच् प्रत्ययः धातोः शुडागमश्च । स्वोदरपोषणार्थमेव गमनादिप्रयत्नवान् । तमसुरजनं न्योषति, उष दाहे, अग्निर्वनानीव नितरां दहति ।

अनेन सर्वेषां ब्रह्मादीनाम् असवः प्राणा निलीयन्ते भगवदिन्द्रिये अन्तर्गता भवन्तीति सर्वासुनिलयः । यद्वा सर्वे असवः प्राणमात्रपोषका सर्वासवः सर्वासुरजना, ते नितरां लीयन्ते क्षीयन्ते अनेनेति सर्वासुनिलय इति निरुक्तेः आदित् त इन्द्रियमित्यादिना अर्शसानं नि ओषतीत्यादिना च सूचनात् **सर्वासुनिलयमूर्ति**रत्र ॥ ७२२ ॥

॥ ॐ अनलाय नमः ॥

**अग्निर्वनेव सासहिः प्र वावृधे । इयं त ऋत्वियावती**
**धीतिरेति नवीयसी । सपर्यन्ती पुरुप्रिया ॥ ७२३ ॥**

हे इन्द्र अग्निः वनेव वनानीव वनानि दग्धुमिव सासहिः शत्रुवेगसहः प्रववृधे प्रकर्षेण वर्धते । किञ्च ऋतुषु भवम् ऋत्वियं यवश्यामाकादिद्रव्यम्, तत् साधनतया अस्या अस्तीति ऋत्वियवती ते इयं धीतिः त्वद्विषयिणी यज्ञक्रिया नवीयसी नवीयस्या स्तुत्या सपर्यन्ती पूज्या पुरुप्रिया बहूनां सुखं साधयन्ती च सत्येव एति प्रकाशते ।

अनेन श्वस प्राणने अनने चेति पाठात् अनतेः वृषादिभ्यश्चिदिति सूत्रेण कलप्रत्ययः चित्त्व, ककारलोपः । शत्रून् दग्धुं चेष्टते वर्धते अग्निवत् प्रवृद्धो भवतीत्यनलः । यद्वा अनतेर्भावे अच्, अनः अननं प्राणनं सुखमिति यावत् । ला दाने इत्यतः कर्तरि कः । प्राणनं लाति ददाति यस्य क्रिया स अनल इति निरुक्तेः अग्निर्वनेव प्रवावृधे इत्यनेन धीतिः पुरुप्रियेत्यनेन च सूचनाद् **अनलमूर्तिरत्र** ॥ ७२३ ॥

॥ ॐ दर्पघ्ने नमः ॥

**मिमीत इत् । गर्भो यज्ञस्य देवयुः क्रतुं पुनीत आनुषक् ।**
**स्तोमैरिन्द्रस्य वावृधे मिमीत इत् । सनिर्मित्रस्य ॥ ७२४ ॥**

देवान् यापयतीति देवयुः देवताप्रापकः यज्ञस्य गर्भ यज्ञक्रियान्तर्गतः अयमिन्द्रः क्रतुं भक्तकृतं यज्ञं मिमीत इत् अन्तर्यामिरूपेण निर्मात्येव । आनुषक् सर्वतः तं यज्ञं पुनीते पुनाति पवित्रयति च । भक्तकृतमहं कर्तेत्यभिमानात्मकमहङ्कारं परिहृत्य पवित्रीकरोतीत्यर्थः । मित्रस्य भक्तस्य सनिः दाता च । अत एव यो जनः इन्द्रस्य स्तोमैः स्तोत्रैः क्रतुं मिमीते स एव जनः ववृधे प्रवृद्धो भवेत् ।

अनेन दृप हर्षमोहनयोरित्यस्माद् गमेश्च इति चकारात् खश्, लघूपधगुणः, दर्पः अहङ्कारः दर्पोहङ्कारकस्तूर्योरित्युक्तेः । भक्तेषु दर्पम् अहं कर्तेत्याद्यहङ्कारं हन्तीति दर्पहा । दर्पशब्दे कर्मण्युपपदेः हन्तेः किबिति निरुक्तेः क्रतुं मिमीत इत् पुनीत इत्यादिना सूचनाद् **दर्पहमूर्तिरत्र** ॥ ७२४ ॥

॥ ॐ दर्पदाय नमः ॥

**पप्रथ इन्द्रः सोमस्य पीतये । प्राची वाशीव सुन्वते**
**मिमीत इत् । यं विप्रा उक्थवाहसोऽभिप्रमन्दुः ॥ ७२५ ॥**

यमिन्द्रं विप्राः प्रकृष्टप्रज्ञाः उक्थवाहसः उक्थस्तोत्रं पठन्तः अभिप्रमन्दुः सम्यक् तोषयामासुः, स इन्द्रः सोमस्य पीतये पानार्थं पप्रथे स्वात्मानं विस्तारयामास । किञ्चास्येन्द्रस्य प्राची पूजा वाशीव दारुभेदिनीव सुन्वते यजमानाय इष्टानि गृहादीनि मिमीत इत् निर्मात्येव ।

अनेन दृप हर्षमोहनयोरित्यस्माद् हर्षार्थाद् भावप्रत्ययः । दर्पं हर्षं ददाति यस्य पूजा स दर्पद इति निरुक्तेः प्राची वाशीव सुन्वते मिमीत इदित्यनेन सूचनाद् दर्पदमूर्तिरत्र ॥ ७२५ ॥

॥ ॐ दृप्ताय नमः ॥

**आयवः । घृतं न पिप्य आसन्यृतस्य यत् । उत स्वराजे**
**अदितिः स्तोममिन्द्राय जीजनत् । पुरुप्रशस्तम् ॥ ७२६ ॥**

यद् यस्माद् आयवः सद्गतिप्राप्तियोग्याः पुरातना ऋतस्य ज्ञानादिरूपस्येन्द्रस्य आसनि आस्ये, आस्यशब्दस्य आसन्नादेशः, घृतं न आज्यमिव पिप्ये पिप्युः । यद्वा पिप्ये पानयोग्ये इति आस्य-विशेषणम् । ददुरित्यध्याहारः । उत तस्मात् । दो अवखण्डने, न विद्यते दितिः खण्डनं यस्य स अदितिः, अखण्डितस्वरूपः साधुजनः अद्यतनोपि, स्वयमेव राजते दीप्यते हृष्टो भवतीति स्वराट् तस्मै स्वराजे स्वतन्त्रायेन्द्राय पुरुप्रशस्तमतिप्रशस्तं स्तोमं च जीजनत् अजीजनत् अकरोत् करोति ।

अनेन हर्षार्थाद् दृपः कर्तरि क्तः, कित्त्वाद् गुणाभावः । दृप्यति हृष्यतीति दृप्त इति निरुक्तेः स्वराजे इत्यनेन सूचनाद् दृप्तमूर्तिरत्र ॥ ७२६ ॥

॥ ॐ दुर्धराय नमः ॥

**ऊतय ऋतस्य यत् । अभि वह्नय ऊतयेऽनूषत प्रशस्तये ।**
**न देव विव्रता हरी ऋतस्य यत् । यत् सोमम् ॥ ७२७ ॥**

हे देव इन्द्र यद् यस्माद् ऋतस्य यथार्थज्ञानरूपस्य ते ऊतये भक्तरक्षार्थं प्रशस्तं दुर्धरं सामर्थ्यमस्ति,

यस्माच्च ऋतस्य ते हरी अश्वौ विव्रता विव्रतौ विरुद्धकर्माणौ न भवतः। तस्माद् वह्वयो यज्ञनिर्वाहका ऋत्विजः प्रशस्तये ऊतये प्रशस्तरक्षार्थं त्वाम् अभि अनूषत अस्तुवन् आह्वयंश्च।

अनेन दुःखेन धार्यं दुर्धर्षं सामर्थ्यमस्यास्तीति दुर्धरः, अर्श आदिभ्योऽच्, इति निरुक्तेः ऊतय ऋतस्य यदित्यनेन सूचनाद् **दुर्धरमूर्तिरत्र** ॥ ७२७ ॥

**॥ ॐ अद्धाऽपराजिताय नमः ॥**

**इन्द्र विष्णवि यद् वा घ त्रित आप्त्ये। यद् वा मरुत्सु**
**मन्दसे समिन्दुभिः। यद् वा शक्र परावति समुद्रे अधि ॥ ७२८ ॥**

हे इन्द्र विष्णवि विष्णोर्गृहे अनन्तासनादौ यद् यथा, यथा वा त्रिते त्रितनामकस्य गृहे, यथा वा, आप्त्ये तन्नामकस्य गृहे, यथावा मरुत्सु मरुतां गृहेषु सोमं प्रति मन्दसे तुष्यसि तथा मदीयगृहेपि इन्दुभिर्मन्दस्व। शक्नु शक्तौ, शत्रुजनान् पराभावयितुं परकृतापजयादि निवारयितुं च शक्तिमान् शक्रः। हे शक्र यद् यदि वा परावति उपरिलोके स्थितः यदि वा समुद्रे अधितिष्ठसि। तथाऽस्माकं गृहमागत्य मन्दस्वेति योज्यम्।

अनेन केनापि अन्तर्बहिश्च न पराजित इति अद्धाऽपराजित इति निरुक्तेः शक्रशब्देन सूचनाद् **अद्धाऽपराजितमूर्तिरत्र** ॥ ७२८ ॥

**॥ ॐ विश्वमूर्तये नमः ॥**

**मन्दसे। अस्माकमित् सुते रणा समिन्दुभिः। यद् वासि**
**सुन्वतो वृधो यजमानस्य सत्पते। उक्थे वा यस्य ॥ ७२९ ॥**

हे सत्पते इन्द्र अस्माकं गृहेषु सोमे सुते सति मन्दसे उच्छ्रयसि। इन्दुभिः सोमैः पीतैः सं रण सम्यक् शब्दं कुरु। सुन्वतो यस्य यजमानस्य उक्थे उक्थस्तोत्रे क्रियमाणे मन्दसे। तस्येत् तस्यैव वृधो वृद्धिकरः असि यद् यथा, तथा ममापि वृद्धिकरो भवेति शेषः।

अनेन विश प्रवेशने इत्यस्माद् अशुप्रुषिलटिकणिखटिविशिभ्यः क्वन्निति सूत्रेण क्वन् प्रत्ययः। मुर्छा मोहसमुच्छ्राययोरित्यतः मूर्च्छेः क्तिन्निति (?) क्तिन्प्रत्ययः। शल्लोपछलोपौ, उपधादीर्घः।

मूर्तिः समुच्छ्रयः । विश्वा समस्ता मूर्तिः समुच्छ्रयो यस्य, स विश्वमूर्तिः, सर्वप्रकारेणाप्यौन्नत्यं तस्यैव, इति निरुक्तेः मन्दस्व अस्माकमित्यनेन सूचनाद् **विश्वमूर्तिमूर्तिरत्र** ॥ ७२९ ॥

॥ ॐ महामूर्तये नमः ॥

**रण्यसि समिन्दुभिः । देवं देवं वोऽवस इन्द्रमिन्द्रं**
**गृणीषणि । अधा यज्ञाय तुर्वणे व्यानशुः ॥ ७३० ॥**

हे इन्द्र भक्तगृहे इन्दुभिः सं रण्यसि सम्यक् शब्दं करोषि । हे ऋत्विजः अध अथ यज्ञाय यज्ञं प्रति आगन्तुं तुर्वणे त्वरमाणाय, व्यत्ययेन त्वरमाणम्, इन्द्रं वः स्तोत्राणि व्यानशुः प्राप्नुवन्ति । तथा उच्चैः देवं देवं प्रति स्थितमनेकरूपैर्देवेषु स्थितमिन्द्रमिन्द्रम् प्रति स्थितं इन्द्रपदाधिष्ठातृसु अन्तर्यामितया स्थितम्, इन्द्रस्य प्राधान्यात् पुनरुक्तिः, परमेश्वरं वः अवसे गृणीषणि स्तुत ।

अनेन महत्यो मूर्तयो यस्य स महामूर्तिः, इति निरुक्तेः देवंदेवमिन्द्रमिन्द्रमित्यनेन सूचनात् **महामूर्तिमूर्तिरत्र** ॥ ७३० ॥

॥ ॐ दीप्तमूर्तये नमः ॥

**यज्ञेभिर्यज्ञवाहसं सोमेभिः सोमपातमम् । होत्राभिरिन्द्रं**
**वावृधुर्व्यानशुः । महीरस्य प्रणीतयः पूर्वीरुत ॥ ७३१ ॥**

साधुजनाः एनं यज्ञवाहसं यज्ञनिर्वाहकं सोमपातमं इन्द्रं यज्ञेभिः यज्ञसाधनैः सोमेभिः सोमैः होत्राभिः स्तुतिभिश्च ववृधुः दीपयामासुः । व्यानशुः प्राप्नुवंश्च । उत किञ्च अस्येन्द्रस्य प्रणीतयः प्रेरणाः महीः महत्यः अप्रतिहताः प्रदीप्ताः, पूर्वीः पूर्व्यः अनादिसिद्धाः सन्ति ।

अनेन दीपी दीप्तौ इत्यतः क्तप्रत्ययः । दीप्ताः स्तोत्रैः प्रकाशिता मूर्तयो रूपाणि यस्येति वा, दीप्ताः प्रदीप्ता अप्रतिहताः मूर्तयः प्रणीतयो यस्येति वा, निरुक्तेः सोमेन ववृधुरित्यनेन महीरस्य प्रणीतय इत्यनेन च सूचनाद् **दीप्तमूर्तिमूर्तिरत्र** ॥ ७३१ ॥

॥ ॐ अमूर्तिमते नमः ॥

**प्रशस्तयः । विश्वा वसूनि दाशुषे व्यानशुः । इन्द्रं**
**वृत्राय हन्तवे देवासो दधिरे पुरः । इन्द्रं वाणीः ॥ ७३२ ॥**

प्रशस्तयः प्र मिथ्याज्ञानपूर्वकत्वरावत्त्वात् (?) प्रकृष्टः शस्तय इन्द्रविषयस्तुतयः दाशुषे यजामनाय विश्वा विश्वानि समस्तानि वसूनि व्यानशुः यजमानं प्रापयन्ति। देवासो देवाः वृत्राय हन्तवे वृत्रं हन्तुं इन्द्रं पुरः पुरस्तात् दधिरं स्थापितवन्तः। किञ्च वाणीः वाण्यः इन्द्रमनूषत सम्यगस्तुवन्।

अनेन मूर्तिर्मोहो मिथ्याज्ञानम्, न विद्यते मूर्तिर्मोहो यस्याः सा अमूर्तिः प्रशस्तिः, तद्वानमूर्तिमान्, इति निरुक्तः प्रशस्तय इत्यनेन सूचनाद् **अमूर्तिमन्मूर्तिरत्र** ॥ ७३२ ॥

**॥ ॐ अनेकमूर्तये नमः ॥**

**अनूषता समोजसे। महान्तं महिना वयं स्तोमेभि-**
**र्हवनश्रुतम्। अर्कैरभि प्र णोनुमः समोजसे ॥ ७३३ ॥**

साधुजनाः ओजसे ओजःप्राप्त्यर्थं तमिन्द्रं समनूषत सम्यगस्तुवन्। ततो वयमपि महिना महिम्ना महान्तं प्रसिद्धं हवनश्रुतमाह्वानश्रोतारमिन्द्रं स्तोमेभिः स्तोत्रविशेषैः अर्कैः ऋग्भिश्च ओजसे ओजस्विद्धयर्थं समभिप्रणोनुमः सम्यक् स्तुमः।

अनेन अनैकैः स्तोमविशेषैः (स्तुताः) मूर्तयो यस्य सः अनेकमूर्तिरिति निरुक्तेः स्तोमेभिरर्कैः समभिप्रणोनुम इत्यनेन सूचनाद् **अनेकमूर्तिमूर्तिरत्र** ॥ ७३३ ॥

**॥ ॐ अव्यक्ताय नमः ॥**

**न यं विविक्तो रोदसी नान्तरिक्षाणि वज्रिणम्। अमादिदस्य**
**तित्विषे समोजसः। यदिन्द्र पृतनाज्ये देवाः ॥ ७३४ ॥**

रोदसी द्यावापृथिव्यौ यं वज्रिणं न विविक्तः न पृथक् कुरुतः। अन्तरिक्षं च न विविचति। सर्वव्यापित्वात् स्वात्मनो न विभजतीत्यर्थः। अस्य तस्येन्द्रस्य समोजसः कान्तिमतः अमादित् रूपविशेषादेव, यद्वा अमात् अस्मात् समोजसः तेजसः सर्वोपि जनः तित्विषे दीप्तिमान् भवति। इन्द्रतेजसैव सर्वे दीप्यन्ते। यदादित्यगतं तेज इत्यादेः। हे इन्द्र यद् यस्माद् तस्मात् देवाः पृतनाज्ये पृतनामुखे त्वां पुरः अग्रे दधिरे। (इत्युत्तरेणान्वयः)।

अनेन अञ्जू अभिव्यक्तिश्लक्षणकान्तिष्वित्यतः क्तप्रत्ययः। अक्तः संबद्धः, विर्निषेधार्थः, न

अक्तः व्यक्तः, स न भवतीत्यव्यक्तः, सर्वेणापि संबद्ध एव, न पृथक्कर्तुमर्हः, इति निरुक्तेः न यं रोदसीत्यादिना सूचनाद् **अव्यक्तमूर्तिरत्र** ॥ ७३४ ॥

॥ ॐ शतमूर्तये नमः ॥

**त्वा दधिरे पुरः । आदित् ते हर्यता हरी ववक्षतुः । यदा**
**वृत्रं नदीवृतं शवसा वज्रिन्नवधीः । आदित् ते ॥ ७३५ ॥**

हे वज्रिन् त्वं यदा यस्मात् नदीवृतं नदीनामावरकतया शयानं वृत्रं शवसा बलेन अवधीः हतवान् आदित् तस्मादेव उपद्रवपरिहारकत्वादेव ते त्वदीयौ हर्यता हरिद्वर्णपितौ हरी अश्वौ त्वाम्, अस्मद्गृहं प्रति ववक्षतुः वहेताम् । अस्मदुरितनिवृत्त्यर्थमिति शेषः ।

अनेन शीङ् स्वप्ने इत्यतः अतङ्प्रत्ययः, टिलोपः । नदीद्वाराणि प्रतिरुद्ध्य शेते इति वृत्रासुरः शतः । तस्य मूर्तिर्मोहो मूर्च्छा हननं यस्मात् स शतमूर्तिरिति निरुक्तेः नदीवृतं वृत्रमवधीरित्यनेन सूचनात् **शतमूर्तिमूर्तिरत्र** ॥ ७३५ ॥

॥ ॐ शताननाय नमः ॥

**हर्यता हरी ववक्षतुः । यदा ते विष्णुरोजसा त्रीणि**
**पदा विचक्रमे । आदित् ते हर्यता हरी ववक्षतुः ॥ ७३६ ॥**

हे इन्द्र यस्मात् हर्यता हरी त्वां ववक्षतुः आदित् तस्मादेव ते तव, सामर्थ्यमधिकमिति शेषः । किञ्च यदा विष्णुर्वामनः बहिष्ठः ते अन्तःस्थितस्य तव प्रीत्यर्थं त्रीणि पदा पदानि विचक्रमे आक्रान्तवान् आदित् अतिसामर्थ्यवत्त्वादेव ते त्वदीयौ हर्यता हरी अस्मद्गृहं प्रति त्वां वहेताम् ।

अनेन शतशब्दो बहुवाची, अन चेष्टायामित्यतो भावेऽच् । शतानि अनन्तानि त्रिपदाक्रमणादि-रूपाणि अनानि कर्माणि नयति करोतीति शतानन इति निरुक्तेः यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे इत्यादिना सूचनात् **शताननमूर्तिरत्र** ॥ ७३६ ॥

॥ ॐ एकाय नमः ॥

**यदा ते हर्यता हरी वावृधाते दिवेदिवे । आदित् ते**
**विश्वा भुवनानि येमिरे । यदा ते मारुतीः ॥ ७३७ ॥**

हे इन्द्र यदा ते तव हर्यता हरी दिवेदिवे प्रतिदिनं ववृधाते वृद्धिमभियातः तदा आदित् वर्धमानत्वादेव मारुतीः मारुत्यो मरुत्संबन्धिन्यः, ऋत्विङ्नामसु पाठाद् ऋत्विग्जनाः, विश्वा भुवनानि समस्तानि ते कर्माणि येमिरे व्यापिरे। पुनर्यदेत्युत्तरेण संबद्धयते। यद्वा यद् यस्मात् ते अग्रगामिनावश्वौ ववृधाते तस्मात् ते इतरे अश्वा अपि विश्वा भुवनानि येमिरे व्यापिरे। तैरपि समस्तान् लोकान् भवान् यातीति तात्पर्यम्।

अनेन इण् गतावित्यतः इण्भीत्यादिना कन्प्रत्ययः गुणः, एतीत्येकः, सर्वत्र चरतीति यावत्, इति निरुक्तेः विश्वा भुवनानि येमिरे इत्यनेन सूचनाद् एकमूर्तिरत्र ॥ ७३७ ॥

**॥ ॐ अनेकाय नमः ॥**

**विशस्तुभ्यमिन्द्र नि येमिरे। आदित् ते विश्वा भुवनानि**
**येमिरे। यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः ॥ ७३८ ॥**

यदा विशः तुभ्यं तव पूजार्थं नि येमिरे उद्युक्ता भवन्ति तदा आदित् त्वत्पूजायामुद्युक्तत्वादेव विश्वा भुवनानि येमिरे सर्वलोकेषु अभिवृद्धा बभूवुः। सर्वदा तैः पूज्य एवासि। हे इन्द्र शुक्रं शुभ्रं ज्योतिः ज्योतीरूपममुं सूर्यं दिवि अधारयः स्थापितवान्।

अनेन एकः केवलः पूजकादिप्रपञ्चरहितः, स न भवति, सर्वदा जीवसंघैर्युक्त एव। न कदाचिदनीदृशं जगदित्युक्तेः स्वसमानसत्ताकप्रपञ्चेन सहित एवेत्यनेक इति निरुक्तेः विश्वा भुवनानि येमिरे इत्यनेन सूचनाद् अनेकमूर्तिरत्र ॥ ७३८ ॥

**॥ ॐ सवाय नमः ॥**

**आदित् ते विश्वा भुवनानि येमिरे। इमां त इन्द्र**
**सुष्टुतिं विप्र इयर्ति धीतिभिः। जामिं पदेव पिप्रतीम् ॥ ७३९ ॥**

यस्मात् सूर्यं प्रकाशकत्वेन अधारयः आदित् तस्मादेव सूर्यप्रकाशोपकृतजनाः विश्वा भुवनानि स्वकर्माणि येमिरे कुर्वते। हे इन्द्र ते त्वद्विषयिणीं इमां वेदरूपां सुष्टुतिं विप्रः प्रकृष्टबुद्धयादिमान् पुरुषः धीतिभिः कर्मभिः सह पिप्रतीं कामादिकं पूरयन्तीं जामिं स्त्रियं पदेव पदे इव गृहादिस्थाने इव इयर्ति धत्ते।

अक्तः व्यक्तः, स न भवतीत्यव्यक्तः, सर्वेणापि संबद्ध एव, न पृथक्कर्तुमर्हः, इति निरुक्तेः न यं रोदसीत्यादिना सूचनाद् **अव्यक्तमूर्तिरत्र** ॥ ७३४ ॥

॥ ॐ शतमूर्तये नमः ॥

**त्वा दधिरे पुरः। आदित् ते हर्यता हरी ववक्षतुः। यदा**
**वृत्रं नदीवृतं शवसा वज्रिन्नवधीः। आदित् ते ॥ ७३५ ॥**

हे वज्रिन् त्वं यदा यस्मात् नदीवृतं नदीनामावरकतया शयानं वृत्रं शवसा बलेन अवधीः हतवान् आदित् तस्मादेव उपद्रवपरिहारकत्वादेव ते त्वदीयौ हर्यता हरिद्वर्णोपितौ हरी अश्वौ त्वाम्, अस्मद्गृहं प्रति ववक्षतुः वहेताम्। अस्मद्दुरितनिवृत्त्यर्थमिति शेषः।

अनेन शीङ् स्वप्ने इत्यतः अतङ्प्रत्ययः, टिलोपः। नदीद्वाराणि प्रतिरुद्ध्य शेते इति वृत्रासुरः शतः। तस्य मूर्तिर्मोहो मूर्च्छा हननं यस्मात् स शतमूर्तिरिति निरुक्तेः नदीवृतं वृत्रमवधीरित्यनेन सूचनात् **शतमूर्तिमूर्तिरत्र** ॥ ७३५ ॥

॥ ॐ शताननाय नमः ॥

**हर्यता हरी ववक्षतुः। यदा ते विष्णुरोजसा त्रीणि**
**पदा विचक्रमे। आदित् ते हर्यता हरी ववक्षतुः ॥ ७३६ ॥**

हे इन्द्र यस्मात् हर्यता हरी त्वां ववक्षतुः आदित् तस्मादेव ते तव, सामर्थ्यमधिकमिति शेषः। किञ्च यदा विष्णुर्वामनः बहिष्ठः ते अन्तःस्थितस्य तव प्रीत्यर्थं त्रीणि पदा पदानि विचक्रमे आक्रान्तवान् आदित् अतिसामर्थ्यवत्त्वादेव ते त्वदीयौ हर्यता हरी अस्मद्गृहं प्रति त्वां वहेताम्।

अनेन शतशब्दो बहुवाची, अन चेष्टायामित्यतो भावेऽच्। शतानि अनन्तानि त्रिपदाक्रमणादिरूपाणि अनानि कर्माणि नयति करोतीति शतानन इति निरुक्तेः यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे इत्यादिना सूचनात् **शताननमूर्तिरत्र** ॥ ७३६ ॥

॥ ॐ एकाय नमः ॥

**यदा ते हर्यता हरी वावृधाते दिवेदिवे। आदित् ते**
**विश्वा भुवनानि येमिरे। यदा ते मारुतीः ॥ ७३७ ॥**

हे इन्द्र यदा ते तव हर्यता हरी दिवेदिवे प्रतिदिनं ववृधाते वृद्धिमभियातः तदा आदित् वर्धमानत्वादेव मारुतीः मारुत्यां मरुत्संबन्धिन्यः, ऋत्विङ्नामसु पाठाद् ऋत्विग्जनाः, विश्वा भुवनानि समस्तानि ते कर्माणि येमिरे व्यापिरे। पुनर्यदित्युत्तरेण संबध्यते। यद्वा यद् यस्मात् ते अग्रगामिनावश्वौ ववृधाते तस्मात् ते इतरे अश्वा अपि विश्वा भुवनानि येमिरे व्यापिरे। तैरपि समस्तान् लोकान् भवान् यातीति तात्पर्यम्।

अनेन इण् गतावित्यतः इण्भीत्यादिना कन्प्रत्ययः गुणः, एतीत्येकः, सर्वत्र चरतीति यावत्, इति निरुक्तेः विश्वा भुवनानि येमिरे इत्यनेन सूचनाद् एकमूर्तिरत्र॥ ७३७॥

॥ ॐ अनेकाय नमः॥

**विशस्तुभ्यमिन्द्र नि येमिरे। आदित् ते विश्वा भुवनानि**
**येमिरे। यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः॥ ७३८॥**

यदा विशः तुभ्यं तव पूजार्थं नि येमिरे उद्युक्ता भवन्ति तदा आदित् त्वत्पूजायामुद्युक्तत्वादेव विश्वा भुवनानि येमिरे सर्वलोकेषु अभिवृद्धा बभूवुः। सर्वदा तैः पूज्य एवासि। हे इन्द्र शुक्रं शुभ्रं ज्योतिः ज्योतीरूपममुं सूर्यं दिवि अधारयः स्थापितवान्।

अनेन एकः केवलः पूजकादिप्रपञ्चरहितः, स न भवति, सर्वदा जीवसंवैर्युक्त एव। न कदाचिदनीदृशं जगदित्युक्तः स्वसमानसत्ताकप्रपञ्चेन सहित एवेत्यनेक इति निरुक्तेः विश्वा भुवनानि येमिरे इत्यनेन सूचनाद् अनेकमूर्तिरत्र॥ ७३८॥

॥ ॐ सवाय नमः॥

**आदित् ते विश्वा भुवनानि येमिरे। इमां त इन्द्र**
**सुष्टुतिं विप्र इयर्ति धीतिभिः। जामिं पदेव पिप्रतीम्॥ ७३९॥**

यस्मात् सूर्यं प्रकाशकत्वेन अधारयः आदित् तस्मादेव सूर्यप्रकाशोपकृतजनाः विश्वा भुवनानि स्वकर्माणि येमिरे कुर्वते। हे इन्द्र ते त्वद्विषयिणीं इमां वेदरूपां सुष्टुतिं विप्रः प्रकृष्टबुद्ध्यादिमान् पुरुषः धीतिभिः कर्मभिः सह पिप्रतीं कामादिकं पूरयन्तीं जामिं स्त्रियं पदेव पदे इव गृहादिस्थाने इव इयर्ति धत्ते।

अनेन सूयते प्रसूयते भक्तगृहे स्तुतिर्यस्येति सवः, सुनोतेः ऋदोरबित्यप्, इति निरुक्तेः इमां त इन्द्र सुष्टुतिमित्यनेन सूचनात् सवमूर्तिरत्र ॥ ७३९ ॥

॥ ॐ काय नमः ॥

**प्राध्वरे । यदस्य धामनि प्रिये समीचीनासो अस्वरन् ।**
**नाभा यज्ञस्य दोहना प्राध्वरे । सुवीर्यं स्वश्व्यम् ॥ ७४० ॥**

हे इन्द्र यद् यदा समीचीनासः साधुजनाः अस्येन्द्रस्य प्रिये धामनि यज्ञवाटे यज्ञस्य नाभा नाभौ यज्ञश्रेष्ठे अध्वरे विध्यनुसारिणि यज्ञे सुवीर्यं सुवीर्यत्वं स्वश्व्यं समीचीनाश्वसमूहं चोद्दिश्य प्रास्वरन् अस्तुवन्[1] ।

अनेन कै शब्दे इत्यतः आतोऽनुपसर्गे इति कः । स्तुतिभिः स्तूयत इति कः, इति निरुक्तेः समीचीनासो अस्वरन्नित्यनेन सूचनात् कमूर्तिरत्र ॥ ७४० ॥

॥ ॐ किमे नमः ॥

**सुगव्यमिन्द्र दद्धि नः । होतेव पूर्वचित्तये प्राध्वरे ।**
**[2]इन्द्रः सुतेपु सोमेपु क्रतुं पुनीत उक्थ्यम् ॥ ७४१ ॥**

हे इन्द्र सुगव्यं ब्रह्मप्रश्नोत्तरात्मकजिज्ञासाजनितं समीचीनं ज्ञानं पूर्वचित्तये एतन्नाम्ने होतेव प्राध्वरे यज्ञे दद्धि देहि । पूर्वं पूर्वचित्तिनामकाय होतृसंस्थो भवान् यथा गव्यं दत्तवान् तथा दद्धीत्यर्थः । अयमिन्द्रः सोमेपु सुतेषु सत्सु उक्थ्यं श्रेष्ठं क्रतुं यज्ञं स्वागमनेन पुनीते पुनाति ।

अनेन पृच्छ ज्ञीप्सायामित्यतः प्रच्छदंसीत्यादिना (?) इमुप्रत्ययः । किं प्रश्नाक्षेपकुत्सयोरित्युक्तेः प्रश्नविषयत्वात् किमिति निरुक्तेः सुगव्यमित्यनेन सूचनात् किम्मूर्तिरत्र ॥ ७४१ ॥

॥ ॐ यदे नमः ॥

**विदे वृधस्य दक्षसो महान् हि पः । स प्रथमे व्योमनि**
**देवानां सदने वृधः । सुपारः सुश्रवस्तमः समप्सुजित् ॥ ७४२ ॥**

---

१. दोहनेत्यस्य व्याख्यानं कोशेषु न दृश्यते । २. ऋग्वेद ८-१३, नारदः काण्वः ।

अयमिन्द्रो वृधस्य, वृधेः इगुपधलक्षणः कः, वृद्धस्य दक्षसो दक्षस्य यजमानस्य उक्थस्तोत्रं विदे लब्धवान्। हि यस्मात् स इन्द्रः महान् सर्वगुणपरिपूर्णः देवानां प्रथमे मुख्ये सदने प्राग्वंशाख्ये व्योमनि प्रदेशे वृधः अभिवृद्धः। किञ्च सुपारः सम्यक् पारभूतः सुश्रवस्तमः अन्नादिसर्वभोगवत्तमश्च सं सम्यक् अप्सुजित् अपः सूत इत्यप्सुः, सुनोतेडुः, मुख्यप्राणः तं जयति गुणैः सर्वैस्तत उत्कृष्टो भवति।

अनेन यज देवपूजासंगतिकरणदानेष्वित्यतः त्यजियजितनिभ्यो डिदिति अदिप्रत्ययः डिच्च। टिलोपः। उक्थादिस्तोत्राणां महागुणानां चात्मनि संगतिं करोतीति यत् इति निरुक्तेः उक्थ्यं विदे वृधस्येत्यादिना सूचनाद् यन्मूर्तिरत्र॥ ७४२॥

॥ ॐ तदे नमः॥

**तमह्वे वाजसातय इन्द्रं भराय शुष्मिणम्। भवा नः**
**सुम्ने अन्तमः सखा वृधे। इयं त इन्द्र गिर्वणः॥ ७४३॥**

तं शुष्मिणं बलवन्तमिन्द्रं भराय युद्धाय अह्वे आह्वयामि। हे इन्द्र अन्तमः सर्वोत्तमस्त्वं नो वाजसातये अन्नादिभोगलाभाय सुम्ने सुखे सुखार्थं वृधे वृद्ध्यर्थं सखा भव। हे गिर्वणः इयं मया कृता स्तुतिः ते तुभ्यमस्तु।

अनेन सुम्नवृद्ध्यादीन् तनोतीति तत्, तनोतेरदिप्रत्ययो डिच्च, इति निरुक्तेः सुम्ने वृधे इत्यनेन सूचनात् तन्मूर्तिरत्र॥ ७४३॥

॥ ॐ पदाय नमः॥

**रातिः क्षरति सुन्वतः। मन्दानो अस्य बर्हिषो वि**
**राजसि। नूनं तदिन्द्र दद्धि नो यत् त्वा सुन्वन्त ईमहे॥ ७४४॥**

हे इन्द्र ते रातिर्दानं सुन्वतो यजमानस्य क्षरति सन्ततमनुवर्तते। अस्य यजमानस्य बर्हिषो बर्हिषि मन्दानः सुखदानशीलः सन् विराजसि दीप्यसे। हे इन्द्र यद् यस्मात् सुन्वन्तो वयं त्वा त्वां ईमहे शरणं प्राप्नुमः तत् तस्मात् तत् नः अस्मभ्यं दद्धि देहि, नूनं निश्चितम्।

अनेन पदति सन्ततमनुवर्तत इति पदं रातिः । पचाद्यच् । तदस्यास्तीति अर्शाद्यच् । सततगमनशीलत्वात् पदमिति निरुक्तेः रातिः क्षरति सुन्वत इत्यनेन सूचनात् **पदमूर्तिरत्र** ॥ ७४४॥

॥ ॐ अनुत्तमाय नमः ॥

**रयिं नश्चित्रमा भरा स्वर्विदम् । स्तोता यत् ते विचर्षणि-**
**रति प्रशर्धयद् गिरः । वया इवानु रोहते ॥ ७४५ ॥**

हे इन्द्र स्वर्विदं स्वर्गलाभहेतुं चित्रं चायनीयं रयिं द्रविणं नः आभर । यत् यस्मात् ते स्तोता विचर्षणिः विशिष्टप्रजावान् भवति अति प्रशर्धयत् अतिबलवांश्च भवति तस्माद् वयाः वयांसि इव नीडान् (स्ववासस्थानानि) इव गिरः त्वद्विषयिणी स्तुतिः अनुरोहते अनुसरति आश्रयते । यद्वा यद् यस्मात् त्वं विचर्षणिः विशेषद्रष्टा सर्वज्ञः, चर्षणीभ्यः प्रजाभ्यः वि विशिष्टः अधिकः सर्वोत्तम इति वा अतिप्रशर्धयत् अतिबलवांश्च तस्मात् ते स्तोता वया इव ते गिर अनुरोहते इति योज्यम् ।

अनेन न विद्यते उत्तमो यस्मात् तदनुत्तममिति निरुक्तेः विचर्षणिरतिशर्धयदित्यादिना सूचनाद् **अनुत्तममूर्तिरत्र** ॥ ७४५ ॥

॥ ॐ लोकबन्धवे नमः ॥

**जुषन्त यत् । प्रत्नवज्जनया गिरः शृणुधी जरितुर्हवम् ।**
**मदेमदे ववक्षिथा सुकृत्वने । क्रीळन्त्यस्य ॥ ७४६ ॥**

हे इन्द्र यद् यस्मात् साधुजनाः त्वां जुषन्त अजुषन्त सेवन्ते तस्मात् प्रत्नवत् पूर्वमिव गिरो वाचः जनय उत्पादय । भो साधो श्रान्तोसीति बन्धुरिवास्मान् ब्रूहीति यावत् । किञ्च जरितुः स्तोतुः साधुजनस्य मम हवमाह्वानं शृणुधि शृणु । किञ्च सुकृत्वने सुकृतकारिणे यजमानस्य मदेमदे प्रतिसुखं ववक्षिय वहस्व प्रापय ।

अनेन लोकृ दर्शने इत्यस्मात् हलश्चेत्यधिकरणे घञ्, लोको ज्ञानाधिकरणं साधुजनः । बन्ध बन्धने इत्यतः शॄस्वृष्णिहीत्यादिना उप्रत्ययः । लोकान् साधुजनान् स्वात्मनि स्नेहेन बध्नातीति लोकबन्धुरिति निरुक्तेः प्रत्नवज्जनया गिर इत्यनेन सूचनात् **लोकबन्धुमूर्तिरत्र** ॥ ७४६ ॥

॥ ॐ लोकनाथाय नमः ॥

**सूनृता आपो न प्रवता यतीः । अया धिया य उच्यते**
**पतिर्दिवः । उतो पतिर्य उच्यते कृष्टीनामेकः ॥ ७४७ ॥**

यः कृष्टीनां प्रजानाम् एक एव पतिः यश्च दिवः पतिः अया अनया धिया वाचा उच्यते स्तूयते अस्येन्द्रस्य ताः सूनृता वाण्यः आपः प्रवता प्रवतानि निम्नस्थानानि न इव यतीः तं प्रत्यायन्त्यः क्रीळन्ति क्रीडयन्ति (इति पूर्वेणान्वयः) ।

अनेन नाथृ याञ्चोपतापैश्वर्याशीस्स्वित्यतः पचाद्यच् । नाथतीति नाथः । लोकानां नाथ ईश्वरो लोकनाथ इति निरुक्तेः कृष्टीनां पतिरित्यनेन सूचनात् **लोकनाथमूर्तिरत्र** ॥ ७४७ ॥

॥ ॐ माधवाय नमः ॥

**इद् वशी । नमोवृधैरवस्युभिः सुते रण । स्तुहि श्रुतं**
**विपश्चितं हरी यस्य प्रसक्षिणा । गन्तारा दाशुषः ॥ ७४८ ॥**

हे इन्द्र वशी इत् स्वतन्त्र एव त्वं सोमे सुते सति नमोवृधैः नमःशब्दपूर्णैः अवस्युभिरवनप्रकाशकैर्मन्त्रैः स्तुतः रण आगच्छ शब्दं कुरु । मा भैरित्यादि वदेति वा । यस्येन्द्रस्य हरी हयौ प्रसक्षिणा प्रसक्षिणौ प्रकर्षेण संयुक्तौ सन्तौ दाशुषो यजमानस्य गृहं प्रति गन्तारा गन्तारौ स्तः । तं विपश्चितं सर्वज्ञं श्रुतं प्रसिद्धं इन्द्रं हे मन्मनः स्तुहीति मन्त्रद्रष्टुर्नारदस्य ऋषेर्वचनम् ।

अनेन माङ् माने इत्यतो विच्, मा स्तुतिः । धूञ् कम्पने इत्यतः पचाद्यच् । मां स्तुतिं धुनोति गच्छतीति माधव इति निरुक्तेः नमोवृधैरवस्युभिः सुते रणेत्यनेन सूचनात् **माधवमूर्तिरत्र** ॥ ७४८॥

॥ ॐ भक्तवत्सलाय नमः ॥

**गृहं नमस्विनः । तूतुजानो महेमतेऽश्वेभिः प्रुषितप्सुभिः ।**
**[illegible] याहि यज्ञमाशुभिः शमिद्धि ते ॥ ७४९ ॥**

हे महे[illegible] तूतुजानो वेगवान् प्रुषितप्सुभिः प्रुषितं धानाः तत्प्रप्सुभिः आशुभिः शीघ्रगामिभिः [illegible] नमस्विनो नमस्कारं कुर्वतो मम गृहं उपादेयं यज्ञं प्रति आयाहि । तत्रागतस्य ते [illegible] हि ।

अनेन भज सेवायामित्यतः कर्मणि क्तप्रत्ययः । सेव्यत इति भक्तमन्नं धानादि । वसेश्चेति सरप्रत्ययः । सस्यार्धधातुके इति तः, रस्य लः । वसतीति वत्सलः । भक्तं धानादिकं प्रति वत्सला अश्वा यस्येति भक्तवत्सल इति निरुक्तः प्रुषितप्सुभिरश्वेभिरायाहीत्यनेन सूचनाद् **भक्तवत्सल-मूर्तिरत्र** ॥ ७४९ ॥

॥ ॐ सुवर्णवर्णाय नमः ॥

**इन्द्र शविष्ठ सत्पते रयिं गृणत्सु धारय । श्रवः सूरिभ्योऽ-**
**मृतं वसुत्वनम् । हवे त्वा सूर उदिते ॥ ७५० ॥**

हे सत्पते शविष्ठ इन्द्र गृणत्सु त्वां स्तोतृषु जनेषु रयिं धारय स्थापय । किञ्च सूरिभ्यो ज्ञानिभ्यः वसुत्वनं वसुना सहितं अमृतं नित्यं श्रवोऽन्नं च धारय । सूरे सूर्ये उदिते सति त्वा त्वां हवे आह्वयामि।

अनेन सुवर्णं द्रविणं, वृणोति भक्तेभ्यो दातुमिति वर्णः, वृणोतेर्णप्रत्ययः, सुवर्णं वृणोतीति सुवर्णवर्ण इति निरुक्तः वसुत्वनं रयिं सूरिभ्य इत्यादिना सूचनात् **सुवर्णवर्णमूर्तिरत्र** ॥ ७५० ॥

॥ ॐ हेमाङ्गाय नमः ॥

**हवे मध्यंदिने दिवः । जुषाण इन्द्र सप्तिभिर्न आ गहि ।**
**आ तू गहि प्र तु द्रव मत्स्वा सुतस्य गोमतः ॥ ७५१ ॥**

हे इन्द्र सूरे सूर्ये दिवोऽन्तरिक्षस्य मध्यंदिने मध्यंगते सति त्वां हवे । त्वं च हरिभिरश्वैः जुषाणः सेव्यमानः उह्यमानः न आ गहि अस्मान् प्रत्यागच्छ । हे इन्द्र तु विशेषेण प्रद्रव ततोपि विशेषेण (वेगेन) आगहि । आगत्य च गोमतो गोपयसा मिश्रितस्य सुतस्य सोमस्य, (व्यत्ययेन) सोमं मत्स्व (पीत्वा) हर्षं प्राप्नुहि ।

अनेन हि गतौ वृद्धौ चेत्यतो मनिन् । अगि गतावित्यतः पचाद्यच् । हेमभिर्गमनशीलैरश्वैर्गच्छतीति हेमाङ्ग इति निरुक्तः हरिभिरागहीत्यनेन सूचनाद् **हेमाङ्गमूर्तिरत्र** ॥ ७५१ ॥

॥ ॐ वराङ्गाय नमः ॥

**तन्तुं तनुष्व पूर्व्यं यथा विदे । यच्छक्रासि परावति**
**यदर्वावति वृत्रहन् । यद् वा समुद्रे अन्धसोऽवितेदसि ॥ ७५२ ॥**

हे शक्र वृत्रहन् अस्य यजमानस्य पूर्व्यं पूर्वं यथा विदे विन्नामकाय यथा तथा तन्तुं सन्ततिं तनुष्व विस्तारय। यद्वा यथाविदे यथावत् त्वत्स्वरूपज्ञाय यजामनाय पूर्व्यं पुरातनं तन्तुं सन्ततिं तनुष्व। यद् यदि परावति लोके असि वर्तसे यदि वा अर्वावति लाके असि यद्वा यदि वा समुद्रे असि तथापि मदीयस्यान्धसः सोमस्य पानार्थं अवितासि आगन्ता भव इत् एव।

अनेन वृञ् वरणे इत्यत अकारप्रत्ययः। अङ्गयति गमयतीत्यङ्गः। वरणीयां सन्ततिं अङ्गयति गमयति तनोतीति वराङ्ग इति निरुक्तेः तन्तुं तनुष्वेत्यादिना सूचानद् वराङ्गमूर्तिरत्र॥ ७५२॥

॥ ॐ चन्दनाङ्गदिने नमः॥

**इन्द्रं वर्धन्तु नो गिर इन्द्रं सुतास इन्दवः। इन्द्रे**
**हविष्मतीर्विशो अराणिपुः। तमिद् विप्रा अवस्यवः॥ ७५३॥**

नः अस्मदीया गिरः तमिन्द्रं वर्धन्तु वर्धयन्तु। सुतास इन्दवश्च इन्द्रं वर्धन्तु। किञ्च हविष्मतीः हविष्मत्यः अवस्यवः स्वात्मानमवितुमिच्छवः विप्राः प्रकृष्टाः विशः प्रजाः इन्द्रमराणिषुः, रण शब्दे. इन्द्रमुद्दिश्य शव्दं कुर्वन्ति, स्तुवन्तीति यावत्।

अनेन चदि आह्लादने इत्यतो नन्द्यादित्वात् ल्युः। अङ्गयति सल्लोकं प्रापयतीत्यङ्गम्। चन्दनं देवताया आह्लादकमङ्गं सल्लोकप्रापकं हविः स्तवनं वा, तद् ददातीति चन्दनाङ्गदो यज्वा, सोऽस्य पूजकत्वेनास्तीति चन्दनाङ्गदीति निरुक्तेः हविष्मतीर्विशो अराणिषुरित्यनेन सूचनात् चन्दनाङ्गदिमूर्तिरत्र॥ ७५३॥

॥ ॐ वीरघ्ने नमः॥

**प्रवत्वतीभिरूतिभिः। इन्द्रं क्षोणीरवर्धयन् वया इव।**
**त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत॥ ७५४॥**

विप्राः प्रवत्वतीभिः प्लवद्भिः ऊतिभिः स्तोत्रैः क्षोणीः क्षोण्यः वया इव वयांसीव इन्द्रमवर्धयन्। देवासः इन्द्राद्याः देवाः चेतनं ज्ञानसाधनं यज्ञं त्रिकद्रुकेषु त्रिषु सवनेषु अत्नत, अत सातत्यगमने. प्राप्नुवन्।

अनेन .........[१] सुभटोत्तमयोर्वीर इत्युक्तेः,..............[२] यज्ञमन्त्रतेत्यनेन सूचनाद् **वीरहमूर्तिरत्र** ॥ ७५४ ॥

॥ ॐ विषमाय नमः ॥

**तमिद् वर्धन्तु नो गिरः सदावृधम् । स्तोता यत् ते अनुव्रत**
**उक्थान्यृतुथा दधे । शुचिः पावक उच्यते ॥ ७५५ ॥**

हे इन्द्र नो गिरः स्तोत्राणि सदावृधं सदावृद्धं तमित् इन्द्रं त्वामेव वर्धन्तु वर्धयन्तु । यद् यो जनः ते स्तोता उक्थानि उक्थस्तोत्राणि ऋतुथा प्रतिऋतुकालम् अनुव्रतः त्वदनुसारिकर्म कुर्वन् दधे धत्ते, करोतीति यावत्, स जनः पावकः पावक इव शुचिः पवित्रः उच्यते विद्वद्भिः ।

अनेन सम शब्दे इत्यतः पचाद्यच् । शब्दवान् समः सदृशः । न विद्यते नित्यवृद्धत्वादिना समः सदृशो यस्य स विषमः । अथ वा समा स्त्री वत्सरं साधुसर्वसाम्येषु त्रिष्वित्युक्तेः समः साधुः, विशेषेण साधुः अपेक्षादिदोषरहितः सदावृद्ध एव विषम इति निरुक्तेः सदावृधशब्देन सूचनाद् **विषममूर्तिरत्र** ॥ ७५५ ॥

॥ ॐ शून्याय नमः ॥

**सो अद्भुतः । तदिद् रुद्रस्य चेतति यह्वं प्रत्नेषु धामसु ।**
**मनो यत्रा वि तद् दधुर्विचेतसः । यदि मे ॥ ७५६ ॥**

यत्र यस्मिन्निन्द्रे विचेतसः प्राज्ञजनाः मनः चित्तं विदधुः स्थापितवन्तः स इन्द्रः अद्भुतः पापलेपरहितः । किञ्च रुद्रस्य रुजां द्रावकस्य वायोः यह्वं पुत्रम्, मुख्यप्राणेनाभिव्यक्तत्वात् प्रसिद्धेन्द्रस्य तु साक्षाद् रुद्रपुत्रत्वाच्च, प्रत्नेषु पुरातनेषु धामसु अनन्तासनादिषु स्वर्गादिषु च तत् तमिन्द्रं चेतति जानाति भक्तजनः । इत् एव । तस्मात् सोप्यद्भुत इति शेषः ।

अनेन शून गतावित्यस्मात् यत्प्रत्ययः, पापलेपादिना निर्गतत्वात् शून्यः । यद्वा टु ओ श्वि गतिवृद्ध्योरित्यत उग्रत्ययः सम्प्रसारणं च, शूः बहुकालानुगतं वैकुण्ठादिधाम, नयति व्याप्नोतीति

१,२. अत्र ग्रन्थपातः सर्वेष्वपि कोशेषु ।

न्यः, नयतेर्यत्प्रत्ययः । शूम् अनादिनित्यं पुरातनवैकुण्ठादिलोकं अधितिष्ठतीति वा शून्य इति निरुक्तेः प्रत्नेषु धामस्वित्यनेन सूचनात् **शून्यमूर्तिरत्र** ॥ ७५६ ॥

॥ ॐ घृताशिषे नमः ॥

**सख्यमावर इमस्य पाह्यन्धसः । येन विश्वा अति द्विषो**
**अतारिम । कदा त इन्द्र गिर्वणः स्तोता भवाति शन्तमः ॥ ७५७ ॥**

हे इन्द्र ते सख्यं मत्स्वामित्वादिरूपं यदि आवरः वृणोषि तदा इमस्य अस्य मे अन्धसः अन्धांसि सोमान् पाहि । येन सोमपानेन प्रसन्नेन विश्वा द्विषः समस्तान् शत्रून् अति अत्यन्तमतारिम अतिक्रान्ता भवेम । हे गिर्वणः इन्द्र ते स्तोता शन्तमः सुखितमः कदा भवति भवेत् ।

अनेन घृ क्षरणदीप्त्योरित्यतः क्तप्रत्ययः, घृतं क्षरणसमर्थं द्रवद्रव्यं सोमादि, तदाशास्त इति घृताशीरिति वा । घृता निर्गलिता आशिषः प्रार्थना यस्मादिति वा घृताशीरिति निरुक्तेः इमस्य पाह्यन्धसः येन विश्वा अति द्विषो अतारिमेत्यनेन सूचनाद् **घृताशीर्मूर्तिरत्र** ॥ ७५७ ॥

॥ ॐ अचलाय नमः ॥

**कदानो गव्ये अश्व्ये वसौ दधः । उत ते सुष्टुता हरी**
**वृषणा वहतो रथम् । अजुर्यस्य मदिन्तमम् ॥ ७५८ ॥**

हे इन्द्र गव्ये गोसमूहे अश्व्ये अश्वसमूहे वसौ धने च नः अस्मान् कदा दधः अदधाः स्थापयसि । कदा अस्मभ्यं द्रव्यादिकं ददासीति यावत् । उत किञ्च अजुर्यस्य जरादिदोषरहितस्य अत एव नित्यस्य ते त्वदीयौ वृषणा वृषणौ युवानौ सुष्टुता सुष्टुतौ हरी अश्वौ मदिन्तमं सुखसाधनं रथम् अस्मद्गृहं प्रति वहतः वहेताम् ।

अनेन चल संचलने इत्यतोऽच् । चलति नश्यतीति चलः । स न भवतीत्यचल इति निरुक्तेः अजुर्यस्येत्यनेन सूचनाद् **अचलमूर्तिरत्र** ॥ ७५८ ॥

॥ ॐ चलाय नमः ॥

**यमीमहे । तमीमहे पुरुष्टु तं यह्वं प्रत्नाभिरूतिभिः ।**
**नि बर्हिषि प्रिये सददध द्विता ॥ ७५९ ॥**

यं वयं शरणमीमहे स इन्द्रः प्रिये बर्हिषि निसदत् निषीदत् निषीदतु उपविशतु । अनन्तरं शत्रूणां द्विता भेदको भवेत् । वयं च प्रत्नाभिः पुरातनाभिः ऊतिभिः स्तोत्रैः पुरुष्टुतं बहुस्तुतं अस्माकं तारकत्वाद् यह्वं पुत्रं तं शरणमीमहे ।

अनेन दस्यान् (दस्यून्) चालयति भेदयतीति चल इति निरुक्तेः द्वितेत्यनेन सूचनात् **चलमूर्तिरत्र** ॥ ७५९ ॥

**॥ ॐ अमानिने नमः ॥**

**वर्धस्वा सु पुरुष्टुत ऋषिष्टुताभिरूतिभिः । धुक्षस्व**
**पिप्युषीमिषमवा च नः । इन्द्र त्वमवितेदसीत्था ॥ ७६० ॥**

हे पुरुष्टुत इन्द्र ऋषिस्तुताभिः ज्ञानिसम्मताभिः ऊतिभिः स्तोत्रैः वर्धस्व । किञ्च पिप्युर्षी पुष्टिकरीं इषमन्नं सु धुक्षस्व, दुह प्रपूरणे, पूरय, देहि । नः अस्मान् अव रक्ष च । हे इन्द्र त्वमित्था इत्थमत्र अवितासि इत् एव ।

अनेन माङ् माने इत्यतो भावे ल्युट्, अनादेशः, मानं मितिः, न मानममानम् अपरिमितिः, वृद्धिरिति यावत्, तदस्यास्तीत्यमानी इति निरुक्तेः वर्धस्व सु पुरुष्टुतेत्यनेन सूचनाद् **अमानिमूर्तिरत्र** ॥ ७६० ॥

**॥ ॐ मानदाय नमः ॥**

**स्तुवतो अद्रिवः । ऋतादियर्मि ते धियं मनोयुजम् ।**
**इह त्या सधमाद्या युजानः सोमपीतये । हरी इन्द्र ॥ ७६१ ॥**

हे अद्रिवः इन्द्र ऋताद् वेदवाक्यात् मनोयुजमुपक्रमोपसंहारानुगुण्यानुसन्धानात्मकमनोयोग-युक्तं ते त्वद्विषयिणीं धियं इयर्मि प्राप्नवानि । त्या त्यौ प्रसिद्धौ सधमाद्या सधमाद्यौ यज्ञप्रियौ हरी अश्वौ स्तुवतो मम इह यज्ञवाटे सोमपीतये युजानः रथे युञ्जानो भव, रथे योजयिता भव ।

अनेन मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते इत्युक्तेः मानं ज्ञानं, तद् ददातीति मानद इति निरुक्तेः इयर्मि ते धियमित्यनेन सूचनात् **मानदमूर्तिरत्र** ॥ ७६१ ॥

॥ ॐ मान्याय नमः ॥

**प्रतद्वसू अभिस्वर । अभि स्वरन्तु ये तव रुद्रासः सक्षत श्रियम् । उतो मरुत्वतीर्विशो अभि प्रयः ॥ ७६२ ॥**

हे इन्द्र त्वं प्रतद्वसू प्रतद्वसूनि विस्तृतधनानि अभिस्वर देहि । ये रुद्रासः वायवः तव श्रियं शोभां पूजां सक्षत संबन्धयन्ति, त्वत्पूजां कुर्वन्तीति यावत्, ते वायवः अभि प्रयः अतिप्रियाः मरुत्वतीः मरुत्वत्यो मरुत्स्वामिका विशः उतो च प्रजाश्च त्वामभिस्वरन्तु स्तुवन्तु ।

अनेन वाय्वादिसर्वपूजाभिर्मान्यते पूज्यत इति मान्यः, मान पूजायामिति धातुः, इति निरुक्तेः रुद्रासः सक्षत श्रियमित्यनेन सूचनात् **मान्यमूर्तिरत्र** ॥ ७६२ ॥

॥ ॐ लोकस्वामिने नमः ॥

**इमा अस्य प्रतूर्तयः पदं जुषन्त यद् दिवि । नाभा यज्ञस्य संदधुर्यथा विदे । अयं दीर्घाय चक्षसे ॥ ७६३ ॥**

अस्येन्द्रस्य या इमाः प्रसिद्धाः प्रतूर्तयः स्तुतयः दिवि स्वर्गे पदं जुषन्त पदं स्थापितवत्यः, स्वर्गपर्यन्तं व्याप्ता इति यावत् । ताः स्तुतयः यथाविदे यथावज्ज्ञानिने यज्ञस्य तदीयकर्मणः नाभा नाभाम्, भा कान्तिः तदभावः अभा सा न भवतीति नाभा ताम्, कान्तिं संदधुः संयोजितवन्तः । यज्ञभूषणभूता इति यावत् । अयमिन्द्रो दीर्घाय चक्षसे बहुकालं स्वात्मनो दर्शनाय भूयात् ।

अनेन लोक दर्शने इत्यतः पचाद्यच्, लोकयतीति लोकः । स्वधनकान्त्यादिरूपं स्वम्, अम गत्यादिष्वित्यस्मादकारप्रत्ययः, अमति गच्छति प्राप्नोतीति स्वामः यज्ञभूषणः स्तुतिविशेषः । सोऽस्यास्तीति स्वामी । लोकश्चासौ स्वामी चेति लोकस्वामीति निरुक्तेः इन्द्रो दीर्घाय चक्षस इत्यनेन सूचनात् **लोकस्वामिमूर्तिरत्र** ॥ ७६३ ॥

॥ ॐ त्रिलोकधृते नमः ॥

**प्राचि प्रयत्यध्वरे । मिमीते यज्ञमानुषग् विचक्ष्य । वृषायमिन्द्र ते रथ उतो ते वृषणा हरी ॥ ७६४ ॥**

प्राचि पूज्ये प्रयति देवताप्राप्तिशीले अध्वरे यज्ञे आनुषक् सर्वतः विचक्ष्य तत्तद्योग्यतां सम्यग् दृष्ट्वा यज्ञं मिमीते यज्ञकर्माणि निर्माति। हे इन्द्र ते अयं रथः वृषा श्रेष्ठः, उतो अपि च ते त्वदीयौ हरी अश्वौ वृषाणौ युवानौ वृषा वृषौ श्रेष्ठौ स्तः।

अनेन त्रिभिर्वेदैर्लोक्यते ज्ञायत इति त्रिलोको यज्ञः, स त्रिभिर्विधीयते इति वचनात्। धरतीति धृत्। धृतेः क्विप् तुगागमश्च। त्रिलोकस्य धृत् त्रिलोकधृत् यज्ञनिर्मातेति निरुक्तेः मिमीते यज्ञमानुषगित्यनेन सूचनात् **त्रिलोकधृन्मूर्तिरत्र**॥ ७६४॥

**॥ ॐ सुमेधसे नमः॥**

**वृषा त्वं शतक्रतो वृषा हवः। वृषा ग्रावा वृषा मदो**
**वृषा सोमो अयं सुतः। वृषा यज्ञो यमिन्वसि वृषा॥ ७६५॥**

हे शतक्रतो त्वं वृषा वृषः श्रेष्ठः। हवः त्वदीयं स्तोत्रं च वृषा वृषः श्रेष्ठः प्रवर्तते। ग्रावा पाषाणः वृषा। मदः सुखं च वृषा। अयं सुतःसोमश्च वृषा। यं यज्ञं त्वमिन्वसि गच्छसि स यज्ञोपि वृषा। ते पूचकश्च वृषा।

अनेन मिधृमेधृ हिंसासंराध्योरिति धातुपाठात् श्रेष्ठत्वाद्यात्मकसंराध्यर्थात् मेधतेरकारप्रत्ययः। सु समीचीनो मेधो संराधिर्यस्य स सुमेधः। नञ्दुःसुभ्यः प्रजामेधयोरिति समासान्तः असिच्। यदीयरथहवग्रावसोमयज्ञाद्याः श्रेष्ठाः सन्तीति पर्यवस्यति, इति निरुक्तेः वृषाहवमित्यादिना सूचनात् **सुमेधोमूर्तिरत्र**॥ ७६५॥

**॥ ॐ मेधजाय नमः॥**

**हवः। वृषा त्वा वृषणं हुवे वज्रिन् चित्राभिरूतिभिः।**
**वावन्थ हि प्रतिष्टुतिं वृषा हवः।[१] तम्वभि प्रगायत॥ ७६६॥**

हे वज्रिन् हवः त्वदाह्वानकर्ता अहमपि वृषा श्रेष्ठः। वृषणं त्वां चित्राभिरूतिभिः हवे आह्वयामि। हवः आह्वानं च वृषा श्रेष्ठः। यतस्तस्मात् त्वं यज्ञे अभिव्यक्तः प्रतिस्तुतिं साध्वनेन स्तुतमिति वचनं ववन्थ गच्छ कुरु। हे जनाः तमेवेन्द्रम् अभि प्र गायत।

१. ऋग्वेद ८-१५, गोसूक्त्यश्वसूक्तिनौ काण्वायनौ।

अनेन मेधृ हिंसासंराध्योरित्यस्माद् हिंसार्थादकारप्रत्ययः । हिंस्यते पशुरनेनेति मेधो यज्ञः, तस्मिन् जायते अभिव्यज्यते इति मेधज इति निरुक्तेः हवं प्रतिष्ठुतिमित्यनेन सूचनात् **मेधजमूर्तिरत्र** ॥ ७६६ ॥

॥ ॐ धन्याय नमः ॥

**पुरुहूतं पुरुष्टुतम् । इन्द्रं गीर्भिस्तविषमा विवासत ।**
**यस्य द्विबर्हसो बृहत् सहो दाधार रोदसी ॥ ७६७ ॥**

द्विबर्हसो द्विभुजस्य यस्येन्द्रस्य बृहत् सहो बलं रोदसी द्यावापृथिव्यौ दाधार धृतवत् तं पुरुष्टुतं पुरुहूतमिन्द्रं गीर्भिर्वेदवाग्भिः तविषं कान्तिमन्तं सोमं आ विवासत सम्पादयत ।

अनेन धन धान्ये इत्यस्मात् क्विप् । धनं दीप्तिमन्तं सोमं यातीति धन्य इति निरुक्तेः इन्द्रं तविषमाविवासतेत्यनेन सूचनाद् **धन्यमूर्तिरत्र** ॥ ७६७ ॥

॥ ॐ सत्यमेधसे नमः ॥

**गिरीँ रज्राँ अपः स्वर्वृषत्वना । स राजसि पुरुष्टुतँ**
**एको वृत्राणि जिघ्नसे । इन्द्र जैत्रा श्रवस्या च ॥ ७६८ ॥**

हे पुरुष्टुत अज्रान् अजरान् अजीर्णान् दृढान् गिरीन् अपः कर्माणि स्वः स्वर्गं च वृषत्वना श्रेष्ठत्वेन धारयन् स त्वं राजसि प्रकाशसे । किञ्च हे इन्द्र एक एव स त्वं वृत्राणि बहून्यसुरजातानि श्रवस्या श्रवस्यानि यशोजातानि जैत्रा जैत्राणि जयप्रकाशकानि प्राप्तुं जिघ्नसे हंसि ।

अनेन मेधशब्दः प्राग्वत् संराधिवाचकः । संराधिश्च राजनं यश इत्यादि । सत्यो मेधो राजनं यशआदिर्यस्य सः सत्यमेधाः । नञ्दुःसुभ्यः प्रजामेधयोरित्यत्र योगविभागादसिच् इति निरुक्तेः स राजसीत्यनेन जैत्रा श्रवस्येत्यनेन च सूचनात् **सत्यमेधोमूर्तिरत्र** ॥ ७६८ ॥

॥ ॐ धराधराय नमः ॥

**यन्तवे । तं ते मदं गृणीमसि वृषणं पृत्सु सासहिम् ।**
**उ लोककृत्नुमद्रिवो हरिश्रियम् । येन ज्योतींष्यायवे ॥ ७६९ ॥**

हे अद्रिवः इन्द्र येन सामर्थ्येन आयवे आयुराजाय ज्योतींषि ज्ञानानि भवन्ति वृषणं भक्ताभीष्टप्रदं पृत्सु युद्धेषु ससहिं शत्रुवेगसहं लोककृत्नुं लोकप्राप्तिसाधनं हरिश्रियं हरेः पर्वतस्य श्रीः कान्तिरिव कान्तिर्यस्य तं अत्युत्तमं यन्तवे प्राप्तुं ते तव तं मदं सामर्थ्यं गृणीमसि गृणीमः स्तुमः।

अनेन ध्रियत इति धरा श्रीः, धरां श्रियं धरतीति धराधर इति वा, अहार्यधरपर्वता इत्यभिधानात् धरः पर्वतः तस्य श्रियमा सम्यक् धरतीति वा धराधर इति निरुक्तेः हरिश्रियमित्यनेन सूचनाद् **धराधरमूर्तिरत्र** ॥ ७६९ ॥

॥ ॐ तेजोवृषाय नमः ॥

**मनवे च विवेदिथ। मन्दानो अस्य वर्हिषो विराजसि।**
**तदद्या चित् त उक्थिनोऽनुष्टुवन्ति पूर्वथा ॥ ७७० ॥**

हे इन्द्र मनवे च मनुराजाय च ज्योतींषि ज्ञानानि विवेदिथ लम्भयसि प्रापयसि। किञ्चास्य मनोः वर्हिषो वर्हिषि मन्दानः प्रीतः सन् विराजसि प्रकाशसे। हे इन्द्र उक्थिनः स्तोत्रपाठकाः अद्याचित् अद्यापि ते त्वामनुस्तुवन्ति। तत् तस्माद् वयमपि त्वां पूर्वथा पूर्ववद् गृणीमसि।

अनेन तेजांसि वर्षतीति तेजोवृषः, वृषेः कन्, इति निरुक्तेः मनवे च विवेदिथ वर्हिषो विराजसीत्यनेन सूचनात् **तेजोवृषमूर्तिरत्र** ॥ ७७० ॥

॥ ॐ द्युतिधराय नमः ॥

**वृषपत्नीरपो जया दिवेदिवे। तव त्यदिन्द्रियं वृहत्**
**तव शुष्ममुत क्रतुम्। वज्रं शिशाति धिषणा ॥ ७७१ ॥**

हे इन्द्र वृषपत्नीः वृषस्य वरुणस्य पत्नीः भार्याः अपः नदीः दिनेदिने प्रतिदिनं जय प्रवर्तय प्रवाहय। किञ्च त्यत् प्रसिद्धं तव इन्द्रियं धनं चक्षुरादीन्द्रियं वा वृहत् महद् दृढं च। किञ्च तव शुष्मं वलं च महत्। उत किञ्च धिषणा वुद्धिः क्रतुं वज्रं च शिशाति संवध्नाति। वज्रं गृहीत्वा यज्ञविरोधिनो हन्तुमुत्सहते।

अनेन द्युत दीप्तावित्यत इगुपधात् किदिति करणे इन्प्रत्ययः कित्त्वाद् गुणाभावः। द्युति वलादि तद् धरतीति द्युतिधर इति निरुक्तेः इन्द्रियं शुष्ममित्यनेन सूचनाद् **द्युतिधरमूर्तिरत्र** ॥ ७७१ ॥

॥ ॐ सर्वशस्त्रभृतांवराय नमः ॥

**वरेण्यम् । तव द्यौरिन्द्र पौंस्यं पृथिवी वर्धति श्रवः ।**
**त्वामापः पर्वतासश्च हिन्विरे । त्वां विष्णुर्बृहन् क्षयः ॥ ७७२ ॥**

हे इन्द्र द्यौः पृथिवी च तव वरेण्यं वरणीयं पौंस्यं श्रवः कीर्तिमन्नं च वर्धति वर्धयति प्रकाशयति । किञ्च त्वामापो नद्यः पर्वतासः पर्वताश्च हिन्विरे, हि गतौ वृद्धौ च,........[१]। किञ्च विष्णुर्यज्ञाभिमानी देवः प्रसिद्धो विष्णुश्च त्वां प्रति क्षयो निवासभूमिराश्रयश्च । बृहन् महांश्च ।

अनेन शस हिंसायामित्यतः करणे इष्ट्रन्प्रत्ययः । शस्यन्ते हिंस्यन्ते प्राणिन एभिरिति शस्त्राणि जलतरुपाषाणादीनि तानि बिभ्रतीति शस्त्रभृतो नदीपर्वताद्याः । सृ गतावित्यतः सर्वनिधृष्वेत्यादिना वन्प्रत्ययः सर्वः । सर्वे च ते शस्त्रभृतश्च सर्वशस्त्रभृतः । वृञ् वरणे इत्यतः कर्मण्यच् प्रत्ययः । वरणीयत्वाद् वरः । सर्वशस्त्रभृतां नदीपर्वतादीनां वरो वरणीयः सर्वशस्त्रभृतांवरः आक्रोशे षष्ठ्या अलुक्, इति निरुक्तेः त्वामापः पर्वतासश्च हिन्विरे इत्यनेन सूचनात् **सर्वशस्त्रभृतांवरमूर्ति-**रत्र ॥ ७७२ ॥

॥ ॐ प्रग्रहाय नमः ॥

**मित्रो गृणाति वरुणः । त्वां शर्धो मदत्यनु मारुतम् ।**
**त्वं वृषा जनानां मंहिष्ठ इन्द्र जज्ञिषे । सत्रा विश्वा ॥ ७७३ ॥**

हे इन्द्र मारुतं मरुतां स्वामिनं त्वां मित्रो वरुणश्च अनु सम्यक् गृणाति स्तौति । त्वं च जनानां वृषा वर्षयिता मंहिष्ठो महत्तमश्च सन् जज्ञिषे जातोसि अभिव्यक्तोऽसि, गृह्यसे इति यावत् । किञ्च शर्धो बलरूपस्त्वं सत्रा महान्ति विश्वा समस्तप्राणिजातानि मदति मादयसि ।

अनेन ग्रह उपादाने इत्यतः कर्मणि कः । प्रकृष्टत्वेन महत्त्वेन गृह्यत इति प्रग्रह इति निरुक्तेः जनानां मंहिष्ठ इन्द्र जज्ञिषे इत्यादिना सूचनात् **प्रग्रहमूर्तिरत्र** ॥ ७७३ ॥

---

१. अत्र पातः सर्वेष्वपि कोशेषु ।

॥ ॐ निग्रहाय नमः ॥

**स्वपत्यानि दधिषे । सत्रा त्वं पुरुष्टुतँ एको वृत्राणि तोशसे । नान्य इन्द्रात् करणं भूय इन्वति ॥ ७७४ ॥**

हे इन्द्र स्वपत्यानि समीचीनापत्यानि भक्तानां दधिषे । पुरुस्तुत त्वं एक एव सत्रा महान्ति वृत्राणि शत्रुजालानि तोशसे संहरसि । इन्द्रादन्यः कोऽपि करणं वृत्रहननादिकं कर्म भूयः पुनः न इन्वति न गच्छति न कुर्यात् ।

अनेन महतः शत्रून् निगृण्हातीति निग्रहः । निपूर्वाद् ग्रहेः कर्तरि कः, इति निरुक्तेः सत्रा त्वं वृत्राणि तोशसे इत्यनेन सूचनात् **निग्रहमूर्तिरत्र** ॥ ७७४ ॥

॥ ॐ व्यग्राय नमः ॥

**यदिन्द्र मन्मशस्त्वा नाना हवन्त ऊतये । अस्माकेभिर्नृभिरत्रा स्वर्जय ।[१] इन्द्राय साम गायत विप्राय ॥ ७७५ ॥**

हे इन्द्र यद् ये जनाः मन्मशो मत्यनुसारेण नाना नानाप्रकारेण ऊतये त्वां हवन्ते तैः अस्माकेभिरस्मदीयैः नृभिः अत्र यज्ञवाटे स्वः सुखं जय प्रापय प्रीतो भव । हे जनाः विप्राय प्रकृष्टप्रज्ञाय इन्द्राय साम गायत ।

अनेन व्यग्र आसक्त उन्मना इत्युक्तेः स्तोतॄणां सुखदाने आसक्तो व्यग्र इति निरुक्तेः स्वर्जयेत्यनेन सूचनाद् **व्यग्रमूर्तिरत्र** ॥ ७७५ ॥

॥ ॐ नैकशृङ्गाय नमः ॥

**बृहते बृहत् ।धर्मकृते विपश्चिते पनस्यवे । त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः । विश्वकर्मा विश्वदेवः ॥ ७७६ ॥**

हे जनाः धर्मकृते धर्मकर्त्रे विपश्चिते ज्ञानिने पनस्यवे यांद्रे बृहते महते इन्द्राय बृहत् बृहदाख्यं साम गायत । हे इन्द्र त्वं अभिभूः शत्रूणामभिभावकोसि । त्वं सूर्यमरोचयः प्राकाशयः । त्वं विश्वं करोतीति विश्वकर्मा विश्वदेवो विश्वैर्जनैः स्तुत्यश्चासि ।

१. ऋग्वेद ८-९८, नृमेध आङ्गिरसः ।

अनेन शॄञ् हिंसायामित्यतः शॄणातेर्ह्रस्वश्चेति गन्प्रत्ययः । तस्य नुडागमः धातोर्ह्रस्वश्च । शॄणाति हिनस्तीति शृङ्गः । एको न भवतीति नैकः अनेकः । नैकश्चासौ शृङ्गश्च नैकशृङ्गः । नसमासोयम् । नैकेषां बहूनां शत्रूणां शृङ्ग इति वा निरुक्तेः **नैकशृङ्गमूर्तिरत्र** ॥ ७७६ ॥

**॥ ॐ गदाग्रजाय नमः ॥**

**महाँ असि । विभ्राजन् ज्योतिषा स्वरगच्छो रोचनं दिवः ।**
**देवास्त इन्द्र सख्याय येमिरे । एन्द्र नः ॥ ७७७ ॥**

हे इन्द्र त्वं महांश्चासि त्वं ज्योतिषा कान्त्या विभ्राजन् प्रकाशमानः दिवः अन्तरिक्षे रोचनं रोचमानं स्वः स्वर्गं अगच्छ आगच्छ । तत्र देवाः ते सख्याय सख्यप्राप्तये येमिरे त्वां प्राप्नुवन्त । (शिष्टमुत्तरान्वयि) ।

अनेन गद व्यक्तायां वाचीत्यतः स्वनो यचेति घित्करणात् गदेरपि घः । यद्वा धानगदस्तनदेव शब्दे इत्यस्मात् कृता(?) घप्रत्ययः । गद्यते यागादीनां फलत्वेन निगद्यते इति गदः स्वर्गः । अगि गतावित्यस्माद् ऋज्रेन्देत्यदिना निपातनात् रन्प्रत्ययः । अगति गच्छतीत्यग्रः । जायत इति जः । जनेर्डः । गदं स्वर्गं गच्छतीति गदाग्रः । तत्र देवानां सखा जायत इति जः । गदाग्रश्चासौ जश्च गदाग्रज इति निरुक्तेः स्वरगच्छः देवाः सख्याय येमिरे इत्यनेन सूचनाद् **गदाग्रजमूर्तिरत्र** ॥ ७७७॥

**॥ ॐ चतुर्मूर्तये नमः ॥**

**गधि प्रियः सत्राजिदगोह्यः । गिरिर्न विश्वतस्पृथुः**
**पतिर्दिवः । अभि हि सत्य सोमपा उभे बभूथ रोदसी ॥ ७७८ ॥**

हे इन्द्र नोऽस्माकं प्रियः सत्राजित् बहुजित् अगोह्यः गोपायितुमशक्यः गिरिर्न पर्वत इव विश्वतः सर्वतः पृथुः पृथुलः दिवः स्वर्गस्य पतिस्त्वं आ गधि आगहि आगच्छ । हे सत्य सोमपा इन्द्र उभे रोदसी द्यावापृथिव्यौ अभिबभूथ अभिभावकोऽसि ।

अनेन चिती संज्ञाने इत्यत उरन् प्रत्ययः । नकाराकारयोर्लोपः, धात्विकारस्याकारः । मूर्च्छा मोहसमुच्छ्राययोरित्यतः क्तिन्, मूर्तिः समुच्छ्रायः । चतुरः (ज्ञानस्य) मूर्तिः समुच्छ्रायो यस्य स चतुर्मूर्तिरिति निरुक्तेः गिरिर्न विश्वतस्पृथुरित्यनेन सूचनात् **चतुर्मूर्तिमूर्तिरत्र** ॥ ७७८ ॥

॥ ॐ चतुर्बाहवे नमः ॥

**इन्द्रासि सुन्वतो वृधः पतिर्दिवः । त्वं हि शश्वतीनामिन्द्र**
**दर्ता पुरामसि । हन्ता दस्योर्मनोर्वृधः ॥ ७७९ ॥**

हे इन्द्र त्वं दिवस्पतिः सुन्वतो यजमानस्य वृधः वृद्धिकरोसि । शाश्वतीनां बहुकालीनानां दस्योः पुरां शत्रुपुराणां दर्ता दारयिता दस्योः शत्रुजातस्य हन्ता चासि । मनोर्ज्ञानस्य वृधो वर्धकश्चासि ।

अनेन चते चदे याचने इत्यत उरच्[१] चतन्ति अन्तरिक्षापरो(?) संवरन्ति बहुकालेष्विति चत्वारि दस्यूनां पुराणि त्रिपुरादीनि । बाधृ विलोडने इत्यतः अर्जिदृशीत्यादिना कुप्रत्ययः धातोरन्तस्य हकारादेशः । चत्वारि पुराणि बाधते विदारयतीति चतुर्बाहुरिति निरुक्तेः शश्वतीनां पुरां दर्ता असीत्यनेन सूचनात् चतुर्बाहुमूर्तिरत्र ॥ ७७९ ॥

॥ ॐ चतुर्व्यूहाय नमः ॥

**पतिर्दिवः । अधा हीन्द्र गिर्वण उप त्वा कामान् महः**
**ससृज्महे । उदेव यन्त उदभिः । वार्ण त्वा यव्याभिः ॥ ७८० ॥**

हे गिर्वणः इन्द्र त्वं दिवः पतिरसि । अध तस्मात् वयम् उदभिः कर्मभिः त्वामुप यन्तः प्राप्नुवानाः महः महतः कामान् काम्यान् चरुपुरोडाशादीन् उदेव उदकानीव ससृज्महे निर्मितवन्तः स्मः हि । यव्याभिः यवादिभिः त्वां वाः न उदकमिव ससृज्महे संयोजयामः ।

अनेन ऊह वितर्के इत्यस्माद् घञ् । चतुर्भिः चरुपुरोडाशसोमजलाख्यैः द्रव्यैः विशेषेण ऊह्यते संसृज्यते इति चतुर्व्यूह इति निरुक्तेः कामान् महः ससृज्महे इत्यनेन सूचनात् चतुर्व्यूहमूर्तिरत्र ॥ ७८० ॥

॥ ॐ चतुर्गतये नमः ॥

**वर्धन्ति शूर ब्रह्माणि । वावृध्वांसं चिदद्रिवो दिवेदिवे ।**
**युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे ॥ ७८१ ॥**

---

१. चते चदे याचने इत्यस्मात् उरचि दक्षवाचिचतुरशब्दनिष्पत्तिः, उरनि संख्यावाचिचतुःशब्दनिष्पत्तिः, ष्वरचि चतुष्पथवाचिचत्वरशब्दनिष्पत्तिरित्यौणादिके । चते चदे याचने चेति ग्रन्थकाराभिमतो धातुपाठः, चकारात् सञ्चारार्थत्वमर्पीति ।

हे शूर अद्रिवः दिवेदिवे प्रतिदिनं ववृध्वांसं संवर्धमानं चित् अपि नो ब्रह्माणि स्तोत्राणि वर्धन्ति वर्धयन्तु त्वां प्रीणयन्तु। हरी अश्वौ इषिरस्य, इषिः इच्छा तया रत इतीषरः तस्य, स्वतन्त्रस्येन्द्रस्य गाथया स्तुत्या उरौ उत्कृष्टे रथे स्यन्दने तत्रापि उरुयुगे उत्कृष्टे युगदण्डे युञ्जन्ति बध्नन्ति, इन्द्रभृत्या इति शेषः। तस्मादिहायास्यतीति संतोषादियमुक्तिः।

अनेन पूर्ववत् सञ्चारार्थात् चतेरुरन्, चतुर्णां सञ्चारशीलानामश्वानां (?) गतिर्गमनं संबन्धो यस्य रथयुगे स चतुर्गतिरिति निरुक्तेः युञ्जन्ति हरी इत्यनेन सूचनात् **चतुर्गतिमूर्तिरत्र** ॥ ७८१ ॥

**॥ ॐ चतुरात्मने नमः ॥**

**इन्द्रवाहा वचोयुजा। त्वं न इन्द्रा भरँ ओजो नृम्णं**
**शतक्रतो विचर्षणे। आ वीरं पृतनाषहम्॥ ७८२ ॥**

हे विचर्षणे शतक्रतो इन्द्र वचोयुजा वाङ्मात्रेण योजनीयौ अश्वौ इन्द्रवाहा इन्द्रवाहौ इन्द्रस्य तव वाहकौ भवेताम्। किञ्च पृतनासहं पृतनासु वैरिवेगसहं वीरमुत्तमम् ओजो बलम् आ समन्तात् नृम्णं सुखं च हे इन्द्र नः आ भर।

अनेन याञ्चार्थात् चतेरुरन् प्रत्ययः। चत्वारि याचनीयानि ओजआदीनि आ तनोति ददाति चेति चतुरात्मेति निरुक्तेः ओजोनृम्णमा भरेत्यनेन सूचनात् **चतुरात्ममूर्तिरत्र** ॥ ७८२ ॥

**॥ ॐ चतुर्भावाय नमः ॥**

**त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ। अधा**
**ते सुम्नमीमहे। त्वां शुष्मिन् पुरुहूत वाजयन्तम्॥ ७८३ ॥**

हे वसो शतक्रतो त्वं नः पिता माता च बभूविथ। अध तस्मात् ते तव सकाशात् सुम्नं सुखमीमहे प्राप्नुमः। हे पुरुहूत शुष्मिन् बलिन् इन्द्र वाजयन्तं भोगप्रदं त्वामुप ब्रुवे स्तौमि। (इत्युत्तरेणान्वयः)।

अनेन भावयत्युत्पादयतीति भावः पिता माता च। चतुर्णां (याचनार्थस्य चते रूपमेतत्) याचकानां भावः पिता माता चेति चतुर्भाव इति निरुक्तेः त्वं हि नः पितेत्यादिना सूचनात् **चतुर्भावमूर्तिरत्र** ॥ ७८३ ॥

॥ ॐ चतुर्वेदविदेकपादे नमः ॥

**उप ब्रुवे शतक्रतो । स नो रास्व सुवीर्यम् ।[१] सखाय**
**आ शिषामहि ब्रह्मेन्द्राय वज्रिणे । स्तुप ऊ पु ॥ ७८४ ॥**

हे शतक्रतो इन्द्र सः अस्माभिः स्तुतस्त्वं नः सुवीर्यं सुवीरत्वं रास्व देहि । हे सखायः सर्वे वयं ब्रह्म स्तोत्रं चतुर्वेदानपि वज्रिणे इन्द्राय स्तुषे स्तोतुं आ समन्तात् स्वरवर्णात्मनापि शिषामहि संयोजयामः ।

अनेन चतुर्भिर्वेदैः वेद्यते इति चतुर्वेदवित् एकः प्रधानः पात् पादः स्वरूपं यस्य सः चतुर्वेदविदेकपादिति निरुक्तेः ब्रह्मेन्द्राय आ शिषामहीत्यनेन सूचनात् **चतुर्वेदविदेकपान्मूर्तिरत्र** ॥ ७८४॥

॥ ॐ समावर्ताय नमः ॥

**वो नृतमाय धृष्णवे । शवसा ह्यसि श्रुतो वृत्रहत्येन**
**वृत्रहा । मघैर्मघोनो अति शूर दाशसि ॥ ७८५ ॥**

हे जनाः वः नृतमाय धृष्णवे धृष्णाय इन्द्राय, ब्रह्माणि कुरुतेति शेषः । हे अतिशूर वृत्रहत्येन युद्धेन वृत्रहा वृत्रहन्ता सन् शवसा कीर्त्या श्रुतः प्रसिद्धोसि । किञ्च मघोनो यज्वनः मघैः मखानि यशांसि धनानि च दाशसि ।

अनेन स्वकीयं यशः सं सम्यक् समन्तात् आवर्तयति व्याप्तं करोतीति वा समन्ताद् भक्तानां मघानि द्रविणानि वर्तयतीति वा समावर्तः । वृतु वर्तने इत्यस्मात् ण्यन्तात् कर्तरि अप्रत्ययो गुणश्च इति निरुक्तेः शवसा ह्यसि श्रुतः मघैर्मघोनो दाशसीत्यादिना सूचनात् **समावर्तमूर्तिरत्र** ॥ ७८५ ॥

॥ ॐ निवृत्तात्मने नमः ॥

**स नः स्तवान आभर रयिं चित्रश्रवस्तमम् । निरेके**
**चिद् यो हरिवो वसुर्ददिः । आ निरेकमुत प्रियम् ॥ ७८६ ॥**

हे इन्द्र निरेके चित् अल्पेऽपि मयि वसुः वसूनि ददिः दाता स त्वं स्तवानः स्तूयमानः चित्रश्रवस्तमं विचित्रान्नादिमन्तं रयिं नः अस्मभ्यमाभर । किञ्च निरेकं दानम् उत प्रियं सुखं च आभर ।

---

१. ऋग्वेद ८-२४, विश्वमना वैयश्वः ।

अनेन निवृत्ते निकृष्टवृत्तिमत्यपि यशआदि आ समन्ताद् ददातीति निवृत्तात्मा। अथवा वृतु वर्तने इत्यस्मात् कर्मणि क्तः, वृत्तं वृत्तिमत् धनादिकम्। नितरां धनादिकं ददातीति वा निवृत्तात्मेति निरुक्तेः निरेके चिद् वसुर्ददिः चित्रश्रवस्तमं रयिमा निरेकमुतप्रियमित्यनेन सूचनात् **निवृत्तात्ममूर्तिरत्र** ॥ ७८६ ॥

॥ ॐ दुर्जयाय नमः ॥

**इन्द्र दर्षि जनानाम्। धृषता धृष्णो स्तवमान आ भर।**
**न ते सव्यं न दक्षिणं हस्तं वरन्त आमुरः ॥ ७८७ ॥**

हे धृष्णो इन्द्र धृषता परधर्षणशक्त्या सहितः जनैः आ दर्षि सम्यग् दृष्टोऽसि। स त्वं स्तवमानः स्तूयमानः अभीष्टमाभर। किञ्च ते तव आमुरः शत्रवः सव्यं हस्तं बाहुमपि न वरन्ते न वारयन्ति। दक्षिणं हस्तमपि न वरन्ते।

अनेन दुःखेनापि शत्रुभिर्जेतुमशक्यो बाहुरप्यस्य सः दुर्जय इति निरुक्तेः न ते सव्यमित्यादिना सूचनाद् **दुर्जयमूर्तिरत्र** ॥ ७८७ ॥

॥ ॐ दुरतिक्रमाय नमः ॥

**न परिबाधो हरिवो गविष्टिषु। आ त्वा गोभिरिव व्रजं**
**गीर्भिर्ऋणोम्यद्रिवः। आ स्मा कामं जरितुरा मनः पृण ॥ ७८८ ॥**

हे हरिवः अद्रिवः परिबाधः परिबाधकराश्च ते न सन्ति। गविष्टिषु गवामन्वषेणविषये निरोद्धारो न सन्तीत्यर्थः। व्रजं गोष्ठं गोभिरिव त्वां गीर्भिः आ समन्ताद् ऋणोमि संगमयामि। आ तस्मात् जरितुः स्तोतुः कामं काम्यं दातुं मनः आ पृण स्म कुरु।

अनेन दुःखेनाप्यत्येतुमशक्यः क्रमः शक्तिर्यस्य स दुरतिक्रम इति निरुक्तेः न परिबाध इत्यनेन सूचनाद् **दुरतिक्रममूर्तिरत्र** ॥ ७८८ ॥

॥ ॐ दुर्लभाय नमः ॥

**विश्वानि विश्वमनसो धिया नो वृत्रहन्तम। उग्र**
**प्रणेतरधि षू वसो गहि। वयं ते अस्य वृत्रहन् ॥ ७८९ ॥**

हे वृत्रहन्तम प्रणेतः वसो वृत्रहन् उग्र इन्द्र, विश्वस्मिन् पूर्णे भगवति मनो येषां ते विश्वमनसः, तान् नः अस्मानधिकृत्य धिया कर्मणा सन्तुष्टस्त्वं विश्वानि समस्तानि कामानि दातुं सु गहि आगहि। वयं चास्य ते तव दासाः।

अनेन दुःखेन लब्धुं योग्यो दुर्लभः, बह्वायासेन यज्ञादिकर्मणा लभ्यो नाल्पेनेति निरुक्तेः विश्वमनसो धियेत्यनेन सूचनाद् दुर्लभमूर्तिरत्र ॥ ७८९ ॥

॥ ॐ दुर्गमाय नमः ॥

**विद्याम शूर नव्यसः। वसोः स्पार्हस्य पुरुहूत**
**राधसः। इन्द्र यथा ह्यस्ति तेऽपरीतं नृतो शवः ॥ ७९० ॥**

हे शूर पुरुहूत इन्द्र नव्यसः स्तुत्यस्य स्पार्हस्य स्पृहणीयस्य वसोर्द्रविणस्य राधसः संसिद्धेश्च, अत्र द्वितीयार्थे षष्ठ्यः, वयं ते तव सकाशात् विद्याम लभेम। नॄन् तनोतीति नृतुः। हे नृतो अशेषप्राण्युत्पादक अपरीतमपरिमितं शवः सुखं ते अस्ति हि। इतं गमनं, परिगतं इतं गमनं यस्मिन् तत् परीतं दुर्गममिति वसुविशेषणं वा।

अनेन दुः दुस्सम्पाद्यमपि वसु गमयति प्रापयतीति दुर्गम इति निरुक्तेः स्पार्हस्य वसोरित्यनेन सूचनाद् दुर्गममूर्तिरत्र ॥ ७९० ॥

॥ ॐ दुर्गाय नमः ॥

**अमृक्ता रातिः पुरुहूत दाशुषे। आ वृषस्व महामह महे**
**नृतम राधसे। दृळ्हश्चिद् दृह्य मघवन् मघत्तये ॥ ७९१ ॥**

हे पुरुहूत महामह महामहिमन् नृतम नेतृतम मघवन् इन्द्र अमृक्ता अनश्वरा रातिः रक्षणं दाशुषे मह्यमस्तु। किञ्च महे महत्यै राधसे संसिद्ध्यै आ समन्ताद् वृषस्व कामान् वर्षस्व। किञ्च मघत्तये द्रविणादिप्राप्त्यर्थं दृळ्हः चिद् दृढानपि प्रबलानपि दृह्य, द्रुह जिघांसायाम्, हन।

अनेन दुः दुरासदानतिप्रबलान् शत्रून् जिघांसया गच्छतीति दुर्ग इति निरुक्तेः दृळ्हश्चिदित्यनेन सूचनाद् दुर्गमूर्तिरत्र ॥ ७९१ ॥

॥ ॐ दुरावासाय नमः ॥

**नू अन्यत्रा चिदद्रिवस्त्वं नो जग्मुराशसः । मघव-**
**ञ्छग्धि तव तन्न ऊतिभिः । नह्यङ्ग नृतो त्वदन्यम् ॥ ७९२ ॥**

हे मघवन् अद्रिवः नः अस्माकमाशसः आशाः कांक्षाः त्वदन्यत्र त्वत्तोऽन्यत्र नु न जग्मुः न गच्छन्ति । त्वत्तोऽन्यत्र अभीष्टप्राप्त्याकांक्षा नास्ति । तत् तस्मात् तव ऊतिभिः त्वद्विषयस्तोत्रैः प्रसन्नस्त्वं नः अस्मभ्यं तदभीष्टजातं शग्धि देहि । हे अङ्ग नृतो त्वदन्यं न विन्दामीति (उत्तरेण संवन्धः) ।

अनेन स्तुतिभिरेवावासनीयः प्रसन्नीकर्तव्यो न तु सुखेनेति दुरावास इति निरुक्तेः ऊतिभिः शग्धीत्यनेन सूचनाद् दुरावासमूर्तिरत्र ॥ ७९२ ॥

॥ ॐ दुरारिघ्ने नमः ॥

**विन्दामि राधसे । राये द्युम्नाय शवसे च गिर्वणः ।**
**एन्दुमिन्द्राय सिञ्चत पिवाति सोम्यं मधु ॥ ७९३ ॥**

हे गिर्वणः राधसे संसिद्ध्यै द्युम्नाय सुखाय राये द्रविणाय शवसे कीर्त्यै वलाय, एतानि दातुम्, त्वदन्यं नहि विन्दामि । हे जनाः इन्दुं सोममिन्द्राय आ सिञ्चत दत्त । स इन्द्रः सोम्यं सोमसंबन्धिसोमरसं पिवति, लेट्, पिवेत् ।

अनेन दुःपूर्वाद् ऋ गतावित्यस्माण्ण्यन्ताद् अच इरिति इप्रत्ययः । दुरारिः संसिद्धेः प्रापकः, तं हन्ति निराकरोतीति दुरारिहेति निरुक्तेः राधसेऽन्यं न विन्दामीत्यनेन सूचनाद् दुरारिहमूर्तिरत्र ॥ ७९३ ॥

॥ ॐ शुभाङ्गाय नमः ॥

**प्र राधसा चोदयाते महित्वना । उपो हरीणां पतिं**
**दक्षं पृञ्चन्तमब्रवम् । नूनं श्रुधि स्तुवतो अश्व्यस्य ॥ ७९४ ॥**

हे इन्द्र महित्वना महिम्ना राधसा संसिद्ध्या च प्रचोदयते शुभां बुद्धिं प्रेरयतु (भवान्) । किञ्च

हरीणामश्वानां पतिं स्वामिनं दक्षं समर्थं यजमानं वा पृश्चन्तं सम्पर्किणं सन्निहितं त्वां उपो अव्रवं सम्यगस्तुवम्। त्वं च अश्व्यस्य अश्वादिकमिच्छतः स्तुवतो मम हवं श्रुधि। नूनं निश्चितम्।

अनेन अगेर्गत्यर्थादन्तर्भावितण्यर्थात् पचाद्यच् नुमागमः। शुभ दीप्तावित्यत इगुपधलक्षणः कः। शुभां दीप्यमानां बुद्धिमङ्गयति प्रेरयतीति शुभाङ्ग इति निरुक्तेः प्र राधसा चोदयाते इत्यनेन सूचनात् **शुभाङ्गमूर्तिरत्र** ॥ ७९४ ॥

**॥ ॐ लोकसारङ्गाय नमः ॥**

**न ह्यङ्ग पुरा चन जज्ञे वीरतरस्त्वत्। नकी राया**
**नैवथा न भन्दना। एदु मध्वो मदिन्तरं सिञ्च वा ॥ ७९५ ॥**

हे अङ्ग पुरा चन पूर्वमपि त्वत् त्वत्समो वीरतरो न जज्ञे न जातः। हि किञ्च राया द्रविणेन त्वत्समो भन्दना, अर्चतिकर्मायम्, पूज्यश्च नास्ति। किञ्च हे अध्वर्यो मध्वः सोमस्य अन्धसः चरुपुरोडाशादेरन्नस्य वा मदिन्तरं सारतरं आसिञ्च सम्यग् देहि।

अनेन लोकृ दर्शने इत्यतः पचाद्यच्। लोको ज्ञानी अध्वर्युः। सृ गतावित्यास्मात् सृस्थिरेव्याधिमत्स्यबलेष्विति वक्तव्यमिति (?) घञ्। सारो बले स्थिरांशे चेत्युक्तेः सारः स्थिरांशः। गम्लृ गतावित्यस्मात् डः। लोकेन अध्वर्युणा दत्तं सारं सोमरसं गच्छति प्राप्नोतीति लोकसारङ्गः। अरुर्द्विषदजन्तस्येति मुम्। यद्वा सारस्य अङ्गः प्रापकः सारङ्गः। शकन्ध्वादित्वात् पररूपम्। इति निरुक्तेः मदिन्तरं सिञ्चेत्यनेन सूचनात् **लोकसारङ्गमूर्तिरत्र** ॥ ७९५ ॥

**॥ ॐ सुतन्तवे नमः ॥**

**अध्वर्यो अन्धसः। एवा हि वीरः स्तवते सदावृधः।**
**इन्द्र स्थातर्हरीणां नकिष्टे पूर्व्यस्तुतिम्। उदानंश शवसा ॥ ७९६ ॥**

अयं वीरः सदावृधः सदा व्याप्तः एवा हि एव हि। एवं स्तवते त्वरयति। हरीणामश्वानामिन्द्रियाणां वा हे स्थातः अधिष्ठातः हे इन्द्र ते त्वद्विषयिणीं पूर्व्यस्तुतिं पूर्वकालीनस्तुतिं उत कोपि नकिः नैव आनंश प्राप। शवसा सुखेन सह।

अनेन तनु विस्तारे इत्यतः सितनिगमीत्यादिना तुन्। सु सम्यक् सर्वकालेषु तनोति विस्तारं प्राप्नोतीति सुतन्तुरिति निरुक्तेः सदावृध इत्यनेन सूचनात् **सुतन्तुमूर्तिरत्र** ॥ ७९६ ॥

**॥ ॐ तन्तुवर्धनाय नमः ॥**

**न भन्दना। तं वो वाजानां पतिमहूमहि श्रवस्यवः।**
**अप्रायुभिर्यज्ञेभिर्वावृधेन्यम्। एतो न्विन्द्रम्॥ ७९७॥**

भन्दन इन्द्रादन्यः पूज्यो नास्तीति संबन्धः। हे जनाः वो वाजानां युष्मदीयानामन्नानां पतिं स्वामिनं, प्रकर्षेण आयुर्गमनं विच्छेदो येषां ते प्रायवः न प्रायवः अप्रायवः अविच्छिन्नाः, तैरप्रायुभिरविच्छिन्नैः यज्ञेभिर्यज्ञैः ववृधेन्यं, वृधेः कर्मणि एन्यप्रत्ययः, वर्धनीयं तमिन्द्रं नु इदानीं श्रवस्यवः अन्नमिच्छन्तो वयं सर्वे अहूमहि आह्वयामः। तदर्थं यूयमपि सहायार्थम् एतो एतैव आगच्छतैव।

अनेन तन्यते अविच्छिन्नतया प्रवर्तते इति तन्तुर्यज्ञः। तैर्यज्ञैर्वर्धत इति तन्तुवर्धन इति निरुक्तेः अप्रायुभिर्यज्ञेभिर्वावृधेन्यमित्यनेन सूचनात् **तन्तुवर्धनमूर्तिरत्र** ॥ ७९७ ॥

**॥ ॐ इन्द्रकर्मणे नमः ॥**

**स्तवाम सखायः स्तोम्यं नरम्। कृष्टीर्यो विश्वा अभ्यस्त्येक**
**इत्। अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः॥ ७९८॥**

हे जनाः य इन्द्रः विश्वाः समस्ताः कृष्टीः प्रजाः एक इत् एव अभ्यस्ति अन्तर्यामितया नि-विष्टोऽस्ति। तं नरं स्तोम्यं स्तुत्यमिन्द्रं वयं स्तवाम स्तुमः। यूयं च सखायः सन्तः, गां रुणद्धीति गोरुधः, रुधेः कर्तरि इगुपधलक्षणः कः, असुरसमूहः, तद्विरोधी अगोरुधः, तस्मै गविषे गा इच्छते द्युक्षाय सुखास्थितायेन्द्राय दस्म्यं पापानां भेदकं वचः स्तुतिरूपं वेदवाक्यं वोचत पठत (इत्युत्तरेण) संबन्धः।

अनेनेदं प्राणिजातमन्तर्यामितया द्रवतीतीन्द्रः। अन्तर्यामितया स्थितः स्वयं कर्माणि करोतीति कर्मा, करोतेर्मनिन्। इन्द्रश्चासौ कर्मा चेतीन्द्रकर्मा। अथ वा इदमुद्दिश्य च द्रुतेरित्युक्तेः इन्द्रं भोगसाधनं कर्म यस्मात् स इन्द्रकर्मा। अथ वा इन्द्रस्य प्रसिद्धस्य कर्मेव कर्म यस्य सः इन्द्रकर्मा। इति निरुक्तेः कृष्टीर्यो विश्वा अभ्यस्तीत्यनेन सूचनाद् **इन्द्रकर्ममूर्तिरत्र** ॥ ७९८ ॥

॥ ॐ महाकर्मणे नमः ॥

घृतात् स्वादीयो मधुनश्च वोचत । यस्यामितानि वीर्या
न राधः पर्येतवे । ज्योतिर्न विश्वमभ्यस्ति दक्षिणा ॥ ७९९ ॥

घृतात् सर्पिषो मधुनश्च माक्षिकरसादपि स्वादीयः स्वादुतमं स्तोत्रं वोचतेति संबन्धः । यस्येन्द्रस्य वीर्या वीर्याणि वरणीयानि कर्माणि अपरिमितानि वर्तन्ते तस्येन्द्रस्य पर्येतवे प्राप्यं राधः सिद्धिर्नास्ति । सर्वमपि राधः प्राप्तमेव न प्राप्तव्यं किञ्चिदस्ति । एवं ज्योतिः प्रकाशो ज्ञानं च पर्येतवे नास्ति प्राप्तव्यं नास्ति । अत एव विश्वं समस्तं जगत् अभि सर्वतः दक्षिणा दक्षिणतोऽस्ति । नत्वपसव्येन । प्रदक्षिणीकरोतीति यावत् ।

अनेन महान्ति अपरिमितानि कर्माणि ज्योतींषि यस्य स महाकर्मेति निरुक्तेः यस्यामितानि वीर्येत्यनेन सूचनात् **महाकर्ममूर्तिरत्र** ॥ ७९९ ॥

॥ ॐ कृतकर्मणे नमः ॥

स्तुहीन्द्र व्यश्ववदनूर्मिं वाजिनं यमम् । अर्यो गयं मंहमानं
वि दाशुषे । एवा नूनमुप स्तुहि वैयश्व ॥ ८०० ॥

हे वैयश्व वैयश्वनामकसाधुजन[१] अनूर्मिमचञ्चलं वाजिनं युद्धवन्तं भोगवन्तं वा यमं नियन्तारं अर्यः अर्यं स्वामिनं गयं गृहं दाशुषे यजमानाय मंहमानं ददतमिन्द्रं व्यश्ववत् व्यश्वनामकः कश्चिद् भक्तः तद्वत् विस्तुहि विशेषेण स्तुहि । एव एवमेव नूनं नित्यं स्तुहि । न कदाचिद् विस्मरणीयमिति तात्पर्यम् ।

अनेन भक्तार्थं कृतं युद्धादिकर्म येन सः कृतकर्मेति निरुक्तेः वाजिनमित्यनेन सूचनात् **कृतकर्ममूर्तिरत्र** ॥ ८०० ॥

॥ इति श्रीवृहतीसहस्रपारावारे अष्टमः खण्डः समाप्तः ॥

---

१. स्वात्मानं प्रति सम्बोधनमिदं वैयश्व ।

॥ ॐ कृतागमाय नमः ॥

**दशमं नवम् । सुविद्वांसं चर्कृत्यं चरणीनाम् । वेत्था हि**
**निर्ऋतीनां वज्रहस्त परिवृजम् । अहरहः ॥ ८०१ ॥**

हे वैयश्व नवं स्तुत्यं दशममेतन्नामानं चरणीनां मध्ये सुविद्वांसमतिज्ञानिनं चर्कृत्यं कुर्वाणमिन्द्रं स्तुहि। हे वज्रहस्त निर्ऋतीनां हिंसकानां राक्षसानां परितो व्रजन्त्येभिरिति परिवृजः पदानि, तत्समूहः परिवृजः, तं परिवृजमहरहः प्रतिदिनं वेत्थ हि जानासि हि।

अनेन आ समन्तात् गच्छति जानातीत्यागमो विद्वान्। कृत आगमो येन सः कृतागम इति निरुक्तेः सुविद्वांसं चर्कृत्यमित्यनेन सूचनात् **कृतागममूर्तिरत्र** ॥ ८०१ ॥

॥ ॐ उद्भवाय नमः ॥

**शुन्ध्युः परिपदामिव । तदिन्द्राव आ भर येना दंसिष्ठ**
**कृत्वने । द्विता कुत्साय शिश्नथो नि चोदय ॥ ८०२ ॥**

हे इन्द्र शुन्ध्युः शोधकः ग्रामरक्षकः परि परितः पदःपादा येषां ते सर्वतः सञ्चारिणः परिपदश्चोराः, तेषां परिपदां चोराणामिव परिव्रजं राक्षसानां समूहं वेत्थेति (पूर्वेण) संबन्धः। येन कारणेन कृत्वने त्वत्पूजारूपकर्मकर्त्रे कुत्साय कुत्सनार्थं द्विता शत्रूणां द्वैधीभावं प्रापयन् दंसिष्ठ दंसितो भवसि। शिश्नथः, वधकर्मायम्, शत्रून् हन्सि च। तत् तेन कारणेनास्मभ्यं अवो रक्षणम् आ भर। निचोदय प्रेरय च, इतरान् देवान् अस्मद्रक्षणार्थमिति शेषः।

अनेन भवतीति भवः सत्ता। ऋदोरप्। उद्गतो भवः शत्रूणां सत्ता येन स उद्भवः, उत्कृष्टो भवः सत्ता रक्षणं भक्तानां येनेति वा निरुक्तेः दंसिष्ठ शिश्नथ इत्यनेन भव आ भरेत्यनेन च सूचनाद् **उद्भवमूर्तिरत्र** ॥ ८०२ ॥

॥ ॐ सुन्दराय नमः ॥

**तमु त्वा नूनमीमहे नव्यं दंसिष्ठ संन्यसे । स त्वं नो विश्वा**
**अभिमातीः सक्षणिः । य ऋक्षादंहसो मुचद् यः ॥ ८०३ ॥**

हे इन्द्र यस्त्वं संन्यसे शत्रूणां निरसनाय दंसिष्ठ दंसितो भवसि स त्वं विश्वाः समस्ताः अभिमातीः अभिमानान् नः अस्माकं सक्षणिः संगमयितासि । य इन्द्रः ऋक्षात् ऋक्षवत् क्रूरात् अंहसः पापात् मुचत् अमोचयत्, नव्यं स्तुत्यं तं त्वां शरणमीमहे नूनम् ।

अनेन दृ विदारणे इत्यतः शस् गुणः । सु समीचीनं सुखादिकमसुरेषु विदारयतीति सुन्दरः । अरुर्द्विषदजन्तस्येति मुम् । इति निरुक्तेः दंसिष्ठ संन्यसे इत्यनेन सूचनात् सुन्दरमूर्तिरत्र ॥ ८०३ ॥

॥ ॐ सुन्दाय नमः ॥

**[1]वार्यात् सप्त सिन्धुषु । वधर्दासस्य तुविनृम्ण नीनमः ।**
**य एक इद् विदयते वसु मर्ताय दाशुषे ॥ ८०४ ॥**

यो वा यश्चेन्द्रः सप्त सिन्धुषु आर्यात्, ऋ गतौ, सञ्चरति, यश्च दासस्य हिंसकस्य वधः वधम् आर्यात् अकरोत्, हे तुविनृम्ण पूर्णसुख तं त्वां वयं नीनमो नमस्कुर्मः । य इन्द्रः एक इत् एक एव मर्ताय मर्त्याय दाशुषे यजमानाय वसु द्रविणं विदयते विशेषेण ददाति ।

अनेन दाण् दाने इत्यतः कः । सुष्ठुपूजासुखेषु सुरित्युक्तेः सुं समीचीनं वसु ददातीति सुन्दः, द्वितीयाया अलुक् । यद्वा वाहुलिकः शस्, पूर्ववदुपपदस्य मुमागम इति निरुक्तेः य एक वि दयते वस्वित्यनेन सूचनात् सुन्दमूर्तिरत्र ॥ ८०४ ॥

॥ ॐ रत्ननाभाय नमः ॥

**ईशानो अप्रतिष्कुत इन्द्रो अङ्ग । कदा मर्तमराधसं**
**पदा क्षुम्पमिव स्फुरत् । कदा नः शुश्रवद् गिरः ॥ ८०५ ॥**

ईशानः सर्वस्वामी इन्द्रः अप्रतिष्कुतः केनाप्यप्रतिगतः । प्रकृत्यान्तःपदमव्यपर इति शास्त्रात् सन्ध्यभावः । एवमन्यत्रापि । अङ्ग, सखिसंबोधनम्, हे सखे अयमिन्द्रः अराधसं श्रेयोरहितं मर्तं मनुष्यं, क्षुं क्षितिं पातीति क्षुम्पो राजा, क्षुम्पं राजानमिव पदा सम्पदा कदा स्फुरत् स्पृशेत् । कदा वा नो गिरः शुश्रवत् सम्यगतिशयेन शृणुयात् ।

१. ऋग्वेद १-८४-७, गोतमो राहूगणः । एतदादितृचः शंसनीयः । एतेषु गायत्रीमन्त्रेषु उष्णिक्त्वं सम्पाद्य बृहती सम्पादनीया । तत्प्रकार आरण्यके दर्शितः । एवमुत्तरतृचद्वयेऽपि ।

अनेन रमु क्रीडायामित्यतो रमेस्तचेति नक्प्रत्ययः, धातोरन्त्यस्य तादेशः । सुखसाधनत्वाद् रत्नं स्तुतिः । भा दीप्तावित्यतः कः । भाति जानातीति भः । न भः अभः, स न भवतीति नाभः अतिशयेन श्रोता । रत्नस्य स्तुतेः नाभः श्रोता रत्ननाभ इति निरुक्तेः कदा नः शुश्रवद् गिर इत्यनेन सूचनाद् **रत्ननाभमूर्तिरत्र** ॥ ८०५॥

**॥ ॐ सुलोचनाय नमः ॥**

**इन्द्रो अङ्ग । यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आ विवासति ।**
**उग्रं तत् पत्यते शव इन्द्रो अङ्ग । [१]आ याह्यद्रिभिः सुतम् ॥ ८०६ ॥**

हे अङ्ग इन्द्रः इन्द्र बहुभ्यो जनेभ्यः बहूनां जनानां मध्ये कश्चिज्जनः त्वा त्वां प्रति स्तुतवान् त्वां स्वगृहे आविवासति च स जनः उग्रं उद्गीर्णं शवः सुखं पत्यते प्राप्नोति । तत् तस्मात् हे अङ्ग सखे इन्द्रः ऐश्वर्यवान् भवति ।

अनेन लोचृ दर्शने इत्यस्मात् ण्यर्थात् कर्तरि ल्युः, लोचयति दर्शयति अनुभावयतीति लोचनः । सुशब्दः पूर्ववत् समीचीनवस्तुवाचकः । सु समीचीनं वस्तु शवः लोचयति अनुभावयतीति सुलोचन इति निरुक्तेः पत्यते शव इत्यनेन सूचनात् **सुलोचनमूर्तिरत्र** ॥ ८०६ ॥

**॥ ॐ अर्काय नमः ॥**

**सुतं सोमं सोमपते पिब । वृषन्निन्द्र वृषभिर्वृत्रहन्तम ।**
**वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः ॥ ८०७ ॥**

हे सोमपते अद्रिभिः पाषाणैः सुतं सोमं पातुमायाहि । आगत्य च हे वृषन् श्रेष्ठ वृत्रहन्तम इन्द्र वृषभिः श्रेष्ठैः परिवारैः सह सोमं पिब । ग्रावा सोमाभिषवपाषाणो वृषा सम्यक् स्तोत्रैः संस्तुतः । मदोपि वृषा, मदो हर्षः, त्वदीयप्रीतिरपि वृषा पूज्यः । अयं सुतः सोमश्च वृषा श्रेष्ठः ।

अनेन अर्च पूजायामित्यतः कृदाधारार्चिकलिभ्यः क इति कप्रत्ययः । कस्येत्संज्ञाभावः, धातुचकारस्य कुत्वम् । अर्कः पूज्यः मदः सोमो वा अस्येत्यर्क इति निरुक्तेः वृषा मदो वृषा सोम इत्यनेन सूचनाद् **अर्कमूर्तिरत्र** ॥ ८०७ ॥

---

१. ऋग्वेद ५-४०-१, एतदादितृचः शंसनीयः । ामोऽत्रिः ।

॥ ॐ वाजसनाय नमः ॥

**वृषन्निन्द्र वृषभिर्वृत्रहन्तम । वृषा त्वा वृषणं हुवे वज्रिन्**
**चित्राभिरूतिभिः । वृषन्निन्द्र वृषभिः ॥ ८०८ ॥**

हे वृत्रहन्तम वृषन् इन्द्र वृषभिः श्रेष्ठैर्मन्त्रैः वृषणं वर्षितारं त्वां वृषा श्रेष्ठोऽहं हुवे आह्वयामि। हे वज्रिन् वृषन् इन्द्र विश्वाभिरूतिभिः रक्षाभिः सह वृषभिः मरुद्भिः सह आयाहीति सम्बन्धः।

अनेन वाजमन्नं सनोति ददातीति वाजसन इति निरुक्तेः चित्राभिरूतिभिरित्यनेन सूचनाद् **वाजसनमूर्तिरत्र** ॥ ८०८ ॥

॥ ॐ शृङ्गिणे नमः ॥

**वृत्रहन्तम । [१]यस्य त्यच्छम्बरं मदे दिवोदासाय**
**रन्धयः । अयं स सोम इन्द्र ते सुतः पिब ॥ ८०९ ॥**

हे वृत्रहन्तम इन्द्र यस्य सोमस्य पानेन मदे हर्षे जाते सति दिवोदासाय दिवोदासनामकभक्तहितार्थं त्यत् त्यं प्रसिद्धं शम्बरं असुरं अरन्धयः संहृतवानसि। यद्वा दिवोदासाय दिवोदासोपद्रवाय परितः परीतं त्यत् तत् शम्बरमुदकम् अरन्धयः तत्सेतुं खण्डितवानसि। सोयं सोमः ते तव पानार्थं सुतोऽस्ति, तं पिब।

अनेन शॄ हिंसायामित्यतो गन्, शृणाति शत्रून् हिनस्तीति शृङ्गम्, स एव शृङ्गी, स्वार्थे इनिः। अथवा शृणातेर्भावे गन्। शृङ्गं हिंसनं शत्रूणामस्यास्तीति निरुक्तेः शम्बरं रन्धय इत्यनेन सूचनात् **शृङ्गिमूर्तिरत्र** ॥ ८०९ ॥

॥ ॐ जयन्ताय नमः ॥

**यस्य तीव्रसुतं मदं मध्यमन्तं च रक्षसे। अयं स सोम**
**इन्द्र ते सुतः पिब। यस्य गा अन्तरश्मनो मदे ॥ ८१० ॥**

हे इन्द्र यस्य सोमस्य अवयवभूतं तीव्रसुतं तीव्रं तीक्ष्णं सुतमभिषवो यस्य तं मदं मदकरं सोमरसं

१. ऋग्वेद ६-४३-१, एतदादितृचः शंसनीयः। बार्हस्पत्यो भरद्वाजः।

मध्यं माध्यन्दिनसवनगतं अन्तं तृतीयसवनगतं च रक्षसे रक्षसि। सोयं सोमः त्वदर्थमभिषुतः तं पिब। यस्य सोमस्य पानेन मदे हर्षे जाते सति अश्मनो वलासुरेण पिहितस्य पर्वतस्य अन्तः गुहायां स्थिता गा अवासृजः निरगमयः (इत्युत्तरेण संबन्धः)।

अनेन जि जये इत्यस्मात् तृभूवसिवहीत्यादिना.......[1] सूचनात् **जयन्तमूर्तिरत्र**॥ ८१०॥

॥ ॐ सर्वविज्जयिने नमः॥

**दृळ्हा अवासृजः। अयं स सोम इन्द्र ते सुतः पिब।**

**[2]यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्। स्तोता मे॥ ८११॥**

दृळ्हा दृढपिधाना अपि गाः पणिभिरपहृताः अवासृजः वलस्य बन्धनाद् व्यसृज इति सम्बन्धः। यद्वा दृळ्हाः सत्वरजस्तमआत्मिकाः भक्तानामावृतीः अवासृजो व्यनाशयः। हे इन्द्र सोयं सोमः ते त्वदर्थं सुतः, तं सोमं पिब। हे इन्द्र वस्वः वसोः सर्वजगतः यथा एक इत् एक एव त्वमीशिता स्वामी तथाहमपि ते प्रसादाद् यथायोग्यम् ईशीय स्वामी भवेयम्। मे मदीयः स्तोता अपि स्वामी भूयात्।

अनेन सर्वं विन्दते लभत इति सर्ववित् स्वामी। तं जयति करोतीति सर्वविज्जयः भगवत्प्रसादः। सोस्यास्तीति सर्वविज्जयी। स्वभक्तान् सर्वस्वामिनः कुर्वत्प्रसादवानिति निरुक्तेः ईशीय वस्व इत्यनेन सूचनात् **सर्वविज्जयिमूर्तिरत्र**॥ ८११॥

॥ ॐ सुवर्णविन्दवे नमः॥

**गोषखा स्यात्। शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे।**

**यदहं गोपतिः स्याम्। पेनुष्ट इन्द्र सूनृता॥ ८१२॥**

---

१. अत्र सर्वेष्वपि कोशेषु ग्रन्थपातो दृश्यते। तृभूवसिवहीत्यादिना जि जये इत्यतः झच् प्रत्ययो भवति पिच्च। जयतीति जयन्त इति निरुक्तेः रक्षसे गा अवासृज इत्यनेन सूचनादित्युपस्कृत्यानुसन्धेयमिति भाति। महान्तः प्रमाणम्।

२. ऋग्वेद ८-१४, गोषूक्त्यश्वसूक्तिनौ काण्वायनौ। इदमपि सूक्तं गायत्रीछन्दस्कम्। अतः पूर्ववदुष्णिक्त्वमनुसन्धाय बृहती सम्पादनीया।

हे शचीपते ते स्तोता गोसखा स्यात् गोमान् स्यात् । यद् यस्मात् तस्मात् अहं त्वत्प्रसादाद् गोपतिर्गोमान् स्याम् मनीषिणे सर्वज्ञाय अस्मै इन्द्राय तुभ्यं दित्सेयं चरुपुरोडाशादिकं द्रव्यं सोमं च दास्मामि । त्वदीयं माहात्म्यं शिष्येभ्यः शिक्षेयम् । हे इन्द्र ते त्वद्विषयिणी स्तुतिरूपा वाणी धेनुः भक्तानामभीष्टपोषिका ।

अनेन सु समीचीनो वर्णो रूपं यस्य तत् सुवर्णं चरुपुरोडाशादिद्रव्यं तद् विन्दते लभत इति सुवर्णबिन्दुः, बादेशो विन्दतेरुकारप्रत्ययश्च । यद्वा सु समीचीना वर्णा अक्षराणि यस्याः सा सुवर्णा वेदवाणी, तां विन्दत इति सुवर्णबिन्दुः इति निरुक्तेः दित्सेयमस्मा इत्यनेन धेनुष्ट इन्द्र सूनृतेत्यनेन च सूचनात् **सुवर्णविन्दुमूर्तिरत्र** ॥ ८१२ ॥

॥ ॐ अक्षोभ्याय नमः ॥

**यजमानाय सुन्वते । गामश्वं पिप्युषी दुहे । न ते वर्तास्ति**
**राधस इन्द्र देवो न मर्त्यः । यद् दित्ससि स्तुतो मघम् ॥ ८१३ ॥**

हे इन्द्र ते सूनृता त्वद्विषयिणी स्तुतिः सुन्वते यजमानाय पिप्युषी रक्षका सती गामश्वं च दुहे पूरयति । हे इन्द्र जनैः स्तुतस्त्वं भक्ताय यन्मघं द्रविणादिकं दित्ससि दातुमिच्छसि तस्य ते त्वदीयस्य राधसो दानस्य वर्ता प्रवर्तकः अन्यो देवो मर्त्यो वा नास्ति । त्वद्वद् दाता कोपि नास्तीति यावत् ।

अनेन क्षुभ संचलने इत्यस्मात् पोरदुपधादिति यत्प्रत्ययो गुणश्च । केनापि क्षोभ्यः संचलनीयो न भवतीत्यक्षोभ्य इति निरुक्तेः न ते वर्तास्ति राधस इत्यनेन सूचनाद् **अक्षोभ्यमूर्तिरत्र** ॥ ८१३ ॥

॥ ॐ सर्ववागीश्वरेश्वराय नमः ॥

**यज्ञ इन्द्रमवर्धयद् यद् भूमिं व्यवर्तयत् । चक्राण**
**ओपशं दिवि । वावृधानस्य ते वयं विश्वा धनानि ॥ ८१४ ॥**

य इन्द्रो दिवि स्थित एव जनानाम् ओपशम् आ समन्ताद् उपशमं दुःखनिवृत्तिं सुखं च चक्राणः कुर्वाणः भूमिं भूलोकं व्यवर्तयत् निर्मितवान् । तत् तस्माद् भूमौ प्रवर्तमानो यज्ञ इन्द्रमवर्धयत् व्यञ्जयति । वावृधानस्य यज्ञैर्वर्धमानस्य ते तव सकाशाद् विश्वा विश्वानि धनानि वयं प्राप्नुमः ।

अनेन सर्ववाचो विधायकत्वेन यस्मिन् कर्मणि तत् सर्ववाक् भगवत्पूजात्मकं कर्म, तस्येश्वरः

सर्ववागीश्वरः, भूम्यादिसर्वलोकेश्वरश्च । सर्ववागीश्वरश्चासावीश्वरश्च सर्ववागीश्वरेश्वरः, वेदविहितक्रियाव्यंग्यो भूम्यादिलोकनिर्माता चेति निरुक्तेः यज्ञ इन्द्रमवर्धयद् भूमिं व्यवर्तयदित्यनेन सूचनात् **सर्ववागीश्वरेश्वरमूर्तिरत्र** ॥ ८१४ ॥

**॥ ॐ महाहृदाय नमः ॥**

**जिग्युषः । ऊतिमिन्द्रा वृणीमहे । व्यन्तरिक्षमतिरन्**
**मदे सोमस्य रोचना । इन्द्रो यदभिनद् वलम् ॥ ८१५ ॥**

हे इन्द्र जिग्युषः शत्रुभ्यो धनान्यपहर्तुस्तव सकाशाद् वयमूतिं रक्षां आवृणीमहे । अयमिन्द्रः सोमस्य पानेन मदे हर्षे जाते सति अन्तरिक्षं व्यतिरत् विशेषेण तीर्णवान् । अन्तरिक्षादप्यधिकमवर्धतेत्यर्थः । न केवलमन्तरिक्षादेव किन्तु रोचना प्रकाशशीलानि स्वर्गादीन्यपि व्यतरत् । यद् यस्मादेवं तस्माद् वलं वलनामकासुरं अभिनद् बिभेद च ।

अनेन महान्तमन्तरिक्षादिकं ह्रादते अतिक्रामतीति महाह्रदः । ह्राद अव्यक्ते शब्दे इत्यतः पचाद्यच्, पृषोदरादित्वाद् धातोर्ह्रस्वता उपपदान्त्यस्य आकारादेशश्च । इति निरुक्तेः व्यन्तरिक्षमतिरदित्यादिना सूचनात् **महाह्रदमूर्तिरत्र** ॥ ८१५ ॥

**॥ ॐ महागर्ताय नमः ॥**

**उद् गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः । अर्वाञ्चं**
**नुनुदे वलम् । इन्द्रेण रोचना दिवो दृळ्हानि ॥ ८१६ ॥**

वलासुरवधमेव किञ्चित् प्रकाशयन् माहात्म्यान्तरमाह । अयमिन्द्रः अङ्गिरोभ्यः तन्नामभ्यो ऋषिभ्यो हितार्थं गुहा गुहाः वलासुरेण गूहिताः सतीः गाः आविष्कृण्वन् उदाजत्, अज गतिक्षेपणयोः, बहिर्गमयामास । अर्वाञ्चं निकृष्टवलमसुरं नुनुदे संहतवान् । इन्द्रेण इन्द्रः रोचना रोचमानस्य दिवः स्वर्गस्य दृळ्हानि दैत्यकृतान्यावरणानि नुनुदे नाशितवान् ।

अनेन गॄ निगरणे इत्यतः कर्तरि तप्रत्ययो गुणश्च, गिरति दैत्यकृतान्यावरणानीति गर्तः । महानतिशयितो गर्तो महागर्त इति निरुक्तेः रोचना दिवो दृळ्हानि नुनुदे इत्यनेन सूचनात् **महागर्तमूर्तिरत्र** ॥ ८१६ ॥

॥ ॐ महाभूताय नमः ॥

**दंहितानि च । स्थिराणि न पराणुदे । अपामूर्मिर्मदन्निव**
**स्तोम इन्द्राजिरायते । वि ते मदा अराजिषुः ॥ ८१७ ॥**

अयमिन्द्रः स्थिराण्यचञ्चलानि दंहितानि च हिंसारूपाणि दैत्यकृतकर्माणि ननु इदानीं पराणुदे नाशितवान् । हे इन्द्र अपामूर्मिः तरङ्गविशेषः मदन्निव उत्साहयन्निव स्तोमः स्तोत्रविशेषः त्वाम् अजिरायते उत्साहयुक्तं करोति । ते त्वयि स्थिता मदाः उत्साहविशेषाः वि विशेषेण प्राणिनामभीष्टानि अराजिषुः दद्युः ।

अनेन भू सत्तायामित्यतः क्तः, प्रभूतः उत्कृष्टो मदः । महान्तः अभीष्टप्रदा भूता मदा यस्य स महाभूत इति निरुक्तेः वि ते मदा अराजिषुरित्यनेन सूचनात् महाभूतमूर्तिरत्र ॥ ८१७ ॥

॥ ॐ महानिधये नमः ॥

**त्वं हि स्तोमवर्धन इन्द्रास्युक्थवर्धनः । स्तोतॄणामुत**
**भद्रकृत् । इन्द्रमित् केशिना हरी सोमपेयाय वक्षतः ॥ ८१८ ॥**

हे इन्द्र त्वं स्तोमवर्धनः स्तोत्रेणाभिव्यज्यमानोसि । विशेषेण उक्थवर्धनः उक्थाख्य-स्तोत्रेणाभिव्यज्यमानोसि । हि यस्मादेवं तस्मात् स्तोतॄणां भद्रकृत् मङ्गलानि करोषि । केशिना केशिनौ हरी अश्वौ सोमपेयाय सोमपानार्थमिन्द्रम् उप वक्षतः इत् उपवहेतामेव ।

अनेन निपूर्वाद् धात्रो धारणार्थाद् उपसर्गे घोः किरिति किः, उक्थादिस्तोमविशेषा व्यञ्जकतया निधीयन्ते अत्रेति निधिः । महान् उत्कृष्टो निधिः महानिधिः । यद्वा निपूर्वात् पोषणार्थाद् धात्रः किः । नितरां भक्तानां भद्रं पुष्णातीति निधिः । महान् अतिशयितः निधिः महानिधिरिति निरुक्तेः स्तोमवर्धन इत्यनेन भद्रकृदित्यनेन च सूचनात् महानिधिमूर्तिरत्र ॥ ८१८ ॥

॥ ॐ कुमुदाय नमः ॥

**उप यज्ञं सुराधसम् । अपां फेनेन नमुचेः शिर**
**इन्द्रोदवर्तयः । विश्वा यदजयः स्पृधः ॥ ८१९ ॥**

हे इन्द्र सुराधसं संसिद्धियुक्तं यज्ञं उपवर्तयितुं नमुचेरसुरस्य शिरो मूर्धानम् अपां फेनेन फेनयुक्तवज्रेण उदवर्तयः अधोऽपातयः । न केवलमेतावत् । विश्वाः विश्वान् यज्ञविघ्नकरान् समस्तान् स्पृधो द्वेषिणः अजयः, जि अभिभवे, अभिभूतवानसि ।

अनेन मुद हर्षे इत्यतो मूलविभुजादित्वात् कः । मोदयतीति मुदो यज्ञः । कौ भूमौ प्रवर्तितो मुदो यज्ञो यस्मात् स कुमुद इति निरुक्तेः उपयज्ञं सुराधसमित्यनेन सूचनात् कुमुदमूर्तिरत्र ॥ ८१९ ॥

**॥ ॐ कुन्दराय नमः ॥**

**मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः । अव दस्यूँ-**
**रधूनुथाः । असुन्वामिन्द्र संसदं विषूचीं व्यनाशयः ॥ ८२० ॥**

हे इन्द्र मायाभिः छद्मभिः उत्सिसृप्सतः संसारमतिक्रमितुमिच्छतो जनान् मायाभिरेव द्यां स्वर्गमारुरुक्षतः अरोढुमिच्छतो जनांश्च अत एव दस्यून् हिंसकान् अव अधस्तात् नरकादौ अधूनुथाः प्रक्षिपसि । हे इन्द्र असुन्वां सोमसवनरहितां देवपूजारहिताम् अत एव विषूचीं सुखरहितां संसदं सभागृहं च व्यनाशयः विनाशयसि ।

अनेन कुत्सितं मायावच्छिन्नं जनं दारयति अधः प्रक्षिपतीति कुन्दरः । यद्वा कुः पृथिवी संसद्गृहं वा, तद् दारयति विनाशयतीति कुन्दर इति निरुक्तेः दस्यूँरधूनुथाः असुन्वां संसदं व्यनाशय इत्यनेन सूचनात् कुन्दरमूर्तिरत्र ॥ ८२० ॥

**॥ ॐ कुन्दाय नमः ॥**

**सोमपा उत्तरो भवन् ।[१] प्र सम्राजं चर्षणीनामिन्द्रं**
**स्तोता नव्यं गीर्भिः । नरं नृषाहं मंहिष्ठम् ॥ ८२१ ॥**

हे जनाः सोमपा इन्द्रः उत्तरो भवन् सर्वोत्तमः सन् भाति । अत एव चर्षणीनां प्रजानां सम्राजमखण्डाधिपतिं नव्यं स्तुत्यं नरं नेतारं नृसहं सेनानेतॄणां वेगसहं मंहिष्ठं महत्तममिन्द्रं गीर्भिर्वेदवाक्यैः प्र स्तोत प्रकर्षेण स्तुत ।

---

१. ऋग्वेद ८-१६, इरिम्बिठिः काण्वः । इदमपि गायत्रीछन्दस्कं सूक्तम् । पूर्ववद् बृहती सम्पादनीया ।

अनेन कुण शब्दे इत्यतः अब्दादयश्चेति कर्मणि दनूप्रत्ययो नुमागमो गुणाभावश्च । कूयते शब्द्यते श्रूयते वेदवाग्भिरिति कुन्द इति निरुक्तेः स्तोता नव्यं गीर्भिरित्यनेन सूचनात् कुन्दमूर्तिरत्र ॥ ८२१ ॥

॥ ॐ पर्जन्याय नमः ॥

**यस्मिन्नुक्थानि रण्यन्ति विश्वानि च श्रवस्या । अपामवो**
**न समुद्रे । तं सुष्टुत्या विवासे ज्येष्ठराजं भरे कृत्नुम् ॥ ८२२ ॥**

यस्मिन्निन्द्रे उक्थानि उक्थस्तोत्राणि विश्वानि समस्तानि श्रवस्यानि कीर्तिजातानि च समुद्रे अपां खाते अपां अवो न शब्द इव[1] रण्यन्ति शब्दं कुर्वन्ति सुस्तुत्या समीचीनस्तुत्या भरे युद्धे सनिं लाभं कृत्नुं कुर्वाणं ज्येष्ठराजं प्रशस्यं राजानं तमिन्द्रं अहं आ विवासे यज्ञवाटे निवासयामि ।

अनेन जनी प्रादुर्भावे इत्यतो यत्प्रत्ययः । जनयतीति जन्यः । परं युद्धे लाभं जनयतीति पर्जन्यः, उपपदान्त्यलोपः, इति निरुक्तेः भरे कृत्नुमित्यनेन सूचनात् पर्जन्यमूर्तिरत्र ॥ ८२२ ॥

॥ ॐ पावनाय नमः ॥

**महो वाजिनं सनिभ्यः । यस्यानूना गभीरा मदा**
**उरवस्तरुत्राः । हर्षुमन्तः शूरसातौ । तमिद् धनेषु ॥ ८२३ ॥**

यस्येन्द्रस्य शूरसातौ युद्धे मदाः सुखविशेषाः प्रीतयो वा अनूना अनल्पाः गभीरा अपाराः उरव उत्कृष्टाः तरुत्राः सर्वाभीष्टवितरणशीलाः हर्षुमन्तो हर्षयन्तः सन्तोषयुक्ताः सन्ति तं सनिभ्यो लाभेभ्यः महो महान्तमुत्तमं वाजिनमन्नादिमन्तं भोगमुद्दिश्य धनेषु युद्धेषु हवन्ते योद्धारः इत् एव (इत्युत्तरेण संबन्धः) ।

अनेन पूञ् पवने इत्यतः पचाद्यच्, पुनाति पवित्रयतीति पवः मदः, तं नयति प्राप्नोतीति पवनः, नयतेर्डः, इति निरुक्तेः मदा उरवस्तरुत्रा इत्यनेन सूचनात् पावनमूर्तिरत्र ॥ ८२३ ॥

---

१. अनेकार्थस्यावधातोः शब्दार्थत्वमादायैवं व्याख्यातम् ।

॥ ॐ अनिलाय नमः ॥

**हितेष्वधिवाकाय हवन्ते । येषामिन्द्रस्ते जयन्ति । तमित्**
**च्योत्नैरार्यन्ति तं कृतेभिश्चर्षणयः । एष इन्द्रः ॥ ८२४ ॥**

ये जनाः हितेषु अभीष्टेषु अधिवाकाय सन्निधानाय सहायाय वा हवन्ते आह्वयन्ति । येषां यैश्च इन्द्रः सन्निधानाय आहूतः ते शत्रून् जयन्ति । तमित् तमेवेन्द्रं च्योत्नैर्बलैः आर्यन्ति प्राप्नुवन्ति । तमेव बलिष्ठमत एव प्रेरकरहितं जानन्ति । याश्चर्षणयो योद्धृजनाः कृतेभिः कर्मभिः तम् आर्यन्ति प्राप्नुवन्ति, कर्माणि तस्मिन् समर्पयन्तीति यावत्, तेषामेष इन्द्रः सुखकृद् भवति ।

अनेन इल प्रेरणे इत्यस्मात् कः, इलति प्रेरयतीतीलः । न विद्यते इलः प्रेरको यस्येत्यनिलः, बलवान्, इति निरुक्तेः च्यौत्नैरार्यन्तीत्यनेन सूचनाद् **अनिलमूर्तिरत्र** ॥ ८२४ ॥

॥ ॐ अमृतांशाय नमः ॥

**वरिवस्कृत् । इन्द्रो ब्रह्मेन्द्र ऋषिरिन्द्रः पुरू पुरुहूतः ।**
**महान् महीभिः शचीभिः । स स्तोम्यः स हव्यः सत्यः ॥ ८२५ ॥**

अयमिन्द्रो रामादिः भक्तानां वरिवस्कृत् । अयमिन्द्रो मत्स्यादिः ब्रह्मा सर्वैर्गुणैः पूर्णः । अयमिन्द्रो व्यासादिः ऋषिर्ज्ञानी । अयमिन्द्रो नारायणः पुरू पुरु पुरुषोऽनेकरूपः अयमिन्द्रो हंसादिः पुरुहूतः पुरुभिर्ब्रह्मादिभिः आहूतः प्रार्थितः । महीभिर्महतीभिः नित्याभिः शचीभिर्वेदवाक्यैः महान् सर्वोत्कृष्टत्वेन प्रतिपादितश्च । स इन्द्रः स्तोम्यः स्तोमविषयः हव्यो हविषामुद्देश्यः सत्यो जगदुत्पादकश्च ।

अनेन अमृता नित्यमुक्ता रामकृष्णहंसाद्या अंशा अवतारा यस्य सः अमृतांशः । अमृताश इति पाठे तु अमृतं मुक्तिसाधनं हविरादिकमश्नातीत्यमृताशः, अश भोजने इत्यतोऽच् । इति निरुक्तेः इन्द्रो ब्रह्मेत्यादिना स्तोम्यो हव्य इत्यादिना च सूचनाद् **अमृतांशमूर्तिरत्र** ॥ ८२५ ॥

॥ ॐ अमृतवपुषे नमः ॥

**सत्वा तुविकूर्मिः । एकश्चित् सन्नभिभूतिः । तमर्केभिस्तं**
**सामभिस्तं गायत्रैश्चर्षणयः । इन्द्रं वर्धन्ति क्षितयः ॥ ८२६ ॥**

किञ्चायमिन्द्रः सत्वा बलवान्, तुविकूर्मिः बहुकर्मा च । स एकश्चित् एक एव समाभ्यधिकरहित

एव सन् स्थितः, युद्धे अपलायितः । अभिभूतिः शत्रूणामभिभवकर्ता । चर्षणयः स्तोतृप्रजाः तमिन्द्रम् अर्केभिः वर्धन्ति वर्धयन्ति । उद्गातारस्तमिन्द्रं सामभिर्वर्धयन्ति, होतारस्तमिन्द्रं गायत्रैः गायत्र्यादिछन्दोविशेषैः वर्धयन्ति । एवं सर्वा अपि क्षितयः तमेव स्तुवन्ति ।

अनेन टु वप् बीजसन्ताने इत्यतः अधिकरणे उसिप्रत्ययः । उप्यन्ते अत्रेति वपुः । अमृतानि मुक्तिसाधनानि अनादिनित्यानि वा ऋगादीनि गायत्रादिसामादीनि चोप्यन्ते अत्रेत्यमृतवपुरिति निरुक्तेः तमर्केभिस्तं सामभिरित्यनेन सूचनाद् **अमृतवपुर्मूर्तिरत्र** ॥ ८२६ ॥

॥ ॐ सर्वज्ञाय नमः ॥

**प्रणेतारं वस्यो अच्छा कर्तारं ज्योतिः समत्सु ।**
**सासह्वांसं युधामित्रान् । स नः पप्रिः पारयाति स्वस्ति ॥ ८२७ ॥**

हे जनाः प्रणेतारं सकलप्राणिप्रेरकं वस्यः सुखस्य कर्तारं ज्योतिः ज्योतिःस्वरूपं समत्सु युद्धेषु युधा प्रहरणेन अमित्रान् शत्रून् ससह्वांसं अभिभवशक्तिमन्तं तमिन्द्रम् अच्छ सम्यक् स्तुत । स इन्द्रः अस्माकं पप्रिरभीष्टपूरकः स्वस्ति सुखं पारयाति पूरयति गमयति च ।

अनेन सर्वान् जनान् स्वप्रेरणागोचरान् जानातीति सर्वज्ञ इति निरुक्तेः प्रणेतारं वस्य इत्यदिना सूचनात् **सर्वज्ञमूर्तिरत्र** ॥ ८२७ ॥

॥ ॐ सर्वतोमुखाय नमः ॥

**नावा पुरुहूतः । इन्द्रो विश्वा अति द्विषः । स त्वं न इन्द्र**
**वाजेभिर्दशस्या च गातुया च । अच्छा च नः सुम्नं नेषि ॥ ८२८ ॥**

अयं पुरुहूत इन्द्रः नावा संसारतरणसाधनेन ज्ञानाख्येन नावा विश्वाः विश्वान् द्विषो द्वेषविषयान् सांसारिकदुःखादिकान् समस्तद्वेषिजनान् वा नः अति पारयति । हे इन्द्र स त्वं नः वाजेभिः वाजान्यन्नानि दशस्य, दाशृ दाने, ददस्व देहि । अच्छ सम्यग् गातुय गापय च । सुम्नं बलं नः नेषि प्रापयसि ।

अनेन खनु अवदारणे इत्यस्मात् डित्खनेर्मुट् चोदात्त इति सूत्रेण अलचोरन्यतरः प्रत्ययः । स डिच्च । टिलोपः, धातोर्मुडागमः । उकारो नोच्चारणार्थः (अतो निष्पन्ने शब्दे श्रूयत इत्यर्थः) खनति विदारयतीति मुखः । सार्वविभक्तिकस्तसिरित्युक्तेः द्वितीयान्तात् तसिः । सर्वतः सर्वान्

दुःखादीन् द्वेषिजनांश्च खनतीति सर्वतोमुख इति निरुक्तेः इन्द्रो विश्वा अतिद्विष इत्यनेन सूचनात् **सर्वतोमुखमूर्तिरत्र** ॥ ८२८ ॥

॥ ॐ सुलभाय नमः ॥

**[१]आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम । आ त्वा ब्रह्मयुजा हरी वहताम् ॥ ८२९ ॥**

हे सुषुम अतिप्रकृष्टसुते इन्द्र मम सदो यज्ञवाटं प्रति आ याहि । आगत्य च ते तुभ्यं सुतमिमं सोमं पिब । त्वदर्थं बर्हिरास्तृतमस्ति । यद्वा मम इदं बर्हिः अस्मिन् बर्हिषि सीद उपविशेति योज्यम् । हे इन्द्र ब्रह्मयुजा मन्त्रेण रथे विनियोजितौ हरी अश्वौ त्वा त्वां आ वहताम् आवहेताम् ।

अनेन सु समीचीनं ज्ञानं लभते प्राप्नोतीति सुलभ इति निरुक्तेः सुषुमेत्यनेन सूचनात् **सुलभमूर्तिरत्र** ॥ ८२९ ॥

॥ ॐ सुव्रताय नमः ॥

**इन्द्र केशिना । उप ब्रह्माणि नः शृणु । ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहे ॥ ८३० ॥**

हे इन्द्र केशिनावश्वौ त्वां वहेताम् । किञ्च नो ब्रह्माणि स्तोत्राणि उप शृणु । हे इन्द्र ब्रह्माणः स्तोतारः सोमिनः सोमयाजिनः सुतवन्तो वयं सोमपां त्वां युजा मनोयोगलक्षणेनोपायेन ध्यानेन हवामहे ।

अनेन सु समीचीनं व्रतं ध्यानयोगलक्षणं यस्मिन् सः सुव्रत इति निरुक्तेः त्वा युजा वयमित्यनेन सूचनात् **सुव्रतमूर्तिरत्र** ॥ ८३० ॥

॥ ॐ सिद्धाय नमः ॥

**आ नो याहि सुतावतोऽस्माकं सुष्टुतीरुप । पिबा सु शिप्रिन्नन्धसः । आ ते सिञ्चामि कुक्ष्योरनु गात्रा ॥ ८३१ ॥**

१. ऋग्वेद ८-१७, हरिम्बिठिः काण्वः । इदमपि गायत्रीछन्दस्कं सूक्तम् ।

हे सुशिप्रिन् सुसुख मङ्गलरूप इन्द्र सुतवन्तः सुतवतां नः सुस्तुतीः उप शृणु । श्रुत्वा चायाहि । आगत्य च अस्माकमन्धसः अस्माभिर्निर्मितान् सोमरसान् पिब । किञ्च ते कुक्ष्योः कुक्षौ मधु सोमम् आसिञ्चामि ।

अनेन षिधू शास्त्रे माङ्गल्ये च, शास्त्रं शास्त्रविषयं शासनम्, माङ्गल्यं मङ्गलक्रियेति धातुवृत्तिवचनात् शासनार्थात् मङ्गलक्रियार्थाद्वा सेधतेः कर्मणि क्तप्रत्ययः । यस्य विभाषेति सूत्रेण निष्ठायामिण्णिषेधः । झषः तथोर्धोधः । शास्त्रशासनविषयत्वात् माङ्गलिकक्रियाविषयत्वाद्वा सिद्ध इति निरुक्तेः सुस्तुतीरुप याहीत्यनेन सुशिप्रिन्नित्यनेन च सूचनात् **सिद्धमूर्तिरत्र** ॥ ८३१ ॥

॥ ॐ शत्रुजिते नमः ॥

**विधावतु । गृभाय जिह्वया मधु । स्वादुष्टे अस्तु**
**संसुदे मधुमान् तन्वे तव । सोमः शमस्तु ते हृदे ॥ ८३२ ॥**

हे इन्द्र त्वं मधु सोमं जिह्वया गृभाय गृहाण । स सोमरसः गात्रा गात्राणि अनु विधावतु व्याप्नोतु । किञ्च मया दत्तो मधुमान् सोमः संसुदे सम्यक् सुखदात्रे ते तुभ्यं स्वादुः स्वादुरूपः अस्तु । किञ्च तन्वे तन्वाः शत्रुजयाय शं बलकरोऽस्तु । तव हृदे हृदि शं सुखकरः अस्तु ।

अनेन भक्तदत्तसोमपानेन शत्रून् जयतीति शत्रुजिदिति निरुक्तेः तन्वे शमस्त्वित्यनेन सूचनात् **शत्रुजिन्मूर्तिरत्र** ॥ ८३२ ॥

॥ ॐ शत्रुतापनाय नमः ॥

**अयमु त्वा विचर्षणे जनीरिवाभिसंवृतः । प्र सोम**
**इन्द्र सर्पतु । तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे ॥ ८३३ ॥**

हे विचर्षणे इन्द्र अभिसंवृतः अभिसंस्कृतः अयं सोमः जनीरिव, जन्मन् देवानामित्युक्तेर्जनिर्यज्ञः, तान् प्रतीव त्वा उ त्वामेव उप प्रसर्पतु प्राप्नोतु । अयमिन्द्रः तुविग्रीवः पृथुग्रीवः, वपिर्मांसविशेष उदरे यस्य स वपोदरः, सुबाहुः बहुबलशाली अन्धसोऽन्नभूतस्य सोमरसस्य पानेन मदे हर्षे जाते सति वृत्राणि असुरजातानि अज्ञानादीनि च जिघ्नते संहरति ।

अनेन शत्रून् वृत्रादीन् तापयति सन्तापयतीति शत्रुतापनः । तप सन्तापे इत्यतो बहुलमन्यत्रापीति

कर्तरि युच् अनादेशः प्रज्ञादित्वादण्, शत्रुतापन इति निरुक्तेः मदे वृत्राणि जिघ्नते इत्यनेन सूचनात् **शत्रुतापनमूर्तिरत्र** ॥ ८३३ ॥

॥ ॐ न्यग्रोधोदुम्वराय नमः ॥

**इन्द्रो वृत्राणि जिघ्नते । इन्द्र प्रेहि पुरस्त्वं विश्वस्येशान**
**ओजसा । वृत्राणि वृत्रहन् जहि ॥ ८३४ ॥**

हे वृत्रहन् इन्द्र पुरः देहाख्यपुराणि प्रेहि । त्वं विश्वस्य जगतः ओजसा ओजःप्रभृतिगुणजातैः ईशानः । त्वं वृत्राण्यसुरजातानि जहि ।

अनेन न्यक् अवाक्स्थितं देहाख्यं पुरं रोहतीति न्यग्रोधः । निरुक्तत्वाद् हकारस्य धकारः । उत् प्राबल्ये वियोगे चेत्यादेः उत् प्रबलः । उः क्षत्रियः, उकारः क्षत्रिये नेत्रे चन्द्रमौळावित्यादेः । बः खे गुरौ मदे इत्यादेः बः मदः । रः पुमान् पावके कामे क्षये वज्रे इत्युक्तेः रः क्षयः । उत्कृष्टक्षत्रियमदक्षयो यस्मात् स उदुम्वरः । पृषोदरादित्वादुशब्दान्मुमागमः । न्यग्रोधश्चसावुदुम्बरश्च न्यग्रोधोदुम्बर इति निरुक्तेः इन्द्र प्रेहि पुर इत्यनेन वृत्राणि जहीत्यानेन च सूचनात् **न्यग्रोधोदुम्वरमूर्तिरत्र** ॥ ८३४ ॥

॥ ॐ अश्वत्थाय नमः ॥

**दीर्घस्ते अस्त्वङ्कुशो येना वसु प्रयच्छसि । यजमानाय**
**सुन्वते । अयं त इन्द्र सोमो निपूतो अधि बर्हिषि ॥ ८३५ ॥**

हे इन्द्र सुन्वते यजमानाय येन इच्छारूपेण अङ्कुशेन वसु द्रविणं प्रयच्छसि ते तव सोऽकुशः, अकि लक्षणे इत्यतः सानसिधर्णसीत्यादिना उशप्रत्ययो नुमागमः, सकलश्रेयोज्ञापकः इच्छाविशेषः मयि दीर्घः दीर्घकालीनोऽस्तु । अयं सोमः ते त्वदर्थं निपूतः सम्यक् संस्कृतः बर्हिषि अधि अधिष्ठितश्चास्ति ।

अनेन ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तु परेहनीत्युक्तेः श्वः अनागतेह्नि आगामिनि दिवसे तिष्ठतीति श्वत्थः । श्वःशब्दे उपपदे सुपि स्थ इति कप्रत्ययः । धात्वादिसस्य उपपदान्त्यसस्य च तादेशः । सावधारणं चैतत् । श्व एव तिष्ठति न परेऽहनीति श्वत्थः अल्पकालीनः । स न भवतीत्यश्वत्थः अङ्कुशः । सोऽस्यास्तीति अर्शआद्यच् । दीर्घकालीनसकलश्रेयःसाधनवानश्वत्थ इति निरुक्तेः दीर्घस्ते अस्त्वङ्कुश इत्यनेन सूचनाद् **अश्वत्थमूर्तिरत्र** ॥ ८३५ ॥

॥ ॐ चाणूरान्धनिषूदनाय नमः ॥

**एहीमस्य द्रवा पिब । शाचिगो शाचिपूजनाऽयं रणाय**
**ते सुतः । आखण्डल प्र हूयसे । यस्ते शृङ्गवृषः ॥ ८३६ ॥**

हे इन्द्र अस्य सोमस्य रसमेहि पिब ईम् एव । शं सुखम् अश्नति गमयतीति शाचिः गौः स्तोत्रं यस्य तस्य सम्बुद्धिः हे शाचिगो । एवं शाचि सुखप्रापकं पूजनं यस्य तस्य सम्बुद्धिः हे शाचिपूजन । आखण्डल इन्द्र ते तुभ्यमयं सोमः रणाय शब्दकरणाय पानजनितशब्दोत्पत्तये सुतः संस्कृतोऽस्ति । त्वं चास्माभिः प्रहूयसे । शृङ्गवृषः शृङ्गवदुन्नतोऽश्वः यः स ते अस्ति ।

अनेन चायृ पूजानिशामनयोरित्युक्तेः पूजार्थात् चायतेः कर्मणि उरन्प्रत्ययः । धातोरन्त्यस्य णकारः । चाणूरः पूज्यः । एवमदि बन्धने इत्यतो बध्यते स्तूयमानो वशीकृतो भवत्यनेनेति बन्धनं स्तोत्रम् । स्तुत्यर्थाददि धातो : धप्रत्ययः नुमागमः । षूद क्षरणे इत्यतः अनुदात्तेतश्च हलादेरिति युच्, अनादेशः । क्षरणं सन्ततदानम् । ण्यन्तोऽयं संस्कारे वर्तते इति धातुवृत्त्युक्तेश्च । नितरां सूदति सुखं ददातीति निषूदनः । चाणूरश्चासावन्धश्चासौ निषूदनश्चेति चाणूरान्धनिषूदन इति निरुक्तेः शाचिपूजन शाचिगो इत्यनेन सूचनात् **चाणूरान्धनिषूदनमूर्तिरत्र** ॥ ८३६ ॥

॥ ॐ सहस्रार्चिषे नमः ॥

**नपात् प्रणपात् कुण्डपाय्यः । न्यस्मिन् दध्र आ मनः ।**
**[१]वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वा वर्तयामसि ॥ ८३७ ॥**

हे इन्द्र ते नपात्, तदपोऽसृजत अद्भ्यः पृथिवीत्युक्तेः पार्थिवत्वादयमश्वस्तव नपात् त्वत्पुत्रीपुत्रः, एवं विवक्षान्तरेण प्रणपात् तत् तेजोऽसृजत, तदपोऽसृजत, अद्भ्यः पृथिवीत्युक्तेः पौत्रीपुत्रः । उपलक्षणमेतत् । आकाशादिविवक्षया प्रप्रणपादित्यादि । कुण्डपाय्यः (कुण्डे पात्रविशेषे) पिबतीति सुखसंवर्धितोयमश्वः अस्मिन् यज्ञे मनः आ आगन्तुं निदध्रे धृतवान् । त्वदीयाश्वोऽपि अस्मद्यज्ञं गन्तुकामः, तमारुह्यायाहीति तात्पर्यम् । हे इन्द्र वार्त्रहत्याय वार्त्रहत्ये युद्धे शवसे बलाभिव्यक्तये

---

१. ऋग्वेद ३-३७, गाथिनो विश्वामित्रः । इदमपि गायत्रीछन्दस्कं सूक्तम् ।

पृतनाषाह्याय सेनावेगसहनाय त्वाम् आवर्तयामसि सम्यक् स्वात्मनि सन्निधापयामः। यद्वा त्वद्विषयं मन्त्रमावर्तयामः जपामः।

अनेन अर्च पूजायामित्यतः अर्चिशुचीत्यादिना इसिप्रत्ययः। इकार उच्चारणार्थः। सहस्रेण पुत्रत्वपौत्रत्वप्रपौत्रत्वादिना बहुप्रकारेण अर्चिः पूज्यः अश्वो यस्य सः सहस्रार्चिरिति निरुक्तेः नपात् प्रणपादित्यनेन सूचनात् **सहस्रार्चिर्मूर्तिरत्र**॥ ८३७॥

**॥ ॐ सप्तजिह्वाय नमः॥**

**अर्वाचीनं सु ते मन उत चक्षुः शतक्रतो। इन्द्र**
**कृण्वन्तु वाघतः। नामानि ते शतक्रतो॥ ८३८॥**

हे शतक्रतो इन्द्र ते चक्षुः चक्षूंषि चष्टे (रसान्) जानात्यनेनेति चक्षुर्जिह्वा वाघतः स्तुवतो मम अर्वाचीनमधस्तात् स्थितं यज्ञवाटं प्रति गन्तुं मनः सुकृण्वन्तु कुर्वन्तु। हे शतक्रतो ते नामानि ईमहे जानीमः, पठाम इति यावत्।

अनेन षप समवाये इत्यतः सप्यशूभ्यां तुड्वेति कनिन्प्रत्ययः। नकार उच्चारणार्थः, तुडागमश्च प्रत्ययस्य। (लिह आस्वादने इत्यतः शेवायह्वाजिह्वेत्यादिना वन्) लस्य जः, गुणाभावश्च निपात्यते[1]। लिहन्त्यनेनेति जिह्वा चक्षुरादीन्द्रियम्। सप्तसु गृहेषु यज्ञवाटेषु सक्तं जिह्वा चक्षुरादीन्द्रियं यस्य सः सप्तजिह्व इति निरुक्तेः चक्षुरर्वाचीनं दध्र इत्यनेन सूचनात् **सप्तजिह्वमूर्तिरत्र**॥ ८३८॥

**॥ ॐ समैधसे नमः॥**

**विश्वाभिर्गीर्भिरीमहे। इन्द्राभिमातिषाह्ये। पुरुष्टुतस्य**
**धामभिः शतेन महयामसि। इन्द्रस्य चर्षणीधृतः॥ ८३९॥**

हे इन्द्र अभिमातिसह्ये युद्धे विश्वाभिर्गीर्भिः समस्तैर्वेदमन्त्रैः त्वां शरणमीमहे। पुरुष्टुतस्य चर्षणीधृतः प्रजाधारकस्य इन्द्रस्य शतेन शतानि धामभिर्धामानि स्वरूपाणि तेजांसि महयामसि पूजयामः।

---

१. यद्यपि सूत्रवृत्तिषु जीव प्राणधारणे इत्यतो जिह्वाशब्दो निपात्यते इत्युक्तम्। तथापि लिह धातु-निष्पन्नत्वमेवोचिततरमिति ग्रन्थकाराणामाशयः।

अनेन पूर्ववत् सपन्तीति सप्त उपजीव्यानि । यद्वा सप्तेति बहुसंख्योपलक्षणम् । एध वृद्धावित्य-तोऽसुन् । सप्त उपजीव्यानि शतानि वा एधांसि तेजांसि यस्य सः सप्तैधा इति निरुक्तेः धामभिः शतेन महयामसीत्यनेन सूचनात् **सप्तैधोमूर्तिरत्र** ॥ ८३९ ॥

**॥ ॐ सप्तवाहनाय नमः ॥**

**इन्द्रं वृत्राय हन्तवे पुरुहूतमुप ब्रुवे । भरेषु**
**वाजसातये । वाजेषु सासहिर्भव ॥ ८४० ॥**

पुरुहूतमिन्द्रं भरेषु युद्धेषु वाजसातये अन्नादिप्राप्त्यर्थं वृत्राय वृत्रस्य हन्तवे हननाय उप ब्रुवे स्तौमि । हे इन्द्र वाजेषु युद्धेषु ससहिः शत्रुवेगसहनशक्तिदाता भव ।

अनेन पूर्ववत् सप्तेति बहुत्वोपलक्षणम् । वह प्रापणे इत्यस्मात् ण्यन्तात् कर्तरि ल्युः । सप्त बहूनि वाजादीनि वाहयति प्रापयतीति सप्तवाहन इति निरुक्तेः वाजसातये उप ब्रुवे इत्यनेन सूचनात् **सप्तवाहनमूर्तिरत्र** ॥ ८४० ॥

**॥ ॐ अमूर्तये नमः ॥**

**त्वामीमहे शतक्रतो । इन्द्र वृत्राय हन्तवे । द्युम्नेषु पृतनाज्ये**
**पृत्सुतूर्षु श्रवस्सु च । इन्द्र साक्ष्वाभिमातिषु ॥ ८४१ ॥**

हे शतक्रतो वृत्राय हन्तवे इन्द्रं त्वामीमहे । हे इन्द्र अभिमातिषु अभिभवहेतुषु पृत्सुतूर्षु त्वरायुक्तसेनावत्सु पृतनाज्ये पृतनाज्येषु युद्धेषु श्रवस्सु कीर्तिषु द्युम्नेषु सुखेषु च अस्मान् साक्ष्व संगमय ।

अनेन अकारो ब्रह्मविष्णवीशकमठेष्वङ्गणे रणे इत्युक्तेः अः रणः युद्धम् । मुर्च्छा मोहसमुच्छ्राययोरित्यस्मात् क्तिन् । रलोपः[1] (?) । मूर्तिः समुच्छ्रायः । ए युद्धेषु समुच्छ्रायः श्रवःसुम्नादिदातृत्वशक्तिर्यस्य सः अमूर्तिरिति निरुक्तेः श्रवस्सु च द्युम्नेषु पृतनाज्ये साक्ष्वेत्यनेन सूचनाद् **अमूर्तिमूर्तिरत्र** ॥ ८४१ ॥

---

१. छलोप इति स्यात् ।

॥ ॐ अनघाय नमः ॥

**शुष्मिन्तमं न ऊतये द्युम्निनं पाहि जागृविम् । इन्द्र सोमं शतक्रतो । इन्द्रियाणि शतक्रतो या ते ॥ ८४२ ॥**

हे शतक्रतो इन्द्र शुष्मिन्तमं वलवत्तमं द्युम्निनं सुखहेतुं जागृविं सुसंस्कृतं सोमं न ऊतये पाहि पिव । हे शतक्रतो इन्द्र ते तव या यानि प्रवर्तकतया स्थितानि इन्द्रियाणि चक्षुरादीनि दीप्तिमन्ति रूपाणि वा तानि इन्द्रियाणि ईमहे ।

अनेन अन चेष्टायामित्यतो ण्यन्तादकारप्रत्ययः, अनति चेष्टयति प्रवर्तयतीत्यनः चक्षुरादीन्द्रिय-समुदायः भगवद्रूपविशेषो वा । अधिवधिमधि गत्यर्था इत्युक्तेः गत्यर्थादघेरकारप्रत्ययः । अनानि सर्वजनप्रवर्तकाणि इन्द्रियाणि स्वस्वरूपाणि वा अघति प्राप्नोतीत्यघः । सर्वजनप्रवर्तकेन्द्रियवानिति यावत् । उत्तरपदादेर्लोपः पररूपं वा । इति निरुक्तेः इन्द्रियाणि शतक्रतो या ते इत्यनेन सूचनाद् **अनघमूर्तिरत्र** ॥ ८४२ ॥

॥ ॐ अचिन्त्याय नमः ॥

**जनेषु पञ्चसु । इन्द्र तानि त आ वृणे । अगन्निन्द्र श्रवो बृहद् द्युम्नं दधिष्व दुष्टरम् । उत् ते शुष्मं तिरामसि ॥ ८४३ ॥**

हे इन्द्र पञ्चसु जनेषु प्राणापानादिमुख्यप्राणरूपेषु ते तव यानीन्द्रियाणि रूपाणि वा प्रवर्तकानि सन्ति तानि अहम् आ वृणे सम्यगभीष्टसाधनतया वृणोमि । हे इन्द्र त्वद्भक्तजनास्त्वां शरणं प्राप्य बृहद् महत् श्रवः अन्नं भोग्यम् अगन् अगमन् प्राप्नुवन् । तस्मात् त्वमस्मभ्यं दातुं द्युम्नं सुखं शुष्मं वलं च दधिष्व धत्स्व । ततो वयं तव प्रसादात् दुस्तरामपि संसारादिकम् उत् तिरामसि सम्यक् तरामः ।

अनेन ''अकारो ब्रह्मविष्णवीशकमठेष्वङ्गणे रणे । गौरवेऽन्तःपुरे हेतौ'' इत्युक्तेः अः अभीष्ट-दानहेतुः । चिति स्मृत्यामित्यतश्चौरादिकात् ण्यन्ताद् अचो यदिति यत्प्रत्ययः, णिलोपो नुमा-गमश्च । चिन्त्यः स्मरणीयः । अभीष्टदानहेतुत्वेन स्मरणीयः अचिन्त्य इति निरुक्तेः द्युम्नं दधिष्व तानि वृणे इत्यनेन सूचनाद् **अचिन्त्यमूर्तिरत्र** ॥ ८४३ ॥

॥ ॐ भयकृद्भयनाशनाय नमः ॥

**[१]सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि । उप नः सवना गहि सोमस्य ॥ ८४४ ॥**

सुरूपकृत्नुं सम्यग्रूपाणां देहादीनां कृत्नुं कर्तारं गोदुहे क्षीरादिदोहनाय सुदुघामिव धेनुमिव द्यविद्यवि प्रतिदिनं ऊतये रक्षार्थं जुहूमसि आह्वयामि । हे इन्द्र नः सोमस्य सवना सवनानि प्रति उप गहि आगच्छ ।

अनेन ञि भी भये इत्यस्मात् अड्विलोभयादीनामुपसंख्यानमिति (?) करणे अच्प्रत्ययः । बिभेत्यस्मादिति भयं शरीरेन्द्रियादिकम् । शरीरसंबन्धाद्धि जीवस्य भयम् । तत् करोतीति भय-कृत् । भयं शरीराभिमानादिकृतं नाशयतीति भयनाशनः । भयकृच्चासौ भयनाशनश्च । स्वयमेव भक्तानां विविधसांसारिकदुःखानुभवसिद्ध्यर्थं ब्राह्मणादिशरीरादिकमुत्पाद्य तत्र च वैराग्यादिकमुत्पाद्य ज्ञानद्वारा दुःखहेतुं विनाशयतीति यावत् । इति निरुक्तेः सुरूपकृत्नुमूतये जुहूमसीत्यनेन सूचनाद् **भयकृद्भयनाशनमूर्तिरत्र** ॥ ८४४ ॥

॥ ॐ अणुर्बृहते नमः ॥

**सोमपाः पिब । गोदा इद् रेवतो मदः । अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति ख्य आ गहि ॥ ८४५ ॥**

हे सोमपाः इन्द्र रेवतः हिरण्यादिमतोऽस्य यजमानस्य इत् एव गोदाः ज्ञानदः मदः सुखकारी च । यद्वा मदि स्तुतिमोदमदस्वप्नकान्तिगतिष्विति पाठात् मदेर्गत्यर्थादकारप्रत्ययः । सर्वजीवान्तर्नियामकतया गच्छति, अन्तःप्रविष्ट इति मदः अणुः । वालाग्रशतभागस्येत्यादिना अत्यणोर्जीवस्यान्तः प्रवेशोक्त्या ततोऽप्यणुत्वसिद्धेः । अथ तस्मात् अन्तमानाम् उत्तमोत्तमगुणेषु गणनायां अत्युत्तमानां ते सुमतीनां त्वद्विषयबुद्धीनाम्, व्यत्ययेन सुमतीः, विद्याम वयं लभेमहि । नः अस्मान् अति अतीत्य अन्यान् मा ख्यः मा पश्य । करुणार्द्रदृष्ट्या अस्मानेव पश्य । दृष्ट्वा च आगहि । यद्वा सुष्टु मतयो येषां ते सुमतयः तेषां सुमतीनाम् अन्तमानां सर्वस्याप्यन्ते मेयानां व्यापकानां महतां रूपाणां, व्यत्ययेन तानि रूपाणि, लभेमहि ।

---

१. ऋग्वेद १-४, मधुच्छन्दा वैश्वामित्रः । इदमपि गायत्रीछन्दस्कं सूक्तम् ।

अनेन अणरणवणभृणमणकणक्कणः शब्दार्था इति पाठाद् अणतेः अणश्चेति सूत्रादुप्रत्ययः । अणुः सूक्ष्मः । वर्तमाने पृषद्बृहन्महदित्यादिना बृहेरतिप्रत्ययः । शतृवद्भावः, इकार उच्चारणार्थः, गुणाभावश्च निपात्यते । बृहद् व्यापकम् । अणुश्चासौ बृहच्च अणुर्बृहत्, प्रथमाया अलुक् । इति निरुक्तेः मद इत्यनेन अन्तमानामित्यनेन च सूचनाद् **अणुर्बृहन्मूर्तिरत्र** ।

अणुत्वमहत्त्वयोर्युगपदेकत्र समावेशस्तु अणोरणीयान् महतो महीयानित्यादि श्रुतिप्रमाणान्न विरुद्धः । एवमग्रेपि ॥ ८४५ ॥

॥ ॐ कृशस्थूलाय नमः ॥

**परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् । यस्ते सखिभ्य**
**आ वरम् । उत ब्रुवन्तु नो निदो निरन्यतः ॥ ८४६ ॥**

हे मन्मनः यद्यपि त्वमिन्द्रात् परा दूरे वर्तसे, तद्ग्रहणासमर्थम् । अथवा स इन्द्रः त्वत्तः परा दूरे वर्तते त्वद्विषयो न भवति । अत एव कृशः । अपि तथापि । विग्रं, वीत्युपसर्गो नञर्थे, ग्रह उपादाने कर्मणि डः, अग्राह्यम् अस्तृतमच्छन्नमनष्टं स्थूलं विपश्चितं ज्ञानिनमिन्द्रमिहि गच्छ । य इन्द्रः ते सखिभ्य आ वरं नित्यमुत्तमः, तमेहीति संबन्धः । ये निदः तस्य परमेश्वरस्य समीपगाः सृष्ट्यादावेव तत्समीपे वर्तमानाः ब्रह्मादयः संसारिणः, ये चान्यतः संसारान्निर्गत्य तं परमेश्वरम् आरत प्राप्नुवन्, मुक्ता इति यावत्, तेपि उत नः अस्मान् प्रति ब्रुवन्तु उपदिशन्तु ।

अनेन कृश तनूकरणे इत्यतः कः कृशः । परिबृंहतीति स्थूलः । कृशश्चासौ स्थूलश्च कृशस्थूल इति निरुक्तेः परेत्यनेन अस्तृतमित्यनेन च सूचनात् **कृशस्थूलमूर्तिरत्र** ॥ ८४६ ॥

॥ ॐ गुणभृन्निर्गुणाय नमः ॥

**चिदारत । दधाना इन्द्र इद् दुवः । उत नः सुभगाँ अरि-**
**र्वोचेयुर्दस्म कृष्टयः । स्यामेदिन्द्रस्य शर्मणि ॥ ८४७ ॥**

ये च इन्द्र इत् इन्द्र एव दुवः प्राणान् दधाना वर्तन्ते, समर्पयन्ति, तत्प्रीत्यर्थं तमेवोपासते, जीवन्मुक्ता इति यावत् तेपि ब्रुवन्त्वेव । हे दस्म, दस्यतिर्भेदनार्थः, ततो मप्रत्ययः, शत्रुभेदिन्

अरिः उत अरयोपि कृष्ट्यः प्रजाः अस्मान् सुभगान् सदा वोचेयुः ब्रूयुः (वदेयुः)। किञ्च वयमिन्द्रस्य तवानुग्रहे सति देहपरित्यागेन शर्मणि सुखे स्याम इत् स्यामैव।

अनेन गुणाः प्राणाः म्रियन्तेऽस्मिन्निति गुणभृत्। गुणा देहादयो निर्गच्छन्त्यस्मादिति निर्गुणः। गुणभृच्चासौ निर्गुणश्च गुणभृन्निर्गुण इति निरुक्तेः दधाना इन्द्र इद् दुव इत्यनेन स्यामेदिन्द्रस्य शर्मणीत्यनेन च सूचनाद् **गुणभृन्निर्गुणमूर्तिः**रत्र॥ ८४७॥

॥ ॐ महते नमः॥

**एमाशुमाशवे भर यज्ञश्रियं नृमादनम्। पतयन्**
**मन्दयत्सखम्। अस्य पीत्वा शतक्रतो घनो वृत्राणाम्॥ ८४८॥**

हे आशवे आशुवीर्य आशुम् आशुवेगवन्तं द्रवत्वाद् यज्ञश्रियं यज्ञभूषणं नृमादनं पुंमदकरं पतयत् उत्पतयन्तं मन्दयत्सखं मन्दयति सखायमिति मन्दयत्सखः तम्। तवेत्यध्याहारः, एवार्थस्य ईमित्यस्य तेन संबन्धः। तवैव सोममाभर आहर, स्वोदरे इति शेषः। हे शतक्रतो, शतमित्यपरिमितनाम, शतानि अपरिमितानि क्रतवो ज्ञानानि कर्माणि चास्येति शतक्रतुः महागुणशालित्वान्महान् हे शतक्रतो त्वमस्यैनं सोमं पीत्वा वृत्राणां तमसां तामसानामसुराणां च घनः अभेद्यो महान् अभवः।

अनेन अपरिमितज्ञानक्रियादिमत्त्वात् वृत्राद्यभेद्यत्वाच्च महदिति निरुक्तेः शतक्रतो इत्यनेन घनो वृत्राणामित्यनेन च सूचनात् **महन्मूर्तिः**रत्र।

एतन्नाम्नः सन्निधानादणुत्वे सति वृहत्त्वं कृशत्वे सति स्थूलत्वं गुणभृत्त्वे सति निर्गुणत्वं लोकविरुद्धं कथमङ्गीकार्यमिति चोद्यं निरस्तम्। अपरिमितगुणक्रियाश्रयत्वमाहात्म्यवतो लोकविलक्षणत्वादिति सूचनात्॥ ८४८॥

॥ ॐ अधृताय नमः॥

**अभवः। प्रावो वाजेषु वाजिनम्। तं त्वा वाजेषु वाजिनं**
**वाजयामः शतक्रतो। धनानामिन्द्र सातये॥ ८४९॥**

हे इन्द्र वाजिनम् अन्नवन्तमन्नदं युध्यन्तं वा नरं वाजेषु सर्वभोगविषयेषु युद्धेषु वा प्रावः अरक्षः।

हे शतक्रतो तम् एवमुक्तगुणं वाजिनं योद्धारं त्वां धनानां सातये वाजेषु युद्धेषु अस्मदरिभिः सह वाजयामः योधयामः ।[१]

अनेन पूर्ववदकारो रणवाची । धृञ् धारणे इत्यतः कर्तरि क्तः । धरते इति धृतः । एषु युद्धेषु भक्तं रणादिना धरत इत्यधृत इति निरुक्तेः प्रावो वाजेषु वाजिनमित्यनेन सूचनाद् अधृतमूर्तिरत्र ॥ ८४९ ॥

॥ ॐ स्वधृताय नमः ॥

**यो रायोऽवनिर्महान् त्सुपारः सुन्वतः सखा । तस्मा इन्द्राय**
**गायत ।[२] आ त्वेता नि षीदतेन्द्रमभि प्र गायत ॥ ८५० ॥**

हे उद्गातारः य इन्द्रः रायोऽवनिः अशेषद्रविणाश्रयः महान् उत्तमः सुपारः संसृतेः सुखदः पारश्च सुन्वतो यजमानस्य सखा च तस्मै इन्द्राय गायत । एत आगच्छत । आ निषीदत । आगत्योपविश्य चेन्द्रमभिप्रगायत ।

अनेन स्वोऽस्त्रियां धने इत्युक्तेः स्वं धनं धरत इति स्वधृतः, प्राग्वत् कर्तरि क्तः, इति निरुक्तेः रायोऽवनिरित्यनेन सूचनात् स्वधृतमर्तिरत्र ॥ ८५० ॥

॥ ॐ स्वास्थ्याय नमः ॥

**सखायः स्तोमवाहसः । पुरूतमं पुरूणामीशानं वार्याणाम् ।**
**इन्द्रं सोमे सचा सुते । स घा नो योग आ भुवत् ॥ ८५१ ॥**

स्तोमवाहसः हे सखाय उद्गातारः पुरूणां पूर्णानां मध्ये पुरूतमं पूर्णतमं वार्याणां वरणीयानां ज्ञानानन्दादीनां स्वामिनं इन्द्रं सोमे सुते सति मनःप्रसादपूर्वकं गायतेति संबन्धः । तस्य फलमुच्यते । स घ स इन्द्र एव नोऽस्माकं आ योगे सायुज्यलक्षणाय योगाय भुवत् भवेत् ।

अनेन आस उपवेशने इत्यतो भादे थप्रत्ययः आस्थमवस्थानम् । सु सम्यक् आस्थमवस्थानं

१. अस्मदरिभिः सह युद्धेषु प्रवर्तमानेषु इन्द्रं वाजयाम इति यावत् ।
२. ऋग्वेद १-५, मधुच्छन्दा वैश्वामित्रः । इदमपि गायत्रीछन्दस्कं सूक्तम् ।

स्वास्थं मोक्षः । तं यापयतीति स्वास्थ्यः । यातेः कः उपपदान्त्यलोपश्च । इति निरुक्तेः स घा नो योग आ भुवदित्यनेन सूचनात् **स्वास्थ्यमूर्तिरत्र** ।

स्वास्य इति पाठे तु पुरूणां सुन्दराणां पुरुतमं सुन्दरतममिति व्याख्यानेन सु सम्यक् सुन्दरम् आस्यं यस्य सः स्वास्य इति निरुक्तिर्द्रष्टव्या ॥ ८५१ ॥

**॥ ॐ प्राग्वंशाय नमः ॥**

**स राये स पुरन्ध्याम् । गमद् वाजेभिरा स नः । यस्य संस्थे**
**न वृण्वते हरी समत्सु शत्रवः । तस्मा इन्द्राय ॥ ८५२ ॥**

स इन्द्रः राये द्रविणप्राप्तये भुवत् । स एव सर्वेषां पुरन्ध्यां बुद्धौ सर्वेषां बुद्धियोगे वर्तते । पुरं शरीरं धीयते अस्यामिति पुरन्धिर्बुद्धिः । धाञः कर्मण्यधिकरणे चेति किः, मुमागमः छान्दसः । किञ्च स इन्द्रः वाजेभिरन्नैः सह, अन्नानि दातुमिति यावत्, नः अस्मान् प्रति आगमत् आव्रजेत् । यस्येन्द्रस्य संस्थे संस्थितौ सत्याम्, इन्द्रे रथे स्थिते सतीति यावत्, समत्सु महायुद्धेषु शत्रवः हरी अश्वौ न वृण्वते अश्वागमनमपि न प्राप्नुवन्ति । तस्मै इन्द्राय गायतेति संबन्धः ।

अनेन वातेर्गत्यर्थात् कः । शेतेर्डः । वं शरीरं शेते ध्रियते अस्मिन्निति वंशो बुद्धिः । मुमागमः । प्रकर्षेणाश्चतीति प्राक् । प्राग् गच्छति वंशं बुद्धिमिति प्राग्वंशः, सर्वबुद्धिगोचर इति यावत्, इति निरुक्तेः स पुरन्ध्यामिति सूचनात् **प्राग्वंशमूर्तिरत्र** ॥ ८५२ ॥

**॥ ॐ वंशवर्धनाय नमः ॥**

**गायत । सुतपात्रे सुता इमे शुचयो यन्ति वीतये । सोमासो**
**दध्याशिरः । त्वं सुतस्य पीतये सद्यः ॥ ८५३ ॥**

शुचयः शुद्धाः सुताः दध्याशिरः दधिमिश्रिताः । आशिरशब्दो मिश्रणार्थ इत्येके । अन्ये तु अहोरात्रान्तरितं दधि आशिरमिति । ततश्च आशिरं दधि येषु ते दध्याशिरः इमे सोमासः पीतये, पिर्गत्यादौ,यजमानस्येन्द्रप्राप्तौ सुतपात्रे सोमपानकर्त्रे इन्द्राय यन्ति गच्छन्ति । गत्यर्थकर्मणीति चतुर्थी । हे इन्द्र त्वं सद्यः सुतस्य पीतये वृद्धोऽजायतेति (उत्तरेण) सम्बन्धः ।

अनेन वन संभक्तावित्यतः शप्रत्ययः । वन्यते देवैः सेव्यते पीयते इति वंशः सोमः, तं प्रति वर्धनं अभिव्यक्तिर्यस्य स वंशवर्धन इति निरुक्तेः त्वं सुतस्य पीतये सद्यो वृद्ध इत्यनेन सूचनाद् **वंशवर्धन-मूर्तिरत्र** ॥ ८५३ ॥

॥ ॐ भारभृते नमः ॥

**वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो । आ त्वा**
**विशन्त्वाशवः सोमास इन्द्र गिर्वणः । शं ते सन्तु प्रचेतसे ॥ ८५४ ॥**

हे सुक्रतो इन्द्र सोमपीतये सद्यो वृद्धो अजायथा इत्येतत् ज्यैष्ठ्याय त्वदीयज्यैष्ठ्याभिव्यक्तये भवति । सर्वदेवेभ्यः अतिशयेन सोमपानादिना स्वस्य ज्यैष्ठ्यं प्रकटयितुमेव न तु क्षुधाहेतोः । हे गिर्वणः इन्द्र आशवः क्षिप्राः सोमासः त्वामाविशन्तु । त्वामाविष्टाश्च ते प्रचेतसे प्रकृष्टज्ञानाय यजमानस्य च शं सुखकराः सन्तु स्युः ।

अनेन भृञ् भरणे इत्यतो घञ् । भ्रियते इति भारः तं बिभर्तीति भारभृदिति निरुक्तेः आ त्वा विशन्त्वाशव इत्यनेन सूचनाद् **भारभृन्मूर्तिरत्र** ॥ ८५४ ॥

॥ ॐ कथिताय नमः ॥

**त्वां स्तोमा अवीवृधन् त्वामुक्था शतक्रतो । त्वां वर्धन्तु**
**नो गिरः । अक्षितोतिः सनेदिमं वाजमिन्द्रः ॥ ८५५ ॥**

हे शतक्रतो स्तोमाः सामविशेषाः त्वामवीवृधन् व्यञ्जयन्ति स्म । एवमुक्था उक्थानि त्वामेव अवीवृधन् प्राकाशयन् । स्तोमोक्थादिभिर्भवानेव कथ्यते । तस्मात् नः अस्माकमपि गिरस्त्वां वर्धन्तु वर्धयन्तु । महागुणैस्त्वामेव कथयन्तु । अक्षिता न विनश्वरा ऊतिः शक्तिरभिप्रायो वा अस्यास्तीत्यक्षितोतिः पूर्णशक्तिः पूर्णाभिप्रायो वा इन्द्रः इमं वाजं हविः सनेत् अस्मत्तो लभताम् । अथवा इमं वाजं अन्नं भोग्यमस्मान् सनेत् लम्भयेत् ।

अनेन कथ वाक्यप्रबन्ध इत्यतः कर्मणि क्तः इडागमश्च । स्तोमोक्थादिरूपवेदादिप्रतिपादितः कथित इति निरुक्तेः त्वां स्तोमा इत्यनेन सूचनात् **कथितमूर्तिरत्र** ॥ ८५५ ॥

॥ ॐ योगिने नमः ॥

**सहस्रिणम् । यस्मिन् विश्वानि पौंस्या । मा नो मर्ता अभि द्रुहन् तनूनामिन्द्र गिर्वणः । ईशानो यवया वधम् ॥ ८५६ ॥**

हे गिर्वणः इन्द्र सहस्रिणं सहस्रशब्दोऽनन्तवाची तद्वन्तमनन्तफलं मोक्षं देहि । किञ्च मर्ता मर्त्याः नः तनूनां शरीरेभ्यो माभिद्रुहन् द्रोग्धारः कथञ्चन मा स्युः । त्वं येन कारणेन नः तनूनामीशान ईशोसि, येन कारणेन च यस्मिन् त्वयि विश्वानि पौंस्यानि पौरुषाणि सामर्थ्यानि शक्तयः सन्ति, तेन कारणेन स त्वं नोऽस्माकं वधं हिंसां यवय अपगमय अपाकुरु ।

अनेन युज्यते सर्वगुणजातमनेनेति योगः सामर्थ्यं शक्तिः । साऽस्यास्तीति योगीति निरुक्तेः यस्मिन् विश्वानि पौंस्येत्यनेन सूचनाद् **योगिमूर्तिरत्र** ॥ ८५६ ॥

॥ ॐ योगीशाय नमः ॥

**[1]युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि । युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ॥ ८५७ ॥**

अस्येन्द्रस्य पौंस्यानि शक्तयः अरुषमरुणवर्णं तस्थुषो मेर्वादेः पर्वतस्य परितश्चरन्तं ब्रध्नं सूर्यं युञ्जन्ति नियुञ्जते प्रवर्तयन्ति । किञ्च वासुदेवस्य शक्तिभिः अन्यानि रोचना रोचमानानि चन्द्रादीनि तेजांसि दिवि त्रिविष्टे रोचन्ते दीप्यन्ते रोचयन्ति चान्यान् । किञ्चास्येन्द्रस्य शक्तयः विपक्षसा विपक्षसौ विशिष्टपक्षवन्तौ काम्या काम्यौ कमनीयौ हरी मनोबुद्ध्याख्यौ अश्वौ रथे भक्तशरीरे युञ्जन्ति प्रवर्तयन्ति । भक्तान् मनस्विनो बुद्धिमतश्च कुर्वाते । यद्वा अस्येन्द्रस्य रथे विपक्षसौ विशिष्टपक्षवन्तौ गौण्या वृत्त्या पक्षिणाविव वेगवन्तौ काम्यौ कमनीयौ हरी अश्वौ मरुतः सर्वे देवाश्च युञ्जन्ति बध्नन्ति । एवं सर्वे देवा अस्य सेवका एव ।

अनेन योगः संबन्धः, स एषामस्तीति योगिनः रथे अश्वसंबन्धकारिणो मरुतः शक्तयश्च, तेषामीशः स्वामी योगीश इति निरुक्तेः युञ्जन्ति ब्रध्नमित्यादिना सूचनाद् **योगीशमूर्तिरत्र** ॥ ८५७ ॥

---

१. ऋग्वेद १-६, मधुच्छन्दा वैश्वामित्रः । इदमपि गायत्रीछन्दस्कं सूक्तम् ।

॥ ॐ सर्वकामदाय नमः ॥

**शोणा धृष्णू नृवाहसा । केतुं कृण्वन्नकेतवे पेशो मर्या**
**अपेशसे । समुषद्भिरजायथाः । आदह स्वधाम् ॥ ८५८ ॥**

किञ्च मरुतो देवाः शं सुखम् अणतः प्राप्नत इति शोणौ । संशब्दसमानार्थः शशब्दः, सवर्णदीर्घः आकारस्य ओकारः । यद्वा शोणवर्णौ रक्तवर्णौ । यद्यपीन्द्रस्याश्वाः श्यामवर्णाः तथापि तेषु द्वावश्वौ मूर्ध्नि शोणौ । धृष्णू प्रगल्भौ नृवाहसा नेतारं विष्णुभक्तं प्रति वहन्तौ हरी रथे युञ्जन्तीति संबन्धः । हे इन्द्र अकेतवे ज्ञानरहिताय भक्ताय केतुं ज्ञानं ज्ञानादिसर्वकामान् कृण्वन् कुर्वन् अपेशसे स्वर्णरहिताय पेशः हेम कुर्वन् उषद्भिः संप्रकाशद्भिः पौंस्यैः शक्तिभिः ये मर्या मरणवन्तो देवाः तैर्मरुद्भिश्च सह समजायथाः यज्ञे अभिव्यक्तिमगाः ।

अनेन चायृ पूजानिशामनयोरित्यतः चायः किरिति सूत्रेण तुप्रत्ययः, धातोः किरादेशः, गुणः । चाय्यन्ते निशाम्यन्ते अहं ता (?) इति[१] केतवो ज्ञानादिसर्वकामाः । तान् ददातीति सर्वकामद इति निरुक्तेः केतुं कृण्वन्नित्यादिना सूचनात् सर्वकामदमूर्तिरत्र ॥ ८५८ ॥

॥ ॐ आश्रमाय नमः ॥

**अनु पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ।**
**वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ॥ ८५९ ॥**

अस्येन्द्रस्य यज्ञियं यज्ञे भवं यज्ञे उच्चार्यं नाम दधानाः शक्तयो देवाश्च स्वधामनु स्वेच्छामनुसृत्यैव न तु भयेन आत् अकारवाच्याद् विष्णोः अह तदा यज्ञे एव पुनर्गर्भत्वं पुनर्गूढत्वम् एरिरे प्रापिरे । अन्तर्हिता बभूवुः । किञ्च हे इन्द्र गुहाचित् गुहायां संस्थितोपि गूहितोपि त्वं वीळु दृढं चिद् अपि ब्रह्माण्डादिकमपि आरुजत्नुभिः, रुजो भङ्गे, संहरद्भिः वह्निभिः अखिललोकं वहद्भिः पौंस्यैर्मरुद्भिर्देवैश्च सह उस्रियाः प्रकाशत्वानि नानाविधप्राकट्यानि अनु स्वेच्छामनुसृत्य अविन्दो लब्धवानसि ।

अनेन श्रमु तपसि खेदे चेत्यस्मात् हलश्चेति घञ् । नोदोत्तोपदेशस्य मान्तस्यानाचमेरिति

१. सर्वकोशेष्वपीत्यमेव पाठः । अह हन्त इत्यहशब्दस्यार्थकथनमेतत् स्यात् । लिपिकृतः प्रामाद्यन्निति सम्भाव्यते ।

उपधावृद्ध्यभावः, आ सम्यक् श्रम्यते तप्यते गृह्यते इत्याश्रम इति निरुक्तेः गर्भत्वमेरिरे इत्यनेन सूचनाद् **आश्रममूर्तिरत्र** ॥ ८५९ ॥

॥ ॐ श्रमणाय नमः ॥

**अविन्द उस्रिया अनु । देवयन्तो यथा मतिमच्छा विदद्वसुं**
**गिरः । महामनूषत श्रुतम् । इन्द्रेण सं हि दृक्षसे ॥ ८६० ॥**

अच्छेति निपातः संशब्दार्थः । गिर इति कर्तृसाधनः पुल्लिङ्गरेफान्तः । गिरः स्तोतारः अच्छ देवयन्तः सम्यक् प्रकाशयन्तः सन्तः यथा यथास्थितं निर्विकारं मतिं ज्ञानाख्यं विदद्वसुं प्राप्तवित्तं महां महान्तं श्रुतं प्रसिद्धमिन्द्रं इन्द्रेण (व्यत्ययेन) इन्द्रस्य संदक्षसे सन्दर्शनाय अनूषत अस्तुवन् ।

अनेन पूर्ववदालोचनार्थात् श्रमेः करणे ल्युट्, श्रमन्ति जानन्ति अनेनेति श्रमणं स्तुतिः, ततः अर्शआद्यच्, स्तुतिमान् स्तुतिविषयः श्रमण इति निरुक्तेः अनूषतेत्यनेन सूचनात् **श्रमणमूर्तिरत्र** ॥ ८६० ॥

॥ ॐ क्षामाय नमः ॥

**संजग्मानो अबिभ्युषा । मन्दू समानवर्चसा ।**
**अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति ॥ ८६१ ॥**

मन्दू मदहेतू शङ्करपुरुहूतौ श्रीभूमी वा समानवर्चसा अविकारतेजसा अबिभ्युषा निर्भयेनेन्द्रेण भगवता संजग्मानः संजग्मानौ संगतौ निधृतौ बभूवतुः । इन्द्रपक्षे तु मन्दू द्यावापृथिव्यौ इन्द्रेण प्रसिद्धेन संजग्मानाविति योज्यम् । किञ्च अनवद्यैः अभिद्युभिरभितः कान्तिमद्भिः रुद्रादिदेवैः सहितः, सहस्वत् सहस्वान् वायुना च सहितः, सहस्वद् यथा भवति तथेति वा मखो मखाभिमानी इन्द्रः तं परमेश्वरमर्चतीति तात्पर्यम् । प्रसिद्धेन्द्रपक्षे तु अभिद्युभिः ऋत्विग्गणैः ऋत्विग्गणः मखः सहस्वद् बलवद् यथा भवति तथा इन्द्रं प्रसिद्धमर्चति (इति योज्यम्) ।

अनेन क्षमूष् सहन इत्यस्मात् अङ् वृद्धिः । क्षमते श्रीभूमिशङ्करपुरुहूतद्यावापृथिव्यादिकं सहत इति क्षाम इति निरुक्तेः मन्दू समानवर्चसेत्यनेन सूचनात् **क्षाममूर्तिरत्र** ॥ ८६१ ॥

॥ ॐ सुपर्णाय नमः ॥

**गणैरिन्द्रस्य काम्यैः । अतः परिज्मन्ना गहि दिवो वा**
**रोचनादधि । समस्मिन् ऋञ्जते गिरः । इतो वा सातिमीमहे ॥ ८६२ ॥**

परितो ज्मां भूमिं वर्तयतीति परिज्मा, हे परिज्मन् सर्वगत यत एवं त्वं सर्वयज्ञानां भोक्ता अतो दिवः स्वर्गात् रोचनाद् दीप्यमानात् सूर्यमण्डलाद्वा अधि अस्माकं समर्हणमधिकृत्य इन्द्रस्य काम्यैः प्रियैः गणैः वसुरुद्रादिरूपैर्गणैः सह इह यज्ञस्थानमागहि । किञ्चास्मिन् यज्ञस्थाने गिरः श्रुतिरूपा वेदवाचः सं सम्यक् परममुख्यया वृत्त्या त्वां ऋञ्जते प्राप्नुवन्ति । अतोप्यायाहि ।

अनेन पॄ पालनपूरणयोरित्यस्माद् धापॄवस्यज्यतिभ्यो नः इति नप्रत्ययः, गुणः, पर्णः । सु सम्यक् भूमिं पूरयति व्याप्नोतीति सुपर्ण इति निरुक्तेः परिज्मन्नित्यनेन सूचनात् **सुपर्णमूर्तिरत्र** ॥ ८६२ ॥

॥ ॐ वायुवाहनाय नमः ॥

**दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः । एन्द्र**
**सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठम् ॥ ८६३ ॥**

इतो दिवः अर्वाक् द्युलोकाद्वा पार्थिवात् पृथिवीसंबन्धिनः पातालाद्वा महः महतो रजसः रंजकाद् विष्णुलोकाद्वा, एतेषु स्थितमिति यावत्, सातिं लाभस्वरूपिणम्, भगवानेव हि भक्तानां लाभः, तमिन्द्रं ईमहे स्मरामः, इक् स्मरणे । स्तुमो वा, इङ् अध्ययने । याचामहे वा, तन्नामसु पाठात् । हे इन्द्र सानसिं लाभेन सहितं सजित्वानं जित्वना जयशीलपुत्रादिना सहितं सदासहं सदा बलवत् वर्षिष्ठं सुमहद् रयिं वित्तं विद्याधनात्मकं ऊतये अस्मभ्यमाभर ।

अनेन वा गतिगन्धनयोरित्यस्मात् कृपावाजीत्यादिना उण् । आतो युक् चिणिकृतोरिति युगागमः । सर्वैर्गम्यते प्राप्यत इति वायुः रयिः । वह प्रापणे इत्यस्मात् करणे ल्युट् । वाहनमाहितादिति निपातनाद् दीर्घः । वायुः रयिः भक्तेभ्यो दातुमुह्यते अनेनेति वायुवाहन इति निरुक्तेः रयिमाभरेत्यनेन सूचनाद् **वायुवाहनमूर्तिरत्र** ॥ ८६३ ॥

॥ ॐ धनुर्धराय नमः ॥

**ऊतये भर । नि येन मुष्टिहत्यया नि वृत्रा रुणधामहे ।**
**त्वोतासो न्यर्वता । इन्द्र त्वोतास आ वयं वज्रम् ॥ ८६४ ॥**

या वित्तेन निमित्तेन त्वोतासः, छन्दसि युष्मदस्मदोः प्रत्ययोत्तरपदयोराकारादेशः, अवतिः प्रेरणार्थः, त्वत्प्रेरिता वयं मुष्टिहत्यया मुष्टिघातेन मुष्टियुद्धेन अरीन् निरुणधामहे निरुन्धामः। धात्वन्तरस्यैतद्रूपम्। किञ्च येन वृत्रा वृत्राणि तमांसि निरुणधामहे, ज्ञानयुद्धे इति शेषः। अत्र येनेति ज्ञानं वित्तं चोच्यते। येन च अर्वता तुरगेण तुरगादिभिः अरीन् निरुणधामहे, तादृग् वित्तमाभरेति संबन्धः। हे इन्द्र त्वोतासः त्वत्प्रेरिता वयं ज्ञानरतिं ज्ञानविषयां ज्ञाननिमित्तां रतिं वा, घना तृतीयैकवचनान्तमेतत् भावप्रधानम्, दृढत्वेन आददीमहि त्वत्प्रेरणयैव ज्ञानरतिमन्तो भवामः।

अनेन धन धान्ये इत्यत उसिप्रत्ययः। धनतीति धनुर्वज्रं ज्ञानरतिः। धृ धारणे इत्यतः पचाद्यच् धरतीति धरः। तत् प्रेरयतीति हेतुमति णिच्। बहुलमन्यत्रापि संज्ञाछन्दसोरिति णिलुक्। धनुर्वज्रं ज्ञानरतिं धारयतीति धनुर्धर इति निरुक्तेः वज्रं घना ददीमहीत्यनेन सूचनाद् **धनुर्धरमूर्तिरत्र** ॥ ८६४ ॥

॥ ॐ धनुर्वेदाय नमः ॥

**घना ददीमहि। जयेम सं युधि स्पृधः। वयं शूरेभि-**
**रस्तृभिरिन्द्र त्वया युजा वयम्। सासह्याम पृतन्यतः ॥ ८६५ ॥**

हे इन्द्र युनक्तीति युक्, युजा सख्या त्वया त्वत्प्रसादेन युधि युद्धे स्पृधः स्पर्धिनः शत्रून् सं जयेम। किञ्च अस्तृभिः अस्त्रिभिरस्त्रज्ञैः शूरेभिः शूरैः योद्धृभिः भृत्यैः सहिता वयं पृतन्यतो युद्धयतः शत्रून् ससह्याम अतिशयेन पुनःपुनर्वा सहामहे। किञ्च वयं त्वयैव त्वदधीनसत्ता इत्यर्थः।

अनेन धनूंषि विदन्तीति धनुर्वेदा अस्त्रज्ञा भृत्याः। ते अस्य भक्तानां दासाः सन्तीति धनुर्वेदः, अर्शआद्यच् गुणः, इति निरुक्तेः शूरेभिरस्तृभिर्वयमित्यनेन सूचनाद् **धनुर्वेदमूर्तिरत्र** ॥ ८६५ ॥

॥ ॐ दण्डाय नमः ॥

**महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे। द्यौर्न**
**प्रथिना शवः। समोहे वा य आशत नरः ॥ ८६६ ॥**

नु यस्मादयमिन्द्रो विष्णुः महान् गुणैरनन्तः, परश्च अनादिकालतोप्यनन्तः, प्रथिना प्रथिम्ना द्यौर्न आकाशवद् देशतोप्यनन्तश्च, तथा शवः सुखबले, उभयनामसु पाठात्, नित्याभिव्यक्तसुख-

बलात्मकश्च । शशब्दः सुखवाची वशब्दो बलवाचीति वा । जीवस्त्ववरो गुणादिनेति शेषः । तस्मात् महित्वं महत्त्वं ब्रह्मत्वं विष्णोरेवास्तु । न ब्रह्मतां जीवस्य स्मरेदिति तात्पर्यम् । ये जनाः स्वयमेव समोहे परप्रेरणे वा आशत अश्नुवत प्राप्ताः भगवच्चरणं त एव नरो मनुष्याः । इतरे तु पशवः ।

अनेन दम उपशमे इत्यस्मादन्तर्णीतण्यर्थात् ञमन्ताड्डः । डस्येत्संज्ञाभावः । दमयति उपशमयति स्वस्माज्जीवानवरयति त्रिविधानन्त्यरहितान् करोतीति दण्ड इति निरुक्तेः महाँ इन्द्रः परश्चेत्यादिना सूचनाद् **दण्डमूर्तिरत्र** ॥ ८६६ ॥

**॥ ॐ दमयित्रे नमः ॥**

**तोकस्य सनितौ । विप्रासो वा धियायवः । यः कुक्षिः सोम-**
**पातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदः ॥ ८६७ ॥**

तोकस्य अपत्यस्य ज्ञानस्य, ज्ञानमेव हि जीवतोऽपत्यम्, सनितौ लाभे सति धियायवः ध्यानादियुक्ताः ते वा त एव विप्रासः ब्राह्मणाः, इतरे शूद्राः । तस्येन्द्रस्य सोमपातमः अतिशयेन सोमपाः यः कुक्षिः समुद्र इव रत्नाकर इव तत्र सोमं समर्पितवते भक्तायाखिलान् कामान् पिन्वते, पिवि मिवि सेचने, क्षरति सततं ददाति । किञ्च तस्य काकुदो जिह्वाश्च उर्वीः उर्व्यः आपो न महाप इव भक्तानां तर्पकाः ।

अनेन ण्यन्ताद् दमेस्तृच्, इडागमश्च । भक्तानामुपशामकः तर्पयिता दमयितेति निरुक्तेः समुद्र इव पिन्वते इत्यादिना सूचनाद् **दमयितृमूर्तिरत्र** ॥ ८६७ ॥

**॥ ॐ दमाय नमः ॥**

**एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा**
**न दाशुषे । एवा हि ते विभूतय ऊतयः ॥ ८६८ ॥**

हे इन्द्र यस्त्वं विरप्शी विशिष्टबलवान् तस्यास्य ते तव संबन्धिनी गोमती वाग्युक्ता मही या सूनृता साध्वी वाणी साप्येवा हि एवमेव हि । कुक्ष्यादिवदेव हि । दाशुषे यजते पक्वा पक्वफलवती

शाखा न कल्पतरुशाखेव वरदात्री भवति । हे इन्द्र ते तव विभूतय ऐश्वर्याणि ऊतयो रक्षाश्च एवा हि एवमेव ।

अनेन दाण् दाने इत्यतः अमडुप्रत्ययः टिलोपः । कल्पतरुशाखेव भक्तानां सर्वाभीष्टं ददातीति दम इति निरुक्तेः एवा ह्यस्य सूनृतेत्यादिना सूचनाद् **दममूर्तिरत्र** ॥ ८६८ ॥

**॥ ॐ अपराजिते नमः ॥**

**इन्द्र मावते । सद्यश्चित् सन्ति दाशुषे । एवा ह्यस्य काम्या**
**स्तोम उक्थं च शंस्या । इन्द्राय सोमपीतये ॥ ८६९ ॥**

हे इन्द्र ते दाशुषे त्वां यजते मावते ज्ञानिने दातुं ते तव विभूतयः ऐश्वर्याणि सद्यश्चित् सद्योपि, नित्यमिति यावत्, सन्त्येवेति यावत् । किश्चास्य परमेश्वरस्य काम्या काम्यानि प्रियाणि उक्थं उक्थानि सोमपीतये सोमपानार्थं तस्मा इन्द्राय शंस्या शंस्यान्येव हि । स्तोमः स्तोमाश्च इन्द्राय सोमपीतये, योग्या इति शेषः ।

अनेन परापूर्वात् जेःक्विप् । पराजीयन्ते कालत इति पराजितो नश्वरा विभूतयः । न विद्यन्ते नश्वरा विभूतयो यस्य स अपराजिदिति निरुक्तेः सद्यश्चित् सन्ति दाशुषे इत्यनेन सूचनाद् **अपराजिन्मूर्तिरत्र** ॥ ८६९ ॥

**॥ ॐ सर्वसहोनियन्त्रे नमः ॥**

**इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ अभिष्टि -**
**रोजसा । एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने ॥ ८७० ॥**

हे इन्द्र महान् ओजसा सामर्थ्येन अभिष्टि अभितः सर्वविषये इष्टिरिच्छा यस्य स त्वं, सोमस्य पर्वणि अवदानानि येषु ते सोमपर्वाणः, तैः सोमपर्वभिः सोमपैः विश्वेभिर्विश्वैः समस्तैर्देवैः सह एहि । एत्य अन्धसः अन्नस्य[1] मत्सि मदं प्राप्नुहि । हे ऋत्विजः मन्दिं मदकारणं विष्णुं मन्दिने मदशीलायेन्द्राय सोमे सुते सति आ सृजत ईम् सन्निहितं कुरुतैव । स्वसन्निधानपवित्रितमेव सोमं पिबति नान्यथेति भावः ।

---

१. सोमस्येति यावत् ।

अनेन सर्वाणि सहांसि ओजांसि नियमयतीति वा, सर्वाणि जगन्ति सहसा नियामयतीति वा सर्वसहोनियन्ता, निपूर्वाद् यमेस्तृच्, इति निरुक्तेः महाँ अभिष्टिरोजसेत्यनेन सूचनात् **सर्वसहोनियन्तृमूर्तिरत्र**। नामद्वयपक्षेप्ययमेवार्थः ॥ ८७० ॥

॥ ॐ नियमाय नमः ॥

**चक्रिं विश्वानि चक्रये । मत्स्वा सुशिप्र मन्दिभिः स्तोमेभि-**
**र्विश्वचर्षणे । सचैषु सवनेष्वा । असृग्रमिन्द्र ॥ ८७१ ॥**

हे ऋत्विजः विश्वानि चक्रये समस्तकार्यकर्त्रे इन्द्राय तत्पानार्थं चक्रिं सर्वकर्तारमेनं सोममासृजतेति संबन्धः। हे सुशिप्र शोभनानन्द विश्वचर्षणे विश्वजीवेश एषु त्रिषु सवनेषु सचा सह अस्मद्रक्षणाय अस्मद्रक्षणं कुर्वन्, मन्दिभिः मदहेतुभिः स्तोमेभिः स्तोत्रैः असृग्रमनारतं मत्स्व।

अनेन नियमयति समस्तान् जीवानिति नियम इति निरुक्तेः विचर्षण इत्यनेन सूचनात् **नियममूर्तिरत्र** ॥ ८७१ ॥

॥ ॐ यमाय नमः ॥

**ते गिरः प्रति त्वामुदहासत । अजोषा वृषभं पतिम् ।**
**सं चोदय चित्रमर्वाग् राध इन्द्र वरेण्यम् ॥ ८७२ ॥**

हे इन्द्र अजोषाः त्वदन्येनासेव्या गिरः ते त्वदीयाः त्वन्निःसृतवेदवाचः वृषभं श्रेष्ठं पतिं त्वां प्रति उत् उच्चैः सम्यङ् मुख्यतया अहासत अगमन्। ओ हाक् गतौ। अस्माभिरुच्चरिताः सन्तु। हे इन्द्र अर्वागधस्तात् स्थितान् नीचानस्मान् प्रति चित्रं भद्रं वरेण्यं वरणीयं राध ऐश्वर्यं चोदय अस्मभ्यं देहीति यावत्।

अनेन या प्रापणे इत्यस्मात् कर्मणि डः। मा निर्माणे इत्यस्मात् कर्तरि डः। यं प्रापणीयं राधो माति निर्मातीति यम इति निरुक्तेः सं चोदय चित्रमर्वागित्यनेन सूचनाद् **यममूर्तिरत्र** ॥ ८७२ ॥

॥ ॐ सत्ववते नमः ॥

**असदित् ते विभु प्रभु । अस्मान् सु तत्र चोदयेन्द्र राये**
**रभस्वतः। तुविद्युम्न यशस्वतः। सं गोमदिन्द्र ॥ ८७३ ॥**

हे इन्द्र विशिष्टं भवतीति विभु प्रकृष्टं भवतीति प्रभु आनन्दादिगुणजातम् असदित्, लङर्थे पञ्चमो लकारः, अस्त्येव। हे तुविद्युम्न महाकीर्ते इन्द्र रभस्वतः शब्दवतः स्तोतॄन् यशस्वतः यशस्विनोऽस्मान् राये गप्रम्येषा, महैश्वर्यरूपे तत्र त्वयि सं चोदय त्वद्विषयबुद्ध्यादियुक्तान् कुरु।

अनेन सतः समीचीनस्य भावः सत्त्वं विशिष्टप्रकृष्टनन्दादिगुणजातं तदस्यास्तीति सत्त्ववानिति निरुक्तेः ते विभु प्रभु असदित्यनेन सूचनात् **सत्त्ववन्मूर्तिरत्र**॥ ८७३॥

॥ ॐ सात्विकाय नमः॥

**वाजवदस्मे पृथु श्रवो बृहत्। विश्वायुर्धेह्यक्षितम्।**
**अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम्॥ ८७४॥**

हे विश्वायुः पूर्णायुरिन्द्र त्वं अस्मे अस्मासु गोमद् गोयुक्तं वाजवद् अन्नेनापि सहितं अक्षितमक्षयं पृथु बृहत् श्रवः, श्रवसा श्रवणेन जायत इति श्रवो ज्ञानं, सन्धेहि सम्यग् देहि।

अत्र संचोदय धेहि अस्मे धेहीत्यादि राधः, श्रवः सुम्नमित्यादि च अन्यास्वपि ऋक्षु यद्यपि बहुशः पुनरुक्तं दृश्यते तथापि क्वचिदादरार्थत्वं क्वचिदनुवादेनान्यगुणविधानार्थत्वं क्वचित् प्रतियोग्यनुयोग्यादिसम्बन्धसमर्पणार्थत्वं क्वचित् देशकालावस्थानविशेषप्रतिपादकत्वमित्यादि-प्रकारविशेषेण पुनरुक्तिर्न दोषाय। एवमग्रेप्यनुसन्धेयम्।

अनेन सत्वगुणजन्यत्वात् सात्वं ज्ञानम्, सत्वात् संजायते ज्ञानमित्युक्तेः, तद्वान् सात्वी। स्वभक्तं सात्विनं करोतीति सात्विकः, कृञो डः, इति निरुक्तेः बृहद् श्रवो धेहीत्यनेन सूचनात् **सात्विकमूर्ति-रत्र**॥ ८७४॥

॥ ॐ सत्याय नमः॥

**इन्द्र ता रथिनीरिषः। वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त**
**ऋग्मियम्। होम गन्तारमूतये। सुतेसुते न्योकसे॥ ८७५॥**

हे इन्द्र ताः प्रसिद्धाः रथिनीः इषः रथो देहः, तद्वतीः सदेहमिति यावत्। अविकलेन देहेन युक्तमन्नं धेहि। वसोर्वसुपतिं वसोर्वसूनां देवानां वसुपतिं वसवो देवास्तेषां पतिमीश्वरं देवदेवेश्वरं ऋग्मियं

ऋङ्मेयं भक्तान् प्रति गन्तारमिन्द्रं गीर्भिर्गृणन्तः स्तुवन्तो वयं ऊतये अभीष्टसिद्धये सुतेसुते प्रतिसवनं न्योकसे समीचीनगृहादिप्राप्त्यर्थं चात्र होम आह्वयामः ।

अनेन सतो भक्तान् प्रति यातीति सत्य इति निरुक्तेः गन्तारमित्यनेन सूचनात् **सत्यमूर्तिरत्र** ॥ ८७५ ॥

॥ ॐ सत्यधर्मपरायणाय नमः ॥

**वृहद् वृहत एदरिः । इन्द्राय शूषमर्चति । [१]य आनयत्**
**परावतः सुनीती तुर्वशं यदुम् । इन्द्रः स नः ॥ ८७६ ॥**

अरिः अविनाशी आत्मनोऽविनाशेच्छुः पुरुषः वृहत् शूषं महासुखमुद्दिश्य सुतेसुते प्रतिसोमसवनं न्योकसे गृहाय सतामाश्रयाय ब्रृहते पूर्णायेन्द्राय देवाय अर्चति । द्वितीयार्थे चतुर्थी । लिङर्थे लट् । इष्टानिष्टप्राप्तिपरिहारकामः इन्द्रमर्चेत् । य इन्द्रः तुर्वशं यदुं एतत्संज्ञौ राजानौ शत्रुभिर्दूरदेशे प्रक्षिप्तौ सुनीती सुनीत्या शोभनेन नयेन परावतस्तस्माद् दूरदेशाद् आनयत् आनीतवान् स इन्द्रो नोऽस्माकं सखा भवेत् ।

अनेन सत्सु भवः सत्यः स चासौ धर्मश्च सत्यधर्मः । सत्यधर्मेषु सात्विकधर्मेषु परं तात्पर्यं येषां ते सत्यधर्मपरा यदुतुर्वशादिभक्तजनाः । तेषामयनमाश्रय इति सत्यधर्मपरायण इति निरुक्तेः न्योकसे इत्यनेन य आनयत् तुर्वशं यदुमित्यनेन च सूचनात् **सत्यधर्मपरायणमूर्तिरत्र** ॥ ८७६ ॥

॥ ॐ अभिप्रायाय नमः ॥

**युवा सखा । अविप्रे चिद् वयो दधदनाशुना चिदर्वता ।**
**इन्द्रो जेता हितं धनम् । महीरस्य प्रणीतयः ॥ ८७७ ॥**

अयमिन्द्रो युवा तरुणः सखा सर्वेषां सह वर्तते । अविप्रे चित्, विप्रः स्तोता, अस्तोतर्यपि वयः अन्नं दधत् धारयति । किमु वक्तव्यं स्तोतरि धारयतीति । स इन्द्रः अनाशुना चित् अक्षिप्रगमनेनापि अर्वता अश्वेन हितं शत्रुषु निहितं धनं जेता आनेता भवति । तृजन्तः । अस्येन्द्रस्य प्रणीतयः प्रेरणाः महीः महत्योऽनुल्लंघ्याः सर्वगताश्च ।

१. ऋग्वेद ६-४५, शंयुर्बार्हस्पत्यः । इदमपि गायत्रीछन्दस्कमन्तिमामृचमृते ।

अनेन अभि अभितः प्रकर्षेण प्रायः प्रेरणादिक्रिया यस्येति निरुक्तेः महीरस्य प्रणीतय इत्यनेन सूचनाद् **अभिप्रायमूर्तिरत्र** ॥ ८७७ ॥

॥ ॐ प्रियार्हाय नमः ॥

**पूर्वीरुत प्रशस्तयः । नास्य क्षीयन्त ऊतयः । सखायो**
**ब्रह्मवाहसेऽर्चत प्र च गायत । स हि नः ॥ ८७८ ॥**

उत किञ्च अस्येन्द्रस्य पूर्वीः अनादयः प्रशस्तयः प्रकृष्टस्तुतयः ऊतयो रक्षाः दानानि वा न क्षीयन्ते नापचीयन्ते । हे सखायः समानस्थाना स्तोतारः ब्रह्मवाहसे ब्रह्मभिर्मन्त्रैः वहनीयाय प्राप्तव्यायेन्द्राय अर्चत शस्त्राणि शंसत स्तोत्राणि प्रगायत च सामानि । स इन्द्रः नः अस्माकं प्रमतिः प्रकृष्टमतिदाता हि यस्मात् तस्मादिति संबन्धः ।

अनेन प्रियं स्तोत्रं साम च तदर्हतीति प्रियार्ह इति निरुक्तेः ब्रह्मवाहसे इत्यनेन सूचनात् **प्रियार्हमूर्तिरत्र** ॥ ८७८ ॥

॥ ॐ अर्हप्रियकृते नमः ॥

**प्रमतिर्मही । त्वमेकस्य वृत्रहन्नविता द्वयोरसि । उतेदृशे**
**यथा वयम् । नयसीद्धति द्विषः कृणोष्युक्थशंसिनः ॥ ८७९ ॥**

हे वृत्रहन् इन्द्र भवान् मही महती प्रमतिः प्रकृष्टमतिरूपः । एकस्य स्तोतुः द्वयोः स्तोत्रोः अविता रक्षितासि । किञ्च यथा वयं त्वद्भक्ता त्वया रक्षिताः तथा ईदृशे अस्मद्विधाय भक्तजनाय अविता त्वमित् त्वमेव । द्विषो द्वेषिजनान् अतिनयसि अस्मानतितारयसि । किञ्चोक्थशंसिन उक्थशस्त्राणि शंसतः स्तोतॄनस्मान् कृणोषि समृद्धान् ।

अनेनार्हेभ्यो योग्येभ्यो भक्तेभ्यः प्रियं रक्षणादि करोतीति अर्हप्रियकृदिति निरुक्तेः त्वमेकस्येत्यादिना सूचनाद् **अर्हप्रियकृन्मूर्तिरत्र** ॥ अत्र नामद्वयपक्षेप्येवमेवार्थः ॥ ८७९ ॥

॥ ॐ प्रीतिवर्धनाय नमः ॥

**नृभिः सुवीर उच्यसे । ब्रह्माणं ब्रह्मवाहसं गीर्भिः**
**सखायमृग्मियम् । गां न दोहसे हुवे ॥ ८८० ॥**

हे इन्द्र यस्मात् त्वं नृभिः स्तुतीनां नेतृभिः पुरुषैः सुवीरः शोभनैर्वीरैः पुत्रपौत्रादिभिर्दातव्यैरुपेत उच्यसे अतस्तानस्मभ्यं प्रयच्छेति संबन्धः । ब्रह्माणं परिवृढं ब्रह्मवाहसं ब्रह्मभिः स्तुतिभिर्मन्त्रैः वहनीयम् अस्माकं सखायम् ऋग्मियम् स्तुत्यर्हं दोहसे अभीष्टदोहनाय गां न गामिव गीर्भिः स्तुतिभिः हुवे आह्वयामि ।

अनेन वह प्रापणे इत्यतो ल्युट्, अनादेशः, धातोरन्त्यस्य धकारादेशः, रमागमश्च । वहतीति वर्धनः । प्रीतिसाधनत्वात् प्रीतिः स्तुतिः । प्रीतिं स्तुतिं वहतीति वा भक्तष्टुतस्तुतिं प्रत्यभिवर्धत इति वा प्रीतिवर्धन इति निरुक्तेः ब्रह्मवाहसे इत्यनेन सूचनात् **प्रीतिवर्धनमूर्तिरत्र** ॥ ८८० ॥

॥ ॐ विहायसगतये नमः ॥

**यस्य विश्वानि हस्तयोरूचुर्वसूनि नि द्विता । वीरस्य**
**पृतनाषहः । वि दृळ्हानि चिदद्रिवो जनानां शचीपते ॥ ८८१ ॥**

यस्येन्द्रस्य वीरस्य पृतनासहः हस्तयोः विश्वानि द्विता दिव्यपार्थिवरूपेण द्विविधानि वसूनि विद्यन्त इति ऋषयो निऊचुः नितरामूचुः तमिन्द्रं हुव इति संबन्धः । आ दृणात्यनेनेत्यद्रिर्वज्रः, तं वर्तयतीत्यद्रिवाः । हे अद्रिवः शचीपते इन्द्र जनानां शत्रूणां दृळ्हा चित् स्थिराण्यपि पुराणि बलानि वा विवृह विविधमुन्मूलयेत्यर्थः ।

अनेन ओ हाक् गतावित्यस्य असनूप्रत्ययः, णिच्च । आतो युक् चिणिकृतोः युगागमः । गम्यते इति हायसं द्रविणम्, तस्य विविधस्य दिव्यपार्थिवरूपेण द्विविधस्य हायसस्य गतिः संबन्धो यस्य हस्तयोः स विहायसगतिरिति निरुक्तेः विश्वानि हस्तयोर्वसूनीत्यनेन सूचनाद् **विहायसगतिमूर्तिरत्र** ॥ ८८१ ॥

॥ ॐ ज्योतिषे नमः ॥

**वृह माया अनानत । तमु त्वा सत्य सोमपा इन्द्र**
**वाजानां पते । अहूमहि श्रवस्यवः । तमु त्वा यः ॥ ८८२ ॥**

हे अनानत सर्वोच्छ्रित इन्द्र मायाः शत्रुविनिर्मिताः विवृह विनाशय । सच्छब्दो भावप्रधानः । सद्भावो ज्ञायते अनेनेति सत्यः ज्योतीरूपः, तस्य सम्बुद्धिः हे सत्य । यद्वा हे अवितथस्वभाव ।

अनेन अभि अभितः प्रकर्षेण प्रायः प्रेरणादिक्रिया यस्येति निरुक्तेः महीरस्य प्रणीतय इत्यनेन सूचनाद् **अभिप्रायमूर्तिरत्र** ।। ८७७ ।।

।। ॐ प्रियार्हाय नमः ।।

**पूर्वीरुत प्रशस्तयः । नास्य क्षीयन्त ऊतयः । सखायो**
**ब्रह्मवाहसेऽर्चत प्र च गायत । स हि नः ।। ८७८ ।।**

उत किञ्च अस्येन्द्रस्य पूर्वीः अनादयः प्रशस्तयः प्रकृष्टस्तुतयः ऊतयो रक्षाः दानानि वा न क्षीयन्ते नापचीयन्ते । हे सखायः समानस्थाना स्तोतारः ब्रह्मवाहसे ब्रह्मभिर्मन्त्रैः वहनीयाय प्राप्तव्यायेन्द्राय अर्चत शस्त्राणि शंसत स्तोत्राणि प्रगायत च सामानि । स इन्द्रः नः अस्माकं प्रमतिः प्रकृष्टमतिदाता हि यस्मात् तस्मादिति संबन्धः ।

अनेन प्रियं स्तोत्रं साम च तदर्हतीति प्रियार्ह इति निरुक्तेः ब्रह्मवाहसे इत्यनेन सूचनात् **प्रियार्ह-मूर्तिरत्र** ।। ८७८ ।।

।। ॐ अर्हप्रियकृते नमः ।।

**प्रमतिर्मही । त्वमेकस्य वृत्रहन्नविता द्वयोरसि । उतेदृशे**
**यथा वयम् । नयसीद्वति द्विषः कृणोष्युक्थशंसिनः ।। ८७९ ।।**

हे वृत्रहन् इन्द्र भवान् मही महती प्रमतिः प्रकृष्टमतिरूपः । एकस्य स्तोतुः द्वयोः स्तोत्रोः अविता रक्षितासि । किञ्च यथा वयं त्वद्भक्ता त्वया रक्षिताः तथा ईदृशे अस्मद्विधाय भक्तजनाय अविता त्वमित् त्वमेव । द्विषो द्वेषिजनान् अतिनयसि अस्मानतितारयसि । किञ्चोक्थशंसिन उक्थशस्त्राणि शंसतः स्तोतॄनस्मान् कृणोषि समृद्धान् ।

अनेनार्हेभ्यो योग्येभ्यो भक्तेभ्यः प्रियं रक्षणादि करोतीति अर्हप्रियकृदिति निरुक्तेः त्वमेकस्येत्यादिना सूचनाद् **अर्हप्रियकृन्मूर्तिरत्र** ।। अत्र नामद्वयपक्षेप्येवमेवार्थः ।। ८७९ ।।

।। ॐ प्रीतिवर्धनाय नमः ।।

**नृभिः सुवीर उच्यसे । ब्रह्माणं ब्रह्मवाहसं गीर्भिः**
**सखायमृग्मियम् । गां न दोहसे हुवे ।। ८८० ।।**

हे इन्द्र यस्मात् त्वं नृभिः स्तुतीनां नेतृभिः पुरुषैः सुवीरः शोभनैर्वीरैः पुत्रपौत्रादिभिर्दातव्यैरुपेत उच्यसे अतस्तानस्मभ्यं प्रयच्छेति संबन्धः । ब्रह्माणं परिवृढं ब्रह्मवाहसं ब्रह्मभिः स्तुतिभिर्मन्त्रैः वहनीयम् अस्माकं सखायम् ऋग्मियम् स्तुत्यर्हं दोहसे अभीष्टदोहनाय गां न गामिव गीर्भिः स्तुतिभिः हुवे आह्वयामि ।

अनेन वह प्रापणे इत्यतो ल्युट्, अनादेशः, धातोरन्त्यस्य धकारादेशः, रमागमश्च । वहतीति वर्धनः । प्रीतिसाधनत्वात् प्रीतिः स्तुतिः । प्रीतिं स्तुतिं वहतीति वा भक्तष्टुतस्तुतिं प्रत्यभिवर्धत इति वा प्रीतिवर्धन इति निरुक्तेः ब्रह्मवाहसे इत्यनेन सूचनात् **प्रीतिवर्धनमूर्तिरत्र** ॥ ८८० ॥

॥ ॐ विहायसगतये नमः ॥

**यस्य विश्वानि हस्तयोरूचुर्वसूनि नि द्विता । वीरस्य**
**पृतनाषहः । वि दृळ्हानि चिदद्रिवो जनानां शचीपते ॥ ८८१ ॥**

यस्येन्द्रस्य वीरस्य पृतनासहः हस्तयोः विश्वानि द्विता दिव्यपार्थिवरूपेण द्विविधानि वसूनि विद्यन्त इति ऋषयो निऊचुः नितरामूचुः तमिन्द्रं हुव इति संबन्धः । आ दृणात्यनेनेत्यद्रिर्वज्रः, तं वर्तयतीत्यद्रिवाः । हे अद्रिवः शचीपते इन्द्र जनानां शत्रूणां दृळ्हा चित् स्थिराण्यपि पुराणि बलानि वा विवृह विविधमुन्मूलयेत्यर्थः ।

अनेन ओ हाक् गतावित्यस्य असनूप्रत्ययः, णिच्च । आतो युक् चिणिकृतोः युगागमः । गम्यते इति हायसं द्रविणम्, तस्य विविधस्य दिव्यपार्थिवरूपेण द्विविधस्य हायसस्य गतिः संबन्धो यस्य हस्तयोः स विहायसगतिरिति निरुक्तेः विश्वानि हस्तयोर्वसूनीत्यनेन सूचनाद् **विहायसगतिमूर्तिरत्र** ॥ ८८१ ॥

॥ ॐ ज्योतिषे नमः ॥

**वृह माया अनानत । तमु त्वा सत्य सोमपा इन्द्र**
**वाजानां पते । अहूमहि श्रवस्यवः । तमु त्वा यः ॥ ८८२ ॥**

हे अनानत सर्वोच्छ्रित इन्द्र मायाः शत्रुविनिर्मिताः विवृह विनाशय । सच्छब्दो भावप्रधानः । सद्भावो ज्ञायते अनेनेति सत्यः ज्योतीरूपः, तस्य सम्बुद्धिः हे सत्य । यद्वा हे अवितथस्वभाव ।

सोमपाः वाजानां पते इन्द्र श्रवस्यवः श्रवोऽन्नमात्मने इच्छन्तो वयं तमु त्वा तादृशं त्वामेव अहूमहि आह्वयामः स्तुमः।

अनेन द्युत दीप्तावित्यतो द्युतेरसिन्नादेश्च ज इति सूत्रेणासिन्नादेशो धातोर्दस्य जश्च। ज्योतिर्द्युतिः। तदात्मकत्वाज्ज्योतिरिति निरुक्तेः सत्यपदेन संबोधनेन सूचनात् **ज्योतिर्मूर्तिरत्र**॥ ८८२॥

॥ ॐ सुरुचये नमः॥

**पुरासिथ यो वा नूनं हिते धने। हव्यः स श्रुधी हवम्।**
**धीभिरर्वद्भिरर्वतो वाजाँ इन्द्र श्रवाय्यान्॥ ८८३॥**

हे इन्द्र तमु त्वा तमेव त्वां स्तुमः। यस्त्वं पुरा पूर्वस्मिन् काले हव्यः ह्वातव्यश्चासिथ बभूविथ। धनलाभार्थं यो वा यश्च त्वं हिते शत्रुनिहिते धने निमित्ते सति नूनमद्यापि हव्य आह्वतव्यो बभूविथ। स त्वमस्मदीयं स्तोत्रं श्रुधि शृणु। किञ्च धीभिः स्तुतिभिः त्वद्विषयाभिः प्रीतेन त्वया अनुगृहीता वयं अर्वद्भिरस्मदीयैरश्वैः अश्वानारुह्येति यावत्, अर्वतः शत्रुसम्बन्धिनः श्रवाय्यान् श्रवणीयान् प्रशस्यान् वाजान् अश्वान् जेष्म जयेमेति (उत्तरेण) संबन्धः।

अनेन रोचते इति रुचिः स्तुतिः। सु समीचीना रुचिः स्तुतिर्यस्मिन् सः सुरुचिरिति निरुक्तेः धीभिरर्वद्भिरित्यादिना सूचनात् **सुरुचिमूर्तिरत्र**॥ ८८३॥

॥ ॐ हुतभुजे नमः॥

**त्वया जेष्म हितं धनम्। अभूरु वीर गिर्वणो महाँ इन्द्र**
**धने हिते। भरे वितन्तसाय्यः। या त ऊतिरमित्रहन्॥ ८८४॥**

हे इन्द्र प्रसन्नेन त्वया रक्षिता वयं हितं निहितं शत्रुषु गूहितं धनं च जेष्म। हे वीर शत्रूणां विदारयितः गिर्वणः अमित्रहन् इन्द्र हिते शत्रुषु निहिते धने निमित्ते सति महान् प्रवृद्धस्त्वं भरे संग्रामे वितन्तसाय्यः, तन्तस् इति धातुर्जयार्थः कण्ड्वादौ पठ्यते, तस्माद् विपूर्वात् कर्तरि आय्यप्रत्ययः, विशेषेण शत्रूणां धनस्य जेताऽभूः, तदीयधनस्य भोक्ताऽभूरित्यर्थः। किञ्च ते त्वदीया या ऊतिः तया वयमपि शत्रुधनं जेष्मेति संबन्धः।

अनेन हुतं हितं निरुक्तत्वात् (उकारस्येकारः) हुतस्य निहितस्य धनस्य भोक्ता हुतभुगिति निरुक्तेः हितं धनं जेष्मेत्यनेन धनं हिते वितन्तसाय्य इत्यनेन च सूचनाद् **हुतभुङ्मूर्तिरत्र**॥ ८८४॥

॥ ॐ विभवे नमः ॥

**मक्षूजवस्तमासति । तया नो हिनुही रथम् । स रथेन**
**रथीतमोऽस्माकेनाभियुग्वना । जेषि जिष्णो ॥ ८८५ ॥**

हे इन्द्र मक्षुजवस्तमा शीघ्रजवा या ऊतिः गतिः असति अस्ति तया गत्या नोऽस्माकं रथे शत्रुजयार्थं हिनुहि प्रेरय, शीघ्रं गमय। हे जिष्णो जयशील इन्द्र रथितमः स त्वं आस्माकेनास्मदीयेन अभियुग्वना अभियोक्त्रा शत्रूणामभिभावयित्रा रथेन धनं जेषि अस्मदर्थं जय।

अनेन भवति सर्वदेति भुर्भूतिः । भवतेर्डुः । वि विशेषेण वेगवत्तरा भुर्भूतिः यस्य स विभुरिति निरुक्तेः मक्षूजवस्तमासतीत्यनेन सूचनाद् **विभुमूर्तिरत्र** ॥ ८८५ ॥

॥ ॐ रवये नमः ॥

**हितं धनम् । य एक इत् तमु ष्टुहि कृष्टीनां विचर्षणिः ।**
**पतिर्जज्ञे वृषक्रतुः । यो गृणतामिदासिथाऽऽपिः ॥ ८८६ ॥**

विचर्षणिः विशेषेण सर्वस्य द्रष्टा वृषक्रतुः श्रेष्ठकर्मा स इन्द्रः एक इत् एक एव कृष्टीनां प्रजानां पतिर्जज्ञे । प्रत्यक्षत्वं हरेर्जन्मेति वचनादुक्तगुणविशिष्टतया भक्तानां प्रत्यक्षो बभूव । नान्यः कश्चित् । तमु तमेवेन्द्रं हे स्तोतः स्तुहि । हे इन्द्र यस्त्वं गृणतामित् स्तुवतामस्माकमेव आपिः बन्धुरासिथ बभूविथ ।

अनेन रु शब्दे इत्यत अच इरिति सूत्रेण इ प्रत्ययः, गुणावादेशौ । रूयते स्तूयते इति रविरिति निरुक्तेः तमुष्टुहीत्यनेन सूचनाद् **रविमूर्तिरत्र** ॥ ८८६ ॥

॥ ॐ विलोचनाय नमः ॥

**ऊती शिवः सखा । स त्वं न इन्द्र मृळय । धिष्व वज्रं**
**गभस्त्यो रक्षोहत्याय वज्रिवः । सासहीष्ठा अभि स्पृधः ॥ ८८७ ॥**

य इन्द्रो भक्तानां बन्धुः स ऊती ऊत्या रक्षया शिवः सुखकरः,अत एव सखा मित्रभूतः त्वं नोऽस्मान् इदानीं मृळय । हे वज्रिवः इन्द्र गभस्त्योः आत्मीययोर्हस्तयोः वज्रं धिष्व धत्स्व । किमर्थम् । रक्षोहत्याय रक्षसां हननार्थम् । धृत्वा च स्पृधः स्पर्धमाना आसुरीः सेनाः ससहिष्ठाः अत्यर्थमभिभव ।

अनेन लोचृ दर्शने इत्यतः कर्मणि युच् । लोच्यते अवलोक्यत इति आश्चर्यरूपत्वाल्लोचनं वज्रं वि विशेषेण हस्तयोर्यस्य स विलोचन इति निरुक्तेः धिष्व वज्रं गभस्त्योरित्यनेन सूचनाद् **विलोचनमूर्तिरत्र** ॥ ८८७ ॥

॥ ॐ सूर्याय नमः ॥

**प्रत्नं रयीणां युजं सखायं कीरिचोदनम् । ब्रह्मवाहस्तमं**
**हुवे । स हि विश्वानि पार्थिवाँ एको वसूनि ॥ ८८८ ॥**

प्रत्नं चिरन्तनं सर्वेषामाद्यं रयीणां धनानां युजं योजयितारं दातारं सखायं कीरिचोदनं स्तोतॄणां प्रेरकम्, प्राप्यमिति यावत्, ब्रह्मवाहस्तमं अतिशयेन स्तोत्रविषयमिन्द्रं हुवे आह्वयामि । स इन्द्रः पार्थिवा पार्थिवानि पृथिव्यां भवानि विश्वानि समस्तानि वसूनि धनानि एक एव पत्यते ईष्टे । पत्यतिरैश्वर्यकर्मा हि ।

अनेन पार्थिवानि सरति गच्छतीति सूर्यः । राजसूयसूर्येत्यादिना निपातितः । यद्वा सूरिभिर्ज्ञानिभिः प्राप्यत इति सूर्यः, यातेः कः उपपदान्त्यलोपः, इति निरुक्तेः विश्वानि पार्थिवा वसूनीत्यादिना सूचनात् **सूर्यमूर्तिरत्र** ॥ ८८८ ॥

॥ ॐ सवित्रे नमः ॥

**पत्यते । गिर्वणस्तमो अध्रिगुः । स नो नियुद्भिरा पृण**
**कामं वाजेभिरश्विभिः । गोमद्भिर्गोपते धृषत् ॥ ८८९ ॥**

हे गोपते गिर्वणस्तमः वेदेन परममुख्यतया प्रतिपाद्यः अध्रिगुः अद्भुतगमनः अप्रतिहतगतिर्वा स त्वं नः अस्माकं कामं काम्यं पुत्रद्रविणादिकं नियुद्भिर्बलवद्भिः धृषत् यथा भवति तथा दारिद्र्य-नाशनसमर्थं यथा भवति तथा आ पृण संपूरय, पृण दाने, देहि वा । यद्वा धृषदितीन्द्रस्य विशेषणं, शत्रूणां धर्षकस्त्वं गोमद्भिर्गोयुक्तैः अश्विभिरश्वयुक्तैः वाजिभिरन्नैः अस्मदीयं कामं मापूरय ।

अनेन काम्यानां पुत्रादीनां सविता प्रसविता उत्पादकः, षूञ् प्राणिगर्भविमोचने इत्यतस्तृच् इडागमो गुणावादेशौ, इति निरुक्तेः काममा पृणेत्यादिना सूचनात् **सवितृमूर्तिरत्र** ॥ ८८९ ॥

॥ ॐ रविलोचनाय नमः ॥

**तद् वो गाय सुते सचा पुरुहूताय सत्वने । शं यद् गवे**
**न शाकिने । न घा वसुर्नि यमते दानं वाजस्य ॥ ८९० ॥**

हे स्तोतारः यूयं सुते सोमे अभिषुते सति सत्वने धनानां सनित्रे दात्रे पुरुहूतायेन्द्राय तत् स्तोत्रं सचा सह मिलिताः अन्योन्यसहायेन गाय गायत । यत् स्तोत्रं शाकिने शक्तिमते इन्द्राय गवे गोभ्यः यवसं न यवसमिव शं सुखकरं भवति, तद् गायतेति सम्बन्धः । वसुर्वासयिता स इन्द्रः वाजस्य दानं न धनेव[१] (?) नियमते नियच्छति सततं ददातीत्यर्थः ।

अनेन रविः स्तुतिः । लोचनीयत्वाल्लोचनं प्रियम् । रविः स्तुतिः लोचनं प्रियं यस्य स रविलोचन इति निरुक्तेः शं यद् गवे न शाकिने इत्यनेन सूचनाद् **रविलोचनमूर्तिरत्र** ॥ ८९० ॥

॥ ॐ अनन्ताय नमः ॥

**गोमतः । यत् सीमुप श्रवद् गिरः । कुवित्सस्य प्र हि**
**व्रजं गोमन्तं दस्युहा गमत् । शचीभिरप नो वरत् ॥ ८९१ ॥**

स इन्द्रो यद् यदि गोमतः स्तुवतो गिरो वचनानि उप श्रवत् शृणुयात् सीम् तर्ह्येव दस्युहा दस्यूनां हन्ता सन् कुवित्, कुविदिति बहुनाम, बहून् सस्यति हिनस्ति, परद्रव्याणामपहर्तेति यावत् । तस्य कुवित्सस्यासुरस्य स्वभूतं गोमन्तं व्रजं गोष्ठं प्रगमत् । तं हत्वा तदीयगोधनं भक्तेभ्यो दातुं गच्छतीति यावत् । हि यस्मादेवं भक्तवत्सलः तस्मात् शचीभिरात्मीयैः कर्मभिः प्रजाभिर्वा नोऽस्माकं गाः ज्ञानानि अपवरत् निगूढास्ता अपावृणोत् ।

अनेन अन चेष्टायामित्यतो भावे क्विप्, तनु विस्तारे इत्यतः कर्तरि डः । अनं गमनं तनोतीति अनन्तः, द्वितीयाया अलुक् । असुराहृतगोग्रहणाय गच्छतीति यावत् । इति निरुक्तेः कुवित्सस्य व्रजं दस्युहा गमदित्यनेन सूचनाद् **अनन्तमूर्तिरत्र** ॥ ८९१ ॥

॥ ॐ हुतभुग्भोक्त्रे नमः ॥

**इमा उ त्वा शतक्रतोऽभि प्र णोनुवुर्गिरः । इन्द्र वत्सं**
**न मातरः । दूणाशं सख्यं तव गौरसि वीर गव्यते ॥ ८९२ ॥**

१. सर्वेष्वपि कोशेषु धनेवेत्येव वर्तते । शब्दस्वरूपमर्थश्च न सुज्ञेयः ।

हे शतक्रतो इन्द्र त्वामभि इमा अस्मदीया गिरः स्तुतयः प्रनोनुवुः प्रकर्षेण पुनःपुनर्गच्छन्ति । नौतिरत्र गतिकर्मा । तत्र दृष्टान्तो वत्सं न । मातरो गृहे वर्तमानं वत्सं यथा शीघ्रमभिगच्छन्ति तद्वत् । यद्वा अस्मदीया गिरो वाचः त्वामभिप्रनोनुवुः अभितः शब्दयन्ति स्तुवन्ति, यथा गावो वत्समभिलक्ष्याम्बारवं कुर्वन्ति तद्वत् । हे इन्द्र तव त्वदीयं सख्यं सखित्वं दूणाशं दुर्नशं नाशयितुमशक्यम्, अतिदृढमित्यर्थः । हे वीर इन्द्र गव्यते गामात्मन इच्छते जनाय त्वं गौरसि गवां दातासि । उपचारात् कारणे कार्यशब्दः ।[1]

अनेन हु दानादनयोरिति पाठाद् दानार्थाज्जुहोतेः कर्मणि क्तः । हुतं भोग्यं स्तोत्रम् । भुजेरभ्यवहारार्थात् कर्तरि क्विप् । भुजेः पालनार्थात् कर्तरि तृच् । स्तोत्रं भुङ्क्ते उपजीवति, करोतीति यावत्, इति स्तोता हुतभुक् । हुतभुजं स्तोतारं पालयति गवादिदानेनेति हुतभुग्भोक्तेति निरुक्तेः अभिप्रणोनुवुर्गिरः, इन्द्र वत्सं न मातरः, गोरसि वीर गव्यते इत्यादिना सूचनाद् **हुतभुग्भोक्तृमूर्तिरत्र** ॥ ८९२ ॥

॥ ॐ सुखदाय नमः ॥

**अश्वो अश्वायते भव । स मन्दस्वा ह्यन्धसो राधसे**
**तन्वा महे । न स्तोतारं निदे करः । इमा उ त्वा ॥ ८९३ ॥**

हे वीर अश्वायते अश्वमात्मन इच्छते जनाय अश्वः अश्वदो भवसि । उपचारात् पूर्ववत् कारणे कार्यशब्दः । इन्द्र स त्वं अन्धसः सोमस्य पानेन हृष्टया तन्वा आत्मीयेन शरीरेण मन्दस्व मोदस्व प्रीतो भव । किमर्थम् । महे महते राधसे सुखार्थम् । अस्मभ्यं सुखं दातुं त्वदीयं स्तोतारं निदे निन्दकाय न करः नाकरः तद्वशं न कुर्याः हि ।

अनेन सुष्टु खनत्यशुभमिति सुखं, सुपूर्वात् खनतेर्डः, तद् ददातीति सुखदः, दाणो डः, इति निरुक्तेः राधसे तन्वा महे इत्यनेन सूचनात् **सुखदमूर्तिरत्र** ॥ ८९३ ॥

---

१. अत्रोत्तरमन्त्रेप्येवमेव वर्तते कोशेषु । गोदातरि गोशब्दः, अश्वदातर्यश्वशब्दश्च प्रयुक्तः । उपचरितप्रयोगोऽयमिति ग्रन्थकर्तुराशयः । वाक्यं तु तथा नेयम् ।

॥ ॐ अनेकदाय नमः ॥

**सुतेसुते नक्षन्ते गिर्वणो गिरः । वत्सं गावो न धेनवः ।**
**पुरूतमं पुरूणां स्तोतॄणां विवाचि । वाजेभिः ॥ ८९४ ॥**

हे गिर्वणः इन्द्र सुते सुते प्रतिसवनं इमा अस्मदीया गिरः स्तुतयः त्वां धेनव दोग्ध्र्यो गावो वत्सं न वत्समिव नक्षन्ते गच्छन्ति प्राप्नुवन्ति । हे इन्द्र पुरुतमं पुरूणां बहूनां शत्रूणां तमयितारं ग्लपयितारम्, यद्वा पुरुशब्दे उपपदे तनोतेरप्रत्ययः धातोरन्त्यस्य मकारादेशः, पुरूणि अनेकान्यभीष्टानि तनोतीति पुरुतमः, तं त्वा विवाचि, विविधाः स्तुतिशस्त्रात्मिका वाचो यस्मिन् स विवाक् तस्मिन्, यज्ञे स्तोतॄणां वाजेभिः हविर्लक्षणैरन्नैः वाजयतां त्वामन्नवन्तं कुर्वतामस्माकं पुरूणामनेकेषामभीष्टानां दाता भवेति संबन्धः । अथवा पुरूणां बहूनां स्तोतॄणामिति संबन्धः ।

अनेन अनेकानि बहूनि ददातीत्यनेकद इति निरुक्तेः पुरुतमं पुरूणामित्यनेन सूचनाद् **अनेकदमूर्तिरत्र** ॥ ८९४ ॥

॥ ॐ अग्रजाय नमः ॥

**वाजयताम् । अस्माकमिन्द्र भूतु ते स्तोमो वाहिष्ठो**
**अन्तमः । अस्मान् राये महे हिनु ।[1] रेवतीर्नः सधमादे ॥ ८९५ ॥**

हे इन्द्र वाहिष्ठो वोढृतमः अभीष्टापकः अस्माकं स्तोमः स्तोत्रं ते तव अन्तमः अन्तिकतमः भूतु भवेत् । त्वदग्रे तिष्ठतु । त्वं चास्मान् महे महते राये धनाय हिनु प्रेरय । किञ्च नः सधमादे यज्ञे रेवतीः धनप्रापिकाः स्तुतीः शृणु ।

अनेन अग्रे समीपे जः प्रादुर्भूतः स्तोमो यस्य सोऽग्रज इति निरुक्तेः स्तोमो अन्तमो भूत्वित्यनेन सूचनाद् **अग्रजमूर्तिरत्र** ॥ ८९५ ॥

॥ ॐ अनिर्विण्णाय नमः ॥

**इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम । आ घ त्वावान्**
**त्मनाप्तः स्तोतृभ्यो धृष्णवियानः । ऋणो रक्षं न चक्र्योः ॥ ८९६ ॥**

---

१. ऋग्वेद १-३०-१३, आजीगर्तिः शुनःशेपः सकृत्रिमो वैश्वामित्रो देवरातः ।

याभिरन्नादिभिः क्षुमन्तः स्तुतिं कुर्वन्तो वयं मदेम सुखिनो भवेम ता रेवती रेवत्यो धनवत्यः तुविवाजो बहून्यन्नानि, स्त्रीलिङ्गं वैदिकम्, मादः सुखं तस्य सधः स्थानं, मादस्य सधः, उपसर्जनस्य परनिपातः, सधमादे सुखाधिष्ठाने इन्द्रे परमेश्वरे अस्माकं स्वामिनि सति सन्तु भूयासुः। हे धृष्णो प्रगल्भ इन्द्र त्वावान् त्वत्स्वामिकः पुरुषः त्मना आत्मना घ एव त्वयैव आप्तः प्राप्तः स्यात्। त्वत्सन्निधानपात्रं स्यात्। स्तोतृभ्यः स्तोतृभिः ऋणोः रणतोः चक्रयोः, चक्रशब्दपर्यायः चक्रिशब्दः, चक्र्योः अक्षं न यथा अक्षमाश्रयभावेन वर्तते तथा स्तोतृभिः इयानः गम्यमानस्तदाश्रयो भवसि।

अनेन विदेर्लाभार्थात् क्तप्रत्ययः, रदाभ्यामिति निष्ठातकारस्य धातुदकारस्य च नः, विन्नो लाभः, निर्गतो विन्नो लाभोऽस्मादिति निर्विण्णो लाभरहितो दुःखी, स न भवति यस्मात् सोऽनिर्विण्णः, अन्नादिलाभप्रद इति यावत्, इति निरुक्तेः सन्तु तुविवाजा इत्यादिना सूचनाद् **अनिर्विण्णमूर्तिरत्र** ॥ ८९६ ॥

॥ ॐ सदामर्षिणे नमः ॥

**आ यद् दुवः शतक्रतवा कामं जरितॄणाम्। ऋणोरक्षं न शचीभिः। ता अस्य सूददोहसः सोमं श्रीणन्ति॥ ८९७॥**

हे शतक्रतो यद् यस्मात् त्वं शचीभिर्वेदवाग्भिः जरितॄणां स्तोतॄणामा कामं समन्तात् काममैहिकं पारत्रिकं च ऋणोः रणतोश्चक्रयोरक्षं न अक्षमिवाश्रयः सन् आ दुवः अदुहः, दुहेश्छन्दसि लेटि रूपम्। तस्मान्ममापि सुखं देहीति शेषः। सूददोहसोऽस्येन्द्रस्य पानार्थं ताः वेदवाच आपो गावश्च सोमं श्रीणन्ति।

अनेन मृष तितिक्षायामित्यस्माद् भावे घञ्, मर्षः सहनम्, सदा नित्यं मर्षः सहनमस्यास्तीति सदामर्षी सर्वदाप्रजासंमर्दसहः, सदा सर्वप्रजाश्रय इति यावत्, निरुक्तेः ऋणोरक्षं न शचीभिरित्यनेन सूचनात् **सदामर्षिमूर्तिरत्र** ॥ ८९७ ॥

**॥ इत्यौष्णिही तृचाशीतिः ॥**

**॥ इति तिस्रः तृचाशीतयः ॥**

## ॥ अथ उत्तरो भागः ॥

॥ ॐ लोकाधिष्ठानाय नमः ॥

**पृश्नयः । जन्मन् देवानां विशस्त्रिष्वारोचने दिवः ।**
**[१]त्वावतः पुरूवसो वयमिन्द्र प्रणेतः । स्मसि स्थातः ॥ ८९८ ॥**

किञ्च पृश्नयः प्रशस्ता ऋत्विज आरोचने रोचमानेषु त्रिष्वादित्यचन्द्रविद्युल्लोकेषु स्थितानां दिवोऽधिपतीनां देवानां जन्मन् जन्मनि यज्ञे इन्द्रस्य पानार्थं सोमं श्रीणन्तीति संबन्धः । हे पुरूवसो स्थातः सर्वाधिष्ठानेषु नियामकतया स्थित प्रणेतः सकलजगत्प्रणायक इन्द्र वयं त्वावतः त्वावन्तः त्वत्स्वामिकाः स्मसि स्मः । त्वद्भृत्या भवेम ।

अनेन लोका अधितिष्ठन्त्यत्रेति लोकाधिष्ठानम्, अधिपूर्वात् तिष्ठतेरधिकरणे ल्युट्, इति निरुक्तेः प्रणेतः स्मसि स्थातरित्यनेन सूचनात् **लोकाधिष्ठानमूर्तिरत्र** ॥ ८९८ ॥

॥ ॐ अद्भुताय नमः ॥

**हरीणाम् । त्वां हि सत्यमद्रिवो विद्म दातारमिषाम् । विद्म**
**दातारं रयीणाम् । आ यस्य ते महिमानं शतमूते ॥ ८९९ ॥**

हे अद्रिवः त्वां सत्यं साधुगुणपूर्णं विद्म । इषामन्नानां हरीणामश्वानां दातारं च विद्म । रयीणां दातारं च विद्म । शतमूते अनन्ताभिप्राय इन्द्र यस्य ते तव महिमानं कारवो गृणन्ति तं विद्मेति (उत्तरेण) संबन्धः ।

अनेन अद भक्षणे भू सत्तायामित्याभ्यां धातुभ्यां अदिभूभ्यां डुतजिति डुतच्प्रत्ययः, टिलोपः । आद्यं भोग्यमन्नादिकं भवत्यस्मादित्यद्भुतमिति निरुक्तेः इषां रयीणां दातारमित्यादिना सूचनात् **अद्भुतमूर्तिरत्र** ।

अत्रोणादिवृत्तिकारादयः अदिभुवो डुतजिति सूत्रं पठित्वा व्याचख्युः । तेषामदेर्धातोरुपपदत्वाश्रयणं

---

१. ऋग्वेद ८-४६, वशोऽश्व्यः । तत्र ददीरेक्ण इति द्विपदा ऋक् । नूनमथेत्येकपदा । चितेरुदरशंसनमिदम् ।

दोषः। तस्य क्विबन्तत्वापेक्षया धातुद्वयपक्षस्यैव न्याय्यत्वात्। कोशान्तरेषु तथा पाठादर्शनाच्चायुक्तता ॥ ८९९ ॥

॥ ॐ सनात्सनातनतमाय नमः ॥

**शतक्रतो। गीर्भिर्गृणन्ति कारवः। सुनीथो घा स**
**मर्त्यो यं मरुतो यमर्यमा। मित्रः पान्त्यद्रुहः ॥ ९०० ॥**

शतेष्वनन्तेष्वविकारितया स्थित्वा करोतीति शतक्रतुः, हे शतक्रतो इन्द्र कारवो ऋत्विजः गीर्भिर्वेदवाग्भिः त्वां गृणन्ति स्तुवन्ति। यं जनम् अद्रुहः अहिंसका मरुतः सर्वदेवास्त्वदाज्ञया पान्ति रक्षन्ति। तदेव किञ्चिद् विवृणोति। यं चार्यमा पाति यं च मित्रः पाति। स घ स एव जनः सुनीथः प्रशस्यः। स एव मर्त्यः, अन्ये पशव इति भावः।

अनेन षण संभक्तावित्यतः कर्मण्यकारप्रत्ययः, सनं निर्दोषतया सर्वैः सेव्यमानं वेदवाक्यम्, तदत्ति अनुभवति तद्विषयो भवतीति सनात्, सनशब्दे उपपदे अदेः क्विप्। सनातनेषु अनन्तेषु कालेषु स्थितत्वात् सनातनः, अतिशयेन निर्विकारतया स्थितत्वात् सनातनतमः, सनाच्चासौ सनातनतमश्चेति सनात्सनातनतम इति निरुक्तेः गीर्भिर्गृणन्ति कारवः, शतक्रतवित्यनेन सूचनात् **सनात्सनातनतममूर्तिरत्र**। नामद्वयपक्षेप्ययमेवार्थः ॥ ९०० ॥

## ॥ इति श्रीबृहतीसहस्रपारावारे नवमः खण्डः ॥

॥ ॐ कपिलाय नमः ॥

**दधानो गोमदश्ववत् सुवीर्यमादित्यजूत एधते। सदा राया**
**पुरुस्पृहा। तमिन्द्रं दानमीमहे शवसानम् ॥ ९०१ ॥**

अयमिन्द्रो भक्तेभ्यो दातुं अश्ववत् गोमत् गवाश्वाभ्यां सहितं सुवीर्यं सुवीरत्वं दधानो वर्तते। किञ्च आदित्यजूतः आदित्यादिसकलज्योतिःप्रवर्तकः पुरुस्पृहा सम्यक् स्पृहणीयेन राया द्रविणेन सदा एधते प्रवर्धते। दानम् दो अवखण्डने, शत्रूणां खण्डयितारं शवसानं शवसा सुखेनानन्दोद्रेकेण सकलजगत् पर्यावर्तयन्तमिन्द्रं वयं शरणमीमहे।

अनेन कृञः कर्तरि डः , भक्तेभ्यो गवाश्वादिकं करोतीति कः । पः पुमान् पवने शैले प्रकाशे इत्युक्तेः पः प्रकाशः सूर्यादीनां प्रकाशो दातव्यत्वेनास्यास्तीति पी । ला परिवर्तने इत्यस्मात् डः जगत् परिवर्तयतीति लः। कश्चासौ पी चासौ लश्चेति कपिल इति निरुक्तेः दधान आदित्यजूतः शवसानमित्यनेन सूचनात् **कपिलमूर्तिरत्र** ॥ ९०१॥

॥ ॐ कपये नमः ॥

**अभीर्वम् । ईशानं राय ईमहे । तस्मिन् हि सन्त्यूतयो**
**विश्वा अभीरवः सचा । तमा वहन्तु सप्तयः ॥ ९०२ ॥**

हे इन्द्र अभीर्वम् अभीः भयरहित एव वाति युद्धं प्रति गच्छतीत्यभीर्वस्तं भयरहितमीशानं सर्वस्वामिनमिन्द्रं रायः द्रविणान्युद्दिश्य शरणमीमहे इति संबन्धः । अभीरवो भयरहिताः विश्वा ऊतयो रक्षाः सुखानि वा तस्मिन्निन्द्रे सन्ति हि । तस्मात् सप्तयः तदीयाश्वाः तमिन्द्रम् आ वहन्तु वहन्तु ।

अनेन कं सुखं पिबतीति कपिः, पा पाने इत्यतो डिः, सुखं पिबति अनुभवति तद्वानिति यावत्, इति निरुक्तेः तस्मिन् हि सन्त्यूतय इत्यनेन सूचनात् **कपिमूर्तिरत्र** ॥ ९०२ ॥

॥ ॐ अव्ययाय नमः ॥

**पुरूवसुं मदाय हरयः सुतम् । यस्ते मदो वरेण्यो य**
**इन्द्र वृत्रहन्तमः । य आददिः स्वर्नृभिर्यः ॥ ९०३ ॥**

हरयोऽश्वाः पुरूवसुमिन्द्र मदाय मदयितुमस्मदीयं सुतं प्रत्यावहन्तु । हे इन्द्र यस्ते मदः प्रसादो वरेण्यः सर्वैर्वरणीय यो मदो वृत्रहन्तमः शत्रुहननसमर्थश्च भवति, यो मदो भक्तान् प्रति स्वः स्वर्लोकं सुखं वा आददिः सम्यग् दाता, यो मदः नृभिः सेनानेतृभिः दुस्तरो दुस्तारश्च ।

अनेन अय पय गतावित्यस्मादकारप्रत्ययः, अयः स्वर्गादिप्रापकः । विर्निषेधार्थः । व्ययः अप्रापकः। ततो नञ् समासः । अप्रापको न भवति सम्यग् स्वर्गादेः प्रापक इत्यव्यय इति निरुक्तेः आददिः स्वरित्यनेन सूचनाद् **अव्ययमूर्तिरत्र** ।

अप्यय इति पाठे अपि शब्दः समुच्चये, स्वागादिरपि प्रापक इति योज्यम् ॥ ९०३ ॥

॥ ॐ स्वस्तिदाय नमः ॥

**पृतनासु दुष्टरः । यो दुष्टरो विश्ववार श्रवाय्यो**
**वाजेष्वस्ति तरुता । स नः शविष्ठ सवना वसो गहि ॥ ९०४ ॥**

यो मदः पृतनासु दुस्तरः दुःखानि तारयितुं समर्थः, यः श्रवाय्यः श्रवणीयः, वाजेषु युद्धेषु शत्रूणां तरुता संहर्ता अस्ति भवति । हे विश्ववार शविष्ठ वसो इन्द्र स त्वं नः सवना सवनानि प्रति आ गहि यच्छब्दनिर्दिष्टस्य प्रसादस्य धर्म्यात्मकत्वात् स इति धर्मिणः परामर्शो युक्तः ।

अनेन शत्रुहननद्वारा भक्तानां स्वस्ति ददातीति स्वस्तिदः । सु पूर्वाद् अस भुवीत्यस्मात् सावसेरिति तिप्रत्ययः, सम्यगपेक्षणीयतया अस्तीति सुखं स्वस्ति, तद् ददातीति स्वस्तिद इति निरुक्तेः वाजेष्वस्ति तरुतेत्यादिना सूचनात् स्वस्तिदमूर्तिरत्र ॥ ९०४ ॥

॥ ॐ स्वस्तिकृते नमः ॥

**गमेम गोमति व्रजे । गव्यो षु णो यथा पुराऽश्वयोत रथया ।**
**वरिवस्य महामह । न हि ते शूर राधसः ॥ ९०५ ॥**

हे इन्द्र वयं त्वदागमनेन गोमति व्रजे (व्यत्ययेन) गोमन्तं व्रजं गोसमूहं गमेम प्राप्नुमः । गां भक्तेभ्यो दातुमिच्छतीति गव्युः । हे गव्यो भक्ताभीष्टदातः महामह महातेजस्विन् महामहिमन् वा अश्वया अश्वयुक्तया उत किञ्च रथया रथयुक्तया ऊत्या पुरा यथा पूर्वमिव वसु वरिवस्य सम्यग् वृणीष्व । हे शूर ते राधसः सुखस्य अन्तं न हि विन्दामि ।

अनेन स्वस्ति सुखं करोतीति स्वस्तिकृदिति निरुक्तेः गव्यो पुरा वरिवस्येत्यादिना सूचनात् स्वस्तिकृन्मूर्तिरत्र । गवादिदानद्वारा स्वस्तिकृदत्रोच्यते इति न पुनरुक्तिः ॥ ९०५ ॥

॥ ॐ स्वस्तिने नमः ॥

**अन्तं विन्दामि सत्रा । दशस्या नो मघवन् नू चिदद्रिवो**
**धियो वाजेभिराविथ । य ऋष्वः श्रावयत्सखा ॥९०६॥**

हे इन्द्र तस्मात् नः अस्मभ्यं राधः सुखं दशस्य देहि । दाशृ दाने इत्यस्य लोटि रूपमेतत् । हे अद्रिवः नूचित् इदानीमपि धियो अस्मदीयानि कर्माणि वाजेभिरन्नैः सत्रा सह आविथ

अस्मद्यज्ञादिकर्माणि सफलीकुरु , वर्धयेति वा। अन्नैः सहास्मद्यज्ञान् वर्धयन्नस्तीति वा। य इन्द्रो ऋज्वा महान् श्रवयत् श्रावयन् प्रसिद्धिं कुर्वन् सखा यस्य सः श्रवयत्सखा चास्ति। (सखायं श्रवयन् प्रसिद्धं कुर्वन् यः सः श्रवयत्सखा इति वा ) विपरीतसमासः। समासान्तंविधेरनित्यत्वाट्टजभावः।

अनेन भक्तकृतयज्ञादिकं भक्तं च प्रसिद्धं कुर्वंश्चास्तीति स्वस्ति। पूर्ववत् सावसेरिति सूत्रेण तिप्रत्ययः। अव्ययत्वं च शब्दस्वाभाव्यात्। नपुंसकलिङ्गं वा। स्वस्ती इति पाठे तु सु सर्वदेशकालेषु अस्तः प्रक्षिप्तः प्रसिद्ध इति यावत्। स्वस्तः प्रसिद्धः सखा भक्तोऽस्यास्तीति स्वस्तीति निरुक्तेः धियो वाजेभिराविथेत्यनेन श्रावयत्सखेत्यनेन च सूचनात् स्वस्तिमूर्तिरत्र॥ ९०६॥

॥ ॐ स्वस्तिभुजे नमः॥

**विश्वेत् स वेद जनिमा पुरुष्टुतः। तं विश्वे मानुषा युगेन्द्रं**
**हवन्ते तविषं यतस्रुचः। स नो वाजेष्ववितां॥ ९०७॥**

स पुरुष्टुत इन्द्रः विश्वा विश्वानि जनिम जन्मानि वेद। किञ्च यतस्रुचः स्रुचमुद्यम्य स्थिता मानुषा मनुष्याः विश्वे समस्ता ऋत्विजः युगा युगाः युक्ताः सन्तः तविषं ज्यातीरूपं तमिन्द्रं हवन्ते। आहूतश्च सः नः अस्माकं वाजेषु, (व्यत्ययेन वाजानि), अन्नानि अविता, अवतिरत्र प्राप्त्यर्थः, अवाप्नोतु।

अनेन सु सम्यक् स्रुगासादादिना संस्कृतं सुगाढं अस्तीति स्वस्ति चरुपुरोडाशादि , तदाप्नोति भुङ्क्ते इति स्वस्तिभुगिति निरुक्तेः यतस्रुचो हवन्ते वाजेष्वित्यादिना सूचनात् स्वस्तिभुङ्मूर्तिरत्र॥ ९०७॥

॥ ॐ स्वस्तिदक्षिणाय नमः॥

**पुरूवसुः पुरःस्थाता मघवा वृत्रहा भुवत्। अभि**
**वो वीरमन्धसो मदेषु गाय गिरा महा॥ ९०८॥**

हे जनाः पुरूवसुः मघवा वृत्रहा वाजेषु युद्धेषु सोमेषु वा पुरः अग्रे स्थाता भुवत् अभवत्। तस्माद् वो युष्मभ्यं वीरं वीर्यप्रदं महा महान्तमिन्द्रं अन्धसोऽन्नस्य मदेषु सोमपानजनितप्रहर्षेषु, निमित्तसप्तमीयम्, तद्धर्षार्थं गिरा वेदवाचा गाय गायत।

अनेन पूर्ववत् स्वस्तिशब्दः सुखवाची, द्रुदक्षिभ्यामिनन्निति सूत्रेण दक्ष वृद्धावित्यत इनन् प्रत्ययः। स्वस्ति सुखस्य दक्षिणा वर्धयित्र्यो गिरो यस्य सः स्वस्तिदक्षिण इति निरुक्तेः मदेषु गायेत्यनेन सूचनात् **स्वस्तिदक्षिणमूर्तिरत्र** ॥ ९०८ ॥

॥ ॐ अरौद्राय नमः ॥

**विचेतसम्। इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा। ददी**
**रेक्णस्तन्वे ददिर्वसु ददिर्वाजेषु पुरुहूत ॥ ९०९ ॥**

हे पुरुहूत रेक्णो धनानि ददिर्दाता भव। किञ्च तन्वे तन्वाः शरीरस्य वसु वासहेतुभूतं बलादिकं ददिः। किञ्च वाजेषु युद्धेषु, वाजिनमिति अत्रापकृष्यते, अश्वसमुदायं ददिः। अहं तु वचो यथा वेदवाक्यं यादृग्गुणं प्रतिपादयति तथा श्रुत्यं श्रुतं तद्गुणवत्तया प्रसिद्धं शाकिनं शक्तं नाम प्रसिद्धं विचेतसं विशिष्टज्ञानिनम्। यद्वा चेतःशब्देन मनःपरिणामभूतकामक्रोधादिदुःखसाधनमुच्यते, विशब्दो निषेधार्थः, विगतं चेतो दुःखसाधनं यस्येति विचेताः तम्। इन्द्रं त्वां स्तौमि।

अनेन रुदत्यनेनेति रुद्रं दुःखम् तज्जनकत्वेन तत्संबन्धित्वाद् रौद्रं कामक्रोधादिदुःखसाधनम्, तदस्य नास्तीत्यरौद्र इति निरुक्तेः विचेतसमित्यनेन सूचनाद् **अरौद्रमूर्तिरत्र** ॥ ९०९ ॥

॥ ॐ कुण्डलिने नमः ॥

**वाजिनम्। नूनमथ विश्वेषामिरज्यन्तं वसूनां**
**सासह्वांसं चिदस्य वर्पसः। कृपयतो नूनमत्यथ ॥ ९१० ॥**

हे इन्द्र विश्वेषां समस्तानां वसूनां धनानाम् इरज्यन्तमीशानं कृपयतो युद्धं कुर्वतो वर्पसश्चिद् बलवतोऽप्यस्य वैरिणः नूनं क्षिप्रं ससह्वांसमभिभावकं दाहकं त्वां स्तुवते मह्यं अथ कात्स्न्र्येन नूनं क्षिप्रं इदानीमेव वाजिनमन्नसहितं रयिं अत्यथ प्रयच्छ।

अनेन कुडि दाहे इत्यस्मात् प्राक् प्रत्ययनिर्देशो मण्डलादीनामित्युक्तेः कलप्रत्ययः, ककारलोपः, इदित्त्वान्नुमागमः, कुण्डलं दहनं शत्रूणामस्माद् भवतीति कुण्डलीति निरुक्तेः वर्पसः ससह्वांसमित्यनेन सूचनात् **कुण्डलिमूर्तिरत्र** ॥ ९१०॥

॥ ॐ चक्रिणे नमः ॥

**महः सु वो अरमिषे स्तवामहे मीळ्हुषे अरंगमाय**
**जग्मये। यज्ञेभिर्गीर्भिर्विश्वमनुषां मरुताम् ॥ ९११ ॥**

हे इन्द्र विश्वमनुषां समस्तमनुष्याणां सर्वज्ञानिनां वा मरुतां देवानां यज्ञं प्रति जग्मये गमनशीलाय अभिव्यक्ताय वा मीळ्हुषे अभीष्टदात्रे अरंगमाय सम्यङ्गमनशीलाय नित्यपुमर्थगमयित्रे वः तुभ्यं, बहुवचनं गौरवाय, यज्ञेभिर्यज्ञसाधनैः गीर्भिर्मन्त्रैः स्तवामहे संस्तुमः। किञ्च महो महतः वः ते तव अरम्, ऋ गतावित्यस्माद् भावेऽकार प्रत्ययः, गमनम् अस्मद्गृहं हृदयं वा प्रति इषे इषु इच्छायाम्, इच्छामि।

अनेन करोतेर्द्वे चेति सूत्रेण करणे कन् प्रत्ययः , ककारलोपः , धातोर्द्वित्वमभ्यासकार्यं यणा-देशश्च। क्रियते यज्ञ एभिरिति चक्रा मन्त्राः ते अस्य स्तुतिरूपेण सन्तीति चक्रीति निरुक्तेः महः सु व इत्यादिना सूचनात् चक्रिमूर्तिरत्र ॥ ९११ ॥

॥ ॐ विक्रमिणे नमः ॥

**इयक्षसि गाये त्वा नमसा गिरा। ये पातयन्ते अज्मभि -**
**र्गिरीणां स्नुभिरेषाम्। यज्ञं महिष्वणीनां सुम्नम् ॥ ९१२ ॥**

हे इन्द्र ये महतां गिरीणां सकाशात् स्नुभिः स्रवद्भिः अज्मभिरुदकैः सह पातयन्ते भुवि पतन्ति, मेघमण्डलादुदकं वर्षन्तीति यावत्, एषां महिष्वणीनां मेघमण्डले स्थित्वा ध्वनिं कुर्वतां, यज्ञे मन्त्रोच्चारणेन महास्वनवतां वा, महतां देवानां सुम्नं सुखसाधनं यज्ञं प्रति इयक्षसि इज्यसे पूज्यसे खलु। तमेवंभूतं त्वां मनसा मनःपूर्वं गिरा वेदमन्त्रेण गाये स्तौमि।

अनेन शक्तौ चरणविक्षेपे परिपाट्यामपि क्रम इत्युक्तेः क्रमः शक्तिः। वि विशिष्टः उदकवर्षणे महास्वनादिशक्तिरूपः क्रमो येषां ते विक्रमा मरुतः। ते अस्य पूजकत्वेन सन्तीति विक्रमीति निरुक्तेः विक्रमिमूर्तिरत्र ॥ ९१२ ॥

॥ ॐ ऊर्जितशासनाय नमः ॥

**तुविष्वणीनां प्राध्वरे। प्रभङ्गं दुर्मतीनामिन्द्र शविष्ठा**
**भर। रयिमस्मभ्यं युज्यं चोदयन्मते ज्येष्ठम् ॥ ९१३ ॥**

अभीष्टानि चोदयन्ती मतिर्यस्य सः चोदयन्मतिः, हे चोदयन्मते शविष्ठ बलवत्तम इन्द्र तुविष्वणीनां त्वत्स्तुतये बहुध्वनिमतां अस्माकं प्राध्वरे प्रकृष्टयज्ञे तुविष्वणीनां यज्ञविघातार्थं क्रूरशब्दान् कुर्वतां दूर्मतीग्नं दुष्टमतीनां राक्षसानां प्रभङ्गं प्रकर्षेण भङ्गं विनाशमाभर, राक्षसानां सम्यक् शासको भव। किञ्च ास्मभ्यं युज्यं योग्यं ज्येष्ठं प्रशस्तं रयिमाभर प्रयच्छ।

अनेन ऊर्जितं प्रकृष्टं दुष्टानां शासनं यस्मादिति निरुक्तेः तुविष्वणीनामित्यादिना सूचनाद् **ऊर्जितशासनमूर्तिरत्र** ॥ ९१३ ॥

॥ ॐ शब्दातिगाय नमः ॥

**चोदयन्मते। सनितः सुसनितरुग्र चित्र चेतिष्ठ सूनृत।**
**प्रासहा सम्राट् सहुरिं सहन्तं भुज्युम्॥ ९१४॥**

चोदयन्मते मतेश्चोदयितः अशेषप्राणिबुद्धिप्रेरक, सनितः लाभस्वरूप, सुसनितः सम्यग् गानशील, उग्र उद्गीर्णबल, चित्र चायनीय, चेतिष्ठ अतिज्ञान, सूनृत सत्यवचन सुहित वा, प्रासहा विश्वं स्वात्मनि स्थापयितः, सम्राट् स्वतन्त्र हे इन्द्र सहुरिं शत्रूणामाह्वानं सहन्तमतिक्रम्य वर्तमानं भुज्युं भोजयितारं, त्वां स्तुम इति शेषः।

अनेन शप आक्रोशे इत्यस्मात् शाशपिभ्यां ददनौ इति सूत्रेण दप्रत्ययो दन् प्रत्ययो वा। शब्द आक्रोशः शत्रुकृतमाह्वानम्। तदतीत्य निराकृत्य गच्छतीति शब्दातिग इति निरुक्तेश्चोदयन्मते इत्यादिना सूचनात् शब्दातिगमूर्तिरत्र॥ ९१४॥

॥ ॐ शब्दसहाय नमः॥

**वाजेषु पूर्व्यम्। ता अस्य सूददोहसः सोमं श्रीणन्ति**
**पृश्नयः। जन्मन् देवानां विशस्त्रिष्वारोचने दिवः॥ ९१५॥**

सूददोहस इन्द्रस्य पूजारूपयज्ञसिध्यर्थं पृश्नयःता आपो गावो वेदाश्च विशो ऋत्विजश्च त्रिषु रोचमानेषु लोकेषु स्थितानां दिवोऽधिपतीनां देवानां जन्मनि यज्ञे पूर्व्यं पुरातनं वाजेषु, निमित्तसप्तमी, अन्नदिभोगसिध्यर्थं श्रीणन्ति गृण्हन्ति पचन्ति मिश्रयन्ति च।

अनेन शब्दो वेदादिर्मन्त्रः तं सरति गच्छतीति शब्दसः सोमः, सृ गतावित्यतः कर्तरि डः,

शब्दसं मन्त्रगृहीतं सोमं पातुं गच्छतीति शब्दसहः, ओ हाक् गतावित्यतो ड इति निरुक्तेः वाजेषु पूर्व्यं ता अस्य सूददोहस इत्यादिना सूचनात् **शब्दसहमूर्तिरत्र** ॥ ९१५ ॥

॥ ॐ शिशिराय नमः ॥

**[१]इन्द्राग्नी युवं सु नः सहन्ता दासथो रयिम् । येन दळ्हा**
**समत्स्वा वीळु चित् साहिषीमह्यग्निर्वनेव वात इत् ॥ ९१६ ॥**

हे इन्द्राग्नी अग्निसहितेन्द्र , अभ्यर्हितं पूर्वम् , तेनाग्नेः साहित्यमात्रमतो नेन्द्रत्वविरोधः । युवं युवां नः अस्मभ्यं सहन्ता सहन्तौ वैरिवेगसहौ रयिं द्रविणं दासथः दत्तम् । सादेशः छान्दसः । येन त्वद्दत्तेन रयिणा समत्सु युद्धेषु दळ्हा दृढाः सन्तो वयं वीळु वीळूनि शत्रुसैन्यानि अग्निर्वह्निः वाते प्रवृत्ते सति वनेव वनानीव सहिषीमहि दह्याम ।

अनेन शॄ हिंसायामित्यतोऽन्तर्णीतण्यर्थात् अजिरशीत्यादिना निपातनात् किरच्प्रत्ययः, धातोरिकारादेशो रपरः, द्वित्वं रेफलोपश्च । शिशिरो दारकः । भक्तजनैः शत्रून् अग्निर्वनानीव दाहयतीति यावदिति शिशिर इति निरुक्तेः अग्निर्वनेव साहिषीमहीत्यनेन सूचनात् **शिशिरमूर्तिरत्र** ॥ ९१६ ॥

॥ ॐ शर्वरीकराय नमः ॥

**नभन्तामन्यके समे ।न हि वां वव्रयामहेऽथेन्द्रमिद्**
**यजामहे शविष्ठं नृणां नरम् । स नः कदाचिदर्वता ॥ ९१७ ॥**

अन्यके अन्यस्मिन्नपि समे युद्धे शत्रून् युवां नभन्तां नभेताम्, नभतिर्वधकर्मा, संहरेतामिति यावत् । यद्वा समशब्दः सर्वपर्यायः, अन्यकशब्दः शत्रुपर्यायः, नभतिर्हिंसार्थः । समे चित् सर्वेपि अन्यक शत्रवः नभन्तां नश्यन्ताम् । कर्मणि लकारः । शविष्ठं नृणां चित् अपि नरं नेतारमिन्द्रमित्

---

१. ऋग्वेद ८-४०, नाभाकः काण्वः । चितेरूरुभागप्रतिपादकमिदं शस्त्रम् । अस्य सूक्तस्य शंसने गायत्रीकारशंसनरूपोऽनुष्टुप्कारशंसनरूपश्च विशेष आरण्यक उक्तः । स च क्रमोऽत्र ग्रन्थकारैः श्रीवेदेशतीर्थैर्वा नानुसृतो भाति ।

इन्द्रमेव यजामहे पूजयामहे। अथ तस्माद् हे इन्द्राग्नी वां युवां न वव्रयामहे न निवारयामः, नोपेक्षा-महे। हि प्रसिद्धम्। स इन्द्रः अस्माभिः पूजितः कदाचित् कदापि अर्वता अश्वेन अश्वबद्धेन रथेन आ गमत् आगच्छेत्।

अनेन शॄ हिंसायामित्यतः कॄगॄशॄवृञ्चतिभ्यः ष्वरजिति सूत्रेण ष्वरच्प्रत्ययः, षकारः षित्कार्यार्थः, लघूपधगुणः, षिद् गौरादिभ्यश्चेति ङीष्, शर्वरी हिंसा, तां करोतीति शर्वरीकरः, कृञः पचाद्यच्, इति निरुक्तेः नभन्तामन्यके समे इत्यादिना सूचनात् **शर्वरीकरमूर्तिरत्र** ॥ ९१७॥

**॥ ॐ अक्रूराय नमः ॥**

**गमदा वाजसातये गमदा मेधसातये नभन्तामन्यके**
**समे। ता हि मध्यं भराणामिन्द्राग्नी अधिक्षितः ॥ ९१८॥**

स इन्द: नः वाजसातये अन्नदानाय आगमत् आगच्छेत्। मेधसातये अस्मद्यज्ञसिद्ध्यर्थं चागमत् आगच्छेत्। किञ्च समे सर्वे अन्यके शत्रवः त्वदागमनेन नभन्तां नश्यन्ताम्। किञ्च ताविन्द्राग्नी भराणां युद्धानां मध्ये अधिक्षितः, क्षि निवासगत्योः, अधिनिवसतः। सन्निहितौ सन्तौ अस्माकमक्रूरौ भवेताम्।

अनेन क्रु हिंसायमित्यत उरक्प्रत्ययः, यणादेशः। क्रूरो हिंसको न भवतीत्यक्रूर इति निरुक्तेः मध्यं भराणामधिक्षित इत्यनेन सूचनाद् **अक्रूरमूर्तिरत्र** ॥ ९१८॥

**॥ ॐ पेशलाय नमः ॥**

**ता उ कवित्वना कवी पृच्छ्यमाना सखीयते सं**
**धीतमश्नुतं नरा नभन्तामन्यके समे। अभ्यर्च ॥ ९१९॥**

तौ इन्द्राग्नी कवी ज्ञानिनौ कवित्वना कवित्वं प्राप्तुं गुरुशिष्याभ्यां पृच्छ्यमाना पृच्छ्यमानौ भवतः, जिज्ञास्याविति यावत्। किञ्च सखीयते सखीयता सखित्वमिच्छता यजमानेन संधीतं संधितं संस्थापितं सोमरसादि नरा नरावतारौ युवामश्नुतम्, अश भोजने, पिबतम्। नभन्तामित्यादि पूर्ववत्। (अभ्यर्चेत्युत्तरान्वयि)।

अनेन पेशलशब्दः चतुरपर्यायः, पेशलौ चारुचतुरावित्युक्तेः। चतुरशब्दश्च चते चदे याचने चरे

चेत्यस्माच्चरार्थाचेतः कर्मण्युरन्प्रत्यये निष्पन्नः, चरोऽत्र विचार इति विचारवाची। तथा च गुरु-शिष्याभ्यां विचार्यः पेशल इति निरुक्तेः कवित्वना पृच्छ्यमानेत्यनेन सूचनात् **पेशलमूर्तिरत्र** ॥९१९॥

॥ ॐ दक्षाय नमः ॥

**नभाकवदिन्द्राग्नी यजसा गिरा। ययोर्विश्वमिदं जगदियं**

**द्यौः पृथिवी मह्युपस्थे बिभृतो वसु॥ ९२०॥**

हे साधुजन यजसा यज्ञसाधनभूतया गिरा श्रुत्या इन्द्राग्नी अग्निसहितमिन्द्रं नभाकवत् नभाकाख्यऋषिवद् अभ्यर्च पूजय। ययोरिन्द्राग्न्योः इदं जगद् विश्वं प्रवेशनीयम्, स्वतः प्रवृत्त्यशक्तत्वात् स्वप्रवृत्तये इन्द्रप्रवेशमपेक्षत इति यावत्। किञ्च मही महतीं द्यौः दिवं पृथिवी पृथिवीं वसु द्रविणं च उपस्थे स्वसमीपे स्थिताय भक्ताय बिभृतः बिभृथः अधारयतः। द्रविणादिना भक्तं वर्धयतः। यद्वा ययोरिन्द्राग्न्योर्महती द्यौः पृथिवी च उपस्थे समीपे वर्तते, यौ च वसु बिभ्रतः तावभ्यर्चेति संबन्धः।

अनेन दक्ष वृद्धावित्यतोऽन्तर्णीतण्यर्थात् पचाद्यच्, इति निरुक्तेः उपस्थे बिभ्रतो वस्वित्यनेन सूचनाद् **दक्षमूर्तिरत्र** ॥ ९२०॥

॥ ॐ दक्षिणाय नमः ॥

**नभन्तामन्यके समे। प्र ब्रह्माणि नभाकवदिन्द्राग्निभ्या-**

**मिरज्यत। या सप्तबुध्नमर्णवं जिह्मवारम्॥ ९२१॥**

या याविन्द्राग्नी सप्तबुध्नं सप्तविधं जिह्मबारं ब्रह्मपारम्, दुष्पारमिति यावत्, अर्णवं अपोर्णुतः न गणयतः। अत्यन्तबलेन प्रवृद्धावित्यर्थः। ताभ्यामिन्द्राग्निभ्यां नभाकवत् नभाकाख्यऋषिवद् ब्रह्माणि स्तोत्राणि प्र इरज्यत संगमयत। किञ्च नभन्तामित्यादि।

अनेन दक्ष वृद्धावित्यतो द्रुदक्षिभ्यामिनन्निति इनन् प्रत्ययः। बलेन वर्धते समुद्रतरणादि करोतीति दक्षिण इति निरुक्तेः सप्तबुध्नमर्णवमित्यादिना सूचनाद् **दक्षिणमूर्तिरत्र** ॥ ९२१॥

॥ ॐ क्षमिणां वराय नमः ॥

**अपोर्णुत इन्द्र ईशान ओजसा नभन्तामन्यके समे ।**
**अपि वृश्च पुराणवद् व्रततेरिव गुष्पितम् ॥ ९२२ ॥**

इन्द्र ओजसा अवष्टम्भशक्त्या ईशानः ईष्टे जगत् सहते स्वात्मनि धर्तुम् । किञ्च नभन्तामिति पूर्ववत् । हे इन्द्र दासस्य दस्योरस्मच्छत्रोः गुष्पितं गूहितं पिहितं च ओजो धनं पुराणवत् पुराणनाम्न इव व्रततेरिव व्रततिनाम्न इव वृश्च, ओ व्रश्चू छेदने, उच्छेदय ।

अनेन क्षमूष् सहने इत्यतः पचाद्यच् । क्षमः सहनं तदेषामस्तीति क्षमिणः, बहुलमाभीक्ष्ण्ये इति णिनिः । तेषां सहनशक्तिमतां वरः श्रेष्ठः षष्ठ्या अलुक्, इति निरुक्तेः इन्द्र ईशान ओजसेत्यनेन सूचनात् **क्षमिणांवरमूर्तिरत्र** ॥ ९२२ ॥

॥ ॐ विद्वत्तमाय नमः ॥

**ओजो दासस्य दम्भय । वयं तदस्य संभृतं वस्विन्द्रेण**
**वि भजेमहि नभन्तामन्यके समे । यदिन्द्राग्नी ॥ ९२३ ॥**

हे इन्द्र दासस्य शत्रोः ओजः शक्तिं धनं वा दम्भय स्तम्भय लम्भय वा ।अस्य त्वया स्तंभितस्य शत्रोः शत्रुणा संभृतं सम्पादितं तद् वसु धनादिकम् इन्द्रेण प्रसन्नेन त्वया विभजेमहि विशेषेण संभजामः । किञ्च नभन्ताम् ।

अनेन विद्लृ लाभे इत्यतो लट्, लटः शत्रादेशः । विदेः शतुर्वसुरिति सूत्रेण विदेः परस्य शतुर्वस्वा-देशः । यद्वा भावे क्विप् वित् लाभः, ततो वातेरदुड्प्रत्ययः (?) टिलोपः । विदं लाभं वाति प्राप्नोतीति विद्वान् । तत अतिशायने तमप्, लब्धॄणां श्रेष्ठो विद्वत्तम इति निरुक्तेः ओजो दासस्य दम्भयेत्यदिना सूचनाद् **विद्वत्तममूर्तिरत्र** ॥ ९२३ ॥

॥ ॐ वीतभयाय नमः ॥

**जना इमे विह्वयन्ते तना गिरा । अस्माकेभिर्नृभिर्वयं**
**सासह्याम पृतन्यतो वनुयाम वनुष्यतः ॥ ९२४ ॥**

हे इन्द्राग्नी इमे अस्मदीया जनाः तना विस्तृतया गिरा वेदवाचा वि विशेषेण ह्वयन्ते युवां स्तुवन्ति। यद् यस्मादेवं तस्मादस्माकेभिः नृभिः सेनानेतृभिर्जनैः सह वयं वीतभयाः सन्तः पृतन्यतो युध्यतः शत्रून् ससह्याम अभिभवेम। किञ्च वनुष्यतः वननीयधनादीन् वनुयाम लभेम।

अनेन भक्तेभ्यो वीतं विगतं भयं यस्मात् स वीतभय इति निरुक्तेः जना इमे इत्यादिना सूचनाद् **वीतभयमूर्तिरत्र** ॥ ९२४ ॥

**॥ ॐ पुण्यश्रवणकीर्तनाय नमः ॥**

**नभन्तामन्यके समे। या नु श्वेतावबो दिव उच्चरात**
**उप द्युभिः। इन्द्राग्न्योरनु व्रतमुहाना यन्ति ॥ ९२५ ॥**

या यौ श्वेतौ शुभ्रौ द्युभिः प्रकाशैः दिवः स्वर्गतः अवः भूमिं उच्चराते उच्चरतः सम्यक् सञ्चरन्तौ स्तः। किञ्च सिन्धवो नद्यः इन्द्राग्न्योर्व्रतं कर्म नु इदानीमपि उहाना वहमानाः प्रकटयन्त्यः अनुयन्ति गच्छन्ति। किञ्च नभन्ताम्।

अनेन पूङ् पवने इत्यतो पूङो यण्णुट् ह्रस्वश्च, पुण्यं पवित्रम्। श्रु श्रवणे इत्यतः कर्मणि युच् अनादेशः , श्रवणं श्रवणीयं व्रतं कर्म। कॄत संशब्दे इत्यतो भावे ल्युट् , धातोः ऋकारस्य उपधायाश्चेतीकारो रपरः र्वोरुपधाया दीर्घ इक इति वा पृषोदरादित्वाद्वा दीर्घ ईकारः। पुण्यश्रवणस्य कर्मणः कीर्तनं प्रकटनं यस्य सः पुण्यश्रवणकीर्तनः, नदीभिः प्रकटितपुण्यकर्मवानिति यावत्, इति निरुक्तेः। इन्द्राग्न्योरनुव्रतमुहाना यन्तीत्यनेन सूचनात् **पुण्यश्रवणकीर्तनमूर्तिरत्र** ॥ ९२५ ॥

**॥ ॐ उत्तारणाय नमः ॥**

**सिन्धवो यान् त्सीं वन्धादमुञ्चतां नभन्तामन्यके समे।**
**पूर्वीष्ट इन्द्रोपमातयः पूर्वीरुत प्रशस्तयः ॥ ९२६ ॥**

व्रतमित्युक्तमैन्द्रं कर्म किञ्चिद् विवृणोति। यान् सिन्धून् नदीः बन्धादसुरकृतसेतोः यौ अमुञ्चतां सीं त एव सिन्धवस्तयोर्व्रतमुहाना यन्तीति संबन्धः। हे इन्द्र ते उपमातयो ज्ञानानि कर्माणि वा पूर्वीः पूर्व्यः अनादयः। उत किञ्च प्रशस्तयः स्तुतयश्च पूर्वीः पूर्व्यः। किञ्च नभन्ताम्।

अनेन उत्पूर्वात् तॄ प्लवनतरणयोरित्यस्माण्ण्यन्तात् नन्द्यादित्वाल्ल्युः । सिन्धून् सेतुभ्यां तारयतीत्युत्तारण इति निरुक्तेः यान् सीं बन्धादमुञ्चतामित्यनेन सूचनाद् उत्तारणमूर्तिरत्र ॥ ९२६॥

॥ ॐ दुष्कृतिघ्ने नमः ॥

**सूनो हिन्वस्य हरिवः । वस्वो वीरस्यापृचो या नु**
**साधन्त नो धियो नभन्तामन्यके समे । तं शिशीता ॥ ९२७ ॥**

हिन्वस्य सदा गमनशीलस्य वायोः सूनो पुत्र हरिवः इन्द्र नः अस्मदीया धियः कर्माणि या वस्वः यानि वसूनि साधन्त ता वस्वः तानि वसूनि अस्मत्कर्मफलत्वेन प्राप्तुं योग्यानि तत्प्राप्ति-प्रतिबन्धकदुरितानि परिहृत्य वीरस्य मम आपृचः संगमय, भोग्यानि कुरु । किञ्च नभन्ताम् ।

अनेन भोगप्राप्तिप्रतिबन्धकदुष्कर्माणि हन्तीति दुष्कृतिहेति निरुक्तेः वस्वो वीरस्यापृच इत्यादिना सूचनात् दुष्कृतिहमूर्तिरत्र ॥ ९२७ ॥

॥ ॐ पुण्याय नमः ॥

**सुवृक्तिभिस्त्वेषं सत्वानमृग्मियम् । उतो नु चिद् य**
**ओजसा शुष्णस्याण्डानि भेदति जेषत् स्वर्वतीरपः ॥ ९२८ ॥**

हे जनाः य इन्द्रः शुष्णस्य बलवतः दृढस्य ब्रह्माण्डस्य आण्डानि कपालानि ओजसा भेदति भिनत्ति । स्वर्गप्रापिका अपः कर्माणि असुरवधादीनि जेषत् कृतवांश्च, तमिन्द्रं सत्वानं धनानां सनितारं दातारं ऋग्मियं ऋङ्मेयं त्वेषं दीप्तिमन्तं सुवृक्तिभिः सुविविक्तैः स्तोत्रैः शिशीत स्तुवीत ।

अनेन धातूनामनेकार्थत्वात् पुनाति आण्डकपालानि भिनत्तीति पुण्यः, प्रक्रिया तु पूर्ववत्, इति निरुक्तेः आण्डानि भेदतीत्यनेन सूचनात् पुण्यमूर्तिरत्र ॥ ९२८ ॥

॥ ॐ दुःस्वप्ननाशनाय नमः ॥

**नभन्तामन्यके समे । तं शिशीता स्वध्वरं सत्यं सत्वान-**
**मृत्वियम् । उतो नु चिद् य ओहत आण्डा शुष्णस्य भेदति ॥ ९२९ ॥**

हे जनाः य इन्द्रः नु चित् इदानीमपि ओहते भक्तजनानां योगक्षेमं वहति । तत्प्रकारमेव किञ्चिद्

विवृणोति। शुष्णासः शुष्णानि शोषकानि, शुषेर्नृक्। अम गत्यादिष्वित्यस्मात् त्रमन्ताड्डः, अनुस्वारः, प्रज्ञादित्वादण्। आण्डानि मिथ्याज्ञानानि भिनत्ति नानाविधशोकप्रदं मिथ्याज्ञानं भित्त्वा रक्षतीति यावत्। तं स्वध्वरं यज्ञभोक्तारं सत्यं सत्वानं ऋत्वियं ऋतुषु याज्यमिन्द्रं शिशीत स्तुवीत। किञ्च नभन्ताम्।

अनेन त्रि ष्वप् शये इत्यतः स्वपेर्नन्। स्वपित्यनेनेति स्वप्नःअज्ञानम्। दुरीषदर्थकुत्सनवैवर्ण्य-सम्पत्तिकृच्छ्रेष्वित्युक्तेः सर्वैः कुत्सनीयं मिथ्याज्ञानं दुरित्युच्यते। दुः मिथ्याज्ञानं स्वप्नमज्ञानं च नाशयतीति दुःस्वप्ननाशन इति निरुक्तेः आण्डा शुष्णस्य भेदतीत्यनेन सूचनाद् **दुःस्वप्ननाशन-मूर्तिरत्र** ॥ ९२९ ॥

॥ ॐ वीरघ्ने नमः ॥

**अजैः स्वर्वतीरपो नभन्तामन्यके समे। एवेन्द्राग्निभ्यां**
**पितृवन्नवीयो मन्धातृवदङ्गिरस्वदवाचि ॥ ९३० ॥**

हे इन्द्र स्वर्वतीः सुखसाधनभूता अपः नदीः अजैः जितवान्। तत्प्रतिवन्धकासुरान् हत्वा नदीः स्वाधीनाः कृतवान्। किञ्चेन्द्राग्निभ्यां युवाभ्यां नवीयो नूतनमस्मद्यज्ञवाटं पितृवत् मत्पितुरिव मन्धातृवत् मान्धातुरिव अङ्गिरस्वद् अङ्गिरस इव अवाचि, अञ्चेः कर्मणि लुङि रूपमेतत्, मज्जनकादीनां यज्ञवाटमिव मदीयमपि यज्ञवाटं युवाभ्यां प्राप्तं भवतीति तात्पर्यम्। किञ्च नभन्ताम्।

अत्र सर्वत्र तत्तत्कालप्राप्तविपदां श्रेयांसि बहुविघ्नानीति न्यायेन बहुत्वात् तत्तद्विघ्नकररक्षःसंहार-प्रार्थनस्य पुनःपुनः कर्तव्यत्वात् नभन्तामित्यादीनां प्रत्यृचमुक्त्या न पुनरुक्तिरिति।

अनेन नदीप्रतिरोद्धृन् वीरान् हन्तीति वीरहेति निरुक्तेः अजैः स्वर्वतीरप इत्यनेन सूचनाद् **वीरहमूर्तिरत्र** ॥ ९३० ॥

॥ ॐ रक्षणाय नमः ॥

**त्रिधातुना शर्मणा पातमस्मान् वयं स्याम पतयो रयीणाम्।**
**[1]प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय ॥ ९३१ ॥**

---

१- ऋग्वेद १०-५०. वैकुण्ठ इन्द्रः।

हे इन्द्राग्री त्रिधातुना त्रिकालवर्तिना शर्मणा सुखेन अस्मान् पातं रक्षतम् । त्वद्रक्षिताश्च वयं रयीणां धनानां पतयः स्यामैव । हे साधुजनसमूह वो अन्धसः भवद्दत्तहविरादिना मन्दमानाय प्रीयमाणाय महे महते विश्वानराय सकलजगन्नियन्त्रे विश्वभुवे विश्वोत्पादकाय इन्द्राय प्रार्च सम्यक् पूजय ।

अनेन रक्ष पालने इत्यतो ल्युः । शाश्वतसुखदानादिना रक्षतीति रक्षण इति निरुक्तेः त्रिधातुना शर्मणा पातमित्यनेन सूचनाद् रक्षणमूर्तिरत्र ॥ ९३१ ॥

॥ ॐ सन्ताय नमः ॥

**विश्वाभुवे । इन्द्रस्य यस्य सुमखं सहो महि श्रवो**
**नृम्णं च रोदसी सपर्यतः । सो चिन्नु सख्या ॥ ९३२ ॥**

यस्येन्द्रस्य सुमखं समीचीनं धनं सहो बलं महि महत् श्रवः अन्नं सुखं च महदस्ति यं चेन्द्रं रोदसी द्यावापृथिव्यौ सपर्यतः परिचरतः, परिचारिके स्तः, स इन्द्रो नोऽस्मभ्यं सख्या सखित्वानि चिन्नु नु चित् इदानीमेव कुर्यात् ।

अनेन तनोतेर्डः । सं संयोगवाक्यप्रभवसत्यसमक्षसमन्ततोभावभूषणाभिमुख्यनिःशेषक्रोध-स्वीकरणेष्वित्युक्तेः सं सत्यं समन्ताद्वा धनबलान्नसुखादीन् तनुते स्वात्मनि विस्तारयतीति सन्त इति निरुक्तेः इन्द्रस्य यस्य सुमखमित्यादिना सूचनाद् सन्तमूर्तिरत्र ॥ ९३२ ॥

॥ ॐ जीवनाय नमः ॥

**नर्य इनः स्तुतश्चर्कृत्य इन्द्रो मावते नरे । विश्वासु**
**धूर्षु वाजकृत्येषु सत्पते वृत्रे वाप्स्वभि शूर ॥ ९३३ ॥**

हे शूर सत्पते इन्द्र त्वं नर्यः नरेषु हितः इनः स्वामी, स्तुतः स्तुत्यः, मावते ज्ञानवते नरे जनाय चर्कृत्यः अतिशयेन सुखस्य कर्ता विश्वासु समस्तासु धूर्षु विश्वनिर्हरणक्रियासु, तदेव किञ्चिद् विवृणोति- वाजकृत्येषु अन्नादिभोगकार्येषु, वृत्रे वृत्रहनने प्रतिबन्धकनिवारणे, अप्सु तदुपयुक्तकर्मसु च, अभिमन्दसे पूर्वोक्तकार्येषु उत्साहयुक्तो भवसीति यावत्, इन्द्रश्च समर्थोसि ।

अनेन प्रतिबन्धकपरिहारादिना जगज्जीवयतीति जीवनः , जीव प्राणधारणे इत्यतो ण्यर्थाल्लयुः, इति निरुक्तेः चर्कृत्य इन्द्रो मावते इत्यादिना सूचनात् जीवनमूर्तिरत्र ॥ ९३३ ॥

॥ ॐ पर्यवस्थिताय नमः ॥

**मन्दसे। के ते नर इन्द्र ये त इषे ये ते सुम्नं**
**सधन्यमियक्षान्। के ते वाजायासुर्याय हिन्विरे॥ ९३४॥**

हे इन्द्र ते तव सकाशाद् इषे अन्नप्राप्त्यर्थं इयक्षान् अयजन् ये नरो जनाः के ते। ये च असुर्याय असुरेषु हिताय वाजाय युद्धाय त्वत्प्रसादाद् हिन्विरे गच्छन्ति ते के। त्वत्पूजाकरणं त्वत्तः फलप्रापणं सर्वमपि दुर्लभम्। तव सर्वत्र पूर्णत्वादिति भावः।

अनेन परितः पूर्णत्वेन अवस्थितः पर्यवस्थित इति निरुक्तेः के ते नर इत्यादिना सूचनात् **पर्यवस्थितमूर्तिरत्र**॥ ९३४॥

॥ ॐ अनन्तरूपाय नमः ॥

**के अप्सु स्वासूर्वरासु पौंस्ये। भुवस्त्वमिन्द्र ब्रह्मणा**
**महान् भुवो विश्वेषु सवनेषु यज्ञियः। भुवो नॄँश्च्यौत्नः॥ ९३५॥**

हे इन्द्र स्वासु स्वकीयासु उर्वरासु उरुवरास्वतिश्रेष्ठासु अप्सु कर्मसु त्वत्पूजात्मिकासु के हिन्विरे के गच्छन्ति, अकुर्वन्निति यावत्। किञ्च तव पौंस्ये जगत्सृष्ट्यादिसामर्थ्यविषये के हिन्विरे के व्यजानन्। त्वत्सामर्थ्यपरिज्ञानादिकमपि दुर्लभमेवेत्यभिप्रायः। हे इन्द्र ब्रह्मणा स्तोत्रेण महान् परममुख्यया वृत्त्या प्रतिपाद्यः एकेन रूपेण भुवोऽभुवः। विश्वेषु सवनेषु त्रिष्वपि सवनेषु रूपान्तरेण यज्ञियो यज्ञे अभिव्यक्तव्यः भुवः अभवः। रूपान्तरेण नॄन् अशेषप्राणिनः प्रति च्यौत्नः बलदो भुवः। तेषु तेषु कार्येषु रूपान्तरेण कर्ता अभव इति तात्पर्यम्।

अनेन अनन्तानि रूपाणि यस्य सः अनन्तरूप इति निरुक्तेः ब्रह्मणा महानित्यादिना सूचनाद् **अनन्तरूपमूर्तिरत्र**॥ ९३५॥

॥ ॐ अनन्तश्रिये नमः ॥

**विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे। अवा नु कं**
**ज्यायान् यज्ञवनसो महीं त ओमात्रां कृष्टयो विदुः॥ ९३६॥**

हे विश्वचर्षणे इन्द्र त्वं विश्वस्मिन् भरे युद्धे ज्येष्ठः प्रशस्यः, शोभस इति यावत्। मन्त्रः मन्ता

गोप्यश्च शोभसे हि। इन्द्र त्वमस्मान् प्रति नु निश्चितं अव शोभसे, अवतिरत्र कान्त्यर्थः। अत एव यज्ञवनसो यज्ञैर्वननीयस्य त्वत्तो ज्यायान् उत्तमपुरुषः कं कः, इत्याक्षेपः। अत एव कृष्टयः सज्जनाः ते महां महतीं ओमात्रान् आ समन्तादनन्तां शोभां विदुः जानन्ति।

अनेन श्रिञ् श्रयणे इत्यतः "क्विप् वचिप्रच्छिश्रिद्रुस्रुकठप्रुज्वां दीर्घोऽसंप्रसारणं च" इति सूत्रेण क्विप्, दीर्घ ईकारः सम्प्रसारणनिषेधश्च। श्रीर्वेषरचनाशोभेत्युक्तेः श्रयत इति श्रीः शोभा कान्तिः। अनन्ताः श्रियो यस्य स अनन्तश्रीरिति निरुक्तेः विश्वस्मिन् भरे ज्येष्ठ इत्यादिना सूचनाद् **अनन्तश्रीमूर्तिरत्र** ॥ ९३६ ॥

**॥ ॐ जितमन्यवे नमः ॥**

**असो नु कमजरो वर्धाश्च विश्वेदेता सवना तूतुमा**
**कृषे। एता विश्वा सवना तूतुमा कृषे ॥ ९३७ ॥**

हे इन्द्र त्वमजरो जरादिदोषरहितः असः असि। एता प्राप्ता वर्धाः अभिवृद्धिकरश्च कम् इत् त्वदन्यः कोपि नास्त्येव। त्वं च तूतुमा, तनोते रूपमेतत्, व्याप्तः सन् विश्वानि सवनानि कृषे करोषि कारयसि च। नु निश्चितम्। किञ्च विश्वा सवनानि एता प्राप्ता सन् तूतुमा तूतुमां विस्तृतप्रज्ञां कृषे करोषि।

अनेन मन ज्ञाने इत्यतो यजिमनीत्यादिना युच्प्रत्ययः। मन्युर्दैन्ये कृतौ क्रुधीत्युक्तेः मन्यत इति मन्युर्दैन्यं क्रोधश्च, उपलक्षणमेतत्, जरादिसर्वदोषा अपि ग्राह्याः। जितः अभिभूतो मन्युः जरादिदोषो येन स जितमन्युरिति निरुक्तेः अजर इत्यनेन सूचनात् **जितमन्युमूर्तिरत्र** ॥ ९३७ ॥

**॥ ॐ भयापहाय नमः ॥**

**स्वयं सूनो सहसो यानि दधिषे। वराय ते पात्रं धर्मणे**
**तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः। ये ते विप्र ॥ ९३८ ॥**

हे सहसः सूनो वायोः पुत्र इन्द्र त्वं यान्यभीष्टानि वराय भक्ताय दातुं स्वयं दधिषे मनो धत्से तेषामहं पात्रं (स्याम्)। किञ्च धर्मणे धारकाय ते तुभ्यं तना विस्तृता यज्ञो मन्त्रः उद्यतं उच्चैरुच्चरितं ब्रह्म वचो वेदरूपं वाक्यं, तदेव प्रतिपादकमिति यावत्।

अनेन भाः शम्भौ भ्रमरे भानौ शुक्रेशौ जलदे पुमानित्युक्तेः भः शुक्रः परिशुद्धो वेदः। यस्त्यागे निलये वायावित्युक्तेः य आश्रयः। भानां यः आश्रयः वेदप्रतिपाद्यो भयः। पं क्लीबे हेम्नीत्युक्तेः पं हिरण्यं, हं क्लीबमस्त्रसुखयोरित्युक्तेः हं सुखम्। आ समन्तात् हिरण्यं सुखं च यस्मात् स आपहः, भयश्चासौ आपहश्च भयापह इति निरुक्तेः ब्रह्मोद्यतं वच इत्यनेन सूचनाद् **भयापहमूर्तिरत्र**॥९३८॥

॥ ॐ चतुरस्राय नमः ॥

**ब्रह्मकृतः सुते सचा वसूनां च वसुनश्च दावने।**
**प्र ते सुम्नस्य मनसा पथा भुवन् मदे सुतस्य॥ ९३९ ॥**

हे विप्र प्रकृष्टयज्ञ इन्द्र सोमे सुते सति ते ब्रह्मकृतः त्वत्स्तोत्रं कुर्वाणाः ये जनाः ते वसूनां निवासहेतुभूतानां गृहाणां वसुनस्य च द्रविणस्य च दावने दात्रे तुभ्यं सुतस्य सोमस्य पानेन मदे हर्षे जाते सति मनसा सचा सह सुम्नस्य सुखस्य पथा मार्गेण प्रभुवन् सम्यक् सुखभोक्तारोऽभवन्।

अनेन चते चदे याचने चरेचेत्यस्मात् मदिवासिमथिचतीत्यादिना उरच्। चतुरं याचनीयं सुखम्। सृ गतावित्यस्माण्ण्यर्थात् कप्रत्ययः, गुणाभावः, यणादेशः। सरति प्रापयतीति स्रः। चतुरं सुखं प्रापयतीति चतुरस्र इति निरुक्तेः सुम्नस्य मनसा पथा प्रभुवन् इत्यनेन सूचनात् **चतुरस्रमूर्तिरत्र** ॥ ९३९ ॥

॥ ॐ गभीरात्मने नमः ॥

**सोम्यस्यान्धसः। [1]वने न वा यो न्यधायि चाकञ्छुचिर्वां**
**स्तोमो भुरणावजीगः। यस्येदिन्द्रः पुरुदिनेषु॥ ९४० ॥**

हे चाकन् सर्वकर्तः इन्द्र भुरणौ, भुरणतिर्गतिकर्मा, भक्तगृहं प्रति गमनशीले त्वयि यः शुचिः स्तोमो न्यधायि अन्धसोऽन्नरूपस्य यस्य सोम्यस्य सोमरसस्य पानार्थं पुरुदिनेषु बहुकालमपि इन्द्रो भवान् होता आहूतः तदुभयं स्तोमं सोमं प्रति अजीगः अगमः, गच्छसि इत्।

अनेन गाधृ प्रतिष्ठालिप्सयोरित्यस्माद् गभीरगम्भीराविति सूत्रेण ईरन्प्रत्ययः ह्रस्वो धकारस्य

१. ऋग्वेद १०-२९, ऐन्द्रो वसुकः।

भकारश्च निपात्यते। गाध्यते प्रतिष्ठाप्यते सोमादिरत्रेति गभीरः। तादृश आत्मा स्वरूपो यस्य स गभीरात्मेति निरुक्तेः स्तोमो भुरणौ न्यधायीत्यनेन सूचनात् **गभीरात्ममूर्तिरत्र** ॥ ८४० ॥

॥ ॐ विदिशाय नमः ॥

**होता नृणां नर्यो नृतमः क्षपावान्। प्र ते अस्या उषसः**
**प्रापरस्या नृतौ स्याम नृतमस्य नृणाम्। अनु त्रिशोकः ॥ ८४१ ॥**

य इन्द्रो नृणां यज्ञक्रियाप्रकारोपदेशकानां नृतमः अतिशयेनोपदेशकः, नर्यो नरेषु हितः, क्षपावान् शत्रुक्षयवान्, तस्य नृणां नृतमस्य अस्या उषसः अपरस्याः परदिनस्यापि, षष्ठ्यौ सप्तम्यर्थे, उपलक्षणमेतत्, सर्वकालेष्वपि नृतौ पूजायां वयं प्र स्याम। (शिष्टमुत्तरान्वयि)

अनेन दिश अतिसर्जने इत्यस्मात् इगुपधलक्षणः कः। वि अतिशयेन यज्ञक्रियाप्रकारान् दिशति उपदिशतीति विदिश इति निरुक्तेः नृणां नृतम इत्यनेन सूचनाद् **विदिशमूर्तिरत्र** ॥ ९४१ ॥

॥ ॐ व्यादिशाय नमः ॥

**शतमावहन् नॄन् कुत्सेन रथो यो असत् ससवान्। कस्ते**
**मद इन्द्र रन्त्यो भूद् दुरो गिरो अभ्युग्रो वि धाव ॥ ९४२ ॥**

हे इन्द्र कुत्सेन एतन्नामकेन सहितः त्रिशोकः एतन्नामकः अनु त्वत्पूजाकरणमनु शतं शतसंख्यान् नॄन् जनान् आवहत् उवाह। बहुजनपोषकोऽभवदिति यावत्। किञ्च यः ते रथः ससवान् शत्रुवेग-सहनशक्तिमान् आसत् अभूत्। हे इन्द्र ते तव रन्त्यः प्राणिनां शुभकरो यो मदः स क इदानीं क्वेति पृच्छामः। दुरो दुष्टा गिरः शत्रूणां दुष्टवाक्यानि, उग्रवाक्यधरान् शत्रून् वा, उग्रः सन् अभि वि धाव अभिद्रव।

अनेन भक्तानां बहुजनपोषकत्वादिधर्मं व्यादिशति ददातीति व्यादिशः, प्रक्रिया तु पूर्ववत्, इति निरुक्तेः त्रिशोकः शतमावहन् नॄनित्यादिना सूचनाद् **व्यादिशमूर्तिरत्र** ॥ ९४२ ॥

॥ ॐ दिशाय नमः ॥

**कद्वाहो अर्वागुप मा मनीषा आ त्वा शक्यामुपमं राधो**
**अन्नैः। कदु द्युम्नमिन्द्र त्वावतो नॄन् कया धिया ॥ ९४३ ॥**

हे इन्द्र त्वदीयो वाहो रथः अश्वो वा कत् क्वास्ति। अर्वाक् स्थितं मा मां उप प्रति मनीषा त्वदीया बुद्धिः कत् कदा भवेत्। अन्नैः सह उपमं सदृशं राधः सुखं प्राप्तुं त्वां आ आराध्य अहं शक्याम् शक्तो भूयासम्। हे इन्द्र ते द्युम्नं सुखं बलं वा कत् क। उ एव। त्वावतः, त्वं येषां स्वामी ते त्वावन्तः, तान्, त्वत्स्वामिकान् नून् यज्ञादिनेतॄन् त्वद्भक्तान् कया धिया बुद्ध्या करसे भोगिनः करोषि।

अनेन दिश अतिसर्जने इत्यतः कर्मणि कः। दिश्यते भक्तैः पृच्छ्यत इति दिश इति निरुक्तेः कद् वाहो अर्वागुपेत्यनेन सूचनाद् दिशमूर्तिरत्र॥ ९४३॥

॥ ॐ अनादये नमः॥

**करसे कन्न आगन्। मित्रो न सत्य उरुगाय भृत्या अन्ने**
**समस्य यदसन् मनीषाः। प्रेरय सूरः॥ ९४४॥**

हे उरुगाय मित्रो न सखेव ते मनीषा बुद्धयः अन्ने अस्मद्भोगविषये कत् कदा असन् आसन्। किञ्च समस्य सर्वाधिष्ठानेषु नीचोच्चभावरहितस्य सर्वदेशकालेषु आदिमध्यान्तरहितस्य वा ते सत्यः समीचीनाः मनीषाः भृत्यै अस्मद्भरणाय यत् कदा आगन् आगच्छेयुः। (शिष्टमुत्तरान्वयि)

अनेन आदिशब्दो मध्यान्तयोरप्युपलक्षकः। न विद्यन्ते आदिमध्यान्तानि यस्य सोऽनादिरिति निरुक्तेः समस्येत्यनेन सूचनाद् अनादिमूर्तिरत्र॥ ९४४॥

॥ ॐ भूर्भुवोलक्ष्म्यै नमः॥

**अर्थं न पारं ये अस्य कामं जनिधा इव ग्मन्। गिरश्च**
**ये ते तुविजात पूर्वीर्नर इन्द्र प्रतिशिक्षन्त्यन्नैः॥ ९४५॥**

हे तुविजात बहुस्थानेष्वभिव्यक्त इन्द्र अस्य ते सकाशात् कामं जनिधा इव पुत्रा इव ग्मन् अगमन् प्रापुः प्राप्तवन्तः। ये चान्नैः चरुपुरोडाशादिद्रव्यैः सह पूर्वीः अनादिनित्याः ते गिरः त्वत्स्तुतीः ते तुभ्यं प्रतिशिक्षन्ति प्रतिदिशन्ति तान् नरो भक्तान् सूरः सूर्यः अर्थं न अर्थमिव पारं संसारपारभूतं त्वां प्रकाशयेति वा।

अनेन भू सत्तायामित्यत उरकूप्रत्ययः अकारलोपः ककारलोपः सवर्णदीर्घः। भवति यज्ञगृहे

एवाभिव्यक्त इति भूः, रेफान्तोऽयम्। भूत्या कामप्रदानादिरूपैश्वर्येण वरः, उपपदान्त्यस्य तिशब्दस्य लोपः पूर्वस्य ह्रस्वत्वं वरशब्दान्त्यलोपश्च, निरुक्तत्वात्। भुवः सर्वकामप्रदः। अयमपि रेफान्तः। लक्ष दर्शनाङ्कनयोरित्यस्मात् लक्षेर्मुट् चेतीकारप्रत्ययः, तस्य मुडागमश्च। लक्षयति प्रकाशयतीति लक्ष्मीः। भूश्चासौ भुवश्चासौ लक्ष्मीश्च भूर्भुवर्लक्ष्मीः। यद्वा भूः भूमिः संसारपारभूमित्वाद् भगवत्स्वरूपम्, तस्या लक्ष्मीः प्रकाशको भुवर्लक्ष्मीः, षष्ठ्या अलुक्। भूश्चासौ भुवर्लक्ष्मीश्चेति भूर्भुवर्लक्ष्मीरिति निरुक्तेः तुविजात ये अस्य कामं पारं प्रेरयेत्यनेन सूचनाद् **भूर्भुवर्लक्ष्मीमूर्तिरत्र** ॥ ९४५ ॥

॥ ॐ सुवीराय नमः ॥

**मात्रे नु ते सुमिते इन्द्र पूर्वी द्यौर्मज्मना पृथिवी काव्येन।**
**वराय ते घृतवन्तः सुतासः स्वाद्मन् भवन्तु ॥ ९४६ ॥**

हे इन्द्र द्यौः पृथिवी चेत्येते पूर्वी अनादिसिद्धे सुमिते व्यापकत्वेन प्रमिते अपि मज्मना महिम्ना ते तव नु इदानीं मात्रे एव एकदेशमात्रम्। काव्येन कवनीयेन मन्त्रेण सुतासः सोमा घृतवन्तो घृतमिश्रिताः स्वाद्मन् स्वादवः सोमरसाः वराय श्रेष्ठाय ते तव भवन्तु।

अनेन सुभटोत्तमयोर्वीर इत्युक्तेः सु भृशमत्यन्तसमृद्धं वा वीर उत्तमः सुवीर इति निरुक्तेः मात्रे नु ते सुमिते वरायेत्यनेन सूचनात् **सुवीरमूर्तिरत्र** ॥ ६४६ ॥

॥ ॐ रुचिराङ्गदाय नमः ॥

**पीतये मधूनि। आ मध्वो अस्मा असिचन्नमत्रमिन्द्राय**
**पूर्णं स हि सत्यराधाः। स वावृधे वरिमन् ॥ ९४७ ॥**

अस्मै इन्द्राय इन्द्रस्य पीतये पानार्थं मधूनि मधुरससंयुक्तान् मध्वः सोमरसान् अमत्रं भाण्डं द्रोणकलशं पूर्णं यथा भवति तथा आ असिश्चन् सोमरसान् द्रोणकलशे स्थापितवन्तः ऋत्विजः। हि यस्मादिन्द्रः सत्यराधाः सत्यसंकल्पः, अबाधितसिद्धिप्रदो वा, अत एव वरिमन् वरिमा श्रेष्ठो ववृधे व्यापकोऽभवत्।

अनेन रुच दीप्तावित्यत इषिमदीत्यादिना किरच् प्रत्ययः। रोचत इति रुचिरं शोभनं, अग्यते

इत्यङ्गं राधः संसिद्धिः, रुचिरम् अङ्गं संसिद्धिं ददातीति रुचिराङ्गद इति निरुक्तेः स हि सत्यराधा इत्यनेन सूचनाद् **रुचिराङ्गदमूर्तिरत्र** ॥ ९४७ ॥

॥ ॐ जननाय नमः ॥

**आ पृथिव्या अभि क्रत्वा नर्यः पौंस्यैश्च । व्यानळिन्द्रः पृतनाः**
**स्वोजा आस्मै यतन्ते सख्याय पूर्वीः । आ स्मा रथं नः ॥ ९४८ ॥**

अयमिन्द्रः पृथिव्याः क्रत्वा कर्ता । पौंस्यैः सामर्थ्यैः नर्यो नरेषु हितश्च । योयमिन्द्रः पृतनाः शत्रुसेनाः स्वौजाः समृद्धबलः सन् व्यानट् व्याप्नोति, अस्मै अस्य तस्य सख्याय पूर्वीः पूर्व्यः पुरातनप्रजाः अभि आयतन्ते प्रयतन्ते । (शिष्टमुत्तरान्वयि)

अनेन जन्यते सख्यमनेनेति जनन इति निरुक्तेः सख्याय यतन्ते इत्यनेन सूचनात् **जननमूर्तिरत्र** ॥ ९४८ ॥

॥ ॐ जनजन्मादये नमः ॥

**पृतनासु तिष्ठ यं भद्रया सुमत्या चोदयासे ।**
**[१]आ याह्यर्वाङुप वन्धुरेष्ठास्तवेदनु प्रदिवः ॥ ९४९ ॥**

अत्र रथशब्दः आवर्तनीयः । हे इन्द्र पृतनासु युद्धेषु रथं न रथ इव अचलो भूत्वा तिष्ठ । किञ्च यं रथं प्रसिद्धं देहाख्यं वा भद्रया कल्याण्या सुमत्या शोभनमत्या यं त्वम् आ चोदयसे तं रथमातिष्ठ अधितिष्ठ । हे इन्द्र प्रदिवः स्वर्गाद् अर्वाङ् अर्वाक् अधस्तात् स्थितं यज्ञवाटं प्रति, वन्धुरशब्दः फलकसङ्घातवचनः, तत्सङ्घातात्मके तवेत् तवैव वन्धुरे रथे तिष्ठतीति वन्धुरेष्ठाः, सप्तम्या अलुक्, रथे तिष्ठन् अनु याहि ।

अनेन जि जये इत्यस्मादनडुप्रत्ययः । जनो जयः, तस्य जन्म उत्पत्तिर्यस्माद् भवति स जनजन्मा रथः । रथे हि स्थित्वा शत्रून् जयति । आप्लृ व्याप्तावित्यस्मादिप्रत्ययः पकारस्य दकारादेशः जनजन्मानं रथम् आप्नोति अधितिष्ठतीति जनजन्मादिरिति निरुक्तेः रथं न पृतानासु तिष्ठ उप बन्धुरेष्ठा इत्यनेन सूचनात् **जनजन्मादिमूर्तिरत्र** ॥ ९४९ ॥

---

१-ऋग्वेद ३-४३,गाथिनो विश्वामित्रः ।

॥ ॐ भीमाय नमः ॥

**सोमपेयम् । प्रिया सखाया वि मुचोप वर्हिस्त्वामिमे**
**हव्यवाहो हवन्ते । आ याहि पूर्वीरतिचर्षणीँ रा अर्यः ॥ ९५० ॥**

हे इन्द्र अर्यः स्वामी त्वं पूर्वीः पुरातनाः चर्षणीरासुरीः प्रजाः अति अतीत्य निराकृत्य, शत्रूणां भयङ्करो भूत्वेति यावत्, सोमपेयं सोमपानार्थं अस्मद्गृहं प्रत्यायाहि । आगत्य च सखाया सखायौ प्रिया प्रियौ अश्वौ विमुच विमुञ्च । विमोच्य च वर्हिः वर्हिषि त्वमुपविश । इमे, हव्यं वहन्तीति हव्यवाहः स्तोतारः त्वां हवन्ते हि । शृणु ।

अनेन ञि भी भये इत्यस्माद् भियः षुग्वेति मक्प्रत्ययः, बिभ्यत्यस्मादसुरजना इति भीम इति निरुक्तेः पूर्वीश्चर्षणीरतीत्यनेन सूचनाद् **भीममूर्तिरत्र** ॥ ९५० ॥

॥ ॐ भीमपराक्रमाय नमः ॥

**आशिष उप नो हरिभ्याम् । इमा हि त्वा मतयः स्तोमतष्टा**
**इन्द्र हवन्ते सख्यं जुषाणाः । आ नो यज्ञम् ॥ ९५१ ॥**

हे इन्द्र त्वम् आशिषः अस्माभिराशास्यान् दातुं उप समीपं हरिभ्यामश्वाभ्यां नः यज्ञम् आयाहि । स्तोमतष्टाः स्तोत्रेण संस्कृताः मतयो मतिमन्तः इमा अस्मदीया जनाः ते सख्यं जुषाणाः त्वां सेवन्ते हि ।

अनेन भीमशब्दः पूर्ववत् मक्प्रत्ययान्तः; अश्वपरः । परानुत्तमान् आशास्यान् काम्यान् आ समन्ताद् दातुं क्रमः चरणविक्षेपः आगमनं पराक्रमः । भीमाभ्यां शत्रुभयंकराभ्यामश्वाभ्यां पराक्रम आगमनं यस्य स भीमपराक्रम इति निरुक्तेः हरिभ्यामाशिष उप याहीत्यनेन सूचनाद् **भीमपराक्रम-मूर्तिरत्र** ॥ ९५१ ॥

॥ ॐ आधारनिलयाय नमः ॥

**नमोवृधं सजोषा इन्द्र देव हरिभिर्याहि तूयम् ।**
**अहं हि त्वा मतिभिर्जोहवीमि घृतप्रयाः सधमादे ॥ ९५२ ॥**

हे इन्द्र देव नमोवृधं नमःशब्देन पूर्णं नः यज्ञं प्रति सजोषाः मरुद्भिः सहितः घृतप्रयाः घृतक्षरदन्नप्रियस्त्वं हरिभिरश्वैः तूयं तूर्णमायाहि । सधमादे यज्ञे मतिभिः स्तोत्रैरहं जोहवीमि ।

अनेन धृ धारणे इत्यतो घञ् । आ समन्ताद् ध्रियते अत्र नमःशब्द इत्याधारो यज्ञः, नितरां लीयते श्लिष्यते इति निलयः, निपूर्वात् लीङ् श्लेषणे इत्यत एरच् इति सूत्रेणाच् । आधारं यज्ञं निलीयते संगतो भवतीति आधारनिलय इति निरुक्तेः नमोवृधं यज्ञं याहीत्यनेन सूचनात् **आधारनिलयमूर्तिरत्र** ॥ ९५२ ॥

**॥ ॐ धात्रे नमः ॥**

**मधूनाम् । आ च त्वामेता वृषणा वहातो हरी सखाया**
**सुधुरा स्वङ्गा । धानावदिन्द्रः सवनं जुषाणः ॥ ९५३ ॥**

हे इन्द्र एता एतौ वृषणा युवानौ सुधुरा सम्यग् धुरं वहन्तौ स्वङ्गा स्वङ्गौ शोभनाङ्गौ ते सखाया सखायौ मित्रभूतौ हरी अश्वौ मधूनां सोमरसानां पानार्थं त्वाम् अस्मद्यज्ञवाटं प्रति आ वहतः आवहताम् । स इन्द्रः धानावत् धानादिद्रव्यवत् सवनं यज्ञं जुषाणः सेवमानो भूयात् ।

अनेन डु धाञ् धारणपोषणयोरित्यतस्तृच्, यज्ञे धानादिकं स्वोदरे धत्ते इति धातेति निरुक्तेः धानावदिन्द्रेत्यादिना सूचनाद् **धातृमूर्तिरत्र** ॥ ९५३ ॥

**॥ ॐ पुष्पहासाय नमः ॥**

**सखा सख्युः शृणवद् वन्दनानि । कुविन्मा गोपां करसे**
**जनस्य कुविद् राजानां मघवन् ऋजीषिन् ॥ ९५४ ॥**

अयमिन्द्रः सख्युर्मम वन्दनानि स्तोत्राणि शृणवत् शृणुयात् । ऋजीषं तृतीयसवनेऽवशिष्टं सोमद्रव्यं तदस्यास्तीति ऋजीषी इन्द्रः । हे ऋजीषिन् मघवन् इन्द्र जनस्य लोकस्य मा मां कुवित् बहु गोपां गोप्तारं करसे कुरुषे कुर्याः । कुवित् जनस्य बहुजनस्य मां राजानं करसे ।

अनेन पुष पुष्टावित्यतः पप्रत्ययः, पुष्पः पोषकः । हस हासशब्दयोरित्यस्माण्ण्यन्ताद् अप् प्रत्ययः, स्वनहसोर्वेति सूत्रात् । स्वभक्तं स्वजनानां पुष्पं पोषकं हासयति शब्दयतीति पुष्पहास इति निरुक्तेः कुविन्मां गोपां करसे इत्यादिना सूचनात् **पुष्पहासमूर्तिरत्र** ॥ ९५४ ॥

॥ ॐ प्रजागराय नमः ॥

**कुविन्म ऋषिं पपिवांसं सुतस्य कुविन्मे वस्वो अमृतस्य**
**शिक्षाः । आ त्वा वृहन्तो हरयो युजाना अर्वागिन्द्र सधमादः ॥ ९५५ ॥**

किञ्च मे मां कुविद्‌ऋषिं बहुज्ञानिनं करसे । किञ्च मां सुतस्य सोमस्य कुवित्‌पपिवांसं बहुपातारं करसे । मे मह्यम् अमृतस्य अमृताख्यस्य वस्वो वसुनः द्वितीयार्थे षष्ठी, मोक्षरुपं वसु शिक्षाः, शिक्षतिर्दानिकर्मा, दद्याः । हे इन्द्र बृहन्तो युजानाः रथे सम्बद्धाः सधमादः सुखसंवर्धिता हरयः अश्वाः त्वा त्वाम् अर्वाक् अस्मदाभिमुख्येन वहन्तु ।

अनेन जागृ निद्राक्षये इत्यतः अकारप्रत्ययः । प्रकर्षेण भक्तान् जागरयति निद्रारहितान् मुक्तान् करोतीति प्रजागर इति निरुक्तेः वस्वो अमृतस्य शिक्षा इत्यनेन सूचनात् **प्रजागरमूर्तिरत्र** ॥ ९५५ ॥

॥ ॐ ऊर्ध्वगाय नमः ॥

**वहन्तु प्र ये द्विता दिव ऋञ्जन्त्याताः सुसंमृष्टासो**
**वृषभस्य मूराः । इन्द्र पिब वृषधूतस्य ॥ ९५६ ॥**

आता इति दिङ्नामसु पाठाद् दिश उच्यन्ते । दिशः, दिवः द्युलोकस्य, एवं द्विता द्विधेव स्थितस्य सुप्रदेशस्य तदन्यदिक्प्रदेशस्य च, मध्ये ये प्रऋञ्जन्ति गच्छन्ति, दिशोर्मध्ये प्रकाशयन्तीत्यर्थः । सुसंमृष्टासः सम्यगलंकृताः वृषभस्य श्रेष्ठस्येन्द्रस्य मूराः मुखरास्ते अश्वाः त्वां वहन्तु । हे इन्द्र वृषधूतस्य वृषेण पाषाणेन धूतस्य सुतस्य, द्वितीयार्थे षष्ठी, सुतं सोमं पिब ।

अनेन ऊर्ध्वाः द्युलोकप्रकाशकाः ये उत्तमा अश्वास्तैर्यज्ञवाटं गच्छतीत्यूर्ध्वग इति निरुक्तेः प्र ये द्विता वहन्त्वित्यादिना सूचनाद् **ऊर्ध्वगमूर्तिरत्र** ॥ ९५६ ॥

॥ ॐ सम्रधाचाराय नमः ॥

**वृष्ण आ यं ते श्येन उशते जभार । यस्य मदे**
**च्यावयसि प्र कृष्टीर्यस्य मदे अप गोत्रा ववर्थ ॥ ९५७ ॥**

हे इन्द्र यं सोमरसं श्येनो गायत्री उशते कामयमानाय ते तुभ्यं त्वदर्थम् आजभार आहरत् , यस्य सोमरसस्य पानेन मदे हर्षे जाते सति कृष्टीः शत्रुरूपाः प्रजाः च्यावयसि नाशयसि, यस्य च मदे गोत्रा, मेघनामैतत् मेघान् अपववर्थ वर्षितुं प्रेरयसि, तं सोमं पिबेति संबन्धः ।

अनेन जि ष्वप् शये इत्यतस्तप्रत्ययः, कन् प्रत्ययस्तुडागमो वा, धातुवकारलोपो निरुक्तत्वात्, सप्तः स्वापो मिथ्याज्ञानं तद् दधते इति सप्तधाः असुरजनाः, तान् चारयति स्वस्थानादपगमयतीति सप्तधाचार इति निरुक्तेः कृष्टी प्र च्यावयसीत्यनेन सूचनाद् सप्तधाचारमूर्तिरत्र ॥ ९५७ ॥

॥ ॐ प्राणदाय नमः ॥

**शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।**
**शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि ॥ ९५८ ॥**

शुनं सुखरूपं मघवानं धनादिमन्तं समत्सु युध्देषु ऊतये रक्षार्थं भक्तजनैः कृतमाह्वानं शृण्वन्तं श्रुत्वा च वृत्राण्यसुरजातानि निघ्नन्तं संहरन्तं नृतमं नेतृतमम् उग्रमिन्द्रमस्मिन् भरे युद्धे वाजसातौ अन्नादिभागप्राप्त्यर्थं वयं हुवेम आह्वयामः ।

अनेन वृत्रादिप्राणान् द्यति खण्डयतीति प्राणदः । यद्वा प्राणनहेतुत्वात् प्राणा अन्नादीनि, तानि भक्तेभ्यो ददातीति प्राणद इति निरुक्तेः घ्नन्तं वृत्राणि अस्मिन् भरे वाजसातौ हुवेमेत्यनेन सूचनात् प्राणदमूर्तिरत्र ॥ ९५८ ॥

॥ ॐ प्रणवाय नमः ॥

**संजितं धनानाम् ।[१] विधुं दद्राणं समने बहूनां युवानं**
**सन्तं पलितो जगार । देवस्य पश्य काव्यं ॥ ९५९ ॥**

हे साधुजन बहूनां नक्षत्रादीनां समने समूहे युवानं सन्तं प्रकाशमानं सन्तं दद्राणं वेगवन्तं विधुं चन्द्रमयमिन्द्रः पलितो वृद्धः गुणैः पूर्णः राह्वादिशरीरे स्थितः सन् जगार जग्रास । अस्य देवस्य धनानां शत्रुधनानां संजितमपहर्तारं काव्यं कवनीयं महिमानं पश्य ।

अनेन णु स्तुतावित्यत ऋदोरप् इत्यप्प्रत्ययः गुणावादेशौ । प्रकर्षेण नवो नव्यो महिमा यस्य सः प्रणवः । उपसर्गादसमासेपीति णत्वम् । इति निरुक्तेः देवस्य पश्य काव्यं महित्वेत्यनेन सूचनात् प्रणवमूर्तिरत्र ॥ ९५९ ॥

१. ऋग्वेद १०-५५-५, बृहदुक्थो वामदेव्यः ।

॥ ॐ पणाय नमः ॥

**महित्वाऽया ममार स ह्यः समान ।[१] यो जात एव**
**प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ॥ ९६० ॥**

यस्मादिन्द्रात् सः असुरसमूहो ममार मृतिमाप तस्मात् महित्वा महिम्ना ह्यः प्रसिद्धः अद्य समान सम्यक् चेष्टते । य इन्द्रो जात एव प्रथमो मुख्यो मनस्वान् ज्ञानी, यश्च देवान् स्वभक्तान् क्रतुना रक्षणादिकर्मणा पर्यभूषत् स्वस्वकार्येषु प्रावर्तयत् ।

अनेन पण व्यवहारे स्तुतौ चेत्यस्मादन्तर्णीतण्यर्थात् पचाद्यच्, पणयति व्यवहारेषु देवान् प्रवर्तयतीति पण इति निरुक्तेः देवान् क्रतुना पर्यँभूषदित्यनेन सूचनात् **पणमूर्तिरत्र** ॥ ९६० ॥

॥ ॐ प्रमाणाय नमः ॥

**यस्य शुष्माद् रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास**
**इन्द्रः । यः पृथिवीं व्यथमानामदंहद् यः पर्वतान् प्रकुपितान् ॥ ९६१ ॥**

यस्येन्द्रस्य शुष्माद् बलाद् रोदसी द्यावापृथिव्यौ अभ्यसेतां निरस्ते भवेताम्, अपरिमितव्याप्तिरस्येति यावत् । नृम्णस्य सुखरूपस्य मह्ना महिम्ना स इन्द्रः जनासः जनानामिन्द्रः स्वामी यो देवो व्यथमानां दैत्यैरुपद्रुतां पृथिवीमदंहत् दैत्यान् हत्वा सुखमतनोत् । यश्च प्रकुपितान् लोकसंहर्तॄन् पर्वतान् अरम्णात् चिच्छेदेति संबन्धः ।

अनेन माङ् माने इत्यतो भावे ल्युट् । प्र आदिकर्मणि भृशार्थैश्वर्यसंभववियोगतृप्तिशुद्धीच्छाशक्ति-शान्तिपूजाग्रप्रारंभदर्शनेष्वित्युक्तेः प्रशब्दो वियोगपरः । प्रगतं मानं मितिर्यस्मात् स प्रमाणम्, नपुंसकत्वं तु ब्रह्मशब्दापेक्षयेत्युक्तम्, इति निरुक्तेः रोदसी अभ्यसेतामित्यनेन सूचनात् **प्रमाणमूर्तिरत्र** ॥ ९६१ ॥

॥ ॐ प्राणनिलयाय नमः ॥

**अरम्णात् । यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात्**
**स जनास इन्द्रः । यो हत्वाऽहिमरिणात् सप्त सिन्धून् ॥ ९६२ ॥**

---

१. ऋग्वेद २-१२, गृत्समदभार्गवः शौनकः (आङ्गिरसः शौनहोत्रः पश्चात्) ।

यश्चान्तरिक्षं वरीयः विस्तृतं विममे चकार, यश्च द्यां द्युलोकमस्तभ्नात् संस्तम्भितवान् (हे जनासः) स इन्द्रः जनानां स्वामी प्रतिपत्तव्यः । यो देवो नदीनां प्रतिरोद्धारमसुरमहिं हत्वा सप्तसिन्धून् प्रसिद्धसप्तनदीः अरिणात् समुद्रं गमयामास ।

अनेन प्रकृष्टा अनाः चेष्टाः यासां ताः प्राणा नद्यः, ता निलीयन्ते समुद्रेण संश्लिष्यन्ते अनेनेति प्राणनिलय इति निरुक्तेः अरिणात् सप्तसिन्धूनित्यनेन सूचनात् **प्राणनिलयमूर्तिरत्र** ॥ ९६२ ॥

**॥ ॐ प्राणदाय नमः ॥**

**यो गा उदाजदपधा वलस्य । यो अश्मनोरन्तरग्निं**
**जजान संवृक् समत्सु स जनास इन्द्रः ॥ ९६३ ॥**

यश्च वलस्य वलासुरेण अपधाः गुहायां पिहिता गाः उदाजत् निर्गमयामास । यश्चाश्मनोः गुरुशिष्याख्ययोररण्योः संघर्षणेन अन्तः मुखाद् अग्निं ज्ञानं जजान । यश्च समत्सु युद्धेषु संवृक् भक्तान् संवृणोति । (हे जनासः) स इन्द्रो जनानां स्वामी ।

अनेन प्राणशब्दः तन्त्रेणोपात्तः, प्रशब्दः पूर्ववद् वियोगपरः, प्र प्रगता अनाः चेष्टा यासां ता वलेनावरुद्धगतयो गावः प्राणाः, तासां प्रकर्षेण अनः प्राणः, तं ददाति बहिर्निर्गमनेन स्वेच्छया गाः सञ्चारयतीति प्राणद इति निरुक्तेः अपधा वलस्य गा उदाजदित्येन सूचनात् **प्राणदमूर्तिरत्र** ॥ ९६३ ॥

**॥ ॐ प्राणजीवनाय नमः ॥**

**येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं**
**गुहाकः । श्वघ्नीव यो जिगीवाँ लक्षमाददर्यः पुष्टानि ॥ ९६४ ॥**

येन देवेन विश्वा विश्वानि इमा इमानि समस्तप्राणिजातानि च्यवना च्यवनानि कृतानि स्वस्वव्यापारे प्रेरितानि कृतानि । यश्च दासं हिंसकमसुरजातं वर्णं वर्णत अधरं गुहायां तमसि अकः अकरोत् । यश्च श्वघ्नीव स्वानमिव (?) लक्षं बहुविधं धनं जिगीवान् जितवान् प्राप्तवान् । यश्च अर्यः स्वामी पुष्टानि बहुविधानि आदत् ददाति ।

अनेन प्रकर्षेण अनश्चेष्टा येषां ते प्राणा जनाः, तेषां जीवनम् एतदुपलक्षिताशेषव्यापारान् करोतीति प्राणजीवन इति निरुक्तेः येनेमा विश्वा च्यवना कृतानीत्यनेन सूचनात् **प्राणजीवनमूर्तिरत्र** ॥ ९६४ ॥

॥ ॐ तत्वाय नमः ॥

**स जनास इन्द्रः । यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहु-**
**र्नैषो अस्तीत्येनम् । सो अर्यः पुष्टीर्विज इवा ॥ ९६५ ॥**

यं देवं सः कुह कुत्रास्तीति पृच्छन्ति वादरसिका जनाः । यं च देवं घोरमाहुः केचन । केचन सौम्यमाहुः । उत केचित् एष नास्त्येवेत्याहुः । तत्र स्वयं सिद्धान्तमाह । सः विज इव पक्षिपोत इव पुष्टीः अभिवृद्धीः आमिनाति सम्यक् प्राप्नोति । पक्षिपोतो दिनेदिने यथा प्रवर्धते तथायमपि प्राणिहृदयेषु नित्यमभिवृद्धो वर्तत इति यावत् । स एवंभूतः इन्द्रः अर्यः स्वामी ।

अनेन त्यजतनियजिभ्यो डिदित्यदिप्रत्ययः । तनोतीति तद् वृद्धिः । तद् वाति गच्छतीति तत्वम्, वातेः कः निरुक्तत्वात् उपपदान्त्यस्य तः, इति निरुक्तः अर्यः पुष्टीर्विज इवा मिनातीत्यनेन सूचनात् **तत्वमूर्तिरत्र** ॥ ९६५ ॥

॥ ॐ तत्वविदेकात्मने नमः ॥

**आ मिनाति श्रदस्मै धत्त स जनास इन्द्रः । यो रध्रस्य**
**चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः ॥ ९६६ ॥**

य इन्द्रः अस्मै तत्वज्ञानिने भक्ताय श्रत् बलं धत्त धत्ते ददाति । यश्च रध्रस्य समृद्धस्य उत्तमाधिकारिणः चोदिता प्रेरकः । यश्च कृशस्य मध्यमाधिकारिणोपि चोदिता । यश्च ब्रह्मणः तदुभयकृतस्तोत्रस्य चोदिता । यश्च नाधमानस्य याचमानस्य फलापेक्षिणः कीरेः स्वपूजात्मककर्मकर्तुः यजमानस्य अविता रक्षकः स जनानां स्वामी ।

अनेन तत्वं वेत्तीति तत्ववित्, तस्मै तत्वविदे एकं मुख्यं बलादिकं आतनोतीति तत्वविदेकात्मेति निरुक्तः श्रदस्मै धत्त इत्यनेन सूचनात् **तत्वविदेकात्ममूर्तिरत्र** ॥ ९६६ ॥

॥ ॐ जन्ममृत्युजरातिगाय नमः ॥

**युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास**
**इन्द्रः । यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामाः ॥ ९६७ ॥**

इन्द्रस्यैव वैभवाल्लक्षणान्तरमाह । यश्च युक्तग्राव्णः सोमसवनार्थमुपात्तपाषाणस्य सुतसोमस्य

सोमाभिषवं कृतवतो यजमानस्य अविता । यश्च सुशिप्रः सुन्दराकृतिः । यद्वा सु प्रशस्तेत्यादेः सु अकृच्छ्रम्, कृच्छ्रं कष्टं जन्ममृत्युजरादि तद्रहितमकृच्छ्रम्, शं सुखमस्यास्तीति शि, सु जन्ममृत्युजरारहितं शि सुखपूर्णमत एव प्रकृष्टं शरीरं यस्य सः सुशिप्रः । यस्य प्रदिशि प्रतिदिशम् अश्वास अश्वाः जन्मादिरहिताः सन्ति । यस्य गावः सन्ति । यस्य ग्रामाः सन्ति । स जनास इन्द्रः ।

अनेन अति अतिशयभृशार्थविकृत्यतिक्रमणवृद्धिष्वित्युक्तेः अतिरतिक्रमणार्थः । जन्मादीनामतिक्रमणं यस्य तज्जन्ममृत्युजराति आनन्दात्मकं शरीरम्, तद् गच्छतीति जन्ममृत्युजरातिग इति निरुक्तेः सुशिप्रशब्देन यस्याश्वासः प्रदिशीत्यनेन च सूचनात् जन्ममृत्युजरातिगमूर्तिरत्र ॥ ९६७ ॥

**॥ ॐ भूर्भुवःस्वस्तरवे नमः ॥**

**यस्य विश्वे रथासः । यः सूर्यं य उषसं जजान यो**
**अपां नेता स जनास इन्द्रः । यं क्रन्दसी संयती ॥ ९६८ ॥**

यस्य विश्वे रथासः समस्तरथाः सुखविशेषाः सन्ति । यश्च सूर्यं जजान उषसं सूर्यपुत्रीं जजान । यः अपां नदीनां कर्मणां वा नेता । यद्वा 'आपा इत्याप इति' इति श्रुतेः (ऐतरेयोपनिषत्) सर्वदेवाः त्रिलोकवासिन आपः, तेषां नेता । यं च क्रन्दसि आक्रन्दयुक्ते संयति युद्धे आह्वयन्ति । स इन्द्रः ।

अनेन भूश्च भुवश्च स्वश्चेति त्रयोलोका भूर्भुवःस्वः, तत्स्थितानां जनानां तरति ददातीति भूर्भुवःस्वस्तरुरिति निरुक्तेः अपां नेतेत्यनेन सूचनाद् भूर्भुवःस्वस्तरुमूर्तिरत्र ॥ ९६८ ॥

**॥ ॐ ताराय नमः ॥**

**विह्वयेते परेऽवर उभया अमित्राः । समानं चिद् रथमा**
**तस्थिवांसा नाना हवेते स जनास इन्द्रः ॥ ९६९ ॥**

उभया उभये उभौ । तदेव विवृणोति । परे मित्रभूताः, अमित्राः अमित्रभूताः, अत एवावरे अभक्ताश्चेति । एवं (उभौ) विह्वयेते । किञ्च समानं रथम् उभयोः सेनयोर्मध्यस्थं रथं आ तस्थिवांसा आतस्थिवांसं नाना नानाप्रकारं ये हवन्ते होतारः, तांश्च व्यसनात् तारयति चेति शेषः ।

अनेन तॄ प्लवनतरणयोरित्यस्मण्ण्यन्तादच्, तारयतीति तारः, इति निरुक्तेः हवेते इत्यनेन सूचनात् तारमूर्तिरत्र ॥ ९६९ ॥

॥ ॐ सवित्रे नमः॥

**यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते। यो विश्वस्य प्रतिमानं बभूव॥ ९७०॥**

यस्माद् देवाद् ऋते यस्य प्रसादमन्तरेण न विजयन्ते। यं च युध्यमाना योद्धारो जनासो जना अवसे हवन्ते। यश्च विश्वस्य ब्रह्मादितृणान्तस्य प्राणिजातस्य सूर्यकादेः सूर्य इव प्रतिमानं सदृशो बभूव, सर्वप्राणिनां बिम्ब इति यावत्।

अनेन सवितेव सवितेति निरुक्तेः विश्वस्य प्रतिमानं बभूवेत्यनेन सूचनात् **सवितृमूर्तिरत्र**॥ ९७०॥

॥ ॐ प्रपितामहाय नमः॥

**यो अच्युतच्युत् स जनास इन्द्रः। यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान। यः शर्धते नानुददाति॥ ९७१॥**

यश्च अच्युतच्युत् अच्युतत्वेन मन्यमानमपि च्यावयति, यश्च शश्वतः शाश्वतः सन् महि महत् एनः पापं मिथ्याज्ञानादिरूपं दधानान् तमोयोग्यान् अत एव अमन्यमानान् शर्वा सर्वान् जघान तमसि प्रक्षिप्तवान् , स जनास इन्द्रः। (शिष्टमुत्तरान्वयि)

अनेन पा पाने इत्यस्मात् डिः, पीयते राक्षसैर्भुज्यत इति पि पापम्, प्रकृष्टं पापं येषां ते प्रप्यो मिथ्याज्ञानिनः। तमु ग्लपने इत्यस्माण्ण्यन्तादच्, ग्लपयतीति तामः। हन्ति तमसि प्रक्षिपतीति हः। अथ च दैत्यहतिस्तमसि स्थिरेत्युक्तेः। प्रपीन् मिथ्याज्ञानादिरूपपापवतोऽसुरान् तामयति हन्ति चेति प्रपितामह इति निरुक्तेः मह्येनो दधानान् जघानेत्यादिना सूचनात् **प्रपितामहमूर्तिरत्र** ॥ ९७१॥

॥ ॐ यज्ञाय नमः॥

**शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः। यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्॥ ९७२॥**

यश्च शर्धते बलवते परब्रह्मणे शृध्यां चरुपुरोडाशादीन् नानुददाति , अयज्वेति यावत् , तस्य दस्योः यश्च हन्ता। यश्च पर्वतेषु क्षियन्तं निवसन्तं शम्बरमसुरं चत्वारिंश्यां शरदि चत्वारिंशद्वर्षेषु अन्विष्य अन्वविन्दत् लब्धवान्। लब्ध्वा च जघानेति संबन्धः। स जनासः।

अनेन यज देवपूजासंगतिकरणदानेष्वित्युक्तेः यजिर्दानार्थः । दानं गजमदे त्यागे शुद्धिखण्डनयोरपीत्युक्तेः दानं च त्यागः परित्यागः । तथा च यजेः कर्तरि क्विप्, यजः कर्मत्यागिनः, तान् मृतिं नयति प्रापयतीति यज्ञः । यद्वा दानं खण्डनम् , तदर्थाद् यजेः यजयाचयतविच्छप्रच्छरक्षो नङिति सूत्रेण नङ् प्रत्ययः खण्डयतीति यज्ञः । योग्यतया अयज्वानं हन्तीति सिध्यतीति निरुक्तेः यः शर्धते नानुददातीत्येनेन सूचनाद् **यज्ञमूर्तिरत्र** ॥ ९७२ ॥

**॥ ॐ यज्ञपतये नमः ॥**

**ओजायमानं यो अहिं जघान दानुं शयानं स**

**जनास इन्द्रः । यः सप्तरश्मिर्वृषभस्तुविष्मान् ॥ ९७३ ॥**

यश्च ओजायमानं ओजस्विनां वरं शयानं नदीमार्गमवरुध्य पर्वतेषु शयानं दानुं दनुपुत्रमहिमसुरं जघान । यश्च सप्तरश्मिः संप्राप्तरश्मिः वृषभः श्रेष्ठः तुविष्मान् वलवान् । स जनासः ।

अनेन देवपूजार्थाद् यजेर्भावे क्विप् । न विद्यते यज् देवपूजा यस्येति यज्ञः, नसमासोयं परनिपातश्च । यज्ञो देवपूजारहितोऽसुरादिः । तं पातयतीति पतिः । अन्तर्णीतण्यर्थात् पत निपाते इत्यस्मात् इ प्रत्ययः । यद्वा खण्डनार्थाद् यजेः पूर्ववत् नङ् प्रत्ययः । नदीनां खण्डयिता यज्ञः, तं यज्ञमसुरं पातयतीति यज्ञपतिरिति निरुक्तेः शयानमहिं जघानेत्यादिना सूचनाद् **यज्ञपतिमूर्तिरत्र** ॥ ९७३ ॥

**॥ ॐ यज्वने नमः ॥**

**अवासृजत् सर्तवे सप्त सिन्धून् । यो रौहिणमस्फुरद्**

**वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः । द्यावा चिदस्मै ॥ ९७४ ॥**

यज्ञनदीप्रतिबन्धकदैत्यान् हत्वा सप्त सिन्धून् सप्तविधा नदीः सर्तवे समुद्रं प्रति गन्तुमवासृजत् व्यसर्जयत् । किञ्च यो वज्रबाहुः सन् वज्रं गृहित्वा द्यां स्वर्गमारोहन्तं रौहिणं तन्नामानमसुरम् अस्फुरत् अधस्तादपातयत् । (शिष्टमुत्तरान्वयि )

अनेन यजेः पूर्ववद् भावे क्विप् , यज् यागः , सः अस्य प्रवर्त्यतया अस्तीति यज्वा , यज्ञविघ्नकारिणो

दैत्यान् हत्वा नदीर्गमयित्वा यज्ञान् प्रवर्तयतीति यावत् , इति निरुक्तेः अवासृजत् सर्तवे सप्त सिन्धूनित्यादिना सूचनाद् **यज्वमूर्तिरत्र** ॥ ९७४ ॥

॥ ॐ यज्ञाङ्गाय नमः ॥

**पृथिवी नमेते शुष्माचिदस्य पर्वता भयन्ते । यः सोमपा**
**निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॥ ९७५ ॥**

अस्मै यस्मै द्यावा द्यौः पृथिवी चित् पृथिव्यपि एते द्यावापृथिव्यौ नमेते प्रह्वीभवतः । अस्य यस्य देवस्य शुष्माचिद् बलादपि पर्वताः भयन्ते विभ्यति । यश्च सोमपाः वज्रबाहुः [१]द्यां स्वर्गं आरोहन्तं (यश्च वज्रहस्त इति निचितः सम्यग् ज्ञातः) भवति । चिती संज्ञाने । स जनासः ।

अनेन पूजार्थाद् यजेर्नङ् प्रत्ययः । यज्ञः पूज्यो बलादिः । गत्यर्थादगेः पचाद्यच् नुमागमः अङ्गयति चालयतीत्यङ्गः । यज्ञेन पूज्येन बलेन पर्वतानप्यंगयति चालयतीति यज्ञाङ्ग इति निरुक्तेः शुष्माचिदस्य पर्वता भयन्ते इत्यादिना सूचनाद् **यज्ञाङ्गमूर्तिरत्र** ॥ ९७५ ॥

॥ ॐ यज्ञवाहनाय नमः ॥

**यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः**
**शशमानमूती । यस्य ब्रह्म वर्धनं यस्य सोमः ॥ ९७६ ॥**

यो देवः सुन्वन्तमवति, यः चरुपुरोडाशादिकं पचन्तमवति, यश्च शंसन्तं शंसितारमवति, यः शशमानं शस्त्रेण स्तुवन्तमवति, यस्य ऊती ऊतिः अभिप्रायः ब्रह्म स्तोत्रं प्रति वर्धनं वर्धनहेतुः, यस्य सोमः गृहेषु (ग्रहेषु ?) पातव्योऽस्ति । (स जनास इन्द्र इति पूर्वेणोत्तरेण वा अन्वयः ।) अत्र सर्वत्रावतिर्वृद्ध्यर्थः ।

अनेन यजमानऋत्विगादिवृद्धिकरणद्वारा यज्ञं वहति प्रवर्तयतीति यज्ञवाहन इति निरुक्तेः यः सुन्वन्तमवतीत्यदिना सूचनाद् **यज्ञवाहनमूर्तिरत्र** ॥ ९७६ ॥

---

१. अत्र सर्वेष्वपि कोशेषु द्यां स्वर्गमारोहन्तमित्यादि अत्रानन्वितमेव लिखितं वर्तते । नूनं सर्व एव कोशा एकस्मादेव कोशादशुद्धात् सम्पादिता इति ज्ञायते । अतः सुबोधाय संभावितोऽर्थः आवरणे दत्तः ।

॥ ॐ यज्ञकृद्यज्ञभृते नमः ॥

**यस्येदं राधः स जनास इन्द्रः । यः सुन्वते पचते**
**दुध्र आ चिद् वाजं दर्दर्षि स किलासि सत्यः ॥ ९७७ ॥**

यस्येदं राधः समस्तसिद्धिजातमस्ति। स जनास इन्द्रः। हे इन्द्र पचते सुन्वते जनाय आ समन्ताद् वाजमन्नं दुध्रः दुग्धवानसि, दर्दर्षि शत्रून् विदारयसि। स त्वं सत्यः साधुगुणपूर्णोसि किल।

अनेन यज्ञकृते यजमानाय दातुं यज्ञमन्त्रादिदानं बिभर्तीति यज्ञकृद्यज्ञभृदिति निरुक्तेः सुन्वते वाजं दुध्र इत्यनेन सूचनाद् **यज्ञकृद्यज्ञभृन्मूर्तिरत्र** ॥ ९७७ ॥

॥ ॐ यज्ञिने नमः ॥

**वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमावदेम।**
**[1]त्यमू षु वाजिनं देवजूतं सहावानं तरुतारम् ॥ ९७८ ॥**

ओ हाक् गतावित्यतः कः, विश्वं जहाति गच्छति प्रेरकत्वेनेति विश्वहः। हे विश्वह इन्द्र ते वयं प्रियासः प्रियाः। अत एव सुवीरासः सुवीराः विदथं ज्ञानप्रियम् आ समन्तात् शिष्येभ्यो वदेम, त्वन्महिमानं व्याख्यास्यामः। त्यमु तमेव वाजिनं युध्द्यन्तं देवजूतं देवानां प्रेरकं सहावानं शत्रुवेगाभिभावकं तरुतारं दातारं त्वां वयं आहुवेमेति (उत्तरेण) संबन्धः।

अनेन पूर्ववद् यज्ञं दानं तदस्यास्तीति यज्ञीति निरुक्तेः तरुतारमित्यनेन सूचनाद् **यज्ञिमूर्तिरत्र** ॥ ९७८ ॥

॥ ॐ यज्ञभुजे नमः ॥

**रथानाम्। अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्य-**
**मिहा हुवेम। इन्द्रस्येव रातिमाजोहुवानाः ॥ ९७९ ॥**

रथानां सुखानां तरुतारं दातारं पृतनाजं पृतनास्वभिव्यक्तं अरिष्टनेमिं अरिष्टनेमपूजितं, यद्वा रिष्टमशुभं तत्र भवतीत्यरिष्टं शुभं, णीञ् प्रापणे इत्यतो नीकेरिति मिप्रत्ययः गुणः, अरिष्टं शुभमेव

१. ऋग्वेद १०-१७८, अरिष्टनेमिस्तार्क्ष्यः।

नयति भुङ्क्ते इत्यरिष्टनेमिस्तं तार्क्ष्यं गरुडमिव स्थितम् आशु वेगशालिनं इन्द्रं त्वाम् । यद्वा तार्क्ष्यं गरुडं वा । इन्द्रस्येव प्रसिद्धेन्द्रस्य सकाशादिव रातिं दानं रक्षां वा आजोहुवानाः अपेक्षमाणाः स्वस्तये क्षेमाय इह यज्ञवाटं प्रति आहुवेम आह्वयामः ।

अनेन यज्ञः पूज्यः शुभादिः, तं भुङ्क्त इति यज्ञभुक्, इति निरुक्तेः अरिष्टनेमिशब्देन सूचनाद् यज्ञभुङ्मूर्तिरत्र ।। ९७९ ।।

।। ॐ यज्ञसाधनाय नमः ।।

**स्वस्तये नावमिवा रुहेम । उर्वी न पृथ्वी बहुले गभीरे**
**मा वामेतौ मा परेतौ रिषाम । सद्यश्चिद् यः ।। ९८० ।।**

स्वस्तये सुखप्राप्तये नावमिव तरीमिव संसारसमुद्रतरणाय इन्द्रं गरुडं वा आरुहेम आश्रयामहे । तौ चन्द्रतार्क्ष्यौ उर्वी न द्यौरिव पृथिवी न पृथिवीवच्च बहुले बहुलौ अत्युन्नतौ गभीरे गभीरौ गम्भीरौ च आ इतौ एतौ इह लोके स्थितौ वां युवां मा रिषाम न हिंस्याम, नानादरं कुर्महे, किन्तु पूजयाम एव ।

अनेन पूर्ववद् यज्ञशब्दः शुभवाची, तं साधयतीति यज्ञसाधन इति निरुक्तेः स्वस्तये नावमिवा रुहेमेत्यनेन सूचनाद् यज्ञसाधनमूर्तिरत्र ।। ९८० ।।

।। ॐ यज्ञान्तकृते नमः ।।

**शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषाऽपस्ततान । सहस्रसाः**
**शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ।। ९८१ ।।**

य इन्द्रः सद्यश्चित् सद्य एव शवसा सुखेन देवऋषिपितृगन्धर्वमनुष्यभेदेन पञ्चविधाः (प्रजाः) सूर्य इव पञ्चकृष्टीः वर्णवाह्यैः सह पञ्चविधाः प्रजाः प्रति ज्योतिषा प्रकाशेन अपः कर्माणि आततान विस्तारयामास, तासां चेष्टाप्रद इति यावत् । किञ्च सहस्रसाः सहस्राणां दाता योग्यानाम्, तद्योग्यानां शतस शतानां दाता तस्येन्द्रस्य रंहिः गमनम्, अन्तर्यामितया शरीरे अवस्थानं शर्यां शय्यायां युवतिं न युवतिमिव न वरयन्ते केपि न वारयन्ति ।

अनेन यज्ञादिकर्मणामन्तं करोतीति यज्ञान्तकृत्, भक्तेष्वन्तर्यामितया स्थित्वा यज्ञादिकं करोति। ''योयं सर्वेषु जीवेषु नियामकतया स्थितः। स विष्णुराप्तकामत्वादात्मेत्येवोच्यते बुधैः। स लोकः सर्वभूतानां सर्वजीवेषु संस्थितः। वैश्वदेवादिकान् होमान् यज्ञांश्च कुरुते प्रभुः।'' इत्यादेः। इति निरुक्तेः पश्चकृष्टीः सूर्य इव ज्यातिषापस्ततानेत्यनेन सूचनाद् **यज्ञान्तकृन्मूर्तिरत्र** ॥ ९८१ ॥

॥ ॐ यज्ञगुह्याय नमः॥

**इन्द्रो विश्वा विराजति। [१]इन्द्रं विश्वा अवीवृधन्**
**समुद्रव्यचसं गिरः। रथीतमं रथीनाम्॥ ९८२ ॥**

अयमिन्द्रः समस्ताः प्रजा विराजति विराजयति। यद्वा राजतिरैश्वर्यकर्मा। विश्वाः प्रजाः विश्वासां प्रजानामीष्टे। गिरो वेदवाचः समस्ता अपि रथीनां रथिनां रथितमं महारथिनं समुद्रव्यचसं समुद्रिक्तगुणव्यक्तिमन्तं इन्द्रमवीवृधन् अभ्यवर्धयन्। साधूनां परममुख्यया वृत्त्या प्रकाशितवत्यः।

अनेन यज्ञसाधनत्वात् पूज्यत्वाद्वा यज्ञा वेदवाचः, तासां गुह्यं रहस्यं परममुख्यया वृत्त्या प्रतिपाद्यं यज्ञगुह्यमिति निरुक्तेः विश्वा गिर अवीवृधन्नित्यनेन सूचनाद् **यज्ञगुह्यमूर्तिरत्र**॥ ९८२ ॥

॥ ॐ अन्नाय नमः॥

**सख्ये त इन्द्र वाजिनो वाजानां सत्पतिं पतिम्। मा भेम**
**शवसस्पते। त्वामभि प्र णोनुमः पूर्वीरिन्द्रस्य॥ ९८३ ॥**

हे शवसस्पते सुखपते इन्द्र ते तव सख्ये जाते सति वाजानां युद्धानामन्नानां वा पतिं स्वामिनं सत्पतिं सतां पतिं त्वामाश्रित्य वाजिनो युद्धवन्तोऽपि वयं मा भेम मा भैष्म। त्वत्प्राप्त्यर्थं त्वामभिप्रणोनुमः पुनःपुनरतिशयेन स्तुमः। इन्द्रस्य ते सकाशात् जाता रातयोऽवनानि दानानि च पूर्वीः पूर्व्यः प्रथमानि उत्तमानि अग्रगण्यानि। अतस्त्वमेव सर्वोपजीव्यः।

---

१. ऋग्वेद १-११. मधुच्छन्दा वैश्वामित्रः। यद्यप्यनुक्रमणिकायां जेता माधुच्छन्दस इत्युक्तं तथापि ऋग्भाष्ये आचार्यैस्तदेतन्निराकृतमिति अत्रापि मधुच्छन्दा एव ऋषिः। अस्मिन् सूक्ते अनुष्टुप्सम्पादनद्वारा बृहतीशंसनप्रकार आरण्यके दर्शितो यदनुरुध्य पूर्वोत्तरमन्त्रपादा व्यतिषज्यन्ते। विशेषस्तु परिशिष्टे द्रष्टव्यः।

अनेन अन प्राणने इत्यस्मात् कृपृवृञ्जुसिद्रुपन्यनिस्वपिभ्यो निदिति सूत्रेण नप्रत्ययः स निच्च । अन्यते प्राण्यते अनेनेत्यन्नम् । यद्वा अद भक्षणे इत्यस्मात् कर्मणि क्तः । रदाभ्यामित्यनेनोभयत्र नः, जग्ध्यादेशाभावश्च । अद्यते सर्वप्राणिभिरुपजीव्यते इत्यन्नमिति निरुक्तेः सख्ये त इत्यादिना सूचनाद् **अन्नमूर्तिरत्र** ॥ ९८३ ॥

**॥ ॐ अन्नादाय नमः ॥**

**रातयो जेतारमपराजितम् । न विदस्यन्त्यूतयो यदी**
**वाजस्य गोमतः । पुरां भिन्दुर्युवा कविः स्तोतृभ्यः ॥ ९८४ ॥**

पुरां शत्रुपुराणां भिन्दुर्भेदकः, युवा तरुणः, कविः सर्वज्ञः, स्तोतृभ्यो गोमतो गवादिसहितस्य वाजस्य अन्नस्य यदि मंहते दाता भवति त्वद्दत्ता ऊतयो न विदस्यन्ति कदाचिन्न विनश्यन्ति, दसु विभेदने क्षये वा । स्वयमपराजितं शत्रूणां जेतारं त्वां प्राप्तानामूतयो न विनश्यन्तीति संबन्धः ।

अनेन भक्तोपहृतमन्नं चरुपुरोडाशादिकमत्तीत्यन्नादः । यद्वा अन्नं भक्तानामा समन्ताद् ददातीत्यन्नाद इति निरुक्तेः वाजस्य मंहते इत्यनेन सूचनाद् **अन्नादमूर्तिरत्र** ॥ ९८४ ॥

**॥ ॐ आत्मयोनये नमः ॥**

**मंहते मघम् । अमितौजा अजायत इन्द्रो विश्वस्य**
**कर्मणः । त्वं वलस्य गोमतो धर्ता वज्री पुरुष्टुतः ॥ ९८५ ॥**

हे इन्द्र भवान् विश्वस्य कर्मणः समस्तप्राणिकर्मणः धर्ता धारकः । पुरुष्टुतः पुरुभिर्जनैः वेदैर्वा स्तुतः । वज्री इन्द्रः अमितौजा अमितपराक्रमशाली सन् अजायत यज्ञेष्वभिव्यक्तोऽभूत् । मघं धनादिकं मंहते ददाति च । गोमतो गोरपहर्तुर्वलस्य वलासुरस्य त्वं हन्ता च ।

अनेन यु मिश्रणामिश्रणयोरित्यस्माद् वहिश्रीत्यादिना निप्रत्ययः गुणः । यौत्यस्मिन्निति योनिः । आत्मा यत्नधृतिस्वान्तेत्यादेरात्मा धृतिः सर्वप्राणिधारणम् । आत्मा सर्वप्राणिधारणं यौत्यस्मिन्निति आत्मयोनिरिति निरुक्तेः विश्वस्य कर्मणो धर्तेत्यनेन सूचनाद् **आत्मयोनिमूर्तिरत्र** ॥ ९८५ ॥

॥ ॐ स्वयंजाताय नमः ॥

**अपावरद्रिवो विलम् । त्वां देवा अविभ्युपस्तवाहं शूर**
**रातिभिस्तुज्यमानास आविषुः । प्रत्यायं सिन्धुमावदन् ॥ ९८६ ॥**

हे अद्रिवः इन्द्र विलं मूलकारणमज्ञानं भक्तानाम् अपावः (अपावृणोः) परिहृत्य तद्हृदयगुहायां स्वयमेवाभिव्यक्तोऽसि । वलासुरस्य गुहां गोभिर्युक्तामपावः अपगतावरणमकरोः इति वा । वलं च हतवान् । ततो देवा अविभ्युषो वलाद्युपद्रवकृतभयरहिताः सन्तः त्वां त्वयैव तुज्यमानासः प्रेर्यमाणाः सन्तः आविषुः जुगुपुः, त्वत्सेवामकुर्वन् । हे शूर तव रातिभिः त्वद्दत्तैः दानैः समृद्धोहं त्वां पूजयितुं सिन्धुं नदीं प्रति आयम् प्राप्नवानि । नदीतीरं गत्वा शालां वद्ध्वा त्वामेव आवदन् स्तुवन् त्वां पूजयामि ।

अनेन स्वयमेव प्रसन्नो भक्तगताज्ञानं परिहृत्य सम्यग् व्यक्तो जायत इति स्वयंजात इति निरुक्तेः अपावरद्रिवो विलमित्यनेन सूचनात् **स्वयंजातमूर्तिरत्र** ॥ ९८६ ॥

॥ ॐ वैखानाय नमः ॥

**उपातिष्ठन्त गिर्वणः । मायाभिरिन्द्र मायिनं विदुष्टे**
**तस्य कारवः । त्वं शुष्णमवातिरः ॥ ९८७ ॥**

हे गिर्वणः तस्य ते तं त्वां कारवः ऋत्विजो विदुः ज्ञातवन्तः उपातिष्ठन्त त्वां सेवन्ते । हे इन्द्र मायिनं मायाविनं शुष्णं जगच्छोषकं वृत्राद्यसुरसमूहं मायाभिः शक्तिभिरवातिरः व्यनाशयः ।

अनेन खनु अवदारणे इत्यस्माद् घञ् वृद्धिः । विशेषेण शत्रुमवदारयतीति विखानः । प्रज्ञादित्वादण् । विखान एव वैखान इति निरुक्तेः त्वं शुष्णमवातिर इत्यनेन सूचनाद् **वैखानमूर्तिरत्र** ॥ ९८७ ॥

॥ ॐ सामगायनाय नमः ॥

**विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर । इन्द्रमीशान-**
**मोजसाऽभि स्तोमा अनूषत । सहस्रं यस्य रातयः ॥ ९८८ ॥**

हे इन्द्र मेधिराः मेधारताः सज्जनाः तस्य ते तं त्वां ये विदुः तेषां साधुजनानां श्रवांसि सुखानि उत्तिर देहि । यस्येन्द्रस्य रातयो दानानि अवनानि च सहस्रं बहुलं सन्ति तमीशानमिन्द्रं त्वामोजसा ओजःप्रभृतिभिर्गुणैः सह स्तोमा स्तुतिविशेषा अभ्यनूषत सदा स्तुवन्ति ।

अनेन षो अन्तकर्मणीत्यस्मात् नामन्सामन्सीमन्नित्यादिना मनिन्प्रत्ययः। आदेच उपदेशेऽशितीत्यात्वम्। यज्ञविनाशकरान् राक्षसान् स्यति हिनस्तीति साम। गीयन्ते अस्मिन्निति गायनः। गै शब्दे इत्यतोऽधिकरणे ल्युट्, अयादेशः युगागमो वा। सामानि स्तोत्रविशेषाः गीयन्ते अस्मिन्निति सामगायन इति निरुक्तेः स्तोमा अनूषतेत्यनेन सूचनात् **सामगायनमूर्तिरत्र** ॥ ९८८ ॥

**॥ ॐ देवकीनन्दनाय नमः ॥**

**उत वा सन्ति भूयसीः।[१] पिवा सोममिन्द्र मन्दतु त्वा**
**यं ते सुषाव हर्यश्वाद्रिः। सोतुर्बाहुभ्यां सुयतो नार्वा ॥ ९८९ ॥**

हे इन्द्र न केवलं सहस्ररातयः किन्तु भूयसीः भूयस्यः अनन्ता अपि रातयो दानानि ते सन्ति, मोक्षप्रदस्त्वमिति यावत्। हे हर्यश्व ते तव पानार्थं यं सोमम् अर्वा अश्वः रश्मिभ्यां न रश्मिभ्यामिव सोतुः अभिषवकर्तुः बाहुभ्यां सुयतः सम्यग्गृहीतः अद्रिः अभिषवपाषाणः सुषाव जनयामास स सोमः त्वा त्वां मन्दतु मदयतु सुखयतु। तं सोमं त्वं पिब।

अनेन देवानां कं सुखमस्यास्तीति देवकी सोमः, तेन देवकिना नन्दते इति देवकीनन्दनः, निरुक्तत्वाद् दीर्घः। यद्वा दीव्यत इति देवः पाषाणः, देवेन पाषाणेन क्रियते सूयते इति देवकी, कृञः डीप्रत्ययः टिलोपः। देवक्या सोमेन नन्दत इति देवकीनन्दनः। नन्द्यादित्वाल्ल्युः, इति निरुक्तेः पिबा सोममिन्द्र मन्दतु त्वेत्यनेन सूचनाद् **देवकीनन्दनमूर्तिरत्र** ॥ ९८९ ॥

**॥ ॐ स्रष्ट्रे नमः ॥**

**यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि।**
**स त्वामिन्द्र प्रभूवसो ममत्तु। बोधा सु मे मघवन् ॥ ९९० ॥**

हे हर्यश्व प्रभूवसो प्रभूतधन इन्द्र ते तव युज्यः अनुगुणः चारुः समीचीनो मदः मदकरो यः सोमोऽस्ति, येन च पीतेन वृत्राणि हंसि स सोमस्त्वां ममत्तु मादयतु। हे मघवन् मे मां सुबोध सम्यग् बोधय, ज्ञानं देहीति यावत्।

---

१. ऋग्वेद ७-२२. मैत्रावरुणिर्वसिष्ठः।

अनेन सृज विसर्गे इत्यतः तृच् । सृजिदृशोर्झल्यमकितीति सूत्रेण अमागमो यणादेशश्च, व्रश्चेत्यादिना षः ष्टुत्वं च। भक्तेभ्यो ज्ञानं सृजति ददातीति स्रष्टेति निरुक्तेः बोधा सु मे मघवन्नित्यनेन सूचनात् **स्रष्टृमूर्तिरत्र** ॥ ९९० ॥

॥ ॐ क्षितीशाय नमः ॥

**वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् । इमा**
**ब्रह्म सधमादे जुषस्व । श्रुधी हवं विपिपानस्य ॥ ९९१ ॥**

हे इन्द्र ते तव प्रशस्तिं स्तुतिरूपां वाचं वसिष्ठो अर्चति । इमां मे वसिष्ठसंबन्धिनीं वाचम् आबोध अभिवुद्ध्यस्व । इमा ब्रह्म इमानि ब्रह्माणि सधमादे यज्ञे जुषस्व सेवस्व । विपिपानस्य वि सम्यक् पिपानस्य पीतवतः पिबतो वा अद्रेः हवं शब्दं शृणु । तथा च निगमान्तरं "ग्रावभ्यो वाचं वदथ्यः" इति ।

अनेन टु क्षु शब्दे इत्यतः क्तिन् प्रत्ययः, निरुक्तत्वादुकारस्य इकारादेशः । क्षितिः स्तोत्रात्मको ग्रावजनितशब्दः, तस्य ईशः स्वामी, श्रोतेति यावत्, इति क्षितीश इति निरुक्तेः वाचमेमामित्यादिना सूचनात् **क्षितीशमूर्तिरत्र** ॥ ९९१ ॥

॥ ॐ पापनाशनाय नमः ॥

**अद्रेर्बोधा विप्रस्यार्चतो मनीषाम् । कृष्वा दुवांस्यन्तमा**
**सचेमा । न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिम् ॥ ९९२ ॥**

हे इन्द्र विप्रस्य प्राज्ञस्य वसिष्ठस्य अर्चतः स्तुवतः मनीषं स्तुतिं बोध बुद्ध्यस्व । इमा इमानि क्रियमाणानि दुवांसि परिचरणानि अन्तमा अन्तिकतमानि वुद्धिस्थानि सचा सह सहायभूतः सन् वा कृष्व कुरु । मदीयसेवां चित्ते कुर्विति यावत् । किञ्च तुरस्य शत्रूणां हिंसकस्य ते तव गिरः आज्ञारूपा वाचः, सुष्टुतिं शोभनां स्तुतिं च नापि मृष्ये, मृषिर्मार्जनकर्मा, न मार्जयामि, न पुनस्त्यजामीति यावत् ।

अनेन पा रक्षणे इत्यस्मात् पानीविषिभ्यः पः इति पप्रत्ययः । पाति रक्षति आत्मानमस्मादिति पापं स्तोत्रम् । अश्नोतेर्भावे ल्युट् । अशनं भक्षणं लोप इति यावत् । न अशनं नाशनम्, नसमासः ।

पापस्य स्तोत्रस्य नाशनं लोपाभावो यस्मिन् सः पापनाशन इति निरुक्तेः न ते गिरो अपि मृष्ये इत्यादिना सूचनात् पापनाशनमूर्तिरत्र ॥ ९९२ ॥

॥ ॐ शङ्खभृते नमः ॥

असुर्यस्य विद्वान्। सदा ते नाम स्वयशो विवक्मि। भूरि हि
ते सवना मानुषेषु भूरि मनीषी हवते त्वामित्॥ ९९३ ॥

न केवलमहं ते स्तुतिं न लुम्पामि किन्तु असुर्यस्य असुर्यं बलं विद्वान् अहं स्वयशः स्वयशसः, सु असाधारणं यशो यस्य तस्य, ते तव नाम नामधेयं च सदैव विवक्मि शिष्येभ्यो व्याख्यास्यामि। हे मघवन् इन्द्र ते तव सवना सवनानि भूरि भूरीणि मानुषेषु सन्ति। मनीषी स्तोता त्वामित् त्वामेव भूरि बहुशो हवते ह्वयति।

अनेन शम उपशमे इत्यस्मात् खप्रत्ययः। उपशमनहेतुत्वात् शङ्खं देवताह्वानम्, तद् बिभर्ति तद्विषयो भवतीति शङ्खभृदिति निरुक्तेः भूरि मनीषी हवते त्वामिदित्यनेन सूचनात् शङ्खभृन्मूर्तिरत्र ॥ ९९३ ॥

॥ ॐ नन्दकिने नमः ॥

मारे अस्मन् मघवन् ज्योक् कः।[१] योनिष्ट इन्द्र सदने
अकारि तमा नृभिः पुरुहूत प्र याहि॥ ९९४ ॥

हे इन्द्र अस्मद् अस्मत्तः आरे दूरे ज्योक् अलं मा कः मा कार्षीः। क्षिप्रमात्मानमस्मदासत्रं कुर्विति यावत्। हे पुरुहूत ते तव सदने सदनार्थं योनिः स्थानमकारि। किञ्च नृभिर्मरुद्भिः सार्धं तं योनिमा प्रयाहि।

अनेन टु नदि समृद्धाविति धातोः अधिकरणे अकारप्रत्ययः। पचाद्यच् नुमागमः। नन्दते अस्मिन्निति नन्दो देवसदनं, तत् करोतीति नन्दको यजमानः। सः पूजकोऽस्यास्तीति नन्दकीति निरुक्तेः मारे अस्मन्मघवन् ज्योक् कः इत्यनेन सूचनात् नन्दकिमूर्तिरत्र ॥ ९९४ ॥

---

१. ऋग्वेद ७-२४, मैत्रावरुणिर्वसिष्ठः। इदमन्तिमं सूक्तं शंस्यतया विहितम्। आदौ चतस्र ऋचः पठित्वा ततः षष्ठीं पठित्वा अन्तत एष स्तोम इति पञ्चमी पठ्यते।

॥ ॐ चक्रिणे नमः ॥

**असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः ।**
**गृभीतं ते मन इन्द्र द्विबर्हाः सुतः सोमः परिषिक्ता ॥ ९९५ ॥**

हे इन्द्र नो अस्माकं यथा अविता रक्षिता असः भवेः तथा नो अस्माकं वृधे वर्धनाय त्वम् असः । वसूनि ददो देहि । च सोमैरस्मदीयैः ममदः मादय च । द्विबर्हाः, षष्ठचर्थे प्रथमा, द्विबर्हसो द्वयोः सवनयोः परिवृढस्य पूज्यस्य ते तव मनः गृभीतं अस्माभिः परिगृहीतम्, सोमश्च सुतः अभिषुतः परिषिक्ता पात्रे स्थापितश्च ।

अनेन करोतेः कोवेति सूत्रेण कृञः कप्रत्ययः । क्रियत इति चक्रं वर्धनं, तदस्य दातव्यतयाऽस्तीति चक्रीति निरुक्तेः अविता वृधे अस इत्यनेन सूचनात् चक्रिमूर्तिरत्र ॥ ९९५ ॥

॥ ॐ शार्ङ्गधन्वने नमः ॥

**मधूनि । विसृष्टधेना भरते सुवृक्तिरियमिन्द्रं जोहुवती**
**मनीषा । आ नो दिव आ पृथिव्या ऋजीषिन् ॥ ९९६ ॥**

हे ऋजीषिन् दृढकाय इन्द्र विसृष्टधेना विसृष्टजिह्वा, मध्यमस्वरेणोच्चार्यमाणा सुवृक्तिः सम्यक् समाप्तिज्ञापिका इयमेतद् ऋग्रूपा मनीषा स्तुतिः मधूनि प्रति इन्द्रं जोहुवती भृशमाह्वयन्ती भरते संभ्रियते च । दिवः स्वर्गात् पृथिव्या अन्तरिक्षाच्च, आपः पृथिवीत्यन्तरिक्षनामसु पाठात्, न आयाहीति संवन्धः ।

अनेन शॄ हिंसायामित्यतो गण् , शकुनौ नुट् चेति सूत्रेण गण् प्रत्ययः णित्त्वाद् वृद्धिः नुडागमश्च । अनुस्वारस्य परसवर्णः । शीर्यते हिंस्यते समाप्यतेऽनेनेति शार्ङ्गः, तं स्तोत्रविशेषं समाप्तिद्योतकं धत्त इति शार्ङ्गधन्वेति निरुक्तेः सुवृक्तिरित्यनेन सूचनात् शार्ङ्गधन्वमूर्तिरत्र ॥९९६॥

॥ ॐ गदाधराय नमः ॥

**इदं वर्हिः सोमपेयाय याहि । वहन्तु त्वां हरयो**
**मद्रयञ्चमांगूषमच्छा तवसं मदाय ॥ ९९७ ॥**

हे इन्द्र इदं बर्हिः प्रति सोमपेयाय याहि। अपि च तवसं प्रवृद्धं बलवन्तं वा मद्रचञ्चं मदभिमुखं त्वा त्वां आङ्गूषं स्तोत्रम् अच्छ अभि मदाय मदार्थं हरयोऽश्वाः वहन्तु।

अनेन गद्यन्ते स्तूयन्ते इति गदा अश्वाः, तैरश्वैः आ समन्ताद् ध्रियते उह्यते इति गदाधर इति निरुक्तेः वहन्तु त्वा हरय इत्यनेन सूचनाद् **गदाधरमूर्तिरत्र** ॥ ९९७॥

॥ ॐ रथाङ्गपाणये नमः॥

**[१]आ नो विश्वाभिरूतिभिः सजोषा ब्रह्म जुषाणो हर्यश्व याहि।**
**वरीवृजत् स्थविरेभिः सुशिप्रास्मे दधद् वृषणं शुष्ममिन्द्र॥ ९९८॥**

हे हर्यश्व हरिनामाश्वयुक्त सुशिप्र सुन्दराकृते इन्द्र विश्वाभिरूतिभिः समस्ताभी रक्षाभिः सजोषाः संगतः जगद्रक्षणार्थं केवलोद्योगी स्थविरेभिः गुणवृद्धैर्मरुद्भिः सह वरीवृजत् शत्रून् हिंसन् अस्मे अस्मभ्यं वृषणं कामानां वर्षितारं शुष्मं बलवन्तं पुत्रं दधत् प्रयच्छन् ब्रह्म स्तोत्रं जुषाणः सेवमानोऽस्मान् आ याहि।

अनेन रमेः क्थन् प्रत्ययः, अगेरच्। रथं सुखं गमयतीति रथाङ्गः पुत्रादिः, तं पणयति ददातीति रथाङ्गपाणिः, पण व्यवहारे स्तुतौ चेत्यस्मात् असिपण्योरुगापुलुकौ चेति (?) सूत्रादिण् प्रत्ययः वृद्धिः, इति निरुक्तेः दधत् वृषणं शुष्ममिन्द्रेत्यनेन सूचनाद् **रथाङ्गपाणिमूर्तिरत्र** ॥ ९९८॥

॥ ॐ अक्षोभ्याय नमः॥

**एवा न इन्द्र वार्यस्य पूर्धि प्रते महीं सुमतिं**
**वेविदाम। इषं पिन्व मघवद्भ्यः सुवीराम्॥ ९९९॥**

हे इन्द्र नः अस्मान् एव एवं वार्यस्य, तृतीयार्थे षष्ठी, वरणीयेन चलनरहितेन धनेन पूर्धि पूरय। ते तव महीं महतीं सुमतिमचञ्चलामनुग्रहबुद्धिं वेविदाम भृशं लभेमहि। अनुग्रहपात्रा भवेम। मघवद्भ्यो हविष्मद्भ्यश्चास्मभ्यं सुवीरां शोभनपुत्रादियुतां इषमन्नं पिन्व प्रयच्छ।

---

१. अविहितेयं त्रिष्टुप्।

अनेन क्षुभ सञ्चलने इत्यस्माद् ऋहलोर्ण्यदिति ण्यत्प्रत्ययः । क्षुभ्यते चाल्यते इति क्षोभ्यं, न क्षोभ्यमक्षोभ्यं पुत्रधनादि, ततोऽर्शआदिभ्योऽच्, अक्षोभ्य इति निरुक्तेः एवा न इन्द्र वार्यस्येत्यनेन सूचनाद् **अक्षोभ्यमूर्तिरत्र** ॥ ९९९ ॥

**॥ ॐ सर्वप्रहरणायुधाय नमः ॥**

**यूयं पात स्वस्तिभिः सदा नः ।**[१]

**एष स्तोमो मह उग्राय वाहे धुरीवात्यो न वाजयन्नधायि ।**

**इन्द्र त्वायमर्क ईट्टे वसूनां दिवीव द्यामधि नः श्रोमतं धाः ॥ १००० ॥**

हे इन्द्र, गौरवाद् बहुरूपत्वाद्वा बहुवचनम् , यूयं त्वं स्वस्तिभिः सुखैः न; अस्मान् सदा पात पाहि रक्ष । महे महते उग्राय उद्गीर्णाय ओजस्विने वाहे विश्वस्य सर्वाभीष्टप्रदानादिना वोढ्रे इन्द्राय रथस्य धुरीव अत्यो न अश्व इव वाजयत् बलं कुर्वन् एष एतद्रूपः स्तोमः अस्माभिरधायि न्यधायि अकारि । अयमर्कः मदादिस्तोता त्वां वसूनि वासहेतुभूतानि आयुरादीनि ईट्टे याचते । स त्वं नः अस्मासु द्यां सूर्यं दिवीव श्रोमतं श्रवणीयमन्नादिसर्वाभीष्टं अधि धाः अधिदेहि । एवमेव सदा अस्मान् स्वस्तिभिः पाहीति संबन्धः ।

अनेन सर्वशब्द आवर्तनीयः । सर्वेभ्योऽसुरेभ्यो धनादिकमाहृत्य सर्वेभ्यो भक्तेभ्यः प्रकर्षेण दातुमाहरतीति सर्वप्रहरणः । अय पय गतावित्यस्मात् उण् प्रत्ययः । आयुशब्द उकारान्तोप्यस्ति । गम्यते प्राप्यते इत्यायुर्जीवनम् । दधातेः कः । आयुः आयुष्यं धत्त इत्यायुधः । सर्वप्रहरणश्चासावायुधश्चेति सर्वप्रहरणायुध इति निरुक्तेः यूयं पात स्वस्तिभिः सदा न इत्यनेन सूचनात् **सर्वप्रहणायुधमूर्तिरत्र** ॥ १००० ॥

**॥ इति श्री लक्ष्मीनारायणतीर्थपूज्यपादानां शिष्येण रघुनाथयतिना कृतायां तत्वसाराख्यायां कर्मनिर्णयटीकाभावविवृतौ बृहतीसहस्रपारावारे दशमः खण्डः सम्पूर्णः ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

---

१. अन्तिमेयं बृहती एष स्तोम इति समग्रां त्रिष्टुभं यूयं पातेति त्रैष्टुभं पादमप्यन्तर्भाव्य अत्यधिकाक्षरा वर्तते । श्री वेदेशतीर्थपाठक्रमे तु एष स्तोम महे उग्राय इत्येतावानंशः एकोनसहस्रतमायां बृहत्याम्, वाहे धुरीत्याद्युर्वरितांशोऽन्तिमायां बृहत्यामित्यशेषमतिमङ्गलम् ।

# श्रीभगवन्तरायविरचिता बृहतीसहस्रव्याख्या
# सुमुक्तामञ्जरी

॥ हरिः ॐ ॥

॥ श्रीमदानन्दतीर्थभगत्पादाचार्यगुरुचरणेभ्यो नमः ॥ ॥ श्री गुरुराजाय नमः ॥

विश्वानन्दचिदादिसद्गुणगणं विश्वोद्भवादिप्रदं ।
विश्वांभोजभवादिवन्दितपदं विश्वादिनानातनुम् ।
इन्द्राविष्टममन्दबोधभगवत्पादप्रियाधीश्वरं
वन्देऽहं कमलापतिं यदुपतिं नारायणं सर्वदा ॥१॥

सिन्धुमिमं स्वयमतरत् संसारसिन्धुं त्वतारयत् स्वान् यः ।
तमहं करुणासिन्धुं त्रितनुं मारुतं भजे भजद्बन्धुम् ॥२॥

महर्षिवर्यामलवाक्सहस्र प्रशंसनीयोरुगुणार्णवोऽलम् ।
सुधाप्रदायी भजतां बुधानां प्रसीदतां मे जयराट्सुरेशः ॥३॥

वेदेशतीर्थगुरुपादसरोजभाजं स्वस्वाश्रितामलधरासुरकल्पभूजम् ।
श्रीमत्सुधाजलधिगाहनमूलबीजं वन्दे सदा यदुपसद्गुरुराजराजम् ॥४॥

यत्पादाब्जरजोनुजोषमहिमा स्थानं सतां संसदि
प्रादान्मे यदुवीरपादजलरुड्गन्धानिलं चातुलम् ।
श्रीमद्यादववर्यकल्पतरुराट्शाखाफलत्वं गतः
स श्रीवेङ्कटकोलपादगुरुराट् स्याच्छ्रेयसे भूयसे ॥५॥

अथैतत्कारुण्यादमलतदिदासादितृहती -
सहस्रं संगृह्यारणयुगलखण्डानुसरणात् ।
सपंचत्रिंशत्कं दशशतमृचां सैकशतकं
कथञ्चिद्व्याख्यास्ये तदिदमनुमोदन्तु सुधियः। ॥ ६॥

यद्यपि नेदमधीतं व्याख्यातुर्मे तथापि नो दोषः।
पञ्चसु भागेष्वपि यत् सन्त्येवाधीतवेदवाक्यानि ॥ ७॥

असमर्पितमपि सर्वं तत्तद्भोज्यं मनीषिणो लोके ।
अर्पितमेव हि हरये जानन्तीषत्समर्पितस्पर्शात् ॥ ८ ॥

तदेतदुक्थशास्त्रापरपर्यायं बृहतीसहस्रं पञ्चविधं तृचाशीतिभ्यः प्रथमो भागः, तृचाशीतयो गायत्र्युष्णिग् बृहतीछन्दस्काः, तृचाशीतिभ्य उत्तरो भागश्चेति। यथोक्तं द्वितीयारणे - एवं ह्येताः पञ्चविधा अनुशस्यन्ते यत् प्राक् तृचाशीतिभ्यः सैकविधा तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमीति। एतेषु पञ्चसु भागेषु नारायणवासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्यानि पञ्च भगवद्रूपाणि क्रमेण स्थितानि। तत्प्रतिपाद्यानि च।

यथोक्तमैतरेयभाष्ये -

प्रथमे पञ्चकाद् भागे स्थितो नारायणः स्वयम्।
ऋक्त्रयाशीतिके पूर्वे गायत्रीछन्दआत्मके ॥
वासुदेवः स्थितो नित्यमृगशीतित्रये तथा।
द्वितीये बृहतीछन्दस्यसौ सङ्कर्षणः स्थितः ॥
यस्यावेशबलेनैव जीवः सङ्कर्षणोऽपरः।
पृथिवीं बिभर्ति सततं तत्प्रासदाप्तवैभवः ॥
तृतीयायां तृचाशीत्यामुष्णिक्छन्दसि केशवः ।
प्रद्युम्नरूपी सततं स्थितो यस्यैव सन्निधेः ॥
कामः प्रद्युम्ननामाभूत् तत्प्रसादाप्तवैभवः ।
उक्थस्यैवांत्यभागे तु सोऽनिरुद्धो हरिः स्थितः ॥ इत्यादि ॥

मत्स्यादिपञ्चरूपाणि चैतत्प्रतिपाद्यानि। तत्रायं क्रमः। मत्स्यपरशुरामौ प्रथमे भागे, कूर्मरामौ गायत्रतृचाशीत्याम्, वराहकृष्णौ बार्हततृचाशीत्याम्, नरसिंहबुद्धावौष्णिहतृचाशीत्याम्, वामनकल्किनावुत्तरभाग इति।

मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः ।
कृष्णबुद्धौ च कल्कीति रूपाणां दशकं हरेः ॥
पञ्चभेदविभिन्नेन ह्यृक्सहस्रेण शस्यते ।
रूपाणां पञ्चकं पूर्वमपरं पञ्चकं हरेः ॥ इत्यैतरेयभाष्यवचनात् ।

अत्र तदिदासेत्यारभ्य प्रथमपञ्चमारणगतखण्डसप्तकद्वयोक्तानुसारेण गणने सम्भूय पञ्चत्रिंशदुत्तरशताधिकसहस्रसंख्याका ऋचो भवन्ति । एताश्च ऋचो यद्यपि नानाछन्दस्काः । तथाप्येतेषामक्षरपरिगणने कम्पैः सन्धिगतस्वराक्षरैश्च सह षट्त्रिंशत्सहस्राक्षराणि भवन्ति । तत्र च षट्त्रिंशदक्षराणि सहस्रसम्मितानि पृथग् पृथग् विभज्यैकैकत्र बृहतीत्वमनुसन्धाय अस्य बृहतीसहस्रत्वं संपाद्यम् । यथोक्तं द्वितीयारणे - तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्तीति । एतादृशीनां च बृहतीनां विश्वादिसहस्र-भगवद्रूपाणि क्रमेण प्रतिपाद्यानि । यथोक्तमैतरेयभाष्ये -

विष्णोः सहस्रनाम्नस्तु यत् यद् रूपसहस्रकम् ।
बृहतीसहस्रमेतच्च तद् वक्ति हि पृथक्पृथक् ॥ इति ॥

विश्वादिसहस्रनामनिर्वचनपराश्चैता ऋचो ज्ञातव्याः । पृथक्पृथग् हि नामार्था ऋच एताःप्रकीर्तिताः इति चोक्तेः । किञ्चैता ऋचोऽमितानामपि भगवद्रूपाणां वाचिकाः ।

यथोक्तं तत्रैव -

सहस्रशब्दोप्यमितं यतो वक्त्यमितान्यतः ।
नामानि विष्णोरुच्यन्ते सहस्रमिति चाख्यया ॥
अनन्तनामवचने त्वशक्तत्वात् सहस्रकम् ।
नाम्नां पृथगिदं प्रोक्तमनन्ततनुवाचकम् ॥
विष्णोरनन्तरूपाणामुक्त्या पञ्चशतद्वये ।
आसीत् सहस्रमित्याख्या सहस्रं मुख्यतोऽमितम् ॥
बृहतीसहस्रमेतस्माद् रूपानन्त्याभिधायकम् । इत्यादि ।

अपि चात्र व्यञ्जनस्वराक्षरभेदेन द्वासप्ततिसहस्राक्षराणि भवन्ति। तत्र षट्त्रिंशत्सहस्रव्यञ्जनाक्षरेषु षट्त्रिंशत्रूपवान् विष्णुरेकैकं रूपं सहस्रधा व्यूह्य षट्त्रिंशत्सहस्ररूपवान् सन् प्रतिपाद्यतयाऽवा-स्थितः। एवं षट्त्रिंशत्सहस्रस्वराक्षरेष्वपि। एवं च द्वासप्ततिसहस्राणि च भगवद्रूपाणि बृहतीसहस्रवर्णवाच्यानि वाचकताशक्तिप्रदातृतया तत्र स्थितानि च। यथोक्तं तत्रैव-

षट्त्रिंशद्रूपवान् विष्णुर्व्यञ्जनेषु च संस्थितः।
तान्येव विष्णुरूपाणि रात्रीणामपि देवताः॥
एकैकं च सहस्रं तद् व्यञ्जनेषु च रात्रिषु।
रूपं विष्णोः स्थितं व्यूह्य षट्त्रिंशतिसहस्रधा॥
षट्त्रिंशतिसहस्राणि स्वरगानि हरेरपि।
तान्येवाह्नां दैवतानि रूपाणि परमात्मनः॥
द्वासप्ततिसहस्राणि रूपाण्येवं रमापतेः। इत्यादि।

किञ्चैतदृक्सहस्रेणाशीत्युत्तरसहस्रसंख्यानि भगवद्रूपाणि वाच्यानि।
यज्ञानां दिवसानां च साशीतिकसहस्रकैः।
विष्णुः प्रवर्तको रूपैर्बृहत्युक्थस्य चाञ्जसा।
बृहत्युक्थेन वाच्यानि रूपाण्येतान्यधीशितुः॥ इति तत्रैवोक्तेः॥

तत्र तदिदासेत्यारभ्य नद विहरणेन सह पञ्चाशदृग्जातमात्मेत्युच्यते। तदनन्तरशंसनीयमिन्द्रमिद् गाथिन इति दशर्ग्जातं शिर इति।एतस्याद्यन्तयोः शंसनीययोरारणोक्तयोर्ग्रीवाविजवयोरपि शिरस्येवान्तर्भावान्नाधिक्यम् (अङ्गानाम्)। तदनन्तरशंसनीयमेकोत्तरशतमृग्जातं दक्षिणपक्ष इति। तदनन्तरशंस्यं च द्व्यधिकशतमृग्जातमुत्तरपक्ष इति। तदानन्तर्यं च भजमानं द्वाविंशतिद्विपदाजातं पुच्छमिति।यद् वावानेत्यन्ते शंसनीयाया ऋचस्तु धाय्यारूपत्वात् सूददोहोवदवयवतया अविवक्षणा-न्नाधिक्यम्। यत्र चेदं बृहतीसहस्रं शंसनीयं भवति तस्मिन् यज्ञे श्येनाकारेष्टकामयी चितिः कर्तव्या भवति। तत्र च सुपर्णोऽधिष्ठाता।तस्य चात्मशिरआद्याः पञ्चावयवाः प्रसिध्दा एव। तस्मिंश्च भगवान् सुपर्णाकारेणैव नारायणादिपञ्चरूपात्मकपञ्चावयवःसन् संस्थितः । यथोक्तं तत्रैव- वासुदेवोस्य पुच्छं चेत्यारभ्य तथैकोऽपि हि पञ्चधेतिपर्यन्तम्। तथा च नारायणाद्यात्मकपञ्चावयवप्रतिपादकत्वा-देतेषां प्रथमभागीयपञ्चभागानामात्मा शिर इत्यादिपञ्चावयवसंज्ञेति ज्ञातव्यम्।

तदेतद्बृहतीसहस्रस्य मुख्यभिमानिनी महालक्ष्मीः । विश्वामित्रो महानृषिः ।तस्य मेत्रं मित्रं दक्षिणं तद् वैश्वामित्रमिति द्वितीयारणोक्तेः ।

यस्याभिमानिन्यन्नस्य लक्ष्मीः सा देवतोत्तमा ।
वैश्वामित्रं तदन्नं तु ऋक्सहस्रात्मकं मतम् ॥
विश्वामित्रेण दृष्टत्वाद् वैश्वामित्रं तदीर्यते ॥ इत्यादि तद्भाष्योक्तेश्च ।

अवान्तरास्तु ऋषयोऽनुक्रमणिकोक्तरीत्या तत्र तत्र प्रदर्श्यन्ते । यद्यपीन्द्रं विश्वा अवीवृधन्नित्य-ष्टर्चस्य सूक्तस्य 'अष्टावृचः पुनस्तेन दृष्टा अन्यत्रगास्तपः। कुर्वता' इत्यृग्भाष्योक्तस्य मधुच्छन्दसा दृष्टस्य 'इन्द्रमष्टौ जेता माधुच्छन्दसः' इत्यनुक्रमणिकायां मधुच्छन्दसः पुत्रो जेतृनामा ऋषिरित्युक्त-त्वात् तत्पक्षस्य च 'श्रुत्यभावादलिङ्गाच्च मुनिर्नान्यः प्रतीयते । श्रुतिलिङ्गान्यता यावत् तावत् पूर्वा प्रमा भवेत्' इत्यृग्भाष्ये दूषितत्वादनुक्रमणिकायामाश्वासो न कर्तुं शक्यः । तथाऽपि गत्यन्तराभावात् सैवाश्रीयते ।

अत्र सर्वत्र भगवान् मुख्या देवता । तदनन्तरं वायुश्च । तदुभयावेशवान् पुरन्दरोऽपि प्रायेण । अत्र क्वचित् क्वचिदिन्द्रान्यदेवताशब्दा अपि श्रूयन्ते । तत्रेन्द्रावराग्न्यादिवाचकशब्दानामिन्द्रे समन्वयस्य सुकरत्वेऽपि तदुत्तमगरुडादिवाचकतार्क्ष्यादिपदानामनवकाशात् तद्वाक्यं भगवन्नभस्वन्मात्रपरं ज्ञातव्यम् । गरुडादिपरं च । पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मता इत्यृग्भाष्योक्तेः। उक्तं चैतत् सविस्तरमैतरेयभाष्ये 'वृत्रं हत्वा पुरेन्द्रस्तु महेन्द्रत्वाभिपत्तये' इत्यादिना ।

तत्रेदं प्रथमं नवर्चं तदिदासेति सूक्तम् । अथर्वणः पुत्रो बृहद्दिवो नाम ऋषिः। त्रिष्टुप् छन्दः। तत्र प्रथमा तदिदासेति ।

हरिः ॐ ॥ तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो निरिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ १ ॥(८-७-१-१)

तदित् विष्ण्वाख्यं परं ब्रह्मैव भुवनेषु ज्येष्ठं सर्वोत्तममास अनाद्यनन्तकालमास्ते । विभक्ति-प्रतिरूपकमव्ययमेतत् । अस्तेर्भूरित्यस्य नित्यत्वेन बभूवेति भवितव्यत्वात् । आमन्तानुप्रयोगस्य विद्यमानत्वेन विभक्तिप्रतिरूपकत्वोपपत्तेः। यतो विष्णोस्त्वेषनृम्णः त्विष दीप्ताविति धातोस्त्वेषः

प्रकाशो ज्ञानं वा , स एव नृम्णं धनं बलं वा यस्यासौ तथोक्तः । नृम्णशब्दस्योभयनामसु पाठात् । उग्रः असुराणां पापानां वा तापकः सूर्यमण्डलान्तर्यामी वायुर्जज्ञे । तथा च वायुजनकत्वात् विष्णोः सर्वोत्तमत्वं युक्तमिति भावः। वायुजनकत्वेऽपि विष्णोस्सर्वोत्तमत्वं कुत इत्यत उग्रस्त्वेषनृम्ण इत्युक्तं वायुमाहात्म्यं क्रमेण पादद्वयेन विवृणोति सद्य इति । यो वायु : सूर्यमण्डले जज्ञानो व्यज्यमानस्सन् सद्यः शत्रूनसुरान् गायत्र्यादिमन्त्रजापकानां पापानि वा निरिणाति अपहन्ति । यं च सूर्यमण्डलस्थं वायुं विश्व ऊमाः समस्तानि भूतानि अनु अनुसृत्य मदन्ति हृष्यन्ति । समस्ता अपि प्राणिनः सूर्योदये जाते हर्षं प्राप्नुवन्ति सर्वेषां प्रकाशाद्यपेक्षत्वात् । तथा च श्रुतिः- ''तदिदास भुवनेषु ज्येष्ठमिति प्रतिपद्यत एतत् वाव भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्ण इति अतो ह्येष जात उग्रस्त्वेष नृम्णः । सद्यो जज्ञान निरिणाति शत्रूनिति सद्यो ह्येष जातःपाप्मानमपाहत । अनु यं विश्वे मदन्त्यूमा इति भूतानि वै विश्व ऊमास्त एनमनुमदन्त्युदगादुदगादिति''। इति । वायुपक्षे तु - तदित् वायुदैवतमेव भुवनेषु ज्येष्ठं सर्वजीवोत्तममास । कुतः । यतो वायुः सद्यो जज्ञानो हरेरुत्पद्यमान एव उग्रस्त्वेषनृम्णश्च सन् जज्ञे। यश्च शत्रून् निरिणाति। यं च विश्व ऊमा अनुमदन्ति, सर्वेषां च प्राणिनां मुख्यप्राणादेव हि जीवनादिसुखम् - इति योजना ।

अथवा त्वेषनृम्णः प्रकाशवलपूर्णो हनूमान् यतो जज्ञ अञ्जनायां जातः , यतश्च कुन्त्यां सद्यो जज्ञानो जातो भीमसेनः शत्रून् जरासन्धादीन् निरिणाति जघान यं च मध्वरूपं वायुं विश्व ऊमाः मोक्षयोग्याः सर्वे जीवा अनु अनुसृत्य तच्छास्त्रश्रवणादिकमनुष्ठाय मदन्ति मुक्तसुखिनो भवन्ति तदिद् वायुदैवतमेव भुवनेषु ज्येष्ठमासेति ।

इन्द्रपक्षे तु तदित् इन्द्रदैवतमेव भुवनेषु ज्येष्ठमास । कुतः । यतः कारणादसावुग्रस्त्वेषनृम्णः प्रकाशबलवांश्च सन्नेव जज्ञे। यतश्च सद्यो जज्ञानः शत्रून् निरिणाति यं च विश्व ऊमा अनुमदन्तीति।

प्रतिपाद्या गुणा भगवत्येव मुख्या अन्यत्र यथायोग्यमेवावगन्तव्याः ।। १ ।।

अथ द्वितीया वावृधान इति ।

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ।। २ ।।

शवसा बलेन सुखेन वा वावृधानोऽतिशयेन वर्धमानः सम्पूर्ण इति यावत्। संहितायां तूक्तार्थाधिक्यज्ञापनाय दैर्ध्यम्। संहितायां तु दैर्ध्यादिरुक्ताधिक्ये पदेन्यथेत्यृग्भाष्योक्तेः। भूर्योजाः पूर्णावष्टम्भनशक्तिमान् भगवान् दासाय दस्यवे, दसु उपक्षये,षष्ठ्यर्थे चतुर्थी, जगदुपक्षयकारक-स्यासुर-समुदायस्य शत्रुः। सर्वस्यापि भियसं भियं दधाति। भीषास्माद्वातः पवते इत्यादिश्रुतेः। एवं परोक्षमुक्त्वा साम्प्रतमपरोक्षतोपि वक्ति। हे भगवन् विशेषणाननात् चेष्टनाद् व्यनज्जङ्गममव्यनत् स्थावरम्, चशब्दावितरेतरसमुच्चये, तदुभयमपि ते तव सस्नि सुप्तमिव। सस्तेः स्वपितिकर्मणो निप्रत्ययः। सुप्तस्य यथा न स्वातन्त्र्यं तथा सर्वस्यापि जगतो न स्वातन्त्र्यं किन्तु भगवदधीनत्वमेवेति भावः। एवं तवैव सर्वोत्तमत्वाद् ब्रह्मादिभूतानि त्वामेव संनवन्त समस्तुवन् संस्तुवन्ति। णु स्तुतौ। तेन च ते प्रसादात् मदेषु स्वरूपानन्देषु प्रभृता प्रभृतानि, सुपो डादेशः, स्थापितानि। मौक्तानन्दानुभववन्ति भवन्तीति यावत्। तथा च श्रुतिः ''वावृधानः शवसा भूर्योजा इति एष वै वावृधानः शवसा भूर्योजा इति शत्रुर्दासाय भियसं दधाति अव्यनच्च व्यनच्च सस्नीति यच्च प्राणि यच्चाप्राणकमित्येव तदाह सं ते नवन्त प्रभृता मदेष्विति तव सर्वं वश इत्येव तदाह'' इति।

वायुपक्षे प्रसिद्धेन्द्रपक्षे च यथासंभवमेवमेव योज्यम्। एवमुत्तरत्रापि द्रष्टव्यम्। यत्र भगवत्परत्वे प्रदर्शितयोजनाया इतरत्रासंभवस्तत्र तत्परताक्रमः प्रदर्श्यते॥ २॥

अथ तृतीया त्वे क्रतुमिति।

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः।
स्वादोः स्वदीयः स्वादुना सृजा समदः सु मधु मधुनाभियोधीः॥ ३॥

हे भगवन् विश्वे ऊमाः सत्प्राणिनः त्वे त्वय्येव सुपां सुलुगिति शे इत्यादेशः क्रतुं स्ववर्णाश्रमोचितमनुष्ठितं कर्म, क्रतुः करणानि करांसीति कर्मनामसु पाठात्, अपिशब्देन स्वमनश्च वृञ्जन्ति समर्पयन्ति। यत् यतः कर्मादिसमर्पणेन एते ऊमाः द्विः द्वित्वेन दम्पतित्वेन विद्यमानाः त्रिः प्रजया सह त्रित्वोपेता भवन्ति, तस्मात्। अत्र जीवः पतिर्बुद्धिर्जाया भगवदपरोक्षज्ञानमेव प्रजेति ज्ञेयम्। यत एवं तस्मान्ममापि स्वादुना मिथुनेनात्मबुध्दिलक्षणेन स्वादोः स्वादीयः परमस्वादुभूतं ज्ञानं प्रजातुल्यं संसृज। अदश्च सुमधु जातमपरोक्षज्ञानं मधुना आत्मबुध्दिरूपमिथुनेन अभियोधीः संगमय, युध्यतीति गतिकर्मसु पाठात्, दृढं संयोजयेति यावत्।तथा च श्रुतिः ''त्वे क्रतुमपि वृञ्जन्ति विश्व इति प्रजामभियुध्यति'' इति।

प्रसिद्धेन्द्रे तु मिथुनप्रजादिकं प्रसिद्धमेव द्रष्टव्यम् ।

अत्र स्वादोः स्वादीय इत्यर्धर्चमुद्धृत्य तत्स्थाने अश्वायन्तो मघवन्निन्द्र वाजिनो गामश्वं रथ्यमिन्द्र संकिरेति पादद्वयं प्रत्यवधातव्यमिति केषांचित् पक्षः पञ्चमारणोक्तः । एतच्च पादद्वयं भिन्नस्थानीयम् द्वितीयस्तु चतुर्थाष्टकसप्तमाध्याय-सप्तविंशवर्गीयप्रगाथस्थः । एतौ च प्रगाथौ राथान्तर-बार्हतात्मकदक्षिणोत्तरपक्षयोः क्रमेण घटकौ । एतयोः प्रगाथयोस्तत्र शंसनसमये स्वादोः स्वादीय इत्येतावित उद्धृत्य क्रमात् तत्स्थाने शंसनीयौ । एतदप्युक्तमारणे । तथा चैतयोः पादयोरयमर्थः । हे मघवन्निन्द्र विष्णो वाजिनः वाजमन्नं तद्युक्ताः तथा अश्वयन्तोऽश्ववत् तव प्रियाचरणे रताः वयं त्वां हवाम इत्युत्तरेणान्वयः । हे इन्द्र परमेश्वर रथ्यं रथवहनयोग्यं गां वृषभमश्वं च संकिर यथेष्टं देहीति ॥ ३ ॥

..............................................................................

अथ योनिष्ट इन्द्र सदने अकारीति षड्चं त्रैष्टुभं सूक्तं शंसनीयम् । वसिष्ठ एव ऋषिः । वासिष्ठेन परिदधाति वसिष्ठो असानीति प्रथमारणोक्तेः । तत्राद्या योनिरिति ।

योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि ।
असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः ॥

हे इन्द्र पुरुहूत भगवन् सदने अस्मद्यज्ञगृहे ते तव योनिरावासस्थानम्, योनिः सद्म शरणमिति गृहनामसु पाठात्, अस्माभिरकारि । तं तां योनिं प्रति नृभिः स्वपार्षदैः सह आ प्रयाहि । यथा यतः कारणात् त्वं नोऽस्माकमविता रक्षकः असः असि तस्मादस्माकं वृधे वृद्ध्यै वसूनि चशब्दादन्यान्यभीष्टानि देहि । अस्मद्दत्तैः सोमैश्च ममदः मदं प्राप्नुहि ॥ ११३४ ॥

अत्र रिहितेत्यादि सदेत्यन्तमेका । अत्र शङ्खभृन्मूर्तिः । शं सुखं तत्प्रकाशकत्वात् शङ्खा यज्ञाः स्तोत्राणि च । खं प्रकाशस्वरूपत्वादिति वृहद्भाष्योक्तेः । शङ्खान् बिभर्ति ज्ञानिन एनमुद्दिश्येति शङ्खभृदिति । अथवा शं सुखं, खः प्रकाशमानः सन्, भक्तानामपरोक्षविषयो भूत्वेति यावत्, हरति आहरति ददातीति । हृग्रहोरिति भकारः ॥ ९९३ ॥

अथ ने अकारीत्यादि सोमैरित्यन्तमेका । अत्र नन्दकिमूर्तिः । नन्दकं सुखकरं यज्ञसदनान्तःस्थानम्, तदस्य निवासत्वेनास्तीति । नन्दयति भक्तान् वसुदानादिनेति नन्दः । कं सुखं सोमपानतः प्राप्तमस्यास्तीति की । नन्दश्चासौ की चेति ॥ ९९४ ॥

अथ द्वितीया गृभीतमिति ।

गृभीतं ते मन इन्द्र द्विबर्हाः सुतः सोमः परिषिक्ता मधूनि ।
विसृष्टधेना भरते सुवृक्तिरियमिन्द्रं जोहुवती मनीषा ॥

हे इन्द्र भगवान् यस्त्वं द्विबर्हाः द्वेधा अन्तर्बहिश्च बर्हाः बृहन् पूर्णः, द्वयोर्देवासुरवर्गयोर्बर्हाः प्रधान इति वा । बर्ह प्राधान्ये । तस्य ते मनोऽस्माभिर्गृभीतं गृहीतं, त्वत्प्रसादोऽस्माभिः सम्पादित इति यावत् । तत् कथम् । तत्सामाग्र्याः सम्पादितत्वादित्याह । सोमः सुतोऽभिषुतः । तत्र मधूनि च परिषिक्ता परिषिक्तानि संसिक्तानि । इयं सुवृक्तिः विषयवर्जनलक्षणशोभनवैराग्ययुता मनीषा अस्मद्बुद्धिश्च विसृष्टधेना विसृष्टाः प्रवर्तिताः धेना वेदवाचो यया सा तथोक्ता, मनसा वा अग्रे संकल्पयति अथ वाचा व्याहरतीति श्रुतेः, स्तुतिं प्रवर्तयती सती इन्द्रं त्वां जोहुवती भृशमाह्वयती भरते हरते सोमं तुभ्यमाहरति समर्पयतीति ॥ ११३५ ॥

अत्र गृभीतमित्यादि इयमिं इत्यन्तमेका । अत्र द्वितीया चक्रिमूर्तिः । चक तृप्ताविति धातोश्चक्रं तृप्तिर्भक्तेषु प्रसन्नता तद्वानिति । अथवा चक्रं सोममधुस्तुतिवचनादीनां समुदायः, सोऽस्यास्ति भक्तैः कृत इति ॥ ९९५ ॥

अथ तृतीया आ न इति ।

आ नो दिव आ पृथिव्या ऋजीषिन्निदं बर्हिः सोमपेयाय याहि ।
वहन्तु त्वा हरयो मद्र्यञ्चमाङ्गूषमच्छा तवसं मदाय ॥

हे ऋजीषिन् दार्ढ्यर्पित भगवन् नोऽस्माकमिदं बर्हिर्यज्ञं प्रति सोमपेयाय सोमलक्षणपेयार्थं, सोमपानायेति यावत्, दिवो द्युलोकादायाहि । पृथिव्या अन्तरिक्षाच्चयाहि । अन्तरिक्षमाकाशमापः पृथिवीति तन्नामसु पाठात् । हरयोऽश्वाः आङ्गूषमङ्ग प्रकाशकं मद्र्यञ्चं मदभिमुखं त्वा त्वामच्छा सम्यक् संवहन्तु । किमर्थम् । तव सकाशादस्माकं मदाय सुखप्राप्तये ॥ ११३६ ॥

अत्र द्रं जोहुवतीत्यादि हरेत्यन्तमेका । अत्र शार्ङ्गधन्वमूर्तिः । शं सुखसाधनं यज्ञं सोमं वा अरमलं द्रुतमिति यावत् गच्छत्यागच्छति धन्वनोऽन्तरिक्षादिति शार्ङ्गधन्वेति । धन्व अन्तरिक्षमिति तन्नामसु पाठात् । अत्र धन्वशब्दो दिवोऽप्युपलक्षणः ॥ ९९६ ॥

अथ चतुर्थी आन इति ।

आ नो विश्वाभिरूतिभिः सजोषा ब्रह्म जुषाणो हर्यश्व याहि ।
वरीवृजत् स्थविरेभिः सुशिप्राऽस्मे दधद् वृषणं शुष्ममिन्द्र ॥

हे हर्यश्व सुशिप्र इन्द्र भगवन् त्वं सजोषाः, जुषी प्रीतिसेवनयोः, भावे असुन्, तथा च जोषसा प्रीत्या सहितः सन् ब्रह्म अस्मत्स्तोत्रं जुषाणः सेवमानः सन् स्थविरेभिः स्थविरैर्गुणवृद्धैर्ब्रह्मादिभिः सह नोऽस्मान् प्रति विश्वाभिरूतिभिरभिप्रायैः सह, समस्ताभिप्रेतार्थान् दातुमिति यावत्, आयाहि । विश्वाभिरूतिभिरित्येतत् किञ्चिद् विवृणोति । वरीवृजन् अतिशयेन वृङ्क्ते शत्रूनिति तथोक्तं शत्रुहिंसकं वृषणं श्रेष्ठं शुष्मं बलमस्मे अस्मासु दधत् स्थापयानः सन्निति ॥ ११३७ ॥

अत्र यो मन्त्रश्चमित्यादि याहीत्यन्तमेका । अत्र गदाधरमूर्तिः । गच्छत्यागच्छति भक्तान् प्रति ददाति च कामान् आ सम्यग् धारयति भक्तकृतं स्तोत्रमिति । गश्चासौ दश्चासावाधरश्चेति व्युत्पत्तिः ॥ ९९७ ॥

अथ एवा न इति षष्ठी प्रथमतः शंसनीया । तदनन्तरमेष स्तोम इति पञ्चमी । तस्या एव परिधानीयात्वेनान्ते शंसनीयत्वात् । यथोक्तं पञ्चमारणे योनिष्ट इन्द्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसन्तत्योपोत्तमया परिधातीति । ततश्च एवा न इत्यैषात्र पञ्चमी सम्पन्ना ।

एवा न इन्द्र वार्यस्य पूर्धि प्र ते महीं सुमतिं वेविदाम ।
इषं पिन्व मघवद्भ्यः सुवीरां यूयं पात स्वस्तिभिः सदा नः ॥

हे इन्द्र भगवन् एवा एवमेकप्रकारेणैवेति यावत् वार्यस्य वार्यं वरणीयं वसु नोऽस्माकं पूर्धि पूरय । ते तव सुमतिं महीं महतीं प्र वेविदाम प्रकर्षेण भृशं विद्मः । तव मतिरतीव भक्ताभीष्टपूरणैकलालसेति वयं जानीम इति यावत् । प्र पूर्धि प्र पूरयेति वान्वयः । मघवद्भ्यो यजमानेभ्यः सुवीरां शोभनवीरपुत्रयुक्तां सुवीर्ययुक्तां वा इषमन्नमैश्वर्यं वा पिन्व सिञ्च, पिविमिवि सेचने देहि । यूयं पातेति प्राग्वत् ॥ ११३८ ॥

अत्र वरीत्यादि महींसु इत्यन्तमेका । अत्र रथाङ्गपाणिमूर्तिः । रथो रति : । रमेर्भावे क्थः ।

तस्याङ्गं साधनं वलधनादिकं तत् पाणौ भक्तेभ्यो दातव्यतया यस्येति। भक्तेभ्यो वलादिदातेत्यर्थः ॥ ९९८ ॥

अथ बृहतीसहस्रान्तिमा परिधानीयारूपा षष्ठी सम्पन्ना एष स्तोम इति।

एष स्तोमो मह उग्राय वाहे धुरीवात्यो न वाजयन्नधायि।
इन्द्र त्वायमर्क ईट्टे वसूनां दिवीव द्यामधि नः श्रोमतं धाः ॥

हे इन्द्र परमेश्वर महे महते उग्राय दुष्टानां क्रूराय वाहे जगद्वाहकाय तुभ्यं धुरीव सेनाया अग्रे तत्पश्चाच्च। इव शब्दस्य स्वान्वितपदवाच्यप्रतियोगिपरत्वात्। इवोभये च सादृश्य इति शब्दनिर्णयोक्तेः। वाजयन् युद्धं कुर्वाणः अत्यो न अश्व इव, अश्वनामसु पाठात्, एष स्तोमोऽधायि स्थापितः समर्पितः। अयमर्कः उक्थरूप ऋक्समुदायोपि त्वा त्वां प्रत्यधायि। योऽर्को वसूनामीट्टे ईष्टे। स्तोतॄणां बहुवसुलाभहेतुरिति यावत्। यथा राज्ञि प्रयाति सति तत्पुरतः पश्चाच्चाश्वसमूहः प्रस्थाप्यते एवमेष स्तोमोऽर्कश्च तवाग्रे पश्चाच्चास्माभिः समर्पित इति यावत्। एवमस्माभिः स्तोमेनोक्थेन च स्तुतस्त्वं नोऽस्मासु श्रोमतं श्रवणीयं विद्याजातं द्यां दिवीव दिवि आकाशे सूर्यमिव अधि धाः अधिधारय। यथा दिवि सूर्यं प्रकाशयसे एवमस्मासु ज्ञानं प्रकाशयेत्यर्थः। इत्यशेषमतिमङ्गलम् ॥ ११३९ ॥

अत्र मतिमित्यादि उग्रायेत्यन्तमेका। अत्राक्षोभ्यमूर्तिः। अक्षामक्षयं यदुभयं अन्नं वीरपुत्रश्चेति, अन्नं वीर्यं चेति वा, तद् यस्मात् स इति। भस्यान्तलोपः। न क्षोभं यापयति किन्तु स्वस्तिभिः सदा भक्तान् पातीति वा। क्षोभरहितानि मङ्गलानि यापयतीति वा। अक्षोभ्यो वाच्य; स्तोमः सोऽस्यास्ति स्तुतिरूपतयेति वा। अर्श आद्यच् ॥ ९९९॥

अथ वाह इत्यादि श्रोमतं धा इत्यन्तमेका। अत्र कम्पेन सह षड्त्रिंशत्त्वम्। अत्र सर्वप्रहरणायुधमूर्तिः। सर्वप्रहरणे सर्वानिष्टनिवारणे सर्वेषामभीष्टानां वसुविद्यादीनां च प्रकर्षेण हरणे आहरणे वा आयुधे स्तोमार्कलक्षणे यस्येति तथोक्त इत्यशेषमतिमङ्गलम् ॥ १०००॥

नारायणादिपश्चात्मा मत्स्यादिदशरूपवान्।
विश्वादिमसहस्रात्मा प्रीयतां मे परः प्रभुः ॥ १ ॥

इन्द्रः कञ्चुकवन्मरुन्मुकुटवद् बन्दीद्रवत् कौशिको
यस्यासीद् बृहतीसहस्रममलं गाथा परस्य प्रभोः।
सोयं कोलपदार्यचित्तविलसन्माणिक्यसन्मण्टप-
स्वासीनः कमलाभुजान्तरगतः प्रीतोस्तु सर्वेश्वरः ॥ २ ॥
नागाधिराट्तनूजेन गुरुपादावलम्बिना।
कृता भगवता प्रीत्यै सुमुक्तामञ्जरी हरेः ॥ ३ ॥
सुमुक्तामञ्जरी सेयं हृदये लसतु प्रभोः।
सन्त एतां समालोक्य मोदमायान्तु सन्ततम् ॥ ४ ॥
इति श्रीकोलार्याभिधगुरुपादाम्भोजरतिना
कृतायां टीकायां दशशतबृहत्या भगवता।
सुमुक्तामञ्जर्यामभजदनिरुद्धात्मभगवत् -
परोद्य पांचम्यं दधदवसितिं भाग इह हि ॥ ५ ॥

॥ इति श्री भास्करीवेङ्कटवराहार्यपूज्यपादशिष्येण भगवता विरचितायां सूमुक्तामञ्जर्यां पञ्चमो भागः समाप्तः ॥

॥ श्री कृष्णार्पणमस्तु ॥

अत्र ऋचः पञ्चत्रिंशदधिकैकादशशतान्येव। किन्तु राथान्तरबार्हतपक्षस्थानां चतुर्णां प्रगाथानां चतस्रः सतीः पङ् बृहतीकरोतीत्युभयत्रापि पठितत्वाद् बृहतीकरणे द्वादशऋचां जातत्वेनैकोनचत्वारिंश-दधिकैकादशशतऋचो भवन्ति।

एतासामक्षरपरिगणने षट्त्रिंशत्सहस्राक्षराणां पञ्चषष्टिरक्षराणि न्यूनानि भवन्ति। तथाप्यत्र कम्पाः द्विपञ्चाशत् सन्ति। तत्र षट्चत्वारिंशत् कम्पास्तावदक्षरस्थानीयाः। षट् कम्पास्तु द्वादशाक्षर-स्थानीयाः। तथा च कम्पैरष्टपञ्चादशदक्षरलाभः। अथ सन्धिगतस्वारक्षराणां सप्तानां शंसनसमये पृथक् श्रवणात् सप्ताक्षरलाभः। ततश्च पञ्चषष्टिन्यूनाक्षरपूरणात् षट्त्रिंशत्सहस्राक्षरसंपत्त्या बृहतीसहस्रं सम्पद्यते। एतत्प्रभेदस्तु क्रमात् तत्र तत्र प्रदर्शित एव।

हे सन्तः करुणामृताम्बुनिधयो निर्मत्सरा स्वोत्तमा
मूर्ध्नाऽऽनम्य भवत्पदाब्जनिवहान् याचे निबद्धाञ्जलिः ।
ग्रन्थेस्मिन् बहवः प्रमादनिचयाः सन्त्येव नानाविधाः
तानुत्सार्य विलोक्य निर्मलधिया मोदं परं प्राप्स्यथ ॥

॥ श्री कृष्णार्पणमस्तु ॥

# श्रीपांग्री आचार्यव्याख्यानानुसारिबृहतीसहस्रपाठः

(अयं पाठक्रमः श्रीवेदेशतीर्थकृतत्वेनाभिमतः)

ॐ तदिदास भुवनेषु ज्येष्टयं ु नदं व ओदतीनाम्।
यतो जज्ञे उग्रस्त्वेषनृम्णो रु नदं योयुवतीनोम् ॥ १ ॥

सद्यो जज्ञे निरिणाति शत्रून् पतिं वो अघ्न्यानामनु।
यं विश्वे मदन्त्यूमाः षो धेनूनामिषुध्यसि तदिदोम् ॥ २ ॥

दास भुवनेषु ज्येष्ठं पु नदं व ओदतीनां यतः।
जज्ञ उग्रस्त्वेषनृम्णो रु नदं योयुवतीनां सद्योम् ॥ ३ ॥

जज्ञानो निरिणाति शत्रून् पतिं वो अघ्न्यानामनु यम्।
विश्वे मदन्त्यूमाः षो धेनूमिषुध्यसि तदिदासोम् ॥ ४ ॥

भुवनेषु ज्येष्ठं पु नदं व ओदतीनां यतो जज्ञे।
उग्रस्त्वेषनृम्णो रु नदं योयुवतीनां सद्यो जज्ञोम् ॥ ५ ॥

नो निरिणाति शत्रून् पतिं वो अघ्न्यानामनु यं विश्वे।
मदन्त्यूमाःषो धेनूनामिषुध्यसि वावृधानः शवोम् ॥ ६ ॥

सा भूर्योजा नदं व ओदतीनां शत्रुर्दासाय भिय।
सं दधाति नदं योयुवतीनामव्यनच्च व्यनच्चोम् ॥ ७ ॥

सस्नि पतिं वो अघ्न्यानां सं ते नवन्त प्रभृता मदे।
षु धेनूनामिषुध्यसि त्वे क्रतुमपि वृञ्जन्ति विश्वोम् ॥ ८ ॥

नदं व ओदतीनां द्विर्यदिते त्रिर्भवन्त्यूमा नदम्।
यो युवतीनां स्वादोः स्वादीयः स्वादुना सृजासं पतोम् ॥ ९ ॥

वो अघ्न्यानामदः सु मधु मधुनाभि योधीर्धेनूनाम्।
इषुध्यसि इति चिध्दित्वा धना जयन्त नदं व ओम् ॥ १० ॥

........................................।

.................................... ॥

ब्रह्म सधमादे जुषस्व श्रुधी हवं विपिपानस्य।
अद्रेर्बोधा विप्रस्यार्चतो मनीषां कृष्वा दुवांस्यन्तमोम् ॥ ९९१ ॥

सचेमानते गिरो अपि मृष्ये तुरस्य न सुष्टुतिम्।
असुर्यस्य विद्वान् सदा ते नाम स्वयशो विवक्मि भोम् ॥ ९९२ ॥

(भू)रि हिते सवना मानुषेषु भूरि मनीषी हवते।
त्वामित् मारे अस्मन्मधवन् ज्योक् कः योनिष्ट इन्द्र सदोम्॥९९३॥

(सदः) ने अकारि तमा नृभिः पुरुहूत प्रयाहि असो य।
थानोऽविता वृधे च ददो वसूनि मदश्च सोम् ॥ ९९४ ॥

गृभीतं ते मन इन्द्र द्विबर्हाःसुतः सोमः परिषि।
क्ता मधूनि विसृष्ट धेना भरते सुवृक्तिरियोम् ॥ ९९५ ॥

(इं)द्रं जोहुवती मनीषा आनो दिव आ पृथिव्या ऋजी।
षिन् इदं वर्हिः सोमपेयाय याहि वहन्तु त्वाहरोम् ॥ ९९६ ॥

(हर)यो मद्रचंचं माङ्गूषमच्छा तव सं मदाय आनोवि-
श्वाभिरूतिभिः सजोषा ब्रह्म जुषाणो हर्यश्व याहोम् ॥ ९९७ ॥

वरीवृजत्स्थविरेभिः सुशिप्रास्मे दधद्वृषणं शु-
ष्ममिन्द्र एवा न इन्द्र वार्यस्य पूर्धिप्रते महीं सोम् ॥ ९९८ ॥

मतिं वेविदाम इषं पिन्व मघवद्भ्यः सुवीरां यू-
यं पात स्वस्तिभिःसदा नः। एष स्तोमो मह उग्रायोम् ॥ ९९९ ॥

वाहे धुरीवात्यो न वाजयन्नधायि इन्द्र त्वायम-
र्क ईट्टे वसुनां दिवीव द्यामधि नः श्रोमतं धोम् ॥ १००० ॥

श्रीरघुनाथतीर्थश्रीमच्चरणानां सम्मतः

# विष्णुसहस्रनामस्तोत्रपाठः

ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद् भूतभृद् भावो भूतात्मा भूतभावनः ॥ १ ॥

पूतात्मा परमात्मा च मुक्तानां परमागतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ २ ॥

योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुःश्रीमान् केशवः पुरुषोत्तमः ॥ ३ ॥

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥

स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ ५ ॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुद्धामा पवित्रं मङ्गलं परम् ॥ ७ ॥

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ ९ ॥

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ १० ॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥ ११ ॥

वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२ ॥

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥ १३ ॥

सर्वगः सर्वविद् भानुर्विश्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः ॥ १४ ॥

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतिः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ १६ ॥

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ॥ १७ ॥

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८ ॥

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृत् ॥ १९ ॥

महेश्वासो महीभर्ता श्रीनिवासः सतांगतिः ।
अनिरुद्धः सदानन्दो गोविन्दो गोविदांपतिः ॥ २० ॥

मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ २१ ॥

अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ २२ ॥

गुरुर्गुरुतमो धामा सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ २३ ॥

अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ २४ ॥
आवर्तनो निवृत्तात्मा संवृतः सम्प्रत(म)र्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥ २५ ॥
सुप्रसादः प्रसन्नात्मा विश्वधृग् विश्वभृग् विभुः ।
सत्कर्ता सत्कृतिः साधुर्जह्नुर्नारायणो नरः ॥ २६ ॥
असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥ २७ ॥
वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ २८ ॥
सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो वृहद्रूपः शिपिविष्टः प्रकाशनः ॥ २९ ॥
ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाजरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ३० ॥
अमृतांशूद्भवो भानुः शशिबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ३१ ॥
भूतभव्यभवन्नाथः पवनः पावनोऽनिलः ।
कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः ॥ ३२ ॥
युगादिकृद् युगावर्तोऽनेकमायो महाशनः ।
अदृश्योऽव्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ३३ ॥
इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत् कर्ता विश्वबाहुर्महीधरः ॥ ३४ ॥
अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥

स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो वृहद्भानुरादिदेवः पुरन्दरः ॥ ३६ ॥
अशोकस्तरणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ३७ ॥
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ३८ ॥
अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षिण्यो लक्ष्मीवान् समितिञ्जयः ॥ ३९ ॥
विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ४० ॥
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ४१ ॥
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमः स्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ४२ ॥
रामो विरामो विरजो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ४३ ॥
वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ४४ ॥
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ४५ ॥
विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ४६ ॥
अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ४७ ॥

यज्ञइज्यो महेज्यश्च क्रतुः सत्रं सतांगतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ४८ ॥

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुहृदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ४९ ॥

स्वापनः स्ववशो व्यापी नैकात्माऽनेककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ५० ॥

धर्मगुव् धर्मकृद् धर्मी सदसत्क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ५१ ॥

गभस्तिनेमिः सत्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद् गुरुः ॥ ५२ ॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरी भूतकृद् भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ५३ ॥

सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः ।
विनियोज्यः सत्यसन्धो दाशार्हः सात्वतांपतिः ॥ ५४ ॥

जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ५५ ॥

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ५६ ॥

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदास्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ५७ ॥

महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ५८ ॥

वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ५९ ॥

भगवान् भगहाऽऽनन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ६० ॥

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिवःस्पृक् सर्वदृग् व्यासो वाचस्पतिरयोनिजः ॥ ६१ ॥

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणः ॥ ६२ ॥

शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ६३ ॥

अनिवृत्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः ॥ ६४ ॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमान् लोकत्रयाश्रयः ॥ ६५ ॥

स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६ ॥

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ६७ ॥

अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ६८ ॥

कालनेमिनिहा वीरः शूरः सूरिजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ६९ ॥

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ७० ॥

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद् ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥

महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ७२ ॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ७३ ॥
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ७४ ॥
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ७५ ॥
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ७६ ॥
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ७७ ॥
एकोऽनेकः सवः कः किं यत् तत् पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ७८ ॥
सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ७९ ॥
अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृत् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ८० ॥
तेजोवृषो द्युतिधरः सर्वशस्त्रभृतांवरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ८१ ॥
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२ ॥
समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ८३ ॥

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ८४ ॥

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥ ८५ ॥

सुवर्णविन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ८६ ॥

कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः ।
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ ८७ ॥

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोऽदुम्बरोऽश्वत्थश्चाणूरान्धनिषूदनः ॥ ८८ ॥

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥ ८९ ॥

अणुर्बृहत् कृशस्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्य्यः प्राग्वंशो वंशवर्धनः ॥ ९० ॥

भारभृत् कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ ९१ ॥

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥ ९२ ॥

सत्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हप्रियकृत् प्रीतिवर्धनः ॥ ९३ ॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग् विभुः ।
रविर्विलोचनः सूर्यः सविता रविलोचनः ॥ ९४ ॥

अनन्तो हुतभुग् भोक्ता सुखदोऽनेकदोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ ९५ ॥

सनात्सनातनतमः कपिलः कपिरव्ययः ।
स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥ ९६ ॥

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ९७ ॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ९८ ॥

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ९९ ॥

अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ १०० ॥

अनादिर्भूर्भुवर्लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ १०१ ॥

आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १०२ ॥

प्रमाणं प्राणनिलयः प्राणदः प्राणजीवनः ।
तत्त्वं तत्वविदेकात्मा जन्ममृत्युजरातिगः ॥ १०३ ॥

भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ १०४ ॥

यज्ञकृद्यज्ञभृद्यज्ञी यज्ञभुग् यज्ञसाधनः ।
यज्ञान्तकृद् यज्ञगुह्यमन्नमन्नाद एव च ॥ १०५ ॥

आत्मायोनिः स्वयञ्जातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ १०६ ॥

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १०७ ॥

*॥ सर्वप्रहरणायुध ॐ नम इति ॥*

# अथ श्री विष्णुसहस्रनामावलिः

१. ॐ विश्वाय नमः ॐ
२. ॐ विष्णवे नमः ॐ
३. ॐ वषट्काराय नमः ॐ
४. ॐ भूतभव्यभवत्प्रभवे नमः ॐ
५. ॐ भूतकृते नमः ॐ
६. ॐ भूतभृते नमः ॐ
७. ॐ भावाय नमः ॐ
८. ॐ भूतात्मने नमः ॐ
९. ॐ भूतभावनाय नमः ॐ
१०. ॐ पूतात्मने नमः ॐ
११. ॐ परमात्मने नमः ॐ
१२. ॐ मुक्तानां परमागतये नमः ॐ
१३. ॐ अव्ययाय नमः ॐ
१४. ॐ पुरुषाय नमः ॐ
१५. ॐ साक्षिणे नमः ॐ
१६. ॐ क्षेत्रज्ञाय नमः ॐ
१७. ॐ अक्षराय नमः ॐ
१८. ॐ योगाय नमः ॐ
१९. ॐ योगविदां नेत्रे नमः ॐ
२०. ॐ प्रधानपुरुषेश्वराय नमः ॐ
२१. ॐ नारसिंहवपुषे नमः ॐ
२२. ॐ श्रीमते नमः ॐ
२३. ॐ केशवाय नमः ॐ
२४. ॐ पुरुषोत्तमाय नमः ॐ
२५. ॐ सर्वाय नमः ॐ
२६. ॐ शर्वाय नमः ॐ
२७. ॐ शिवाय नमः ॐ
२८. ॐ स्थाणवे नमः ॐ
२९. ॐ भूतादये नमः ॐ
३०. ॐ निधये नमः ॐ
३१. ॐ अव्ययाय नमः ॐ
३२. ॐ संभवाय नमः ॐ
३३. ॐ भावनाय नमः ॐ
३४. ॐ भर्त्रे नमः ॐ
३५. ॐ प्रभवाय नमः ॐ
३६. ॐ प्रभवे नमः ॐ
३७. ॐ ईश्वराय नमः ॐ
३८. ॐ स्वयंभुवे नमः ॐ
३९. ॐ शम्भवे नमः ॐ
४०. ॐ आदित्याय नमः ॐ
४१. ॐ पुष्कराक्षाय नमः ॐ
४२. ॐ महास्वनाय नमः ॐ
४३. ॐ अनादिनिधनाय नमः ॐ
४४. ॐ धात्रे नमः ॐ
४५. ॐ विधात्रे नमः ॐ
४६. ॐ धातुरुत्तमाय नमः ॐ
४७. ॐ अप्रमेयाय नमः ॐ
४८. ॐ हृषीकेशाय नमः ॐ
४९. ॐ पद्मनाभाय नमः ॐ
५०. ॐ अमरप्रभवे नमः ॐ

५१. ॐ विश्वकर्मणे नमः ॐ
५२. ॐ मनवे नमः ॐ
५३. ॐ त्वष्ट्रे नमः ॐ
५४. ॐ स्थविष्ठाय नमः ॐ
५५. ॐ स्थविराय नमः ॐ
५६. ॐ ध्रुवाय नमः ॐ
५७. ॐ अग्राह्याय नमः ॐ
५८. ॐ शाश्वताय नमः ॐ
५९. ॐ कृष्णाय नमः ॐ
६०. ॐ लोहिताक्षाय नमः ॐ
६१. ॐ प्रतर्दनाय नमः ॐ
६२. ॐ प्रभूताय नमः ॐ
६३. ॐ त्रिककुद्धाम्ने नमः ॐ
६४. ॐ पवित्राय नमः ॐ
६५. ॐ मङ्गलाय नमः ॐ
६६. ॐ पराय नमः ॐ
६७. ॐ ईशानाय नमः ॐ
६८. ॐ प्राणदाय नमः ॐ
६९. ॐ प्राणाय नमः ॐ
७०. ॐ ज्येष्ठाय नमः ॐ
७१. ॐ श्रेष्ठाय नमः ॐ
७२. ॐ प्रजापतये नमः ॐ
७३. ॐ हिरण्यगर्भाय नमः ॐ
७४. ॐ भूगर्भाय नमः ॐ
७५. ॐ माधवाय नमः ॐ
७६. ॐ मधुसूदनाय नमः ॐ
७७. ॐ ईश्वराय नमः ॐ
७८. ॐ विक्रमिणे नमः ॐ
७९. ॐ धन्विने नमः ॐ
८०. ॐ मेधाविने नमः ॐ
८१. ॐ विक्रमाय नमः ॐ
८२. ॐ क्रमाय नमः ॐ
८३. ॐ अनुत्तमाय नमः ॐ
८४. ॐ दुराधर्षाय नमः ॐ
८५. ॐ कृतज्ञाय नमः ॐ
८६. ॐ कृतये नमः ॐ
८७. ॐ आत्मवते नमः ॐ
८८. ॐ सुरेशाय नमः ॐ
८९. ॐ शरणाय नमः ॐ
९०. ॐ शर्मणे नमः ॐ
९१. ॐ विश्वरेतसे नमः ॐ
९२. ॐ प्रजाभवाय नमः ॐ
९३. ॐ अह्ने नमः ॐ
९४. ॐ संवत्सराय नमः ॐ
९५. ॐ व्यालाय नमः ॐ
९६. ॐ प्रत्ययाय नमः ॐ
९७. ॐ सर्वदर्शनाय नमः ॐ
९८. ॐ अजाय नमः ॐ
९९. ॐ सर्वेश्वराय नमः ॐ
१००. ॐ सिद्धाय नमः ॐ
१०१. ॐ सिद्धये नमः ॐ
१०२. ॐ सर्वादये नमः ॐ
१०३. ॐ अच्युताय नमः ॐ
१०४. ॐ वृषाकपये नमः ॐ

१०५. ॐ अमेयात्मने नमः ॐ
१०६. ॐ सर्वयोगविनिःसृताय नमः ॐ
१०७. ॐ वसवे नमः ॐ
१०८. ॐ वसुमनसे नमः ॐ
१०९. ॐ सत्याय नमः ॐ
११०. ॐ समात्मने नमः ॐ
१११. ॐ सम्मिताय नमः ॐ
११२. ॐ समाय नमः ॐ
११३. ॐ अमोघाय नमः ॐ
११४. ॐ पुण्डरीकाक्षाय नमः ॐ
११५. ॐ वृषकर्मणे नमः ॐ
११६. ॐ वृषाकृतये नमः ॐ
११७. ॐ रुद्राय नमः ॐ
११८. ॐ बहुशिरसे नमः ॐ
११९. ॐ बभ्रवे नमः ॐ
१२०. ॐ विश्वयोनये नमः ॐ
१२१. ॐ शुचिश्रवसे नमः ॐ
१२२. ॐ अमृताय नमः ॐ
१२३. ॐ शाश्वताय नमः ॐ
१२४. ॐ स्थाणवे नमः ॐ
१२५. ॐ वरारोहाय नमः ॐ
१२६. ॐ महातपसे नमः ॐ
१२७. ॐ सर्वगाय नमः ॐ
१२८. ॐ सर्वविदे नमः ॐ
१२९. ॐ भानवे नमः ॐ
१३०. ॐ विष्वक्सेनाय नमः ॐ
१३१. ॐ जनार्दनाय नमः ॐ
१३२. ॐ वेदाय नमः ॐ
१३३. ॐ वेदविदे नमः ॐ
१३४. ॐ अव्यङ्गाय नमः ॐ
१३५. ॐ वेदाङ्गाय नमः ॐ
१३६. ॐ वेदविदे नमः ॐ
१३७. ॐ कवये नमः ॐ
१३८. ॐ लोकाध्यक्षाय नमः ॐ
१३९. ॐ सुराध्यक्षाय नमः ॐ
१४०. ॐ धर्माध्यक्षाय नमः ॐ
१४१. ॐ कृताकृतये नमः ॐ
१४२. ॐ चतुरात्मने नमः ॐ
१४३. ॐ चतुर्व्यूहाय नमः ॐ
१४४. ॐ चतुर्दंष्ट्राय नमः ॐ
१४५. ॐ चतुर्भुजाय नमः ॐ
१४६. ॐ भ्राजिष्णवे नमः ॐ
१४७. ॐ भोजनाय नमः ॐ
१४८. ॐ भोक्त्रे नमः ॐ
१४९. ॐ सहिष्णवे नमः ॐ
१५०. ॐ जगादादिजाय नमः ॐ
१५१. ॐ अनघाय नमः ॐ
१५२. ॐ विजयाय नमः ॐ
१५३. ॐ जेत्रे नमः ॐ
१५४. ॐ विश्वयोनये नमः ॐ
१५५. ॐ पुनर्वसवे नमः ॐ
१५६. ॐ उपेन्द्राय नमः ॐ
१५७. ॐ वामनाय नमः ॐ
१५८. ॐ प्रांशवे नमः ॐ

१५९. ॐ अमोघाय नमः ॐ
१६०. ॐ शुचये नमः ॐ
१६१. ॐ ऊर्जिताय नमः ॐ
१६२. ॐ अतीन्द्राय नमः ॐ
१६३. ॐ संग्रहाय नमः ॐ
१६४. ॐ सर्गाय नमः ॐ
१६५. ॐ धृतात्मने नमः ॐ
१६६. ॐ नियमाय नमः ॐ
१६७. ॐ यमाय नमः ॐ
१६८. ॐ वेद्याय नमः ॐ
१६९. ॐ वैद्याय नमः ॐ
१७०. ॐ सदायोगिने नमः ॐ
१७१. ॐ वीरघ्ने नमः ॐ
१७२. ॐ माधवाय नमः ॐ
१७३. ॐ मधवे नमः ॐ
१७४. ॐ अतीन्द्रियाय नमः ॐ
१७५. ॐ महामायाय नमः ॐ
१७६. ॐ महोत्साहाय नमः ॐ
१७७. ॐ महाबलाय नमः ॐ
१७८. ॐ महाबुद्धये नमः ॐ
१७९. ॐ महावीर्याय नमः ॐ
१८०. ॐ महाशक्तये नमः ॐ
१८१. ॐ महाद्युतये नमः ॐ
१८२. ॐ अनिर्देश्यवपुषे नमः ॐ
१८३. ॐ श्रीमते नमः ॐ
१८४. ॐ अमेयात्मने नमः ॐ
१८५. ॐ महाद्रिधृते नमः ॐ
१८६. ॐ महेष्वासाय नमः ॐ
१८७. ॐ महीभर्त्रे नमः ॐ
१८८. ॐ श्रीनिवासाय नमः ॐ
१८९. ॐ सतांगतये नमः ॐ
१९०. ॐ अनिरुद्धाय नमः ॐ
१९१. ॐ सदानन्दाय नमः ॐ
१९२. ॐ गोविन्दाय नमः ॐ
१९३. ॐ गोविदां पतये नमः ॐ
१९४. ॐ मरीचये नमः ॐ
१९५. ॐ दमनाय नमः ॐ
१९६. ॐ हंसाय नमः ॐ
१९७. ॐ सुपर्णाय नमः ॐ
१९८. ॐ भुजगोत्तमाय नमः ॐ
१९९. ॐ हिरण्यनाभाय नमः ॐ
२००. ॐ सुतपसे नमः ॐ
२०१. ॐ पद्मनाभाय नमः ॐ
२०२. ॐ प्रजापतये नमः ॐ
२०३. ॐ अमृत्यवे नमः ॐ
२०४. ॐ सर्वदृशे नमः ॐ
२०५. ॐ सिंहाय नमः ॐ
२०६. ॐ सन्धात्रे नमः ॐ
२०७. ॐ सन्धिमते नमः ॐ
२०८. ॐ स्थिराय नमः ॐ
२०९. ॐ अजाय नमः ॐ
२१०. ॐ दुर्मर्षणाय नमः ॐ
२११. ॐ शास्त्रे नमः ॐ
२१२. ॐ विश्रुतात्मने नमः ॐ

२१३. ॐ सुरारिघ्ने नमः ॐ
२१४. ॐ गुरवे नमः ॐ
२१५. ॐ गुरुतमाय नमः ॐ
२१६. ॐ धाम्ने नमः ॐ
२१७. ॐ सत्याय नमः ॐ
२१८. ॐ सत्यपराक्रमाय नमः ॐ
२१९. ॐ निमिषाय नमः ॐ
२२०. ॐ अनिमिषाय नमः ॐ
२२१. ॐ स्रग्विणे नमः ॐ
२२२. ॐ वाचस्पतये नमः ॐ
२२३. ॐ उदारधिये नमः ॐ
२२४. ॐ अग्रण्यै नमः ॐ
२२५. ॐ ग्रामण्यै नमः ॐ
२२६. ॐ श्रीमते नमः ॐ
२२७. ॐ न्यायाय नमः ॐ
२२८. ॐ नेत्रे नमः ॐ
२२९. ॐ समीरणाय नमः ॐ
२३०. ॐ सहस्रमूर्ध्ने नमः ॐ
२३१. ॐ विश्वात्मने नमः ॐ
२३२. ॐ सहस्राक्षाय नमः ॐ
२३३. ॐ सहस्रदे नमः ॐ
२३४. ॐ आवर्तनाय नमः ॐ
२३५. ॐ निवृत्तात्मने नमः ॐ
२३६. ॐ संवृताय नमः ॐ
२३७. ॐ सम्प्रत(म)र्दनाय नमः ॐ
२३८. ॐ अहःसंवर्तकाय नमः ॐ
२३९. ॐ वह्नये नमः ॐ
२४०. ॐ अनिलाय नमः ॐ
२४१. ॐ धरणीधराय नमः ॐ
२४२. ॐ सुप्रसादाय नमः ॐ
२४३. ॐ प्रसन्नात्मने नमः ॐ
२४४. ॐ विश्वधृशे नमः ॐ
२४५. ॐ विश्वभुजे नमः ॐ
२४६. ॐ विभवे नमः ॐ
२४७. ॐ सत्कर्त्रे नमः ॐ
२४८. ॐ सत्कृतये नमः ॐ
२४९. ॐ साधवे नमः ॐ
२५०. ॐ जह्नवे नमः ॐ
२५१. ॐ नारायणाय नमः ॐ
२५२. ॐ नराय नमः ॐ
२५३. ॐ असंख्येयाय नमः ॐ
२५४. ॐ अप्रमेयात्मने नमः ॐ
२५५. ॐ विशिष्टाय नमः ॐ
२५६. ॐ शिष्टकृते नमः ॐ
१५७. ॐ शुचये नमः ॐ
२५८. ॐ सिद्धार्थाय नमः ॐ
२५९. ॐ सिद्धसंकल्पाय नमः ॐ
२६०. ॐ सिद्धिदाय नमः ॐ
२६१. ॐ सिद्धिसाधनाय नमः ॐ
२६२. ॐ वृषाहिणे नमः ॐ
२६३. ॐ वृषभाय नमः ॐ
२६४. ॐ विष्णवे नमः ॐ
२६५. ॐ वृषपर्वणे नमः ॐ
२६६. ॐ वृषोदराय नमः ॐ

२६७. ॐ वर्धनाय नमः ॐ
२६८. ॐ वर्धमानाय नमः ॐ
२६९. ॐ विविक्ताय नमः ॐ
२७०. ॐ श्रुतिसागराय नमः ॐ
२७१. ॐ सुभुजाय नमः ॐ
२७२. ॐ दुर्धराय नमः ॐ
२७३. ॐ वाग्मिने नमः ॐ
२७४. ॐ महेन्द्राय नमः ॐ
२७५. ॐ वसुदाय नमः ॐ
२७६. ॐ वसवे नमः ॐ
२७७. ॐ नैकरूपाय नमः ॐ
२७८. ॐ बृहद्रूपाय नमः ॐ
२७९. ॐ शिपिविष्टाय नमः ॐ
२८०. ॐ प्रकाशनाय नमः ॐ
२८१. ॐ ओजस्तेजोद्युतिधराय नमः ॐ
२८२. ॐ प्रकाशात्मने नमः ॐ
२८३. ॐ प्रतापनाय नमः ॐ
२८४. ॐ रुद्धाय नमः ॐ
२८५. ॐ स्पष्टाजराय नमः ॐ
२८६. ॐ मन्त्राय नमः ॐ
२८७. ॐ चन्द्रांशवे नमः ॐ
२८८. ॐ भास्करद्युतये नमः ॐ
२८९. ॐ अमृतांशूद्भवाय नमः ॐ
२९०. ॐ भानवे नमः ॐ
२९१. ॐ शशिबिन्दवे नमः ॐ
२९२. ॐ सुरेश्वराय नमः ॐ
२९३. ॐ औपधाय नमः ॐ
२९४. ॐ जगतः सेतवे नमः ॐ
२९५. ॐ सत्यधर्मपराक्रमाय नमः ॐ
२९६. ॐ भूतभव्यभवन्नाथाय नमः ॐ
२९७. ॐ पवनाय नमः ॐ
२९८. ॐ पावनाय नमः ॐ
२९९. ॐ अनिलाय नमः ॐ
३००. ॐ कामघ्ने नमः ॐ
३०१. ॐ कामकृते नमः ॐ
३०२. ॐ कान्ताय नमः ॐ
३०३. ॐ कामाय नमः ॐ
३०४. ॐ कामप्रदाय नमः ॐ
३०५. ॐ प्रभवे नमः ॐ
३०६. ॐ युगादिकृते नमः ॐ
३०७. ॐ युगावर्ताय नमः ॐ
३०८. ॐ अनेकमायाय नमः ॐ
३०९. ॐ महाशनाय नमः ॐ
३१०. ॐ अदृश्याय नमः ॐ
३११. ॐ अव्यक्तरूपाय नमः ॐ
३१२. ॐ सहस्रजिते नमः ॐ
३१३. ॐ अनन्तजिते नमः ॐ
३१४. ॐ इष्टाय नमः ॐ
३१५. ॐ विशिष्टाय नमः ॐ
३१६. ॐ शिष्टेष्टाय नमः ॐ
३१७. ॐ शिखण्डिने नमः ॐ
३१८. ॐ नहुषाय नमः ॐ
३१९. ॐ वृषाय नमः ॐ
३२०. ॐ क्रोधघ्ने नमः ॐ

३२१. ॐ क्रोधकृते नमः ॐ
३२२. ॐ कर्त्रे नमः ॐ
३२३. ॐ विश्वबाहवे नमः ॐ
३२४. ॐ महीधराय नमः ॐ
३२५. ॐ अच्युताय नमः ॐ
३२६. ॐ प्रथिताय नमः ॐ
३२७. ॐ प्राणाय नमः ॐ
३२८. ॐ प्राणदाय नमः ॐ
३२९. ॐ वासवानुजाय नमः ॐ
३३०. ॐ अपांनिधये नमः ॐ
३३१. ॐ अधिष्ठानाय नमः ॐ
३३२. ॐ अप्रमत्ताय नमः ॐ
३३३. ॐ प्रतिष्ठिताय नमः ॐ
३३४. ॐ स्कन्दाय नमः ॐ
३३५. ॐ स्कन्दधराय नमः ॐ
३३६. ॐ धुर्याय नमः ॐ
३३७. ॐ वरदाय नमः ॐ
३३८. ॐ वायुवाहनाय नमः ॐ
३३९. ॐ वासुदेवाय नमः ॐ
३४०. ॐ बृहद्भानवे नमः ॐ
३४१. ॐ आदिदेवाय नमः ॐ
३४२. ॐ पुरन्दराय नमः ॐ
३४३. ॐ अशोकाय नमः ॐ
३४४. ॐ तारणाय नमः ॐ
३४५. ॐ ताराय नमः ॐ
३४६. ॐ शूराय नमः ॐ
३४७. ॐ शौरये नमः ॐ
३४८. ॐ जनेश्वराय नमः ॐ
३४९. ॐ अनुकूलाय नमः ॐ
३५०. ॐ शतावर्ताय नमः ॐ
३५१. ॐ पद्मिने नमः ॐ
३५२. ॐ पद्मनिभेक्षणाय नमः ॐ
३५३. ॐ पद्मनाभाय नमः ॐ
३५४. ॐ अरविन्दाक्षाय नमः ॐ
३५५. ॐ पद्मगर्भाय नमः ॐ
३५६. ॐ शरीरभृते नमः ॐ
३५७. ॐ महर्द्धये नमः ॐ
३५८. ॐ ऋद्धाय नमः ॐ
३५९. ॐ वृद्धात्मने नमः ॐ
३६०. ॐ महाक्षाय नमः ॐ
३६१. ॐ गरुडध्वजाय नमः ॐ
३६२. ॐ अतुलाय नमः ॐ
३६३. ॐ शरभाय नमः ॐ
३६४. ॐ भीमाय नमः ॐ
३६५. ॐ समयज्ञाय नमः ॐ
३६६. ॐ हविर्हरये नमः ॐ
३६७. ॐ सर्वलक्षणलक्षिण्याय नमः ॐ
३६८. ॐ लक्ष्मीवते नमः ॐ
३६९. ॐ समितिञ्जयाय नमः ॐ
३७०. ॐ विक्षराय नमः ॐ
३७१. ॐ रोहिताय नमः ॐ
३७२. ॐ मार्गाय नमः ॐ
३७३. ॐ हेतवे नमः ॐ
३७४. ॐ दामोदराय नमः ॐ

३७५. ॐ सहाय नमः ॐ
३७६. ॐ महीधराय नमः ॐ
३७७. ॐ महाभागाय नमः ॐ
३७८. ॐ वेगवते नमः ॐ
३७९. ॐ अमिताशनाय नमः ॐ
३८०. उद्भवक्षोभणाय नमः ॐ
३८१. ॐ देवाय नमः ॐ
३८२. ॐ श्रीगर्भाय नमः ॐ
३८३. ॐ परमेश्वराय नमः ॐ
३८४. ॐ करणाय नमः ॐ
३८५. ॐ कारणाय नमः ॐ
३८६. ॐ कर्त्रे नमः ॐ
३८७. ॐ विकर्त्रे नमः ॐ
३८८. ॐ गहनाय नमः ॐ
३८९. ॐ गुहाय नमः ॐ
३९०. ॐ व्यवसायाय नमः ॐ
३९१. ॐ व्यवस्थानाय नमः ॐ
३९२. ॐ संस्थानाय नमः ॐ
३९३. ॐ स्थानदाय नमः ॐ
३९४. ॐ ध्रुवाय नमः ॐ
३९५. ॐ परर्द्धये नमः ॐ
३९६. ॐ परमाय नमः ॐ
३९७. ॐ स्पष्टाय नमः ॐ
३९८. ॐ तुष्टाय नमः ॐ
३९९. ॐ पुष्टाय नमः ॐ
४००. ॐ शुभेक्षणाय नमः ॐ
४०१. ॐ रामाय नमः ॐ
४०२. ॐ विरामाय नमः ॐ
४०३. ॐ विरजाय नमः ॐ
४०४. ॐ मार्गाय नमः ॐ
४०५. ॐ नेयाय नमः ॐ
४०६. ॐ नयाय नमः ॐ
४०७. ॐ अनयाय नमः ॐ
४०८. ॐ वीराय नमः ॐ
४०९. ॐ शक्तिमतां श्रेष्ठाय नमः ॐ
४१०. ॐ धर्माय नमः ॐ
४११. ॐ धर्मविदे नमः ॐ
४१२. ॐ उत्तमाय नमः ॐ
४२३. ॐ वैकुण्ठाय नमः ॐ
४१४. ॐ पुरुषाय नमः ॐ
४१५. ॐ प्राणाय नमः ॐ
४१६. ॐ प्राणदाय नमः ॐ
४१७. ॐ प्रणवाय नमः ॐ
४१८. ॐ पृथवे नमः ॐ
४१९. ॐ हिरण्यगर्भाय नमः ॐ
४२०. ॐ शत्रुघ्नाय नमः ॐ
४२१. ॐ व्याप्ताय नमः ॐ
४२२. ॐ वायवे नमः ॐ
४२३. ॐ अधोक्षजाय नमः ॐ
४२४. ॐ ऋतवे नमः ॐ
४२५. ॐ सुदर्शनाय नमः ॐ
४२६. ॐ कालाय नमः ॐ
४२७. ॐ परमेष्ठिने नमः ॐ
४२८. ॐ परिग्रहाय नमः ॐ

४२९. ॐ उग्राय नमः ॐ
४३०. ॐ संवत्सराय नमः ॐ
४३१. ॐ दक्षाय नमः ॐ
४३२. ॐ विश्रामाय नमः ॐ
४३३. ॐ विश्वदक्षिणाय नमः ॐ
४३४. ॐ विस्ताराय नमः ॐ
४३५. ॐ स्थावराय नमः ॐ
४३६. ॐ स्थाणवे नमः ॐ
४३७. ॐ प्रमाणाय नमः ॐ
४३८. ॐ बीजाय नमः ॐ
४३९. ॐ अव्ययाय नमः ॐ
४४०. ॐ अर्थाय नमः ॐ
४४१. ॐ अनर्थाय नमः ॐ
४४२. ॐ महाकोशाय नमः ॐ
४४३. ॐ महाभोगाय नमः ॐ
४४४. ॐ महाधनाय नमः ॐ
४४५. ॐ अनिर्विण्णाय नमः ॐ
४४६. ॐ स्थविष्ठाय नमः ॐ
४४७. ॐ भुवे नमः ॐ
४४८. ॐ धर्मयूपाय नमः ॐ
४४९. ॐ महामखाय नमः ॐ
४५०. ॐ नक्षत्रनेमये नमः ॐ
४५१. ॐ नक्षत्रिणे नमः ॐ
४५२. ॐ क्षमाय नमः ॐ
४५३. ॐ क्षामाय नमः ॐ
४५४. ॐ समीहनाय नमः ॐ
४५५. ॐ यज्ञइज्याय नमः ॐ
४५६. ॐ महेज्याय नमः ॐ
४५७. ॐ क्रतवे नमः ॐ
४५८. ॐ सत्राय नमः ॐ
४५९. ॐ सतां गतये नमः ॐ
४६०. ॐ सर्वदर्शिने नमः ॐ
४६१. ॐ विमुक्तात्मने नमः ॐ
४६२. ॐ सर्वज्ञाय नमः ॐ
४६३. ॐ ज्ञानाय नमः ॐ
४६४. ॐ उत्तमाय नमः ॐ
४६५. ॐ सुव्रताय नमः ॐ
४६६. ॐ सुमुखाय नमः ॐ
४६७. ॐ सूक्ष्माय नमः ॐ
४६८. ॐ सुघोषाय नमः ॐ
४६९. ॐ सुहृदाय नमः ॐ
४७०. ॐ सुहृते नमः ॐ
४७१. ॐ मनोहराय नमः ॐ
४७२. ॐ जितक्रोधाय नमः ॐ
४७३. ॐ वीरबाहवे नमः ॐ
४७४. ॐ विदारणाय नमः ॐ
४७५. ॐ स्वापनाय नमः ॐ
४७६. ॐ स्ववशाय नमः ॐ
४७७. ॐ व्यापिने नमः ॐ
४७८. ॐ नैकात्मने नमः ॐ
४७९. ॐ अनेककर्मकृते नमः ॐ
४८०. ॐ वत्सराय नमः ॐ
४८१. ॐ वत्सलाय नमः ॐ
४८२. ॐ वत्सिने नमः ॐ

४८३. ॐ रत्नगर्भाय नमः ॐ
४८४. ॐ धनेश्वराय नमः ॐ
४८५. ॐ धर्मकृते नमः ॐ
४८६. ॐ धर्मगुपे नमः ॐ
४८७. ॐ धर्मिणे नमः ॐ
४८८. ॐ सदसत्क्षराय नमः ॐ
४८९. ॐ अक्षराय नमः ॐ
४९०. ॐ अविज्ञात्रे नमः ॐ
४९१. ॐ सहस्रांशवे नमः ॐ
४९२. ॐ विधात्रे नमः ॐ
४९३. ॐ कृतलक्षणाय नमः ॐ
४९४. ॐ गभस्तिनेमये नमः ॐ
४९५. ॐ सत्वस्थाय नमः ॐ
४९६. ॐ सिंहाय नमः ॐ
४९७. ॐ भूतमहेश्वराय नमः ॐ
४९८. ॐ आदिदेवाय नमः ॐ
४९९. ॐ महादेवाय नमः ॐ
५००. ॐ देवेशाय नमः ॐ
५०१. ॐ देवभृते नमः ॐ
५०२. ॐ गुरवे नमः ॐ
५०३. ॐ उत्तमाय नमः ॐ
५०४. ॐ गोपतये नमः ॐ
५०५. ॐ गोप्त्रे नमः ॐ
५०६. ॐ ज्ञानगम्याय नमः ॐ
५०७. ॐ पुरातनाय नमः ॐ
५०८. ॐ शरीरिणे नमः ॐ
५०९. ॐ भूतकृते नमः ॐ
(५०९. ॐ भूतभृते नमः ॐ)
५१०. ॐ भोक्त्रे नमः ॐ
५११. ॐ कपीन्द्राय नमः ॐ
५१२. ॐ भूरिदक्षिणाय नमः ॐ
५१३. ॐ सोमपाय नमः ॐ
५१४. ॐ अमृतपाय नमः ॐ
५१५. ॐ सोमाय नमः ॐ
५१६. ॐ पुरुजिते नमः ॐ
५१७. ॐ पुरुसत्तमाय नमः ॐ
५१८. ॐ विनियोज्याय नमः ॐ
५१९. ॐ सत्यसन्धाय नमः ॐ
५२०. ॐ दाशार्हाय नमः ॐ
५२१. ॐ सात्वतां पतये नमः ॐ
५२२. ॐ जीवाय नमः ॐ
५२३. ॐ विनयित्रे नमः ॐ
५२४. ॐ साक्षिणे नमः ॐ
५२५. ॐ मुकुन्दाय नमः ॐ
५२६. ॐ अमितविक्रमाय नमः ॐ
५२७. ॐ अम्भोनिधये नमः ॐ
५२८. ॐ अनन्तात्मने नमः ॐ
५२९. ॐ महोदधिशयाय नमः ॐ
५३०. ॐ अन्तकाय नमः ॐ
५३१. ॐ अजाय नमः ॐ
५३२. ॐ महार्हाय नमः ॐ
५३३. ॐ स्वाभाव्याय नमः ॐ
५३४. ॐ जितामित्राय नमः ॐ
५३५. ॐ प्रमोदनाय नमः ॐ

५३६. ॐ आनन्दाय नमः ॐ
५३७. ॐ नन्दनाय नमः ॐ
५३८. ॐ नन्दाय नमः ॐ
५३९. ॐ सत्यधर्माय नमः ॐ
५४०. ॐ त्रिविक्रमाय नमः ॐ
५४१. ॐ महर्षये नमः ॐ
५४२. ॐ कपिलाचार्याय नमः ॐ
५४३. ॐ कृतज्ञाय नमः ॐ
५४४. ॐ मेद्निनीपतये नमः ॐ
५४५. ॐ त्रिपदाय नमः ॐ
५४६. ॐ त्रिदशाध्यक्षाय नमः ॐ
५४७. ॐ महाशृङ्गाय नमः ॐ
५४८. ॐ कृतान्तकृते नमः ॐ
५४९. ॐ महावराहाय नमः ॐ
५५०. ॐ गोविन्दाय नमः ॐ
५५१. ॐ सुषेणाय नमः ॐ
५५२. ॐ कनकाङ्गदिने नमः ॐ
५५३. ॐ गुह्याय नमः ॐ
५५४. ॐ गभीराय नमः ॐ
५५५. ॐ गहनाय नमः ॐ
५५६. ॐ गुप्ताय नमः ॐ
५५७. ॐ चक्रगदाधराय नमः ॐ
५५८. ॐ वेधसे नमः ॐ
५५९. ॐ स्वाङ्गाय नमः ॐ
५६०. ॐ अजिताय नमः ॐ
५६१. ॐ कृष्णाय नमः ॐ
५६२. ॐ दृढाय नमः ॐ
५६३. ॐ सङ्कर्षणाय नमः ॐ
५६४. ॐ अच्युताय नमः ॐ
५६५. ॐ वरुणाय नमः ॐ
५६६. ॐ वारुणाय नमः ॐ
५६७. ॐ वृक्षाय नमः ॐ
५६८. ॐ पुष्कराक्षाय नमः ॐ
५६९. ॐ महामनसे नमः ॐ
५७०. ॐ भगवते नमः ॐ
५७१. ॐ भगघ्ने नमः ॐ
५७२. ॐ नन्दिने नमः ॐ
५७३. ॐ वनमालिने नमः ॐ
५७४. ॐ हलायुधाय नमः ॐ
५७५. ॐ आदित्याय नमः ॐ
५७६. ॐ ज्योतिरादित्याय नमः ॐ
५७७. ॐ सहिष्णवे नमः ॐ
५७८. ॐ गतिसत्तमाय नमः ॐ
५७९. ॐ सुधन्वने नमः ॐ
५८०. ॐ खण्डपरशवे नमः ॐ
५८१. ॐ दारुणाय नमः ॐ
५८२. ॐ द्रविणप्रदाय नमः ॐ
५८३. ॐ दिवःस्पृशे नमः ॐ
५८४. ॐ सर्वदृशे नमः ॐ
५८५. ॐ व्यासाय नमः ॐ
५८६. ॐ वाचस्पतये नमः ॐ
५८७. ॐ अयोनिजाय नमः ॐ
५८८. ॐ त्रिसाम्ने नमः ॐ
५८९. ॐ सामगाय नमः ॐ

५९०. ॐ साम्ने नमः ॐ
५९१. ॐ निर्वाणाय नमः ॐ
५९२. ॐ भेषजाय नमः ॐ
५९३. ॐ भिषजे नमः ॐ
५९४. ॐ संन्यासकृच्छ्रमाय नमः ॐ
५९५. ॐ शान्ताय नमः ॐ
५९६. ॐ निष्ठायै नमः ॐ
५९७. ॐ शान्त्यै नमः ॐ
५९८. ॐ परायणाय नमः ॐ
५९९. ॐ शुभङ्गाय नमः ॐ
६००. ॐ शान्तिदाय नमः ॐ
६०१. ॐ स्रष्ट्रे नमः ॐ
६०२. ॐ कुमुदाय नमः ॐ
६०३. ॐ कुवलेशयाय नमः ॐ
६०४. ॐ गोहिताय नमः ॐ
६०५. ॐ गोपतये नमः ॐ
६०६. ॐ गोप्त्रे नमः ॐ
६०७. ॐ वृषभाक्षाय नमः ॐ
६०८. ॐ वृषप्रियाय नमः ॐ
६०९. ॐ अनिवृत्तिने नमः ॐ
६१०. ॐ निवृत्तात्मने नमः ॐ
६११. ॐ संक्षेप्त्रे नमः ॐ
६१२. ॐ क्षेमकृते नमः ॐ
६१३. ॐ शिवाय नमः ॐ
६१४. ॐ श्रीवत्सवक्षसे नमः ॐ
६१५. ॐ श्रीनिवासाय नमः ॐ
६१६. ॐ श्रीपतये नमः ॐ
६१७. ॐ श्रीमतां वराय नमः ॐ
६१८. ॐ श्रीदाय नमः ॐ
६१९. ॐ श्रीशाय नमः ॐ
६२०. ॐ श्रीनिवासाय नमः ॐ
६२१. ॐ श्रीनिधये नमः ॐ
६२२. ॐ श्रीविभावनाय नमः ॐ
६२३. ॐ श्रीधराय नमः ॐ
६२४. ॐ श्रीकराय नमः ॐ
६२५. ॐ श्रेयसे नमः ॐ
६२६. ॐ श्रीमते नमः ॐ
६२७. ॐ लोकत्रयाश्रयाय नमः ॐ
६२८. ॐ स्वक्षाय नमः ॐ
६२९. ॐ स्वङ्गाय नमः ॐ
६३०. ॐ शतानन्दाय नमः ॐ
६३१. ॐ नन्दये नमः ॐ
६३२. ॐ ज्योतिर्गणेश्वराय नमः ॐ
६३३. ॐ विजितात्मने नमः ॐ
६३४. ॐ विधेयात्मने नमः ॐ
६३५. ॐ सत्कीर्तये नमः ॐ
६३६. ॐ छिन्नसंशयाय नमः ॐ
६३७. ॐ उदीर्णाय नमः ॐ
६३८. ॐ सर्वतश्चक्षुषे नमः ॐ
६३९. ॐ अनीशाय नमः ॐ
६४०. ॐ शाश्वताय नमः ॐ
६४१. ॐ स्थिराय नमः ॐ
६४२. ॐ भूशयाय नमः ॐ
६४३. ॐ भूषणाय नमः ॐ

६४४. ॐ भूतये नमः ॐ
६४५. ॐ विशोकाय नमः ॐ
६४६. ॐ शोकनाशनाय नमः ॐ
६४७. ॐ अर्चिष्मते नमः ॐ
६४८. ॐ अर्चिताय नमः ॐ
६४९. ॐ कुम्भाय नमः ॐ
६५०. ॐ विशुद्धात्मने नमः ॐ
६५१. ॐ विशोधनाय नमः ॐ
६५२. ॐ अनिरुद्धाय नमः ॐ
६५३. ॐ अप्रतिरथाय नमः ॐ
६५४. ॐ प्रद्युम्नाय नमः ॐ
६५५. ॐ अमितविक्रमाय नमः ॐ
६५६. ॐ कालनेमिनिघ्ने नमः ॐ
६५७. ॐ वीराय नमः ॐ
६५८. ॐ शूराय नमः ॐ
६५९. ॐ सूरिजनेश्वराय नमः ॐ
६६०. ॐ त्रिलोकात्मने नमः ॐ
६६१. ॐ त्रिलोकेशाय नमः ॐ
६६२. ॐ केशवाय नमः ॐ
६६३. ॐ केशिघ्ने नमः ॐ
६६४. ॐ हरये नमः ॐ
६६५. ॐ कामदेवाय नमः ॐ
६६६. ॐ कामपालाय नमः ॐ
६६७. ॐ कामिने नमः ॐ
६६८. ॐ कान्ताय नमः ॐ
६६९. ॐ कृतागमाय नमः ॐ
६७०. ॐ अनिर्देश्यवपुषे नमः ॐ
६७१. ॐ विष्णवे नमः ॐ
६७२. ॐ वीराय नमः ॐ
६७३. ॐ अनन्ताय नमः ॐ
६७४. ॐ धनञ्जयाय नमः ॐ
६७५. ॐ ब्रह्मण्याय नमः ॐ
६७६. ॐ ब्रह्मकृद्ब्रह्मणे नमः ॐ
६७७. ॐ ब्रह्मणे नमः ॐ
६७८. ॐ ब्रह्मविवर्धनाय नमः ॐ
६७९. ॐ ब्रह्मविदे नमः ॐ
६८०. ॐ ब्राह्मणाय नमः ॐ
६८१. ॐ ब्रह्मिणे नमः ॐ
६८२. ॐ ब्रह्मज्ञाय नमः ॐ
६८३. ॐ ब्राह्मणप्रियाय नमः ॐ
६८४. ॐ महाक्रमाय नमः ॐ
६८५. ॐ महाकर्मणे नमः ॐ
६८६. ॐ महातेजसे नमः ॐ
६८७. ॐ महोरगाय नमः ॐ
६८८. ॐ महाक्रतवे नमः ॐ
६८९. ॐ महायज्वने नमः ॐ
६९०. ॐ महायज्ञाय नमः ॐ
६९१. ॐ महाहविषे नमः ॐ
६९२. ॐ स्तव्याय नमः ॐ
६९३. ॐ स्तवप्रियाय नमः ॐ
६९४. ॐ स्तोत्रे नमः ॐ
६९५. ॐ स्तुतिप्रियाय नमः ॐ
६९६. ॐ रणप्रियाय नमः ॐ
६९७. ॐ पूर्णाय नमः ॐ

६९८. ॐ पूरयित्रे नमः ॐ
६९९. ॐ पुण्याय नमः ॐ
७००. ॐ पुण्यकीर्तये नमः ॐ
७०१. ॐ अनामयाय नमः ॐ
७०२. ॐ मनोजवाय नमः ॐ
७०३. ॐ तीर्थकराय नमः ॐ
७०४. ॐ वसुरेतसे नमः ॐ
७०५. ॐ वसुप्रदाय नमः ॐ
७०६. ॐ वसुप्रदाय नमः ॐ
७०७. ॐ वासुदेवाय नमः ॐ
७०८. ॐ वसवे नमः ॐ
७०९. ॐ वसुमनसे नमः ॐ
७१०. ॐ हविषे नमः ॐ
७११. ॐ सद्गतये नमः ॐ
७१२. ॐ सत्कृतये नमः ॐ
७१३. ॐ सत्तायै नमः ॐ
७१४. ॐ सद्भूतये नमः ॐ
७१५. ॐ सत्परायणाय नमः ॐ
७१६. ॐ शूरसेनाय नमः ॐ
७१७. ॐ यदुश्रेष्ठाय नमः ॐ
७१८. ॐ सन्निवासाय नमः ॐ
७१९. ॐ सुयामुनाय नमः ॐ
७२०. ॐ भूतावासाय नमः ॐ
७२१. ॐ वासुदेवाय नमः ॐ
७२२. ॐ सर्वासुनिलयाय नमः ॐ
७२३. ॐ अनलाय नमः ॐ
७२४. ॐ दर्पघ्ने नमः ॐ
७२५. ॐ दर्पदाय नमः ॐ
७२६. ॐ दृप्ताय नमः ॐ
७२७. ॐ दुर्धराय नमः ॐ
७२८. ॐ अद्धाऽपराजिताय नमः ॐ
७२९. ॐ विश्वमूर्तये नमः ॐ
७३०. ॐ महामूर्तये नमः ॐ
७३१. ॐ दीप्तमूर्तये नमः ॐ
७३२. ॐ अमूर्तिमते नमः ॐ
७३३. ॐ अनेकमूर्तये नमः ॐ
७३४. ॐ अव्यक्ताय नमः ॐ
७३५. ॐ शतमूर्तये नमः ॐ
७३६. ॐ शताननाय नमः ॐ
७३७. ॐ एकाय नमः ॐ
७३८. ॐ अनेकाय नमः ॐ
७३९. ॐ सवाय नमः ॐ
७४०. ॐ काय नमः ॐ
७४१. ॐ किमे नमः ॐ
७४२. ॐ यदे नमः ॐ
७४३. ॐ तदे नमः ॐ
७४४. ॐ पदाय नमः ॐ
७४५. ॐ अनुत्तमाय नमः ॐ
७४६. ॐ लोकबन्धवे नमः ॐ
७४७. ॐ लोकनाथाय नमः ॐ
७४८. ॐ माधवाय नमः ॐ
७४९. ॐ भक्तवत्सलाय नमः ॐ
७५०. ॐ सुवर्णवर्णाय नमः ॐ
७५१. ॐ हेमाङ्गाय नमः ॐ

७५२. ॐ वराङ्गाय नमः ॐ
७५३. ॐ चन्दनाङ्गदिने नमः ॐ
७५४. ॐ वीरघ्ने नमः ॐ
७५५. ॐ विषमाय नमः ॐ
७५६. ॐ शून्याय नमः ॐ
७५७. ॐ घृताशिषे नमः ॐ
७५८. ॐ अचलाय नमः ॐ
७५९. ॐ चलाय नमः ॐ
७६०. ॐ अमानिने नमः ॐ
७६१. ॐ मानदाय नमः ॐ
७६२. ॐ मान्याय नमः ॐ
७६३. ॐ लोकस्वामिने नमः ॐ
७६४. ॐ त्रिलोकस्वामिने नमः ॐ
७६५. ॐ सुमेधसे नमः ॐ
७६६. ॐ मेधजाय नमः ॐ
७६७. ॐ धन्याय नमः ॐ
७६८. ॐ सत्यमेधसे नमः ॐ
७६९. ॐ धराधराय नमः ॐ
७७०. ॐ तेजोवृषाय नमः ॐ
७७१. ॐ द्युतिधराय नमः ॐ
७७२. ॐ सर्वशस्त्रभृतांवराय नमः ॐ
७७३. ॐ प्रग्रहाय नमः ॐ
७७४. ॐ निग्रहाय नमः ॐ
७७५. ॐ व्यग्राय नमः ॐ
७७६. ॐ नैकशृङ्गाय नमः ॐ
७७७. ॐ गदाग्रजाय नमः ॐ
७७८. ॐ चतुर्मूर्तये नमः ॐ
७७९. ॐ चतुर्बाहवे नमः ॐ
७८०. ॐ चतुर्व्यूहाय नमः ॐ
७८१. ॐ चतुर्गतये नमः ॐ
७८२. ॐ चतुरात्मने नमः ॐ
७८३. ॐ चतुर्भावाय नमः ॐ
७८४. ॐ चतुर्वेदविदेकपदे नमः ॐ
७८५. ॐ समावर्ताय नमः ॐ
७८६. ॐ निवृत्तात्मने नमः ॐ
७८७. ॐ दुर्जयाय नमः ॐ
७८८. ॐ दुरतिक्रमाय नमः ॐ
७८९. ॐ दुर्लभाय नमः ॐ
७९०. ॐ दुर्गमाय नमः ॐ
७९१. ॐ दुर्गाय नमः ॐ
७९२. ॐ दुरावासाय नमः ॐ
७९३. ॐ दुरारिघ्ने नमः ॐ
७९४. ॐ शुभाङ्गाय नमः ॐ
७९५. ॐ लोकसारङ्गाय नमः ॐ
७९६. ॐ सुतन्तवे नमः ॐ
७९७. ॐ तन्तुवर्धनाय नमः ॐ
७९८. ॐ इन्द्रकर्मणे नमः ॐ
७९९. ॐ महाकर्मणे नमः ॐ
८००. ॐ कृतकर्मणे नमः ॐ
८०१. ॐ कृतागमाय नमः ॐ
८०२. ॐ उद्भवाय नमः ॐ
८०३. ॐ सुन्दराय नमः ॐ
८०४. ॐ सुन्दाय नमः ॐ
८०५. ॐ रत्ननाभाय नमः ॐ

८०६. ॐ सुलोचनाय नमः ॐ
८०७. ॐ अर्काय नमः ॐ
८०८. ॐ वाजसनाय नमः ॐ
८०९. ॐ शृङ्गिणे नमः ॐ
८१०. ॐ जयन्ताय नमः ॐ
८११. ॐ सर्वविज्जयिने नमः ॐ
८१२. ॐ सुवर्णबिन्दवे नमः ॐ
८१३. ॐ अक्षोभ्याय नमः ॐ
८१४. ॐ सर्ववागीश्वरेश्वराय नमः ॐ
८१५. ॐ महाह्रदाय नमः ॐ
८१६. ॐ महगर्ताय नमः ॐ
८१७. ॐ महाभूताय नमः ॐ
८१८. ॐ महानिधये नमः ॐ
८१९. ॐ कुमुदाय नमः ॐ
८२०. ॐ कुन्दराय नमः ॐ
८२१. ॐ कुन्दाय नमः ॐ
८२२. ॐ पर्जन्याय नमः ॐ
८२३. ॐ पावनाय नमः ॐ
८२४. ॐ अनिलाय नमः ॐ
८२५. ॐ अमृतां(ता)शाय नमः ॐ
८२६. ॐ अमृतवपुषे नमः ॐ
८२७. ॐ सर्वज्ञाय नमः ॐ
८२८. ॐ सर्वतोमुखाय नमः ॐ
८२९. ॐ सुलभाय नमः ॐ
८३०. ॐ सुव्रताय नमः ॐ
८३१. ॐ सिद्धाय नमः ॐ
८३२. ॐ शत्रुजिते नमः ॐ
८३३. ॐ शत्रुतापनाय नमः ॐ
८३४. ॐ न्यग्रोधोदुम्बराय नमः ॐ
८३५. ॐ अश्वत्थाय नमः ॐ
८३६. ॐ चाणूरान्धनिषूदनाय नमः ॐ
८३७. ॐ सहस्रार्चिषे नमः ॐ
८३८. ॐ सप्तजिह्वाय नमः ॐ
८३९. ॐ सप्तैधसे नमः ॐ
८४०. ॐ सप्तवाहनाय नमः ॐ
८४१. ॐ अमूर्तये नमः ॐ
८४२. ॐ अनघाय नमः ॐ
८४३. ॐ अचिन्त्याय नमः ॐ
८४४. ॐ भयकृद्भयनाशनाय नमः ॐ
८४५. ॐ अणुर्बृहते नमः ॐ
८४६. ॐ कृशस्थूलाय नमः ॐ
८४७. ॐ गुणभृन्निर्गुणाय नमः ॐ
८४८. ॐ महते नमः ॐ
८४९. ॐ अधृताय नमः ॐ
८५०. ॐ स्वधृताय नमः ॐ
८५१. ॐ स्वास्थ्याय नमः ॐ
८५२. ॐ प्राग्वंशाय नमः ॐ
८५३. ॐ वंशवर्धनाय नमः ॐ
८५४. ॐ भारभृते नमः ॐ
८५५. ॐ कथिताय नमः ॐ
८५६. ॐ योगिने नमः ॐ
८५७. ॐ योगीशाय नमः ॐ
८५८. ॐ सर्वकामदाय नमः ॐ
८५९. ॐ आश्रमाय नमः ॐ

८६०. ॐ श्रमणाय नमः ॐ
८६१. ॐ क्षामाय नमः ॐ
८६२. ॐ सुपर्णाय नमः ॐ
८६३. ॐ वायुवाहनाय नमः ॐ
८६४. ॐ धनुर्धराय नमः ॐ
८६५. ॐ धनुर्वेदाय नमः ॐ
८६६. ॐ दण्डाय नमः ॐ
८६७. ॐ दमयित्रे नमः ॐ
८६८. ॐ दमाय नमः ॐ
८६९. ॐ अपराजिताय नमः ॐ
८७०. ॐ सर्वसहोनियन्त्रे नमः ॐ
८७१. ॐ नियमाय नमः ॐ
८७२. ॐ यमाय नमः ॐ
८७३. ॐ सत्ववते नमः ॐ
८७४. ॐ सात्विकाय नमः ॐ
८७५. ॐ सत्याय नमः ॐ
८७६. ॐ सत्यधर्मपरायणाय नमः ॐ
८७७. ॐ अभिप्रायाय नमः ॐ
८७८. ॐ प्रियार्हाय नमः ॐ
८७९. ॐ अर्हप्रियकृते नमः ॐ
८८०. ॐ प्रीतिवर्धनाय नमः ॐ
८८१. ॐ विहायसगतये नमः ॐ
८८२. ॐ ज्योतिषे नमः ॐ
८८३. ॐ सुरुचये नमः ॐ
८८४. ॐ हुतभुजे नमः ॐ
८८५. ॐ विभवे नमः ॐ
८८६. ॐ रवये नमः ॐ
८८७. ॐ विलोचनाय नमः ॐ
८८८. ॐ सूर्याय नमः ॐ
८८९. ॐ सवित्रे नमः ॐ
८९०. ॐ रविलोचनाय नमः ॐ
८९१. ॐ अनन्ताय नमः ॐ
८९२. ॐ हुतभुग्भोक्त्रे नमः ॐ
८९३. ॐ सुखदाय नमः ॐ
८९४. ॐ अनेकदाय नमः ॐ
८९५. ॐ अग्रजाय नमः ॐ
८९६. ॐ अनिर्विण्णाय नमः ॐ
८९७. ॐ सदामर्षिणे नमः ॐ
८९८. ॐ लोकाधिष्ठानाय नमः ॐ
८९९. ॐ अद्भुताय नमः ॐ
९००. ॐ सनात्सतनतमाय नमः ॐ
९०१. ॐ कपिलाय नमः ॐ
९०२. ॐ कपये नमः ॐ
९०३. ॐ अव्ययाय नमः ॐ
९०४. ॐ स्वस्तिदाय नमः ॐ
९०५. ॐ स्वस्तिकृते नमः ॐ
९०६. ॐ स्वस्तिने नमः ॐ
९०७. ॐ स्वस्तिभुजे नमः ॐ
९०८. ॐ स्वस्तिदक्षिणाय नमः ॐ
९०९. ॐ अरौद्राय नमः ॐ
९१०. ॐ कुण्डलिने नमः ॐ
९११. ॐ चक्रिणे नमः ॐ
९१२. ॐ विक्रमिणे नमः ॐ
९१३. ॐ ऊर्जितशासनाय नमः ॐ

९१४. ॐ शब्दातिगाय नमः ॐ
९१५. ॐ शब्दसहाय नमः ॐ
९१६. ॐ शिशिराय नमः ॐ
९१७. ॐ शर्वरीकराय नमः ॐ
९१८. ॐ अक्रूराय नमः ॐ
९१९. ॐ पेशलाय नमः ॐ
९२०. ॐ दक्षाय नमः ॐ
९२१. ॐ दक्षिणाय नमः ॐ
९२२. ॐ क्षमिणां वराय नमः ॐ
९२३. ॐ विद्वत्तमाय नमः ॐ
९२४. ॐ वीतभयाय नमः ॐ
९२५. ॐ पुण्यश्रवणकीर्तनाय नमः ॐ
९२६. ॐ उत्तारणाय नमः ॐ
९२७. ॐ दुष्कृतिघ्ने नमः ॐ
९२८. ॐ पुण्याय नमः ॐ
९२९. ॐ दुःस्वप्ननाशनाय नमः ॐ
९३०. ॐ वीरघ्ने नमः ॐ
९३१. ॐ रक्षणाय नमः ॐ
९३२. ॐ सन्ताय नमः ॐ
९३३. ॐ जीवनाय नमः ॐ
९३४. ॐ पर्यवस्थिताय नमः ॐ
९३५. ॐ अनन्तरूपाय नमः ॐ
९३६. ॐ अनन्तश्रिये नमः ॐ
९३७. ॐ जितमन्यवे नमः ॐ
९३८. ॐ भयापहाय नमः ॐ
९३९. ॐ चतुर्भुजाय नमः ॐ
९४०. ॐ गभीरात्मने नमः ॐ
९४१. ॐ विदिशाय नमः ॐ
९४२. ॐ व्यादिशाय नमः ॐ
९४३. ॐ दिशाय नमः ॐ
९४४. ॐ अनादये नमः ॐ
९४५. ॐ भूर्भुवर्लक्ष्म्यै नमः ॐ
९४६. ॐ सुवीराय नमः ॐ
९४७. ॐ रुचिराङ्गदाय नमः ॐ
९४८. ॐ जननाय नमः ॐ
९४९. ॐ जनजन्मादये नमः ॐ
९५०. ॐ भीमाय नमः ॐ
९५१. ॐ भीमपराक्रमाय नमः ॐ
९५२. ॐ आधारनिलयाय नमः ॐ
९५३. ॐ धात्रे नमः ॐ
९५४. ॐ पुष्पहासाय नमः ॐ
९५५. ॐ प्रजागराय नमः ॐ
९५६. ॐ ऊर्ध्वगाय नमः ॐ
९५७. ॐ सप्तधाचाराय नमः ॐ
९५८. ॐ प्राणदाय नमः ॐ
९५९. ॐ प्रणवाय नमः ॐ
९६०. ॐ पणाय नमः ॐ
९६१. ॐ प्रमाणाय नमः ॐ
९६२. ॐ प्राणनिलयाय नमः ॐ
९६३. ॐ प्राणदाय नमः ॐ
९६४. ॐ प्राणजीवनाय नमः ॐ
९६५. ॐ तत्वाय नमः ॐ
९६६. ॐ तत्वविदेकात्मने नमः ॐ
९६७. ॐ जन्ममृत्युजरातिगाय नमः ॐ

९६८. ॐ भूर्भुवःस्वस्तरवे नमः ॐ
९६९. ॐ ताराय नमः ॐ
९७०. ॐ सवित्रे नमः ॐ
९७१. ॐ प्रपितामहाय नमः ॐ
९७२. ॐ यज्ञाय नमः ॐ
९७३. ॐ यज्ञपतये नमः ॐ
९७४. ॐ यज्वने नमः ॐ
९७५. ॐ यज्ञाङ्गाय नमः ॐ
९७६. ॐ यज्ञवाहनाय नमः ॐ
९७७. ॐ यज्ञकृद्यज्ञभृते नमः ॐ
९७८. ॐ यज्ञिने नमः ॐ
९७९. ॐ यज्ञभुजे नमः ॐ
९८०. ॐ यज्ञसाधनाय नमः ॐ
९८१. ॐ यज्ञान्तकृते नमः ॐ
९८२. ॐ यज्ञगुह्याय नमः ॐ
९८३. ॐ अन्नाय नमः ॐ
९८४. ॐ अन्नादाय नमः ॐ
९८५. ॐ आत्मयोनये नमः ॐ
९८६. ॐ स्वयञ्जाताय नमः ॐ
९८७. ॐ वैखानाय नमः ॐ
९८८. ॐ सामगायनाय नमः ॐ
९८९. ॐ देवकीनन्दनाय नमः ॐ
९९०. ॐ स्रष्ट्रे नमः ॐ
९९१. ॐ क्षितीशाय नमः ॐ
९९२. ॐ पापनाशनाय नमः ॐ
९९३. ॐ शङ्खभृते नमः ॐ
९९४. ॐ नन्दकिने नमः ॐ
९९५. ॐ चक्रिणे नमः ॐ
९९६. ॐ शार्ङ्गधन्वने नमः ॐ
९९७. ॐ गदाधराय नमः ॐ
९९८. ॐ रथाङ्गपाणये नमः ॐ
९९९. ॐ अक्षोभ्याय नमः ॐ
१०००. ॐ सर्वप्रहरणायुधाय नमः ॐ



## ऐतरेयारण्यकम्
## पञ्चमारण्यके षष्ठः खण्डः

महिदासाभिधं विष्णुं वन्दे मध्वादिदेशिकान्।
जयार्यं व्यासतीर्थं च राघवेन्द्राभिधं मुनिम्॥
रघुनाथमुनिं वन्दे मुकुटत्रयवासिनम्।
वृहतीसहस्रव्याख्यानकर्तारं परया मुदा ॥
परैर्विरचिता व्याख्या नातीवहृदयङ्गमा।
रघुनाथादिमुनीामित्ययं मे सफलः श्रमः॥
विदया मान्यविश्वेशतीर्थसत्पादमाश्रितः।
व्याकरिष्ये यथावोधं महिदासारणफक्किकाम्॥

**तदिदास भुवनेषु ज्येष्ठं तां सु ते कीर्तिं मघवन् महित्वा**
**भूय इद् वावृधे वीर्याय नृणामु त्वा नृतमं गीर्भिरुक्थैरिति तिस्रः।**

महाव्रताख्ये कर्मणि माध्यन्दिनसवने मरुत्वतीयशस्त्रनिरूपणानन्तरं चोदकप्राप्तं निष्केवल्यशस्त्रं तत्रापि गरुडपक्ष्याकारेण निरूपितस्य तस्यात्मभागं प्रदर्शयति तदिदासेत्यादिना। तदिदास (ऋ १०म - १२०सू) इत्यादि नवर्चं सूक्तम्, तां सु ते कीर्तिमित्यादिकं (ऋ १०-९४) षड्चं सूक्तम्, भूय इद् वावृध इत्यादि (ऋ ६-३०) पञ्चर्चं सूक्तम्, नृणामुत्वेत्यादयः (ऋ ३-५१-४) तिस्र ऋचश्च विहरणेन शंसेदित्यर्थः।

**अत्र हैके स्वादोः स्वादीयः स्वादुना सृजासमदः सु मधु मधुनाऽभियोधीरित्यात्मन एते पदे उद्धृत्य पक्षपदे प्रत्यवदधात्यश्वायन्तो मघवन्निन्द्र वाजिनो गामश्वं रथ्यमिन्द्र संकिरेत्येतयोश्च स्थाने इतरे।**

अत्र केषांचित् पक्ष उच्यते स्वादोः स्वादीय इत्यादि। तदिदाससूक्तस्य तृतीयमन्त्रस्य तृतीयः पादः। अदः सुमध्वित्यादि तस्यैव चतुर्थः पादः। अश्वायन्तो मघवन्निन्द्र वाजिन इति दक्षिणपक्षभागे अभि त्वा शूर (ऋ ७-३२-२२) इत्यादिके प्रगाथे द्वितीयस्यामृचि तृतीयःपादः। गामश्वं रथ्यमिन्द्र संकिरेति उत्तरपक्षभागे त्वामिद्धीत्यादिके (ऋ ६-४६) प्रगाथे द्वितीयस्यामृचि तृतीयःपादः। स्वादोः स्वादीय इति पादद्वयमित उद्धृत्य क्रमेण दक्षिणपक्षभागे उत्तरपक्षभागे च अश्वायन्त इत्यादि पादस्थाने गामश्वमित्यादि

पादस्थाने च प्रक्षेप्तव्यम्। अश्वायन्त इत्यादि गामश्वमित्यादि च पादौ क्रमेण स्वादोः स्वादीयइत्यादि पादस्थाने अदः सुमधित्यादिपादस्थाने चेति।

सोयं वैकल्पिको विनिमयो वेदेशतीर्थपाठक्रमे नादृत एव। रघुनाथतीर्थक्रमे तु स्वादोः स्वादीय इत्यादि पादद्वयं आत्मभागे (बृहती - १०) यथास्थानं वर्तते। दक्षिणपक्षभागेऽपि (बृहती ६७-६८) तथोत्तरपक्षभागेपि (बृहती १८६) अश्वायन्त इत्यादि पादद्वयस्थाने वर्तते। व्याख्यानेपि आत्मभागे दक्षिणपक्षभागेपि स्वादोः स्वादीय इत्यादेर्व्याख्यानं दृश्यते। अतो लेखकप्रमादेन कियान् व्यत्यासः समजनीति निश्चेतुमशक्यम्। बृहतीपाठसामीचीन्याय दशम्यां बृहत्यामश्वायन्त इत्यादिपादद्वयप्रक्षेपः कार्य इति भाति।

**श्रियमह गोरश्वमात्मन् धत्ते सं पक्षयोः पतनाय।**

विनिमयेन प्रयोगस्य फलमुच्यते। आत्मन् आत्मभागे आश्वायन्त इति गामश्वमिति च पादयोः प्रक्षेपेण पक्षयोः सञ्चाराय गोसम्बन्धिनीमश्वसम्बन्धिनीं च श्रियं संपदं धत्ते प्राप्नोतीति।

**नदं व ओदतीनामित्येतयैतानि व्यतिषजति, पादैः पादान् बृहतीकारम्, नदवन्त्युत्तराणि, प्रथमायां च पुरुपाक्षराण्युपदधाति, पादेष्वेकैकमवसाने तृतीयवर्जं, स खलु विहरति।**

तदिदासेत्यादिसूक्तशंसने कश्चन विशेषो विधीयते **नदमित्यादिना**। तदिदासेत्यादीनि ऋग्जातानि शंसनीयतयोक्तानि। ता ऋचस्त्रिष्टुप्छन्दस्काः। एकादशाक्षरपादचतुष्टयोपेता हि त्रिष्टुप्। कथमनया बृहतीसम्पादनम्। उच्यते। नदमित्येतया व्यतिषजतीति। ''नदं व ओदतीनां नदं योयुवतीनाम्। पतिं वो अघ्न्यानां धेनूनामिषुध्यसि'' इति मन्त्रः (ऋ ८-६९-२) नदशब्देन व्यवह्रियते। अयं च मन्त्रः सप्ताक्षरपादचतुष्टयोपेता। आहत्याष्टाविंशत्यक्षरोपेततया अस्य उष्णिगिति पादचतुष्टयोपेततया चानुष्टुबिति चास्य वैदिको व्यवहारः। ततश्चैकादशाक्षरस्य त्रैष्टुभस्य पादस्य सप्ताक्षरनदपादेन संयोजन अष्टादशाक्षराणि सम्पद्यन्ते। इयमर्धबृहती। अस्याः पुनः तादृशसंयोजितपादद्वयमेलने सति षट्त्रिंशदक्षरा बृहती भवति। कथं संयोजनमित्यत उच्यते **नदवन्त्युत्तराणीति**। प्रथमं त्रिष्टुप्पादस्ततो नदपादइत्येवं क्रमेण संयोजनीयमित्यर्थः। तथापि प्रथमायां तदिदासेत्यादौ त्रैष्टुभ्यामृचि एकचत्वारिंशदक्षराण्येव सन्ति। नदसंयोजनेऽपि बृहतीद्वयसम्पादनाय त्र्यक्षरोनता सम्पद्यते। अतस्तत्र विशेषमाह **प्रथमायामित्यादिना**। प्रथममन्त्रे पुरुपाक्षरसंयोजनं कर्तव्यम्। कथम्। एवम्। तदिदासेत्यादिमन्त्रे चतुर्षु पादेषु क्रमेण १०,१०,११,१० अक्षराणि सन्ति। तृतीयपादे एकादशाक्षराणां विद्यमानतया तत्र संयोजनस्यावश्यकता नास्ति। अवशिष्टेषु पादत्रयेषु पादावसानं पु रु प इत्येकैकाक्षरसंयोजने सर्वेपि पादा एकादशाक्षराः सम्पद्यन्ते। ततो नदपादमेलने

अष्टादशाक्षराणि एकैकस्मिन्नर्धे सम्पद्यन्त इति। य एवं विहरणक्रमं जानाति स एव विहरति विहृत्य शस्त्रं सम्पादयितुं शक्नोतीति।

**अपि निदर्शनायोदाहरिष्यामः -**

**तदिदास भुवनेषु ज्येष्ठं पु नदं व ओदतीनाम्।**
**यतो जज्ञ उग्रस्त्वेष नृम्णो रु नदं योयुवतीनोम्॥ १॥**

**सद्यो जज्ञानो निरिणाति शत्रून् पतिं वो अघ्न्यानाम्।**
**अनु यं विश्वे मदन्त्यूमाः षो धेनूनामिपुध्यसोम्॥ २॥ इति।**

तदिदास मन्त्रस्य नदमन्त्रेण संयोजने सम्पन्नं बृहतीद्वयं स्वयमेव प्रतिज्ञायोदाहरिष्यति श्रुतिः **अपीत्यादिना**। प्रथमायां बृहत्यां कोप्याक्षेपो नास्ति। यद्यपि द्वितीयायां पतिं वो अघ्न्यानामिति पादे षडेवाक्षराणि, तथा अनु यं विश्व इत्यादिपादे नवाक्षराण्येवेति पुनराहत्याक्षरद्वयोनता सम्पद्यते इति संशयो भवति। तथापि गायत्र्यां यथा वरेण्यमित्येतत्पदं वरेणियमित्युच्चार्य चतुर्विंशत्यक्षरता सम्पाद्यते तथा अघ्नियानामिति मदन्तियूमा इति चोच्चार्य द्व्यक्षरोनतां परिहृत्य सामीचीन्यं सम्पादनीयम्। एवमेव यत्र च्छन्द आनुगुण्यायाक्षरोनता दृश्यते तत्रोत्तरत्रापि व्यूहः कार्यः।

**एवमेतां त्रिः।**

एवं तदिदासमन्त्रस्य नदसंयोजनेन सम्पादितं बृहतीद्वयं त्रिः पठेदित्यर्थः। एता आहत्य षड् बृहत्यो भवन्ति।

**अन्यासु चेत् समाम्नातासु राजनेन साम्ना स्तुवीरन् यथास्थानं ता इहैवेमा असमाम्नातासु चेत् स्तुवीरन् समाम्नातस्य तावतीरुद्धृत्य तत्र ताः शंसेदिहो एवेमाः। अन्यासु चेत् प्राक् सूददोहसस्ताः। तदिदासेत्येतदादि शस्त्रम्।**

राजनसामाधारभूता ऋचस्त्रिविधाः। तदिदासेत्याद्याः, अन्याः समाम्नाताः, अन्या असमाम्नाताश्चेति। तत्र यास्वृक्षु राजनसामगानप्रक्रमस्तदाद्येव शस्त्रं होत्रा शस्यमिति क्रमः। तदिदासेत्याद्यासु ऋक्षु प्रक्रमे तदाद्येव शस्त्रम्। समाम्नातास्वन्यासु ऋक्षु राजनगानप्रक्रमे तदाद्येव शस्त्रं प्रसज्यते। तथापि तथा न कर्तव्यम्। यथास्थानमेव तासु साम गातव्यम्। शस्त्रं तु तदिदासेत्येतदाद्येव भवेत्। असमाम्नातासु ऋक्षु सामगानेप्येवमेव। तत्र सूददोहोमन्त्रादर्वागेव असमाम्नाता यावत्य ऋचस्तावतीः समम्नाता ऋच उद्धृत्य तत्स्थानेऽसमाम्नातमृग्जातं शंसेत्। शस्त्रोपक्रमस्तु सर्वथा तदिदासेत्येतदादिरेवेति।

**अविहृतश्चात्र प्रतिगरः**

होत्रा शस्त्रे शस्यमाने ओमित्यध्वर्युः प्रतिगरं प्रतिगृणातीत्यध्वर्योः प्रतिगरमन्त्रो विहितः। स च प्रकृतौ विहितो यो मन्त्रः स सर्वत्र विकृतावपि भवति। तदपवादेन षोडशिशस्त्रे विहृतः प्रतिगरो विहितः। षोडशिशस्त्रमपि विहृतम्। प्रकृतावुक्तमन्त्रस्येषद्व्यत्यासं कृत्वा कस्यचित्पदस्य धारणं चेत् स प्रतिगरो विहृतः। अत्रापि विहृतशस्त्रसाम्यात् विहृते प्रतिगरे षोडशिदृष्टान्तेन प्राप्ते तन्निराक्रियत अविहृत एवात्र प्रतिगरमन्त्र इति।

**ता अस्य सूददोहस इत्येतदादिः सूददोहाः सूददोहाः।**

तदिदासेत्यारभ्य जरितृभ्यो वयो धा इत्यन्तं नदसंयोजनेन पञ्चाशद् बृहतीः सम्पाद्य शस्त्वा ततः शंसनीयामृचं दर्शयति ता इत्यादिना। ता अस्य सूददोहस इति पाद आदिर्यस्य स सूददोहोमन्त्रोऽन्ते पठनीय इत्यर्थः। अयं मन्त्रोऽवयवयोः सन्धानमन्त्रः। विशेषस्तु कर्मनिर्णयटीकायां द्रष्टव्यः। अध्यायान्ते द्विरुक्तिः।

**॥ इति पञ्चमारण्यके प्रथमोऽध्यायः॥**

**॥ अथ द्वितीयाध्यायः॥**

**ग्रीवाः**

निष्केवल्यशस्त्रस्यात्मभागनिरूपणानन्तरं ग्रीवाभागं प्रतिजानीते **ग्रीवा इति।**

**यस्येदमारजस्तुजो युजं वनं सहः। इन्द्रस्य रन्त्यं बृहत्॥ १॥**
**नाधृष आदधर्षदाधृषाणं धृषितं शवः।**
**पुरा यदीमतिव्यथिरिन्द्रस्य धृषितं सहः॥ २॥**
**स नो ददातु तं रयिं रयिं पिशङ्गसंदृशम्।**
**इन्द्रः पतिस्तवस्तमो जनेष्वा॥ ३॥**
**सूददोहाः।**

शाखान्तरगता यस्येदमित्यादितिस्र ऋचः शस्त्वा ततः सूददोहोमन्त्रः शंसनीय इत्यर्थः।

**शिरो गायत्रमिन्द्रमिद् गाथिनो बृहदिति। अन्यासु चेत् समाम्नातासु स्तुवीरन्नुभयासंस्थान विपर्ययोऽसमाम्नातासु चेत् स्तुवीरन् मिश्रासु च। सूक्तस्योत्तमाम्। सूददोहाः।**

ग्रीवाभागमुक्त्वा शिरो निरूपयति **शिरइत्यादिना**। इन्द्रमिदिति गायत्रं सूक्तं शस्त्रस्य शिरोभागस्थं शंसेदित्यर्थः। सामाधारभूतस्तृचः। यद्युद्गातार इन्द्रमिदिति सूक्ते प्रथमं तृचं विहायान्यमस्मिन् सूक्ते स्थितमेव तृचमादाय साम गायन्ति तदा तं तृचमिन्द्रमिदितितृचस्थाने पठेत्, तत्स्थाने चेन्द्रमिदिति तृचम्। यदि अत्र समाम्नातेषु अन्यत्र समाम्नातेषु स्तुवन्ति यदि वा तृचे एवात्र भागशः अन्यत्र भागशः समाम्नातेषु अत एव मिश्रासु स्तुवन्ति तदा सूक्तस्यान्तिमा इन्द्रं वो विश्वतस्परीति या ऋग् वर्तते ततः प्रागेवास्मिन् सूक्ते तावती ऋच उद्धृत्य तत्स्थाने ताः पठेत्। सूक्तस्यान्तिमामृचं तु पठेदेव। ततः सूददोहाः पठनीया।

**विजवः।**

शिरो निरूप्य भागान्तरं विशेषजवोत्पादकत्वेन हेतुना विजवनामकमंसभागं निरूपयति **विजव इति**।

**सुतस्ते सोम उपयाहि यज्ञं मत्स्वा मदं पुरुवारं मघाय।**
**मंहिष्ठ इन्द्र विजुरो गृणध्यै॥ १॥**
**ससाहतुर्वृत्रहत्येषु शत्रूनृभुर्विगाह एषः।**
**स नो नेतारं महयाम इन्द्रम्॥ २॥**
**इनो वसु समजः पर्वतेष्ठाः प्रति वामृजीपी।**
**इन्द्रः शश्वद्भिर्जोहूत्र एवैः॥ ३॥**
**सूददोहाः।**

शाखान्तरगताः सुतस्ते सोमेत्यादितिस्र ऋचः पठित्वा ततः सूददोहसं पठेदित्यर्थः।

**इत्येतत् त्रयं ग्रीवाः शिरो विजवः सर्वमर्धर्च्यम्।**

ग्रीवा शिरो विजव इति शस्त्रस्य भागत्रयं निरूपितम्। तत्र सम्पादिताः सर्वा बृहत्योऽर्धर्चेऽष्टादशाक्षरेऽवसाय शस्याः।

॥ इति प्रथमः खण्डः॥

**राथन्तरो दक्षिणः पक्षः।**

दक्षिणपक्षं निरूपयति **राथन्तर इति**। रथन्तरसामसम्बन्धी दक्षिणः पक्ष इत्यर्थः।

**अभि त्वा शूर नोनुमोऽभित्वा पूर्वपीतय इति रथन्तरस्य स्तोत्रियानुरूपौ प्रगाथौ**

**चतस्रः सतीः षड् बृहतीः करोति।**

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः।
ईशा॰॰ःस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥ (ऋ ७-३२-२२)

न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते।
अश्वायन्तो मघवन्निन्द्र वाजिनो वयं गव्यन्तस्त्वा हवामहे॥ (७-३२-२३)

इति प्रथमः प्रगाथः । अभि त्वा पूर्वपीतये (ऋ ८-३-७,८) इत्यपरः। एतौ द्वावपि रथन्तरस्तोत्र-सम्बन्धिनौ। ऋग्द्वयात्मकः प्रगाथः। द्व्यृचः प्रगाथा इत्युक्तेः। तत्राद्यप्रगाथे अभित्वा शूरेति स्वयं बृहती। न त्वावानिति सतो बृहती[१]। अनेन ऋग्द्वयेन बृहतीत्रयं सम्पाद्यम्। अभित्वेति यथाम्नानं स्वयं प्रथमा बृहती भवति। द्वितीयबृहत्यर्थं ईशानमिन्द्र तस्थुष इति पादं द्विरावृत्य न त्वावानिति मन्त्रे पूर्वार्धं पठेत्। इयं द्वितीया बृहती। पुनः न जातो न जनिष्यते इति पादं द्विरावृत्य अश्वायन्त इत्युत्तरार्धं पठेत्। सेयं तृतीया बृहती।

तद्यथा -

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतःस्वर्दृशमीशानमिन्द्र तस्थुषः॥ १॥

ईशनमिन्द्र तस्थुष ईशानमिन्द्र तस्थुषः। न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते॥२॥

न जातो न जनिष्यते न जातो न जनिष्यते।
अश्वायन्तो मघवन्निन्द्र वाजिनो वयं गव्यन्तस्त्वा हवामहे॥ ३॥ इति।

तत्राश्वायन्त इति पादमुद्धृत्य स्वादोः स्वादीय इति पादप्रक्षेपो वैकल्पिकः पूर्वमेवोक्तः। एवमभि त्वा पूर्वपीतय इति प्रगाथेनापि बृहतीत्रयं सम्पादनीयम्।

**इन्द्रस्य नु वीर्याणि प्रवोचम्, त्वे ह यत् पितरश्चिन्न इन्द्रेति पञ्चदश, यस्तिग्मशृङ्ग वृषभो न भीमः, उग्रो जज्ञे वीर्याय स्वधावान्, उदु ब्रह्माण्यैरत श्रवस्याऽऽते, मह इन्द्रोत्युग्रेति पञ्च सूक्तानि,**

**आ न इन्द्रो दूरादा न आसदिति संपातः, इत्था हि सोम इन्मंद इति पङ्क्तिः, सूददोहाः।**

---

१. १२,८,१२,८, अक्षरोपेतः पङ्क्तिच्छन्दोविशेष एवेदानीं सतोबृहतीति व्यवह्रियते। नेयं बृहती। प्राचीनो व्यवहारस्तु न तथा। अपि तु बृहत्यामेव।

ततः शंसनीयानि सूक्तानि दर्शयति **इन्द्रस्येत्यादिना**। इन्द्रस्येति पञ्चदशर्चं सूक्तं (ऋ १-३२), त्वे ह यदिति सूक्ते (ऋ ७-१८) आदितः पञ्चदशर्चः, यस्तिग्मशृङ्ग इति समग्रमेकादशर्चं सूक्तं (ऋ ७-१९), उग्रो जज्ञ इति दशर्चं सूक्तं (ऋ ७-२०), उदु ब्रह्माणीति षड्चं सूक्तम् (ऋ ७-२४), आ ते मह इत्यादीनि पञ्चसूक्तानि (ऋ ७-२५,२६,२७,२८,२९,), आ न इन्द्र इत्येकादशर्चं सूक्तं संपातसंज्ञितं (ऋ ४-२०) इत्था हि सोमेति पङ्क्तिछन्दस्कैका ऋक् (ऋ १-८०-१) इत्येतानि पठित्वा सूददोहसं पठेदित्यर्थः।

**वार्हत उत्तरः।**

पुनरपि भागान्तरं निरूपयति **वार्हत इति**। शस्त्रस्योत्तरपक्षो वृहत्सामसम्बन्धीत्यर्थः।

**त्वामिद्धि हवामहे त्वं ह्येहि चेरवः इति वृहतः स्तोत्रीयानुरूपौ प्रगाथौ चतस्रः सतीः षड्वृहतीः करोति।**

त्वामिद्धीत्येकः प्रगाथः (ऋ ६-४६-१,२) त्वं ह्येहीत्यपरः (ऋ ८-६१-७-८)। अनेन प्रगाथद्वयेन षड्वृहतीः सम्पाद्य पठेदित्यर्थः। सम्पादनं तु पूर्ववत्।

**तमु ष्टुहि यो अभिभूत्योजाः, सुत इत्त्वं निमिश्ल इन्द्र सोम इति त्रीणि, अभूरेको रयिपते रयीणामित्यष्टौ सूक्तानि, कथा महामवृधत् कस्य होतुरिति सम्पातः, इन्द्रो मदाय वावृध इति पंक्तिः, सूददोहाः।**

तमु ष्टुहीति पञ्चदशर्चं सूक्तं (ऋ ६-१८), सुत इत्त्वमित्यादीनि त्रीणि सूक्तानि (ऋ ६-२३,२४,२५,), अभूरेक इत्यादीन्यष्टौ सूक्तानि (ऋ ६-३१,३२,३३,३४,३५,३६,३७,), इन्द्रो मदायेति पंक्तिः। (ऋ १-८१-१) इत्येतावत् पठित्वा सूददोहसं पठेदित्यर्थः।

**राथन्तरो दक्षिणः पक्षः पञ्चदशः स्तोम एकशतं वसिष्ठप्रसाहा**
**वार्हत उत्तरः सप्तदशः स्तोमो द्विशतं भरद्वाजप्रसाहा।**

दक्षिणोत्तरपक्षयोः कश्चिद्विशेषमाह **राथन्तर इत्यादिना**। दक्षिणपक्षो रथन्तरसामसम्वन्धी। रथन्तरसामाधारभूतर्क्त्रयेणावृत्त्या पञ्चदशः स्तोमः सम्पद्यते। अभि त्वा शूरेत्यारभ्येत्था हि सोम इत्यन्तमेकोत्तरशतमृग्जातं सम्पद्यते यदात्मको दक्षिणः पक्षः तमिमं वसिष्ठः सम्पादयामास। तदुक्तं रथन्तरमाजभारा वसिष्ठ इति। एवमुत्तरपक्षो वृहत्सामसम्वन्धी, तत्र सप्तदशः स्तोमः सम्पद्यते। आहत्य द्व्यधिकशतात्मकमृग्जातं भरद्वाजः समपादयत्। तदुक्तं भरद्वाजो वृहदाचक्र इति।

भद्रं पुच्छं द्विपदासु।

द्विपदासु ऋक्षु भद्राख्यं यत् साम गीयते तत्सम्बन्धी शस्त्रस्य पुच्छभाग इत्यर्थः। द्विपदा ऋचो दर्शयति इमेत्यादिना।

इमा नु कं भुवना सीषधामाऽऽयाहि वनसा सहेति नव समाम्नाता अथासमाम्नाताः।

इमा नु कमिति पञ्चर्चं सूक्तं (ऋ १०-१५७) आयाहि वनसेति ऋक्चतुष्टयात्मकं सूक्तं (ऋ १-१७२), तदुभयमेलने नव ऋचो भवन्ति। अथासमाम्नाता नव ऋचो दर्शयति प्रवेत्यादिना।

प्र व इन्द्राय वृत्रहन्तमाय विप्रा गाथं गायत यज्जुजोषत्॥ १॥
अर्चन्त्यर्कं देवतास्वर्का आस्तोभति श्रुतो युवा स इन्द्रः॥ २॥
उपप्रक्षे मधुमति क्षियन्तः पुष्यन्तो रयिं धीमहे तमिन्द्र॥ ३॥
विश्वतो दावन् विश्वतो न आभर यं त्वां शविष्ठमीमहे॥ ४॥
स सुप्रणीते नृतमः स्वराळसि मंहिष्ठो वाजसातये॥ ५॥
त्वं ह्येक ईशिषे सनादमृक्त ओजसा॥ ६॥
विश्वस्य प्रस्तोभ विद्वान् पुरा वा यदि वेहाऽऽस नूनम्॥ ७॥
इयं नो मित्रावरुणा कर्तनेळां पीवरीमिषं कृणुही न इन्द्र॥ ८॥
शं पदं मघं रयिषणि न सोमो अव्रतं हिनोति न स्पृशद्रयिः॥ ९॥

पुनरप्यनाम्नातास्तिस्र ऋच आह एष इति।

एष ब्रह्मेति तिस्रः।

''एष ब्रह्मा य ऋत्विय:'' इत्येका 'विसृतयो यथा' इति द्वितीया, 'त्वामिच्छवसस्पते' इति तृतीया। एता ऋच आश्वलायनश्रौतसूत्रे पष्ठाध्याये दर्शिताः।

आधूर्प्वस्मा इत्येका सूददोहा यद् वावानेति धाय्या सूददोहाः।

ततः पठनीयाश्चतस्र ऋचो दर्शयति आधूर्प्वस्मा इत्यादिना।

आधूर्प्वस्मै (ऋ ७-३४-४), यद् वावान (ऋ १०-७४-६) सूददोहाः प्रसिद्धः।

॥ इति द्वितीयः खण्डः॥

॥ अथ तृतीयः खण्डः ॥

गायत्री तृचाशीतिः।

पुच्छभागशंसनानन्तरं शंसनीयं भागान्तरं दर्शयति **गायत्रीति**।

तृचानामशीतिस्तृचाशीतिः चत्वारिंशदधिकद्विशतसंख्याका ऋचो गायत्रीछन्दस्का पठनीया इत्यर्थः। ता ऋचो दर्शयति **महानित्यादिना**।

**महाँ इन्द्रो य ओजसेति तिस्र उत्तमा उद्धरति पुरोळाशं नो अन्धस इति तिस्र इन्द्र इत्सोमपा एक इत्येतत्प्रभृतीनां तिस्र उत्तमा उद्धरति तासां स्वादवः सोमा आयाहीत्येतामुद्धृत्य न ह्यन्यं वळाकारमित्येतां प्रत्यवदधाति जज्ञानो नु शतक्रतु-रित्येका पुरुहूतं पुरुष्टुतमिति शेष उद्वेदभि श्रुता मघ-मित्युत्तमामुद्धरति प्रकृतान्यृजीषिण आ घा ये अग्निमिन्धत आ तू न इन्द्र क्षुमन्तमिति सूक्ते सूददोहाः।**

महाँ इन्द्र इत्यष्टाचत्वारिंशद्भिः ऋग्भिरुपेतं सूक्तम् (ऋ ८-६) तत्र शतमहमित्याद्या अन्तिमास्तिस्र ऋचः परित्यज्य सोमपेयाय वक्षतः (४५) इति पर्यन्तं पठेत्। ततः पुरोळाशं न इत्यादि तिस्र ऋचः पठेत् (ऋ ८-७८-१-२,३,)। तत इन्द्र इत् सोमपा इत्यदिकं पठेत्। इदं वसो सुतमन्ध इति सूक्ते (ऋ ८-२) चतुर्थ्यं इन्द्र इत् सोमपेत्याद्यृक्, अतः सूक्ते आदिमास्तिस्र ऋच उद्धृत्यैवमन्तिमास्तिस्र ऋचश्चोद्धृत्यावशिष्टं षट्त्रिंशदृगात्मकं सूक्तं पठेत्। तत्रापि स्वादवः सोमा इत्येतामष्टाविंशतितमामृचमुद्धृत्य तत्स्थाने न ह्यन्यं (ऋ ८-८०-१) इत्यृचं प्रक्षिपेत्। तदूर्ध्वं जज्ञानो नु शतक्रतुरित्येकामृचं (ऋ. ८-९२-१) पठेत्। ततः पान्तमा व इत्यस्मिन् सूक्ते (ऋ ८-९२) प्रथमां ऋचं परित्यज्य पुरुहूतं पुरुष्टुतमिति द्वितीयामृच-मारभ्यासूक्तसमाप्ति द्वात्रिंशदृचः पठेदित्यर्थः। तदूर्ध्वमुद्वेदभि श्रुतेति सूक्ते (ऋ ८-९३) अन्तिमामृचं परित्यज्यावशिष्टं त्रयस्त्रिंशदृगात्मकं सूक्तशेषं पठेदित्यर्थः। ततः प्रकृतान्यृजीषिण इति सूक्तं (ऋ. ८-३२) आ घा ये अग्निमिन्धतेति सूक्तं (ऋ ८-४५) आ तू न इन्द्र क्षुमन्तमिति सूक्तं (ऋ ८-८१) तदुपरितनं आप्रद्रव (८-८२) इति सूक्तं च समग्रं पठित्वा ततः सूददोहसं पठेदित्यर्थः। एवं सूददोहसं विहाय चत्वारिंशदधिकशतद्वयसंख्याका ऋचो भवन्तीति तृचाशीतिः सम्पद्यते।

॥ इति तृतीयः खण्डः ॥

**बार्हती तृचाशीतिः। मा चिदन्यद् विशंसतेत्येकयोनत्रिंशत्, पिबा सुतस्य रसिन इति विशंतेः सप्तमीं चाष्टमीं चोद्धरति, यदिन्द्र प्रागपागुदगिति चतुर्दश, वयं घ त्वा सुतावन्त इति पञ्चदश, मो षु त्वा वाघतश्चनेत्यस्य द्विपदां चोद्धरति राथन्तरं च प्रगाथमथ हास्य नकिः सुदासो रथमित्येतं प्रगाथमुद्धृत्य त्वामिदा नर इत्येतं प्रगाथं प्रत्यवदधाति अभि प्र वः सुराधसमिति षड् वालखिल्यानां सूक्तानि यः सत्राहा विचर्षणिरिति शेषोऽयं ते अस्तु हर्यत इति सूक्ते उभयं शृणवच्च न इति सप्तमीं चाष्टमीं चोद्धरति तरोभिर्वो विदद्वसुमित्युत्तमामुद्धरति यो राजा चर्षणीनामित्येकादश तं वो दस्ममृतीषहमा नो विश्वा सुहव्यो या इन्द्र भुज आभर इति नव सूददोहाः।**

गायत्रीतृचाशीतिशंसनानन्तरं शंसनीयं शस्त्रभागं दर्शयति **बार्हतीति**। बृहतीछन्दस्का तृचाशीतिः शंसनीयेत्यर्थः। ता ऋचो दर्शयति **माचिदित्यादिना**। मा चिदन्यद्विशंसतेति सूक्ते चतुस्त्रिंशदृगात्मके (ऋ ८-१) अन्तिमाः पञ्च ऋचः परित्यज्यावशिष्टमेकोनत्रिंशदृचं पठेत्। पिबा सुतस्येति चतुर्विंशदृगात्मके सूक्ते (८-३) अन्तिमाश्चतस्र ऋचः परित्यज्यावशिष्टविंशतावपि सप्तमीं चाष्टमीं च परित्यज्यावशिष्टमष्टादशभिर्ऋग्भिरुपेतं सूक्तशेषं पठेत्। यदिन्द्रेति एकविंशदृगात्मकं सूक्तं (ऋ ८-४) तत्रान्तिमाः सप्त परित्यज्य चतुर्दशमन्त्रोपेतमेव सूक्तशेषं पठेत्। वयं घ त्वेति एकोनविंशदृगात्मकं सूक्तं (ऋ ८-३३) तत्रान्तिमाश्चतस्र ऋचः परित्यज्यावशिष्टं पञ्चदशभिर्ऋग्भिरुपेतं भागं पठेत्। मोषुत्वेति सप्तविंशतिभिर्ऋग्भिर्युक्तं सूक्तं (ऋ ७-३२) तत्र रायस्काम इति द्विपदां (३) रथन्तरसामसम्बन्धिनमभि त्वा शूर नोनुम इति प्रगाथं (२२) चोद्धृत्य, अवशिष्टं सूक्तभागं पठेत्। तत्रापि नकिः सुदासः (१०) इत्येतं प्रगाथमुद्धृत्य तत्स्थाने त्वामिदा ह्यो नरः (ऋ ८-९९-१) इति प्रगाथं प्रक्षिप्य पठेत्। अभिप्रव इत्यादिकानि वालखिल्यानां षट् सूक्तानि संहितायामष्टममण्डल आम्नातानि पठेत्। ततः त्वामिद्धि हवामह इति सूक्ते (ऋ ६-४६) आदितः द्वे ऋचौ परित्यज्य यः सत्राहेति तृतीयामृचमारभ्यासमाप्ति पठेत्। ततः अयं ते अस्तु हर्यत इति पञ्चर्चं सूक्तं (३-४४) तदुपरितनमामन्द्रैरिति सूक्तं च पठेत्। उभयं शृणवच्च न इत्यष्टादशर्चं सूक्तम् (ऋ-८-६१) तत्र सप्तमीं चाष्टमीं चोद्धृत्यावशिष्टं षोडशर्चात्मकं सूक्तशेषं पठेत्। तरोभिर्वा इति पञ्चदशर्चं सूक्तं (८-६६)तत्रान्तिमामृचमुद्धृत्यावशिष्टं चतुर्दशर्चं सूक्तभागं पठेत्। यो राजा चर्षणीनामिति पञ्चदशर्चं सूक्तं (ऋ ८-७०) तत्रान्तिमाश्चतस्रः परित्यज्यावशिष्टमेकादशर्चं पठेत्। ततः तं वो दस्ममृतीषहमिति षड्चं सूक्तं (ऋ ८-८८) आ नो विश्वासु हव्येत्येतमपि षड्चं सूक्तं (ऋ ८-९०)

पठेत्। तत या इन्द्र इति पञ्चदशर्चे सूक्ते (ऋ ८-९७) अन्तिमाः षट् परित्यज्य नवैव पठित्वा ततः सूददोहसं पठेदित्यर्थः। एवं सति सूददोहसं विहाय बार्हती तृचाशीतिः सम्पद्यते।

॥ इति चतुर्थः खण्डः॥

**औष्णिही तृचाशीतिः। य इन्द्र सोमपातम इति सूक्ते, तम्वभि प्रगायतेत्युत्तमामुद्धरति, इन्द्राय साम गायत , सखाय आशिषामहीति तिस्र उत्तमा उद्धरति, य एक इद् विदयत आयाह्यद्रिभिः सुतं यस्य त्यच्छम्बरं मद इति त्रयस्तृचा गायत्र्यः सम्पदोष्णिहः सप्त सप्त गायत्र्यः षट्पळुष्णिहो भवन्ति, यदिन्द्राहं यथा त्वं प्र सम्राजं चर्षणीनामिति सूक्ते उत्तरस्योत्तमे उद्धरति, वार्त्रहत्याया शवस इत्युत्तमामुद्धरति, सुरूपकृत्नुमूतय इति त्रीणि, एन्द्र सानसिं रयिमिति सूक्ते य आनयत् परावत इति तिस्र उत्तमा उद्धरति, रेवतीर्न सधमाद इति तिस्रः, सूददोहाः।**

बार्हततृचाशीत्यनन्तरं शंसनीयं शस्त्रभागं प्रदर्शयति **औष्णिहीति**। उष्णिक्छन्दस्का तृचाशीतिः पठनीयेत्यर्थः। ता ऋचो विविच्य दर्शयति य इत्यादिना। य इन्द्र इति त्रयस्त्रिंशदृचमेकं सूक्तं (ऋ ८-१२) तदुपरितनमिन्द्रः सुतेष्विति त्रयस्त्रिंशदृचं सूक्तं (ऋ ८-१३) च पठेत्। तम्वभि प्रगायतेति सूक्ते (ऋ ८-१५) अन्तिमामृचं परित्यज्य द्वादशर्चं सूक्तभागं पठेत्। इन्द्राय साम गायतेति द्वादशर्चं सूक्तं (ऋ ८-९८) पठेत्। सखाय आशिषामहीति त्रिंशदृचे सूक्ते (ऋ ८-२४) अवसाने तिस्र ऋचः परित्यज्य सप्तविंशदृचं सूक्तं पठेत्। य एक इत्यादिरेकतृचः (ऋ १-८४-७) आ याहीत्यादिर्द्वितीयः (ऋ ५-४०-१) यस्य त्यदित्यादिः तृतीयस्तृचः (ऋ ६-४४-१), एते त्रयस्तृचाः पठनीयाः। इतः परं गायत्रीछन्दस्का ऋचः पठनीयाः। औष्णिही तृचाशीतिरियम्। अतो गायत्रीभिरुष्णिहः सम्पादनीयाः। तत्संपादनप्रकार उच्यते **सप्तसप्त गायत्र्यः षट्पळुष्णिहो भवन्तीति**। चतुर्विंशत्यक्षरा गायत्री। सप्तसु गायत्रीष्वाहत्य १६८ अक्षराणि भवन्ति। अष्टाविंशत्यक्षरोष्णिक्। षट्सूष्णिक्षु १६८ अक्षराणि भवन्ति। ततश्च सप्त गायत्र्यः षळुष्णिहो भवन्ति। गायत्र्याः चतुरक्षराणि संयोज्योष्णिक्त्वं सम्पाद्य सप्तगायत्रीः षळुष्णिह इति परिगणय्यौष्णिही तृचाशीतिः सम्पाद्येत्यर्थः। ततो यदिन्द्राहमिति पञ्चदशर्चं गायत्रीछन्दस्कं सूक्तं (ऋ ८-१४) पठेत्। ततः प्र सम्राजमिति द्वादशर्चं गायत्रीछन्दस्कं सूक्तं (ऋ ८-१६) आयाहि सुषुमा हिते इति तदुत्तरमपि पञ्चदशर्चं सूक्तं (ऋ ८-१७) पठेत्। उत्तरसूक्ते चान्तिमे द्वे ऋचावुद्धृत्यावशिष्टं त्रयोदशर्चं सूक्तं पठेत्। वार्त्रहत्यायेत्येकादशर्चं सूक्तं (ऋ ३-३७) तत्रान्तिमां परित्यज्य दशर्चमेव सूक्तशेषं पठेत्। ततः सुरूपकृत्नुमूतय इति दशर्चं सूक्तं (ऋ १-४) आत्वेता निषीदतेत्यपरं दशर्चं द्वितीयसूक्तं (ऋ१-५) युञ्जति

ब्रध्नमिति तृतीयमपि दशर्चं सूक्तं (ऋ १-६) पठेत्। तत एन्द्र सानसिं रयिमित्येकं दशर्चं सूक्तं (ऋ १-८) इन्द्रेहि मत्स्वान्धस इत्यपरमपि (ऋ १-९) पठेत् । य आनयदिति त्रयस्त्रिंशदृचं सूक्तं (ऋ ६-४५) तत्रान्तिमास्तिस्र ऋचः परित्यज्यावशिष्टभागं पठेत्। रेवतीर्न सधमादे (ऋ १-३०-१३) इति तिस्र ऋचः पठेत्। अत्र यदिन्द्राहमित्यारभ्य रेवतीर्न सधमाद इति तृचसमाप्तिपर्यन्तं १३३गायत्र्यः पठिताः। ताः ११४ उष्णिहः सम्पद्यन्ते। य इन्द्र इत्यारभ्य यस्य त्यदिति तृचसमाप्तिपर्यन्तं १२६ उष्णिहः पठिताः। आहत्य तृचाशीतिः (२४०) औष्णिही सम्पद्यते। ततः सूददोहसं पठेदित्यर्थः।

**इत्येतास्तिस्रस्तृचाशीतयः सर्वा अर्धर्च्याः। अन्नमशीतयः।**

एवं तिस्रस्तृचाशीतयो निरूपिताः । ताः सर्वा अर्धर्चेऽवसाय्य शंसनीयाः। इमा अशीतयोऽन्नवद् हरेस्तर्पका इत्यर्थः।

**उदरं वशः। त्वावतः पुरूवसविति वशः सनितः सु सनितरित्येतदन्तः, ददीरेक्ण इति द्विपदा नूनमथेत्येकपदा, ता अस्य सूददोहस इत्येतदन्तः, सूददोहाः सूददोहाः।**

तृचाशीत्यनन्तरं शंसनीयं शस्त्रभागं दर्शयति **उदरमिति**। वशाख्यऋक्समूहः सुपर्णाकारेण निरूपितस्य शस्त्रस्योदरमिति प्रतिपत्तव्यमित्यर्थः। वशं दर्शयति **त्वावत इत्यादिना**। त्वावत इत्यादि त्रयस्त्रिंशदृचं सूक्तम् (ऋ ८-४६)। तत्र सनितः सु सनितरिति विंशतितमा ऋक्। तदन्त ऋक्समूहो वश इत्याख्यां लभते। अध्ययनकाल एतदन्त एव वशः। प्रयोगकाले तु सूददोहोमन्त्रान्तः। तत्र वशाख्ये समूहे पञ्चदशो मन्त्रः ददीरेक्ण इति द्विपदां नूनमथेत्येकपदां च ऋचमन्तर्भाव्य वर्तते। तयोः पृथग्गणने वशे सूददोहोमन्त्रान्ताः द्वाविंशदृचः सम्पद्यन्ते। अन्यथा ऋचामेकविंशतिरेव। अध्यायान्ते द्विरुक्तिः॥

॥ इति द्वितीयोऽध्यायः॥

## ॥ अथ तृतीयोऽध्यायः॥

**ऊरू । इन्द्राग्नी युवं सु न इत्येतस्यार्धर्चान् गायत्रीकारमुत्तरमुत्तरस्यानुष्टुप्कारं प्रागुत्तमायाः प्र वो महे मन्दमानस्यान्धस इति निविद्धानं वनेन वायो न्यधायि चाकन्, यो जात एव प्रथमो मनस्वानिति अन्तरेणायाह्यर्वाङुप वन्धुरेष्ठा विधुं दद्राणं समने वहूनामित्येतदावपनं दशतीनामैन्द्रीणां त्रिष्टुब्जगतीनां बृहतीसंपन्नानां यावती-**

**रावपेरंस्तावन्त्यूर्ध्वमायुषो वर्षाणि जिजीविषेत् संवत्सरात् संवत्सराद् दशतो न वो त्यमूषु वाजिनं देवजूतमिन्द्रो विश्वं विराजतीत्येकपदेन्द्रं विश्वा अवीवृधन्नित्यानुष्टुभं तस्य प्रथमायाः पूर्वमर्धर्चं शस्त्वोत्तरेणार्धर्चेनोत्तरस्याः पूर्वमर्धर्चं व्यतिषजति पादैः पादाननुष्टुप्कारं प्रागुत्तमायाः पूर्वस्मात् पूर्वस्मादर्धर्चादुत्तरमुत्तरमर्धर्चं व्यतिषजति प्रकृत्या शेषः पिबा सोममिन्द्र मन्दन्तु त्वेति पड् योनिष्ट इन्द्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसंतत्योपोत्तमया परिदधाति।**

शस्त्रस्योरुभागं प्रतिज्ञाय दर्शयति ऊरू इत्यादिना। इन्द्राग्नी युवं सुन इति द्वादशर्चं सूक्तम् (ऋ ८-४०) तत्र द्वितीया ऋक् शक्करीछन्दस्का, अन्त्या त्रिष्टुप्, अन्याः षट्पदा महापंक्तयः। तत्र द्वितीयामन्तिमामृचं च विहायान्यासु पादत्रयात्मकमेकैकमर्धर्चं गायत्रीं कृत्वा शंसेत्। गायत्रीकरणं नाम पादद्वयेऽवसाय तृतीयपादे प्रणवोपधानम्। द्वितीयायां शाक्वर्यामपि पादत्रयात्मकं पूर्वार्धं गायत्रीं कृत्वा शंसेत्। उत्तरार्धं तु पादचतुष्टयात्मकं पादत्रयेऽवसाय चतुर्थपादे प्रणवमुपधायानुष्टुभं कृत्वा शंसेत्। अन्तिमां तु त्रिष्टुभं पादशंसनक्रमेण द्वितीयपादे प्रणवोपधानेन शंसेत्।

एवमादि व्याख्यातं सायणेन। एवंक्रमेण प्रणवप्रक्षेपे द्वाविंशतिप्रणवाः संयोज्या भवन्ति एकादशर्क्षु। पादशंसनक्रमेण त्रिष्टुच्छंसनं पूर्वं न कृतम्। आत्मभागे शिरोभागे तृचाशीतिषु चार्धर्चक्रमेण शंसनं कृतम्। आत्मभागे शिरोभागे तृचाशीतिषु चार्धर्चक्रमेण शंसनं कृतम्। अतः कोशेषु त्रिष्टुभप्यर्धर्चक्रमेणैव लिखिता। तृतीयपादे चतुर्थपादे च प्रणवोपधानं श्रीत्रेदेशतीर्थक्रमे श्रीरघुनाथतीर्थक्रमे वा न दृश्यते। अत्र बीजं मृग्यम्।

ततः प्रवो महे मन्दमानायेति सूक्तं (ऋ १०-५०) निविद्धानसंज्ञकं पठेत्। ततो वनेन वायो इत्यष्टर्चं सूक्तं (ऋ १०-२९) यो जात एवेति पञ्चदशर्चं सूक्तं च (ऋ २-१२)। आयुष्कामश्चेदनयोः सूक्तयोर्मध्ये आयाह्यर्वाङित्यष्टर्चं सूक्तं (ऋ ३-४३) विधुं दद्राणमित्येकामृचं (ऋ १०-५६-५) च पठेत्। इमा नवापि त्रिष्टुप्छन्दस्का ऋचः। ताभिरेकादशवृहत्यः सम्पद्यन्ते। तेन च तावद्वत्सरपर्यन्तमायुर्वर्धत इति मध्ये स्थितानामवान्तरवाक्यानां फलितार्थः। ततस्त्यमू षु वाजिनमिति तृचं सूक्तं (ऋ १०-१७८) पठित्वा इन्द्रो विश्वं विराजतीत्येकपदां शाखान्तरगतामृचं पठेत्। तत इन्द्रो विश्वाः (ऋ १-११) इत्यष्टर्चं सूक्तं व्यतिषङ्गेन पठेत्। इदं सूक्तं गायत्रीछन्दस्कम्। व्यतिषङ्गस्त्वित्थम्।

प्रथमाया अनुष्टुभः पूर्वर्धं शंसेत्। तत उत्तरार्धस्य द्वितीयाया अनुष्टुभः पूर्वार्धेन व्यतिषङ्गं कुर्यात्। तदपि पादैः पादान् उत्तरार्धस्य प्रथमपादेन द्वितीयाया पूर्वार्धस्य प्रथमपादम्। सेयं सम्पादिता प्रथमानुष्टुप्। ततः

प्रथमाया चतुर्थपादं (नाम उत्तरार्धस्य द्वितीयपादं) द्वितीयानुष्टुभः द्वितीयतृतीयपादौ तृतीयाया: प्रथमपादं च व्यतिषज्य द्वितीयामनुष्टुभं सम्पादयेत्। ततो द्वितीयानुष्टुभः चतुर्थपादं तृतीयानुष्टुभः द्वितीयतृतीयपादौ चतुर्थ्यानुष्टुभः प्रथमं पादं चादाय तृतीयामनुष्टुभं सम्पादयेत्। एवमनुसरणेऽष्टम्यामनुष्टुभि सप्तम्याश्चतुर्थपादः अष्टम्या। द्वितीयपादश्च पूर्वार्धे उत्तरार्धे तु प्रकृत्या अष्टम्या उत्तरार्धमेव भवति तदेवं सम्पादितानामनुष्टुभां क्रमः।

इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः।
रथीतमं रथीनां सख्ये त इन्द्र वाजिनः ॥ १॥

वाजानां सत्पतिं मा भेम शवसस्पते।
त्वामभि प्रणोनुमः पूर्वीरिन्द्रस्य रातयः ॥ २ ॥

जेतारमपराजितं न विदस्यन्त्यूतयः।
यदी वाजस्य गोमतः पुरां भिन्दुर्युवाकविः ॥ ३ ॥

स्तोतृभ्यो मंहते मघममितौजा अजायत।
इन्द्रो विश्वस्य कर्मणस्त्वं वलस्य गोमतः ॥ ४ ॥

धर्ता वज्री पुरुष्टुतोऽपावरद्रिवो बिलम्।
त्वां देवा अबिभ्युषस्तवाहं शूर रातिभिः ॥ ५ ॥

तुज्यमानास आविषुः प्रत्यायं सिन्धुमावदन्।
उपातिष्ठन्त गिर्वणो मायाभिरिन्द्र मायिनम् ॥ ६ ॥

विदुष्टे तस्य कारवस्त्वं शुष्णमवातिरः।
विदुष्टे तस्य मेधिरामिन्द्रमीशानमोजसा ॥ ७॥

तेषां श्रवांस्युत्तिराभि स्तोमा अनूषत।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ ८ ॥ इति।

ततः पिबा सोममिति नवर्चे सूक्ते (ऋ ७-२३) अन्तिमास्तिस्र ऋचो विहाय षड्चः पठेत्। ततो योनिष्टे

इन्द्रेति षळर्चे सूक्ते (ऋ ७-२४) चतस्रः पठित्वा ततः षष्ठीं पठित्वा अन्ते एष स्तोम इत्यनया पञ्चम्या निष्केवल्यशस्त्रं समापयेदिति।

**परिहित उक्थ उक्थसंपदं जपति।**
**उक्थवीर्यस्य स्थाने उक्थदोहः।**

निष्केवल्यशस्त्रपरिधानानन्तरं प्रकृतिभूतेऽग्निष्टोमे होता '' उक्थं वाचीन्द्रायोपशृण्वते त्वा '' इति जपति। तत्रोक्थं वाचीन्द्रायेत्युक्थसम्पद्भागः, उपशृण्वते त्वेत्युक्थवीर्यभागः। विकृतावत्र महाव्रते होता शस्त्रसमाप्त्यनन्तरमुक्थसम्पद्भागमात्रं जपेत्। उक्थवीर्यस्य स्थाने उक्थदोहनामकं मन्त्रसमूहं जपेत्। स च मन्त्रसमूह उत्तरखण्डे प्रदर्शयिष्यते।

सोयं व्याख्यातो भागः ऋषिप्रणीतसूत्राणीति सायणाभिप्रायः। अपौरुषेयो वेद एवेति श्रीरघुनाथतीर्थ-श्रीमच्चरणानामभिप्राय इत्यशेषमतिमङ्गलम्॥

॥ इति पञ्चमारण्यके तृतीयाध्याये प्रथमः खण्डः॥

**अनया व्याख्यया मह्यं प्रीयतामजविठ्ठलः।**
**विश्वेशतीर्थहृत्पीठे सदा नर्तनतत्परः॥**

**इति श्रीविश्वेशतीर्थानामन्तेवसता शेषगिरिणा रचिता ऐतरेयारण्यकफक्किकाव्याख्या समाप्ता।**

**॥ श्रीकृष्णार्पणमस्तु॥**

प्रथमाया चतुर्थपादं (नाम उत्तरार्धस्य द्वितीयपादं) द्वितीयानुष्टुभः द्वितीयतृतीयपादौ तृतीयायाः प्रथमपादं च व्यतिषज्य द्वितीयामनुष्टुभं सम्पादयेत्। ततो द्वितीयानुष्टुभः चतुर्थपादं तृतीयानुष्टुभः द्वितीयतृतीयपादौ चतुर्थ्यनुष्टुभः प्रथमं पादं चादाय तृतीयामनुष्टुभं सम्पादयेत्। एवमनुसरणेऽष्टम्यामनुष्टुभि सप्तम्याश्चतुर्थपादः अष्टम्या। द्वितीयपादश्च पूर्वार्धे उत्तरार्धे तु प्रकृत्या अष्टम्या उत्तरार्धमेव भवति तदेवं सम्पादितानामनुष्टुभां क्रमः।

इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः।
रथीतमं रथीनां सख्ये त इन्द्र वाजिनः ॥ १॥

वाजानां सत्पतिं मा भेम शवसस्पते।
त्वामभि प्रणोनुमः पूर्वीरिन्द्रस्य रातयः ॥ २ ॥

जेतारमपराजितं न विदस्यन्त्यूतयः।
यदी वाजस्य गोमतः पुरां भिन्दुर्युवाकविः ॥ ३ ॥

स्तोतृभ्यो मंहते मघममितौजा अजायत।
इन्द्रो विश्वस्य कर्मणस्त्वं वलस्य गोमतः ॥ ४ ॥

धर्ता वज्री पुरुष्टुतोऽपावरद्रिवो बिलम्।
त्वां देवा अबिभ्युषस्तवाहं शूर रातिभिः ॥ ५ ॥

तुज्यमानास आविषुः प्रत्यायं सिन्धुमावदन्।
उपातिष्ठन्त गिर्वणो मायाभिरिन्द्र मायिनम् ॥ ६ ॥

विदुष्टे तस्य कारवस्त्वं शुष्णमवातिरः।
विदुष्टे तस्य मेधिरामिन्द्रमीशानमोजसा ॥ ७॥

तेषां श्रवांस्युत्तिराभि स्तोमा अनूषत।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ ८ ॥ इति।

ततः पिबा सोममिति नवर्चे सूक्ते (ऋ ७-२३) अन्तिमास्तिस्र ऋचो विहाय पङ्क्तः पठेत्। ततो योनिष्टे

इन्द्रेति पळर्चे सूक्ते (ऋ ७-२४) चतस्रः पठित्वा ततः षष्ठीं पठित्वा अन्ते एष स्तोम इत्यनया पञ्चम्या निष्केवल्यशस्त्रं समापयेदिति।

परिहित उक्थ उक्थसंपदं जपति।
उक्थवीर्यस्य स्थाने उक्थदोहः।

निष्केवल्यशस्त्रपरिधानानन्तरं प्रकृतिभूतेऽग्निष्टोमे होता '' उक्थं वाचीन्द्रायोपशृण्वते त्वा '' इति जपति। तत्रोक्थं वाचीन्द्रायेत्युक्थसम्पद्भागः, उपशृण्वते त्वेत्युक्थवीर्यभागः। विकृतावत्र महाव्रते होता शस्त्रसमाप्त्यनन्तरमुक्थसम्पद्भागमात्रं जपेत्। उक्थवीर्यस्य स्थाने उक्थदोहनामकं मन्त्रसमूहं जपेत्। स च मन्त्रसमूह उत्तरखण्डे प्रदर्शयिष्यते।

सोयं व्याख्यातो भागः ऋषिप्रणीतसूत्राणीति सायणाभिप्रायः। अपौरुषेयो वेद एवेति श्रीरघुनाथतीर्थ-श्रीमच्चरणानामभिप्राय इत्यशेषमतिमङ्गलम्॥

॥ इति पञ्चमारण्यके तृतीयाध्याये प्रथमः खण्डः॥

अनया व्याख्यया मह्यं प्रीयतामजविट्ठलः।
विश्वेशतीर्थहृत्पीठे सदा नर्तनतत्परः॥

इति श्रीविश्वेशतीर्थानामन्तेवसता शेषगिरिणा रचिता ऐतरेयारण्यकफक्किकाव्याख्या समाप्ता।

॥ श्रीकृष्णार्पणमस्तु॥

# ॥ श्रीविष्णुसहस्रनामवर्णानुक्रमसूची ॥

### छ



### ज



### त



### द

## ध

**ब**

## श

**ह**



**क्ष**



**ज्ञ**

# ॥ अथ निघण्टुः ॥

## ॥ अथ प्रथमोऽध्यायः ॥

गौः । ग्मा । ज्मा । क्ष्मा । क्षा । क्षग्ग । क्षोणी ।क्षितिः । अवनिः । उर्वी । पृथ्वी । मही । रिपः । अदितिः। इळा।निर्ऋतिः । भूः । भूमिः । पूषा । गातुः । गोत्रेति पृथिव्याः । (गोत्रेत्येकविंशतिः पृथिवीनामधेयानि) ॥१॥

हेम । चन्द्रम् । रुक्मम् । अयः । हिरण्यम् । पेशः। कृशनम् ।लोहम् । कनकम् । काश्चनम् । भर्म । अमृतम् । मरुत् । दत्रम् । जातरूपमिति हिरण्यस्य । (जातरूपमिति पश्चदश हिरण्यनामानि)॥२॥

अम्बरम् । वियत् । व्योम । वर्हिः । धन्व । अन्तरिक्षम् । आकाशम् । आपः । पृथिवी । भूः । स्वयम्भूः । अध्वा । पुष्करम् । सगरः । समुद्रः ।अध्वरमित्यन्तरिक्षस्य ।(अध्वरमिति षोडशान्त-रिक्षनामानि )॥३॥

स्वः । पृश्निः । नाकः । गौः । विष्टप् ।नभ इति साधारणानि ।(नभ इति षट् साधारणानि)॥ ४॥

खेदयः। किरणाः । गावः । रश्मयः । अभीशवः । दीधितयः । गभस्तयः ।वनम् । उस्राः । वसवः । मरीचिपाः । मयूखाः । सप्त ऋषयः । साध्याः । सुपर्णा इति रश्मीनाम् । (सुपर्णा इति पश्चदश रश्मिनामानि ) ॥ ५ ॥

आताः । आशाः । उपराः ।आष्ठाः । काष्ठाः । व्योम । ककुभः । हरित इति दिशाम् ।(हरित इत्यष्टौ दिङ्नामानि ) ॥ ६ ॥

श्यावी । क्षपा । शर्वरी । अक्तुः ।ऊर्म्या । राम्या । यम्या । नम्या । दोषा । नक्ता । तमः । रजः । असिक्नी । पयस्वती । तमस्वती । घृताची । शिरिणा । मोकी । शोकी । ऊधः । पयः । हिमा । वस्वीति रात्रेः ।( वस्वीति त्रयोविंशती रात्रिनामानि ) ॥ ७ ॥

विभावरी । सूनरी । भास्वती ।ओदती । चित्रामघा । अर्जुनी । वाजिनी । वाजिनीवती । सुम्नावरी । अहना । द्योतना । श्वेत्या । अरुषी । सूनृता । सूनृतावती । सूनृतावरीत्युषसः । (सूनृतावरीति षोडशोषोनामानि ) ॥ ८ ॥

वस्तोः । द्युः ।भानुः । वासरम् । स्वसराणि । घ्रंसः । घर्मः । घृणः। दिनम् । दिवा । दिवेदिवे । द्यविद्यवीत्यह्नः । (द्यविद्यवीति द्वादशाहर्नामानि ) ॥ ९ ॥

अद्रिः । ग्रावा । गोत्रः । वलः । अश्नः । पुरुभोजाः । वलिशानः । अश्मा । पर्वतः । गिरिः । व्रजः । चरुः । वराहः । शम्बरः । रौहिणः । रैवतः । फलिगः । उपरः । उपलः । चमसः । अहिः । अभ्रम् । वलाहकः । मेघः । दृतिः । ओदनः । वृषन्धिः । वृत्रः । असुरः । कोश इति मेघानाम् । (कोश इति त्रिंशन्मेघनामानि ) ॥१०॥

श्लोकः । धारा । इळा । गौः । गौरी । गान्धर्वी । गभीरा । गम्भीरा । मन्द्रा । मन्द्राजनी । वाशी । वाणी । वाणीची । वाणः । पविः । भारती । धमनिः । नाळीः । मेना । मेळिः । सूर्या । सरस्वती । निवित् । स्वाहा । वग्नुः । उपब्दिः । मायुः । काकुत् । जिह्वा । घोषः । स्वरः । शब्दः । स्वनः । ऋक् । होत्रा । गीः । गाथा। गणः । धेना । ग्राः। विपा । नना । कशा । धिषणा । नौः । अक्षरम्। मही। अदितिः। शची। वाक्। अनुष्टुप्। धेनुः। वल्गुः। गल्दा। सरः। सुपर्णी। बेकुरेति वाचः। (बेकुरेति सप्तपंचाशद्वाङ्नामानि ) ॥ ११॥

अर्णः । क्षोदः । क्षद्म । नभः ।अम्भः । कवन्धम् । सलिलम् । वाः । वनम् । घृतम् । मधु । पुरीषम् । पिप्पलम् । क्षीरम् । विषम् । रेतः । कशः । जन्म । बृबूकम् । बुसम् । तुग्र्या । बुर्बुरम् । सुक्षेम । धरुणम् । सुरा । अररिन्दानि । ध्वस्मन्वत् । जामि । आयुधानि । क्षपः । अहिः । अक्षरम् । स्रोतः । तृप्तिः । रसः । उदकम् । पयः । सरः । भेषजम् । सहः । शवः। यहः । ओज :। सुखम् । क्षत्रम् । आवया : । शुभम् । यादुः । भूतम् । भुवनम् । भविष्यत् । आपः । महत् । व्योम । यशः । महः । सर्णीकम् । स्वृतीकम् । सतीनम् । गहनम् । गभीरम् । गम्भरम् । ईम् । अन्नम् । हविः । सद्म । सदनम् । ऋतम् । योनिः । ऋतस्य योनिः । सत्यम् । नीरम् । रयिः । सत् । पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । सर्पिः । अपः । पवित्रम् । अमृतम् । इन्दुः। हेम ।स्वः । सर्गाः । शाम्वरम् । अभ्वम् । वपुः । अम्बु । तोयम् । तूयम् ।कृपीटम् । शुक्रम् ।तेजः । स्वधा। वारि ।जलम् । जलाषम् । इदमित्युदकस्य । (इदमित्येकशतमुदकनामानि ) ॥ १२ ॥

अवनयः । यव्याः । खाः । सीराः । स्रोत्याः । एन्वः । धुनयः । रुजानाः । वक्षणाः । खादो अर्णाः । रोधचक्राः । हरितः । सरितः । अगृवः । नभन्वः । वध्वः । हिरण्यवर्णाः । रोहितः ।

सस्रुतः । अर्णाः । सिन्धवः । कुल्याः । वर्यः । उर्व्यः । इरावत्यः । पार्वत्यः । स्रवन्त्यः । ऊर्जस्वत्यः । पयस्वत्यः । तरस्वत्यः । सरस्वत्यः । हरस्वत्यः । रोधस्वत्यः । भास्वत्यः । अजिराः । मातरः । नद्य इति नदीनाम् । (नद्य इति सप्तत्रिंशन्नदीनामानि ) ॥१३॥

अत्यः । हयः । अर्वा । वाजी । सप्तिः ।वह्निः । दधिक्राः । दधिक्रावा । एतग्वः । एतशः। पैद्वः । दौर्गहः । औच्चैःश्रवसः । तार्क्ष्यः । आशुः । ब्रध्नः । अरुषः । मांश्चत्वः । अव्यथयः । श्येनासः । सुपर्णाः । पतङ्गाः । नरः । ह्वार्याणाम् । हंसासः । अश्वा इत्यश्वानाम् । (अश्वा इति षड्विंशतिरश्वनामानि) ॥१४ ॥

हरी इन्द्रस्य । रोहितोऽग्नेः । हरित आदित्यस्य । रासभावश्विनोः । अजाः पूष्णः । पृषत्यो मरुताम् । अरुण्यो गाव उषसाम् । श्यावाःसवितुः । विश्वरूपा बृहस्पतेः । नियुतो वायोरिति (दश) आदिष्टोपयोजनानि ॥१५॥

भ्राजते । भ्राशते । भ्राश्यति । दीदयति । शोचति । मन्दते । भन्दते । रोचते । ज्योतते । द्योतते । द्युमदिति (एकादश ) ज्वलतिकर्माणः ॥१६॥

जमत् । कल्मलीकिनम् । जञ्जणाभवन् । मल्मलाभवन् । अर्चिः । शोचिः । तपः । तेजः । हरः । हृणिः । शृङ्गाणि । शृङ्गाणीति ज्वलतः। (शृङ्गाणीत्येकादश ज्वलतो नामधेयानि ।) ॥१७॥

॥ इति निघण्टौ प्रथमोऽध्यायः ॥

(गौर्हेमाम्बरं स्वःखेदय आता श्यावी विभावरी वस्तोरद्रिःश्लोकोर्णो वनयोत्यो हरी इन्द्रस्य भ्राजते जमदिति सप्तदश )

## ॥ अथ द्वितीयोऽध्यायः ॥

अपः ।अप्नः । दंसः। वेषः । वेपः । विष्व्वी । व्रतम् । कर्वरम् । करुणम् । शक्म । क्रतुः । करणानि । करांसि । करिक्रत् । करन्ती । चक्रत् । कर्त्वम् । कर्तोः । कर्तवै । कृत्वी । धीः । शची । शमी । शिमी । शक्तिः । शिल्पमिति कर्मणः । (शिल्पमिति षड्विंशतिः कर्मनामानि ) ॥ १ ॥

तुक् । तोकम् । तनयः । तोक्म । तक्म । शेषः । अप्नः । गयः । जाः । अपत्यम् । यहुः । सूनुः । नपात् । प्रजा । बीजमित्यपत्यस्य । (बीजमिति पञ्चदशापत्यनामानि ) ॥ २ ॥

मनुष्याः । नरः । धवाः। जन्तवः । विशः । क्षितयः । कृष्टयः । चर्षणयः । नहुषः । हरयः। मर्याः। मर्त्याः । मर्ताः । व्राताः । तुर्वशाः । द्रुह्यवः ।आयवः । यदवः । अनवः । पूरवः । जगतः। तस्थुषः । पञ्चजनाः । विवस्वन्तः । पृतना इति मनुष्याणाम् । (पृतना इति पञ्चविंशतिर्मनुष्यनामानि) ॥ ३ ॥

आयती । च्यवना । अभीशू । अप्नवाना । विनङ्गृसौ । गभस्ती । करस्नौ । बाहू । भुरिजौ । क्षिपस्ती । शक्वरी । भरित्रे इति बाहोः । (भरित्रे इति द्वादश बाहुनामानि ) ॥४॥

अग्रुवः । अण्व्यः । क्षिपः । व्रिशः । शर्याः। रशनाः । धीतयः । अथर्यः । विपः । कक्ष्याः । अवनयः । हरितः । स्वसारः । जामयः । सनाभयः । योक्त्राणि । योजनानि । धुरः । शाखाः । अभीशवः । दीधितय इत्यङ्गुलीनाम् । (गभस्तय इति द्वाविंशतिरङ्गुलिनामानि )॥५॥

वश्मि । उश्मसि । वेति । वेनति । वेसति । वाञ्छति । वष्टि । वनोति । जुषते । हर्यति । आचके । उशिक् । मन्यते । छन्त्सत् । चाकनत् । चकमानः । कनति । कानिषदिति । (अष्टादश) कान्तिकर्माणः ॥ ६ ॥

अन्धः । वाजः । पयः । श्रवः । पृक्षः । पितुः । सुतः । सिनम् । अवः । क्षु । धासिः । इरा । इळा । इषम् । ऊर्क् । रसः । स्वधा । अर्कः । क्षद्म । नेमः । ससम् । नमः । आयुः । सूनृता । ब्रह्म । वचः । कीलालमित्यन्नस्य । (कीलालम् । यश इत्यष्टाविंशतिरन्ननामनि) ॥ ७ ॥

आ वयति । भर्वति । बभस्ति । वेति । वेवेष्टि । अविष्यन् । वप्सति । भसथः । बब्धाम् । ह्वयतीत्यत्तिकर्माणः । (ह्वयतीति दशात्तिकर्माणः ) ॥ ७ ॥

ओजः । पाजः । शवः । तवः । तरः । त्वक्षः । शर्धः । बाधः । नृम्णम् । तविषी । शुष्मम् । शुष्णम् । दक्षः । वीळु । च्यौत्नम् । शूषम् । सहः । यहः । वधः । वर्गः । वृजनम् । वृक् । मज्मना । पौंस्यानि । धर्णसिः । द्रविणम् । स्यन्द्रासः । शम्बरमिति । बलस्य । (शम्बरमित्यष्टाविंशतिर्बलनामानि) ॥ ९ ॥

मघम् । रेक्णः । रिक्थम् । वेदः । वरिवः । श्वात्रम् । रत्नम् । रयिः । क्षत्रम् । भगः । मीळ्हुम् ।

गयः । द्युम्नम् । इन्द्रियम् । वसु । रायः । राधः । भोजनम् । तना । नृम्णम् । वन्धुः । मेधा । यशः । ब्रह्म । द्रविणम् । श्रवः । वृत्रम् । ऋतमिति धनस्य (ऋतमित्यष्टाविंशतिरेव धननामानि) ॥१०॥

अघ्न्या । उस्रा। उस्रिया । अही । मही । अदितिः । इळा । जगती । शक्वरीति गवाम् (शक्वरीति नव गोनामानि ) ॥ ११ ॥

रेळते । हेळते । भामते । भृणीयते । भ्रीणाति । भ्रेषति । दोधति । वनुष्यति । कम्पते । भोजत (दश) क्रुध्यतिकर्माणः ॥ १२ ॥

हेळः । हरः । हृणिः । त्यजः । भामः । एहः । ह्वरः । तपुषी । जूर्णिः । मन्युः । व्यथिरिति । क्रोधस्य । (व्यथिरित्येकादश क्रोधनामानि) ॥ १३ ॥

वर्तते । अयते । लोटते । लोठते । स्यन्दते । कसति । सर्पति । स्यमति । स्रवति । स्रंसते । अवति । श्चोतति । ध्वंसति । वेनति । मार्ष्टि । भुरण्यति । शवति । कालयति । पेलयति । कण्टति । पिस्यति । विस्यति । मिस्यति । प्रवते । प्लवते । चवते । कवते । गवते । नवते । क्षोदति । नक्षति । सक्षति । म्यक्षति । सचति । ऋच्छति । तुरीयति । चतति । अतति । गाति । इयक्षति । सश्चति । त्सरति । रंहति । यतते । भ्रमति । ध्रजति । रजति । लजति । क्षियति । धमति । मिनाति । ऋण्वति । ऋणोति । स्वरति । सिसर्ति । विषिष्टि । योषिष्टि । रिणाति । रीयते । रेजति । दध्यति । दभ्नोति । युध्यति । अरुषति । आर्यति । डीयते । तकति । दीयति । इषति । फणति । हनति । अर्दति । मर्दति । ससृते । नसते । हर्यति । इयर्ति । ईर्ते । ईङ्खते । व्रयति । श्वात्रति । गन्ति । आगनीगन्ति । जङ्गन्ति । जिन्वति । जसति । गमति । ध्रति । ध्राति । ध्रयति । वहते । रथर्यति । जेहते । ष्वःकति । क्षुम्पति । प्साति । वाति । याति । इषति । द्राति । द्रूळति । एजति । जमति । जवति । वश्चति । अनिति । पवते । हन्ति । सेधति । अगन् । अजगन् । जिगाति । पतति । इन्वति । द्रमति । द्रवति । वेति । हयन्तात् । एति । जगायात् । अयुथुरिति । द्वाविंशशतं गतिकर्माणः ॥१४॥

वर्तते । अयते । लोटते । लोठते । स्यन्दति । कसति । सर्पति । स्यमति । स्रवति । स्रंसति । श्चोतति । ध्वंसति । वेनति । मार्ष्टि । भुरण्यति । शवति । कालयति । पेलयति । कण्ठति । पिस्यति । विस्यति । मिस्यति । प्रवते । प्लवते । च्यवते । कवते । गवते । अवते । क्षोदति । सक्षति ।

इयक्षति । मियक्षति । सचति । अचति । ऋच्छति । तुरीयति । त्सरति । अतति । पतति । चतति । सश्चति । रंहति । भ्रमति । ध्रजति । रजति । लजति । क्षियति । क्षिणोति । ऋण्वति । सिसर्ति । वेषिष्टि । योषिष्टि । रिणाति । ऋणर्ति । इयर्ति । रीयते । नेदति । नख्यति । दध्यति । दध्नोति । युध्यते । धन्वति । अरर्षति । अलर्यति । डीयते । तकति । दीयते । ईषति । कणति । सस्रति । सिस्रति । धवति । धावति । हम्मति । हयति । ईर्ते । त्रयति । श्वात्रति । गन्ति । गनीगन्ति । जगन्ति । जगाति । जगति । गमति । मिनति । ध्रति । ध्राति । ध्रयति । ध्रुवति । वल्गूयति । अथर्यति । ईहते । जेहति । वदति । राति । रूल्हति । एजति । वञ्चति । ष:कति । ष्व:कति । क्षुम्पति । प्साति । वाति । याति । जायति । पतयति । पवते । हन्ति । सेधति । अगन् । अजगन् । आगनीगन्ति । गाति । जिगाति । इन्वति । व्रजति । द्रवति। द्रुम्मति । वेति । हयन्ता । जगायात् । अयुधुरिति गतिकर्माण:। ॥ १४॥

नु । मक्षु । द्रवत् । ओषम् । जीरा:। जूर्णि: । शूर्ता: । शूघनास:। शीभम् । तृषु । तूयम्। तूर्णि:। अजिरम् । भुरण्यु: । शु । आशु । प्राशु: । तूतुजि: । तूतुजान: । तुज्यमानास: । अज्रा: । साचीवित् । द्युगत् । ताजत् । तरणि: । वातरंहा इति क्षिप्रस्य ।(वातरंहा इति षड्विंशति:क्षिप्रनामानि ।) ॥ १५ ॥

तळित् । आसात् । अम्बरम् । तुर्वशे । अस्तमीके । आके । उपाके । अर्वाके । अन्तमानाम् । अवमे । उपम इत्यन्तिकस्य । (उपम इत्येकादशान्तिकनामानि ) ॥ १६ ॥

रण:। विवाक् । विखाद:। नदनु:। भरे । आक्रन्दे ।आहवे । आजौ । पृतनाज्यम्। अभीके । समीके । ममसत्यम् । नेमधिता । सङ्का: । समिति: । समनम् । मीळ्हे । पृतना: । स्पृध: । मृध: । पृत्सु । समत्सु । समर्ये । समरणे । समोहे । समिथे । संख्ये । सङ्गे । संयुगे । सङ्गथे । संगमे । वृत्रतूर्ये । पृक्षे । आणौ । शूरसातौ ।वाजसातौ । समनीके । खले । खजे । पौंस्ये । महाधने । वाजे । अज्म । सद्म । संयत् । संवत इति संग्रामस्य ।( संवत इति षट्चत्वारिंशत् संग्रामनामानि) ॥ १७॥

इन्वति । नक्षति । आक्षाण: । आनट् । आष्ट । आपान:। अशत् । नशत् । आनशे । अश्नुत इति (दश ) व्याप्तिकर्माण:। १८॥

दभ्नोति । श्रथति । ध्वरति । धूर्वति । वृणक्ति । वृश्चति । कृण्वति । कृन्तति । श्वसति । नभते ।

अर्दयति । स्तृणाति । स्नेहयति । यातयति । स्फुरति । स्फुलति । निवपन्तु । अवतिरति । वियातः। आतिरत् । तळित् । आखण्डल । द्रूणाति । रम्णाति । शृणाति । शम्नाति । तृणेळ्हि । ताळ्हि । नितोषते । निबर्हयति । मिनाति । मिनोति । धमतीति वधकर्मणः । धमतीति त्रयस्त्रिंशद्वध-कर्माणः । ) ॥ १९ ॥

दिद्युत् । नेमिः । हेतिः । नमः । पविः । सृकः । वधः । वज्रः । अर्कः । कुत्सः । कुलिशः । तुञ्जः । तिग्मः। मेनिः । स्वधितिः । सायकः । परशुरिति वज्रस्य ।(परशुरित्यष्टादशवज्रनामानि ) ॥२०॥

इरज्यति । पत्यते । क्षयति । राजतीति (चत्वार)ऐश्वर्यकर्माणः ।) ॥ २१ ॥

राष्ट्री । अर्यः । नियुत्वान् । इन इन इतीश्वरस्य । (इन इन इति चत्वारीश्वरनामानि ) ॥ २२ ॥

॥ इति निघण्टौ द्वितीयोऽध्यायः ॥

(अपस्तुञ्जनुष्या आयत्यग्रुवो वश्म्यन्ध आवयत्योजो मघमह्या रेळते हेळो वर्तते नु तळिद्रण इन्वति दभ्नोति दिद्युदिरज्यति राष्ट्रीति द्वाविंशतिः ॥)

॥ अथ तृतीयोऽध्यायः ॥

उरु । तुवि । पुरु । भूरि । शश्वत् । विश्व । परीणसा । व्यानशिः । शतम् । सहस्रम् । सलिलम् । कुविदिति वहोः । (कुविदिति द्वादश बहुनामानि) ॥ १ ॥

ऋहन् । ह्रस्वः । निघृष्वः । मायुकः । प्रतिष्ठा । कृधु । वम्रकः । दभ्रम् । अर्भकः । क्षुल्लकः । अल्पकमिति । ह्रस्वस्य । (अल्प इत्येकादश ह्रस्वनामानि) ॥ २ ॥

महत् । ब्रध्नः। ऋष्वः । बृहत् । उक्षितः । तवसः । तविषः । महिषः । अभ्वः । ऋभुक्षाः । उक्षाः । विहायाः । यह्वः । ववक्षिथ । विवक्षसे । अम्भृणः । माहिनः । गभीरः । ककुहः । रभसः । व्राधन् । विरप्शी । अद्भुतम् । बर्हिष्ठः । बार्हिषीति महतः (बर्हिषदिति पञ्चविंशतिर्महन्नामानि) ॥ ३ ॥

गयः । कृदरः । गर्तः । हर्म्यम् । अस्तम् । पस्त्यम् । दुरोणे । नीळम् । दुर्याः । स्वसराणि । अमा । दमे । कृत्तिः । योनिः । सद्म । शरणम् । वरूथम् । छर्दिः । छदिः । छाया । शर्म । अज्मेति गृहाणम् (अज्मेति द्वाविंशतिर्गृहनामानि) ॥ ४ ॥

इरज्यति । विधेम । सपर्यति । नमस्यति । दुवस्यति । ऋध्नोति । ऋणद्धि । ऋच्छति । सपति । विवासतीति (दश) परिचरणकर्माणः ॥ ५ ॥

शिम्बाता । शतरा । शातपन्ता । शिल्गुः । स्यूमकम् । शेवृधम् । मयः । सुग्म्यम् । सुदिनम् । शूषम् । शुनम् । शग्मम् । भेषजम् । जलाषम् । स्योनम् । सुम्नम् । शेवम् । शिवम् । शम् । कदिति सुखस्य (कमिति विंशतिः सुखनामानि) ॥ ६ ॥

निर्णिक् । वव्रिः । वर्पः । वपुः । अमतिः । अप्सः । प्सुः । अप्रः । पिष्टम् । पेशः । कृशनम् । मरुत् । अर्जुनम् । ताम्रम् । अरुषम् । शश्यमिति रूपस्य (शिल्पमिति षोडश रूपनामानि) ॥ ७ ॥

अस्रेमा । अनेमा । अनेद्यः । अनवद्यः । अनभिशस्त्यः । उक्थ्यः । सुनीथः । पाकः । वामः । वयुनमिति प्रशस्यस्य (वयुनमिति दश प्रशस्यनामानि) ॥ ८ ॥

केतुः । केतः । चेतः । चित्तम् । क्रतुः । असुः । धीः । शची । माया । वयुनम् । अभिख्येति प्रज्ञायाः (अभिख्येत्येकादशप्रज्ञानामानि)॥ ९ ॥

बट् । श्रत् । सत्रा । अद्धा । इत्था । ऋतमिति सत्यस्य (ऋतमिति षट् सत्यनामानि) ॥ १० ॥

चिक्यत् । चाकनत् । अचक्ष्म । चष्टे । वि चष्टे । विचर्षणिः । विश्वचर्षणिः । अवचाकशदिति (अष्टौ) पश्यतिकर्माणः ॥ ११ ॥

हिकम् । नुकम् । सुकम् । आहकिम् । आकीम् । नकिः । माकिः । नकीम् । आकृतमित्यामिश्राणि (आकृतमिति नवोत्तराणि पदानि सर्वपदसमाम्नानाय) ॥ १२ ॥

इदमिव । इदं यथा । अग्निर्न ये । चतुरश्चिद्ददमानात् । ब्राह्मणा व्रतचारिणः । वृक्षस्य नु ते पुरुहूत वयाः । जार आ भगम् । मेषो भूतोभियन्नयः । तद्रूपः । तद्वर्णः । तद्वत् । तथेत्युपमाः ॥ १३ ॥

अर्चति । गायति । रेभति । स्तोभति । गूर्धयति । गृणाति । जरते । ह्वयते । नदति । पृच्छति । रिहति । धमति । कृपायति । कृपण्यति । पनस्यति । पनायते । वल्गूयति । मन्दते । भन्दते । छन्दति । छदयते । शशमानः । रञ्जयति । रजयति । शंसति । स्तौति । यौति । रौति । नौति ।

भनति । पणायति । पणते । सपति । पपृक्षाः । महयति । वाजयति । पूजयति । मन्यते । मदति । रसति । स्वरति । वेनति । मन्द्रयते । जल्पतीति चतुश्चत्वारिंशदर्चतिकर्माणः ॥ १४ ॥

(भन्दते । भणति । भणायते । स्वपिति । पिपृक्षाः । महयति । वाजयति । पूजयति । स्वदति । मदति । रसति । वेनति । कल्पते । जल्पति । मन्त्रयते । वन्दत । इत्यर्चतिकर्माणः ॥ १४ ॥ )

विप्रः । विग्रः । गृत्सः । धीरः । वेनः । वेधाः । कण्वः । ऋभुः । नवेदाः । कविः । मनीषी । मन्धाता । विधाता । विपः । मनश्चित् । विपश्चित् । विपन्यवः । आकेनिपः । उशिजः । कीस्तासः । अद्धातयः । मतयः । मतुथाः । मेधाविन इति मेधाविनाम् (वाघत इति चतुर्विंशतिर्मेधाविनामानि) ॥ १५ ॥

रेभः । जरिता । कारुः । नदः । स्तामुः । कीरिः । गौः । सूरिः । नादः । छन्दः । स्तुप् । रुद्रः । कृपण्युरिति त्रयोदश स्तोतृनामानि (रेभः । जरिता । कारुः । कीरिः । तामुः । सूरिः । रुद्रः । नदः । नादः । छन्दः । स्तुत् । गौः । कृपण्युरिति स्तोतृणाम्) ॥ १६ ॥

यज्ञः । वेनः । अध्वरः । मेघः । विदथः । नार्यः । सवनम् । होत्रा । इष्टिः । देवताता । मखः । विष्णुः । इन्दुः । प्रजापतिः । धर्म इति यज्ञस्य । (धर्म इति पञ्चदश यज्ञनामानि) ॥ १७ ॥

भरताः । कुरवः । वाघतः । वृक्तबर्हिषः । यतस्रुचः । मरुतः । सवाधः । देवयव इत्यृत्विजाम् (देवयव इत्यष्टावृत्विङ्ननामानि) ॥ १८ ॥

ईमहे । यामि । मन्महे । दद्धि । शग्धि । पूर्धि । मिमिड्ढि । मिमीहि । रिरिड्ढि । रिरीहि । पीपरत् । यन्तारः। यन्धि । इषुध्यति । मदेमहि । मनामहे । मायत इति (सप्तदश) याच्ञाकर्माणः॥१९॥

दाति । दाशति । दासति । राति । रासति। पृणक्षि । पृणाति । शिक्षति । तुञ्जति । मंहत इति (दश) दानकर्माणः ॥ २० ॥

परि स्रव । पवस्व । अभ्यर्ष । आशिष इति (चत्वार) अध्येषणाकर्माणः ॥ २१ ॥

स्वपिति सस्तीति द्वौ स्वपितिकर्माणौ ॥ २२ ॥

कूपः । कातुः । कर्तः । वव्रः । काटः । खातः । अवतः । क्रिविः । सूदः । उत्सः । ऋश्यदात् । कारोतरात् । कुशयः । केवट इति कूपस्य ।(केवट इति चतुर्दश कूपनामानि ।)॥ २३ ॥

तृपुः । तका । रिभ्वा। रिपुः । रिका । रिहायाः । तायुः । तस्करः । वनर्गुः । हुरश्चित् । मुषीवान् । मलिम्लुचः । अघशंसः । वृक इति स्तेनस्य । (वृक इति चतुर्दशैव स्तेननामानि )॥ २४ ॥

निण्यम् । सस्वः । सनुतः। हिरुक् । प्रतीच्यम्। अपीच्यमिति (षट् )निर्णीतान्तर्हितनामधेयानि ॥ २५ ॥

आके । पराके । पराचैः। आरे ।परावत इति दूरस्य ।(परावत इति पञ्चदूरनामानि )॥ २६ ॥

प्रत्नम् । प्रदिवः । प्रवयाः । सनेमि । पूर्व्यम् । अह्नायेति पुराणस्य । (अह्नायेति षट् पुराणनामानि)॥ २७ ॥

नवम् । नूत्नम् । नूतनम् । नव्यम् । इदा । इदानीमिति नवस्य । (इदानीमिति षळेव नवनामानि) ॥ २८ ॥

प्रपित्वे । अभीके । दभ्रम् । अर्भकम् । तिरः । सतः । त्वः । नेमः ।ऋक्षाः । स्तृभिः । वम्रीभिः । उपजिह्विका । ऊर्दरम् । कृदरम् । रम्भः । पिनाकम् । मेना । ग्राः । शेपः । वैतसः । अया । एना । सिषक्तु । सचते । भ्यसते । रेजते इति द्विशः । (रेजते इति षड्विंशतिर्द्विश उत्तराणि नामानि ।)॥ २९ ॥

स्वधे । पुरन्धी । धिषणे । रोदसी । क्षोणी । अम्भसी । नभसी । रजसी ।सदसी । सद्मनी । घृतवती । बहुले । गभीरे । गम्भीरे । ओण्यौ । चम्वौ । पार्श्वौ । मही । उर्वी । पृथ्वी । अदिती । अही । दूरे अन्ते । अपारे अपारे इति द्यावापृथिव्योः। (अपारे अपारे इति चतुर्विंशतिर्द्यावा-पृथिवीनामधेयानि नामधेयानि ।)॥ ३० ॥

॥ इति निघण्टौ तृतीयोऽध्यायः ॥

(उर्वृहन् महद् गय इरज्यतिशिम्बाता निर्णिगस्रेमा केतुर्बट् चिक्यद्धिकमिदमिवार्चति विप्रो रेभो यज्ञो भरता ईमहे दाति परि स्रव स्वपिति कूपस्तृपुर्निण्यमाके प्रत्नन्नवम् प्रपित्वे स्वधे त्रिंशत् ।।)

## ॥ अथ चतुर्थोऽध्यायः ॥

जहा। निधा। शिताम। मेहना। दमूनाः। मूषः। इषिरेण। कुरुतन। जठरे। तितिउ। शिप्रे। मध्या। मन्दू। ईर्मान्तासः। कायमानः। लोधम्। शीरम्। विद्रधे। द्रुपदे। तुग्वनि। नंसन्ते। नसन्त। आहनसः। अद्मसत्। इष्मिणः। वाहः। परितक्म्या। सुविते। दयते। नूचित्। नूच। दावने। अकूपारस्य। शिशीते। सुतुकः। सुप्रायणाः। अप्रायुवः। च्यवनः। रजः। हरः। जुहुरे। व्यन्तः। क्राणाः। वाशी। विषुणः। जामिः। पिता। शंयोः। अदितिः। एरिरे। जसुरिः। जरते। मन्दिने। गौः। गातुः। दंसयः। तूताव। चयसे। वियुते। ऋधक्। अस्याः। अस्य (अस्येति द्विषष्टिः पदानि)॥ १॥

सस्निम्। वाहिष्ठः। दूतः। वावशानः। वार्यम्। अन्धः। असश्चन्ती। वनुष्यति। तरुष्यति। भन्दनाः। आहनः। नदः। सोमो अक्षाः। श्वात्रम्। ऊतिः। हासमाने। पड्भिः। ससम्। द्विता। व्राः। वराहः। स्वसराणि। शर्याः। अर्कः। पविः।; वक्षः। धन्व। सिनम्। इत्था। सचा। चित्। आ। द्युम्नम्। पवित्रम्। तोदः। स्वञ्चाः। शिपिविष्टः। विष्णुः। आधृणिः। पृथुज्रयाः। अथर्युम्। काणुका। अध्रिगुः। आङ्गूषः। आपान्तमन्युः। श्मशा। उर्वशी। वयुनम्। वाजपस्त्यम्। वाजगन्ध्यम्। गध्यम्। गधिता। कौरयाणः। तौरयाणः। अह्रयाणः। हरयाणः। आरितः। व्रन्दी। निष्षपी। तूर्णाशम्। क्षुम्पम्। निचुम्पुणः। पदिम्। पादुः। वृकः। जोषवाकम्। कृत्तिः। श्वघ्नी। समस्य। कुटस्य। चर्षणिः। शम्बः। केपयः। तू तुमाकृषे। अंसत्रम्। काकुदम्। वीरिटे। अच्छ। परि। ईम्। सीम्। एनम्। एनाम् सृणिः (सृणिरिति चतुरुत्तरमशीतिः पदानि)॥ २॥

आशुशुक्षणिः। आशाभ्यः। काशिः। कुणारुम्। अलातृणः। सललूकम्। कत्पयम्। विस्रुहः। वीरुधः। नक्षद्दाभम्। अस्कृधोयुः। निशृम्भाः। बृबदुक्थम्। ऋदूदरः। ऋदूपे। पुलुकामः। असिन्वती। कपना। भाऋजीकः। रुजानाः। जूर्णिः। ओमना। उपलप्रक्षिणी। उपसि। प्रकलवित्। अभ्यर्धयज्वा। ईक्षे। क्षोणस्य। अस्मे। पाथः। सवीमनि। सप्रथाः। विदथानि। श्रायन्तः। आशीः। अजीगः। अमूरः। शशमानः। देवो देवच्या कृपा। विजामातुः। ओमासः। सोमानम्। अनवायम्। किमीदिने। अमवान्। अमीवा। दुरितम्। अप्वा। अमतिः। श्रुष्टी। पुरन्धिः। रुशत्। रिशादसः। सुदत्रः। सुविदत्रः। आनुषक्। तुर्वणिः। गिर्वणसे। असूर्ते।

सूर्त्ते । अम्यक् । यादृश्मिन् । जारयायि । अग्रिया । चनः । पचता । शुरुधः । अमिनः । जञ्झती:। अप्रतिष्कुतः । शाशदनः । सूप्रः । सुशिप्रः । शिप्रे । रंसु । द्विवर्हाः । अक्रः । उराणः। स्तियानाम् । स्तिपोः । जबारु । जरूथम् । कुलिशः । तुञ्जः । बर्हणा । ततनुष्टिम् । इलीबिशः। कियेधाः । भृमिः । विष्पितः । तुरीपम् । रास्पिनः । ऋञ्जतिः । ऋजुनीती । प्रतद्वसू । हिनोत । चोष्कूयमाणः । चोष्कूयते । सुमत् । दिविष्टिषु । दूतः । जिन्वति । अमत्रः । ऋचीषमः । अनर्शरातिम् । अनर्वा । असामि । गल्दया । जळ्हवः । बकुरः । बेकनाटान् । अभिधेतन । अंहुरः। बतः । वाताप्यम् । चाकन् । रथर्यति । असक्राम् । आधवः । अनवब्रवः । सदान्वे । शिरिम्बिठः । पराशरः । क्रिविर्दती । करूलती । दनः । शरारुः । इदंयुः । कीकटेषु । बुन्दः । वृन्दम् । किः । उल्बम् । ऋबीसमृबीसम् । (ऋबीसमृबीसमिति त्रयस्त्रिंशच्छतं पदानि) ॥ ३ ॥

जहा सस्निमाशुशुक्षणिस्त्रीणि ।

## ॥ इति निघण्टौ चतुर्थोध्यायः समाप्तः ॥

## ॥ अथ पञ्चमोऽध्यायः ॥

अग्निः । जातवेदाः । वैश्वानर इति त्रीणि पदानि) ॥ १ ॥

द्रविणोदाः । इध्मः । तनूनपात् । नराशंसः । इळः । बर्हिः । द्वारः । उषासानक्ता । दैव्या होतारा । तिस्रदेवीः । त्वष्टा । वनस्पतिः । स्वाहाकृतय (इति त्रयोदशपदानि) ॥ २ ॥

अश्वः । शकुनिः । मण्डूकाः । अक्षाः । ग्रावाणः । नाराशंसः । रथः । दुन्दुभिः । इषुधिः । हस्तघ्नः । अभीशवः । धनुः । ज्या । इषुः । अश्वाजनी । उलूखलम् । वृषभः । द्रुघणः । पितुः । नद्यः । आपः । ओषधयः । रात्रिः । अरण्यानी । श्रद्धा । पृथिवी । अप्वा । अग्नायी । उलूखलमुसले । हविर्धाने । द्यावापृथिवी । विपाट्छुतुद्री । आर्त्नी । शुनासीरौ । देवी जोष्ट्री । देवी ऊर्जाहुती (इति षट्त्रिंशत् पदानि) ॥ ३ ॥

वायुः । वरुणः । रुद्रः । इन्द्रः। पर्जन्यः । वृहस्पतिः । ब्रह्मणस्पतिः । क्षेत्रस्य पतिः । वास्तोष्पतिः । वाचस्पतिः । अपां नपात् । यमः । मित्रः । कः । सरस्वान् । विश्वकर्मा । तार्क्ष्यः । मन्युः । दधिक्राः । सविता । त्वष्टा । वातः । अग्निः । वेनः । असुनीतिः । ऋतः । इन्दुः । प्रजापतिः । अहिः । अहिर्बुध्न्यः । सुपर्णः । पुरूरवा (इति द्वात्रिंशत् पदानि) ॥ ४ ॥

श्येनः । सोमः । चन्द्रमाः । मृत्युः । विश्वानरः। धाता । विधाता । मरुतः। रुद्राः । ऋभवः । अङ्गिरसः । पितरः । अथर्वाणः । भृगवः । आप्त्याः । अदितिः । सुरमा । सरस्वती । वाक् । अनुमतिः । राका । सिनीवाली । कुहूः । यमी । उर्वशी । पृथिवी । इन्द्राणी । गौरी । गौः । धेनुः । अघ्न्या । पथ्या । स्वस्तिः । उषाः । इळा । रोदसी (इति षट्त्रिंशत् पदानि ) ॥ ५ ॥

अश्विनौ । उषाः । सूर्या । वृषाकपायी । सरण्यूः । त्वष्टा । सविता । भगः । सूर्यः । पूषा । विष्णुः । विश्वानरः । वरुणः । केशी । केशिनः । वृषाकपिः । यमः । अज एकपात् । पृथिवी । समुद्रः । अथर्वा । मनुः । दध्यङ् । आदित्याः । सप्तऋषयः । देवाः । विश्वेदेवाः । साध्याः । वसवः । वाजिनः । देवपत्न्यो देवपत्न्य (इत्येकत्रिंशत् पदानि) ॥ ६ ॥

**॥ इति निघण्टौ पञ्चमोऽध्यायः ॥**

अग्निर्द्रविणोदा अश्वो वायुः श्येनोऽश्विनौ षट् ।

**॥ इति निघण्टौ पञ्चमोऽध्यायः समाप्तः ॥**